**परपक्षप्रतिक्षेपो नाम द्वितीयोऽङ्कः** । तत्र प्रवेशके सुमतिसख्योर्विचारणाश्रद्धयोः संवादमुखेन पुरुषप्रतारणाय महामोहकृतस्य बाह्याबाह्यकथकप्रेरणस्योपक्षेपः । ततो गुरुशिष्ययोः प्रवेशमुपक्षिप्य विवेकव्यवसाययोः संनिधाने सदसि गुर्वनुग्रहात् शिष्येण सांख्ययोगकाणादानां, बौद्धजैनपाशुपतानां, भाट्टप्राभाकराणां, तथा शांकरभास्करयादवीयानां च मतानां निरासो दिङ्मात्रेण प्रदर्शितः । प्रसङ्गागतं च पाञ्चरात्राप्रामाण्यवादं निराकृत्य तत्प्रामाण्यं च समर्थितम् । अनेन शारीरके अविरोधाध्याये परपक्षनिराकृतिप्रकरणमध्ये दृश्यमानं पाञ्चरात्राधिकरणं पाञ्चरात्रप्रामाण्यनिरासपरमेव भवितुमर्हतीति परेषामुद्घोषः प्रत्युक्तः, तत्र पाञ्चरात्राप्रामाण्यनिरासार्थं प्रवृत्तत्वात्तस्याधिकरणस्येति मन्तव्यम् । अनेन च गुरुशिष्यवृत्तान्तप्रसङ्गेन कविरयं भगवद्रामानुजं गुरुमात्मानं च शिष्यमनामोल्लेखं परिकल्प्य चिरात् स्वहृदये विपरिवर्तमानमात्मनो भगवद्रामानुजसाक्षाच्छिष्यत्वालाभजनितं खेदं लघयितुकाम इव संदृश्यते ।

**मुक्त्युपायारम्भो नाम तृतीयोऽङ्कः** । एवं मुक्त्युपायप्रवृत्त्यौपयिकं पुंसां भगवच्छेषतैकरसत्वं प्रथमेऽङ्के प्रतिपाद्य द्वितीयेऽङ्के तदपलापिनां मतानि निराकृत्य तदेव सुदृढं व्यवस्थापितम् । अनन्तरं तृतीयेऽङ्के विष्कम्भे विवेकबलात् दूरीकृतनिषिद्धाचाराणामपि कामकामानां केवलकर्मठानां त्रिवर्गाभिलाषेण प्रवृत्तिधर्मनिरतत्वं, विरक्तिविष्णुभक्त्योस्त्रिवर्गवैरस्यापादिकयोरपि प्रायशो रागद्वेषबलान्मोघप्रवृत्तित्वं चोपपादितम् । ततश्चिरकालसंचितपुण्यसंचयमहिम्ना योगारम्भविरोधित्रैगुण्यनिरासाय भगवन्तं प्रपन्नः पुरुषः सर्वेश्वरे भगवति निरवधिप्रेमानुध्यानरूपं समाधिं कर्तुमीहेत । तत्र चालम्बनभूतस्य समस्तकल्याणगुणाकरस्य भगवत्स्वरूपस्य रस्यतातिशयात् तदन्यत्र विरक्तिः स्वयमेवोदयते । पुंसां विरक्तिर्द्विधा समुदेति—एका संसारदोषदर्शनात्, अपरा परब्रह्मरस्यतातिशयात् । तयोः प्रथमामपेक्ष्य

द्वितीयैव महते फलाय कल्पते । तदात्वे च पुरुषो नित्यनैमित्तिकानि कर्माणि सात्त्विकत्यागपुरःसरं केवलं भगवदाराधनवेषेणानुतिष्ठन् निषिद्धानि काम्यानि च कर्माणि सर्वात्मना स्वरूपतः परित्यजन् योगमभ्यस्येत् । भगवत्प्रसाद-लिप्सया समाधिमातस्थुषा पुरुषेण भागवतापचारो दूरपरिहरणीयः । तथा बलवदवहितचेतसोऽपि योगिनः संभवन्त्यन्तरान्तरा सिद्धिविरोधिनो बहवो-ऽन्तरायाः । तथाहि—योगनिश्रेणिकायां पञ्चषाणि पदान्यारूढस्यानुषङ्गिक्यः सिध्यन्त्यणिमाद्याः सिद्धयः । यदि तासु मनो रज्येत, तदा तत्प्राप्त्यैव कृतकृत्यंमन्योऽसौ पुनः संसृतावेव परिवर्तेत। अतो मनीषिणा ता दूरतः परिहर्तव्याः । प्रघट्टकमेनमतिक्रम्य निश्रेणिकायां तदुपरि पञ्चषपदा-रोहणे स्वात्मानुभवो नाम महान् गर्तोऽस्य पन्थानमावृत्य तिष्ठेत् । तत्र निपतितः पुरुषः प्रायशो नान्यल्लिप्सेत । "यं लब्ध्वा चापरं लाभं मन्यते नाधिकं ततः[1]" इत्युक्तरीत्या तदुपजनितमानन्दमेव निरतिशयलाभं मन्वान-स्तत्रैव निरतो ब्रह्मानुभवरूपं मोक्षमपि विस्मरेत् । तस्मादेतेऽन्तराया अवहितमनसा दूरतः परिहरणीयाः । एवं दृढसंकल्पेन चेतसा मुक्त्युपाय-भूतः समाधिरारम्भणीयः ।

**कामादिव्यूहभेदो नाम चतुर्थोऽङ्कः** । एवमवहितेन चेतसा समा-रब्धसमाधेरपि पुरुषस्य चित्तं पूर्वानुभूतविषयवासनाकलुषितं समाधौ न स्थिरतरामवस्थितिमवाप्नुयात् । विषयेभ्यः प्रसभविनिवर्तितमपि चेत-स्तदा तदोद्बोधकसमवधाने पुनरपि सांसारिकभोगेभ्यः स्पृहयेत् , यथा सौभरिविश्वामित्रादेः । परं तु योगी कंचित्कालं वैषयिकं सुखमनुभूय पुनस्तत्र दोषदृष्ट्या विरज्येत । पुनरुद्बोधकसमवधाने प्राकृतभोगेषु प्रसजेत् । पुनरात्मनो गर्हणीयतमामवस्थामवबुध्यापत्रपेत । एवं महति संकटे वर्तमानो-ऽत्यन्तशोचनीयां दशामापद्यातितरां सीदेत् । तदा च केचित्कातरहृदयाः

[1] भ. गी. ६-२२.

समाधिमेवात्यन्तायावधूय पूर्वं जिहासितां संसृतिमेव पुनः शरणमन्विच्छेयुः। तेषु च विवेकोऽकिंचित्करः। किंच प्रक्रान्तयोगमेनं यदि कश्चिदवजानाति, न बहुमन्यते, परैरुपादीयमानां बहुमतिं विहन्ति वा, तदा योगिनोऽप्यस्य दुर्निवारः क्रोधः शतगुणितः प्रभवेत्। ततश्चायं प्रक्रान्तं योगमवज्ञाहेतुमवधार्य तं विहाय क्रोधात्समुत्थितोऽवजानन्तं हन्तुं प्रयतेत। ततस्तदेव रन्ध्रं समासाद्य रागक्रोधौ मात्सर्यादिपरिवारौ लोभतृष्णाभ्यां सहाभेद्यं व्यूहं परिकल्प्य पुरुषमभिहन्तुं प्रयतेयाताम्। तदानेन तितिक्षामुदितादिकवचमुपष्टभ्य दृढसत्त्वविवेकबलात् रागादिव्यूहं भित्त्वा समाधौ स्थैर्यं संपादनीयम्।

**दम्भाद्युपालम्भो नाम पञ्चमोऽङ्कः**। तदेवं रागादिव्यूहभेदेन पुनः प्रक्रान्तयोगः पुरुषः सर्वजनसमक्षं रागादिजन्यप्रवृत्तावपत्रपमाणोऽपि सर्वात्मनात्मानं ततो नियन्तुमशक्नुवन् रहसि तत्प्रवृत्तिमीहते। तदा चात्मनो भ्रंशं निगूहयितुं, स्वस्य समाधिनिष्ठतां प्रथयितुं तेन प्राकृतान् जनान् प्रतारयितुं च दम्भं कुहनां चावलम्बते। दर्पश्च तदा स्वयमेव दम्भस्य साहायकमाचरति। ततश्चात्मानममानुषयोगसिद्धिबलसंपन्नं लोकातीतमहिमानं च प्रथयितुमतथ्ये पथि पदं निदधाति पुरुषः। सर्वमपि लोहं कनकीकर्तुं प्रभवेयमिति ब्रुवन् संचित्य लोहजातं पुटपाके निक्षिप्य धमति। प्रतारिताश्च जना अनल्पं वित्तमस्मै प्रयच्छन्ति। तेन चाभीष्टान् भोगान् संपाद्यानुभवति। तथात्मनोऽतीतानि जननान्तराणि स्मरन्निव किमपि किमप्यसंबद्धमश्रद्धेयं च प्रलपति। जनाश्च प्रतारिताः संवर्तभरतादिवद्योगसिद्धोऽयमुन्मत्तचर्य इति विशेषतो बहु मन्यन्ते। एवं लब्धावकाशोऽयं कथाप्रसङ्गे स्ववृत्तान्तमेवमतथ्यमसंभाव्यमपि बहुमत्य वर्णयति—'पूर्वं जामदग्न्यो वसुंधरां कृत्स्नां विजित्य सर्वस्वदक्षिणे यज्ञे तां मह्यं प्रदित्सन् मां प्रतिग्रहीतुं प्रार्थयत। निःस्पृहस्त्वहं तदर्थनां नाङ्ग्यकार्षम्' इति।

अन्यदा चैवं विकत्थते—'कस्मिंश्चिन्निशीथे जनेषु सर्वेषु सुषुप्तेषु कश्चन दिव्यः पुरुष आगत्य मां ब्रह्मलोकागमनाय प्रार्थयत। अहमपि तदर्थनां निराकर्तुमपारयिष्णुः सत्यलोकमगमम्। तत्र च हिरण्यगर्भादिभिरुद्धृतार्घ्यैरहमनन्यसामान्यमभ्यर्चितः पुनरत्र लोकोद्धरणाय प्रेषितः' इति। एवमेभिरन्यैश्च प्रतारणैः प्रतार्यमाणा जनाः प्रभूतं द्रविणमस्योपहरन्ति। अयं त्वनादरमभिनयन् सर्वमपि तन्निराकरोति। तेन च जना एधितश्रद्धास्ततोऽप्यधिकानि धनानि तच्छिष्यव्यपदेशिने कस्मैचिदर्पयन्ति। तैरेव धनैरुभावपि मिष्टं भोगमनुभवत इति लोकस्थितिः। अस्मिन्नेव व्यतिकरे असूयासमाश्लिष्टः सर्वानपि महत्तरान् विनिन्दितुमुद्युङ्क्ते। यथा—लोकेऽद्य यावत् प्रसिद्धानि सर्वाण्यप्यवैदिकानि वैदिकानि वा मतानि न हृदयंगमानि। तत्र साध्वसाधुकर्मफलभाज आत्मनोऽनङ्गीकारात् कृत्याकृत्यव्यवस्थावैयाकुलीप्रसङ्गेनावैदिकानि मतानि सर्वाण्यपि न हृदयंगमानि। वैदिकब्रुवेष्वपि केषुचिन्मतेषु निरीश्वरवादिषु सृष्टिप्रलयानुपपत्त्या न विमर्शसहता। औपनिषदेष्वपि मतेषु निर्विशेषाद्वैतवादे अबाधितदृष्टापह्नवादयो बहवो दोषाः। सविशेषाद्वैतवादे सर्वशरीरितया सकलप्रपञ्चदोषभाक्त्वादयो ब्रह्मणो दोषाः। केवलद्वैतवादेऽपि ब्रह्मानुपादानत्वानन्दतारतम्यादयो बहवो दोषा इति तान्यपि न हृदयंगमानीति तत्प्रवर्तकाणामाचार्याणां न्यूनतैवेति। नैतावतापि विश्राम्यन्ति। किंतु धर्मसंस्थापनार्थमवतीर्ण इति विग्रहवान् धर्म इति च श्रद्दधानैरुद्घुष्यमाणो राघवो जुगुप्सनीयतमं स्त्रीवधमकरोत्। अन्तर्हितो भूत्वा वालिनं जघान। समरे वीरगर्हणीयं द्वित्रपदापक्रमणमनुमेने। उपदशान् मासान् राक्षसावासोषितां युवतीं भार्यां पुनर्निर्विशङ्कमङ्गीचकारेत्यादिकं वदन्नात्मानमेतादृशदोषगन्धासंस्पृष्टं विकत्थते। आत्मानं सकलतन्त्रपारदृश्वानं कथयन् तत्र तत्र सिद्धान्तेषु दोषानशङ्कनीयानुद्भावयति। औपनिषदराद्धान्तिनः 'भवभय-

भीता भवरसनिमग्नं श्रीजानिं पुरुषोत्तममुपसद्यात्मनो मुक्तान् प्रख्यापयन्तो मुक्तौ कामिताभिः स्त्रीभिर्वा यानैर्वा विहरन्तीति महदिदं सारस्यम् । न खलु वृश्चिकभयात्पलायमानैराशीमुखमुखे निपतितव्यम्' इति च परिहसन्ति । इत्थमनर्थनिदानभूतेषु दम्भादिषु प्रक्रान्तसमाधिभिर्मनो न विधेयमिति प्रतिपाद्यते ।

**स्थानविशेषसंग्रहो नाम षष्ठोऽङ्कः** । प्रक्रान्तसमाधिना पुरुषेण दम्भदर्पादिरहितेन भाव्यमित्युक्त्वा धारणादिसिद्ध्यर्थं समाधिविघातक-विषयवर्जितं स्थानमन्वेष्टव्यमिति वक्तुं सर्वेषामपि पुण्यक्षेत्राणां पुण्यतीर्थानां चाद्यत्वे कलिना प्रदूषितत्वं सामान्येन विष्कम्भे महामोहकञ्चुकिवाक्येनाभि-धाय व्यपदिष्टानां पुण्यक्षेत्रतीर्थानां दुष्टत्वप्रतिपादनपुरःसरं यत्र कुत्रापि स्थितस्यात्मनो हृदयगुहैव योगस्य विविक्तं स्थानमिति निर्णीयते । तत्र पुण्यक्षेत्रतीर्थानां व्यपदिष्टानामपि दुष्टत्वं प्रत्येकमाह । चतुर्दशस्वपि भुवनेषु क्षितिरेकैव धर्मास्पदम् । इतराणि तु भोगभूमयः । क्षित्यामपि भारतखण्ड एव प्रशस्ततमः । तत्र रजतगिरिर्यद्यपि कामदहनेन भवानी-पतिनाध्युषितः, तथापि न परमैकान्तिनां भागवतानामादरास्पदमिति स हेय एव । गन्धमादनगिरिरपि त्रैवर्गिकभोगास्पदमिति न मुमुक्षुभिराद-रणीयः । गन्धमादनवनं च यद्यपि रघुपतिध्यानैकपरायणेन मारुतिना संश्रितं, तथापि वीणामृदङ्गादिसंगीतरवप्रचुरमिति चित्तविक्षोभकमेव । हिमगिरिरपि विद्याधरादिमिथुनभोगस्थानमिति न समाधिस्थानं भवितु-मर्हति । अनन्तरमार्यावर्ते च साकेतमधुरे रघुयदुपत्यवतारदेशभूते यद्यपि ग्राह्ये, तथापि पाषण्डिगणाकीर्णत्वादधर्मविप्लुते इति न समाधियोग्ये । हरिक्षेत्रं च पुण्यतमचक्रतीर्थमहितमपि भगवन्मूर्तिसालग्रामभेदिभिर्लुब्धकाप-शदैराकीर्णत्वान्न वासार्हम् । वाराणसी तु रामषडक्षरध्यानोपदेशपरेण महादेवेनाध्युषितमपि म्लेच्छप्रायाधिपत्यात् लुप्तसदाचारेति न ग्राह्या ।

दक्षिणापथे च मरुभूमिः कुसीदजीविभिरनार्यैर्लुब्धैरधिष्ठितत्वान्न योग्या। दक्षिणबदरिकाप्रख्यो भगवद्रामानुजविजयसाक्षिभूतो यादवाचलो भगवन्नारायणस्य स्वयंव्यक्तिक्षेत्रभूतोऽपि दुःसहपवनावेग इति न साधकस्य स्थानं भवति। केरलदेशस्तु श्रीपद्मनाभावासभूतोऽपि तुरीयपुरुषार्थोपरोधिकेवलप्रवृत्तिधर्मोपदेष्टृजामदग्न्यपरिगृहीतत्वान्न योगयोग्यं स्थानम्। पाण्ड्यदेशो यद्यपि महाभागवतोत्तमश्रीशठकोपसूर्यवतारमहनीयः, तथापि नलसेतुदर्शनकुतूहलिजनसंघगतागतघोषमुखरितत्वान्न समाधिमेधयति। चोलभूमिस्त्वपवर्गपथवैदेशिकैः कुकविभिराकृष्टजनतेति न संभावनार्हा। तत्र यद्यपि श्रीरङ्गक्षेत्रं स्वयं व्यक्तं पुण्यतमं माननार्हं विभाति, तथापि तत्रापि संभवन्त्येव योगविघ्नाः। एवं तुण्डीरदेशे सत्यव्रतक्षेत्रं तत उत्तरतो वेंकटाद्रिश्च यद्यपि भगवदभिव्यक्तिभूते, परंतु तत्रापि जाग्रत्येव योगप्रत्यूहाः। अतो यत्र कुत्रचिदेकान्ते देश उपविश्य हृदयगुहावसथं परमात्मानमन्तर्यामिणं श्रियः पतिं ध्यायेदिति प्रतिपादितम्। पूर्वोक्तविचारसारः संगृहीतोऽमुना श्लोकेन कविनैव—

"सा काशीति न चाकशीति भुवि सायोध्येति नाध्यास्यते
सावन्तीति न कल्मषादवति सा काञ्चीति नोदञ्चति।
धत्ते सा मधुरेति नोत्तमधुरां मान्यापि नान्या पुरी
या वैकुण्ठकथासुधारसभुजां रोचेत नो चेतसे[1] ॥"

**शुभाश्रयनिर्धारणं नाम सप्तमोऽङ्कः**। एवं सदाचारशीलपरमैकान्तिभागवताभिमतं यं कंचिद्देशविशेषमास्थाय हृदयकमलरूपयोगपीठे भगवतो ध्यानप्रकारोऽत्र प्रतिपाद्यते। तत्र च विष्कम्भे व्युत्थानदशायां सदाचार्योपदेशभगवच्छास्त्रादिभिरनुभूतस्य भगवद्दिव्यस्वरूपस्य संस्कारेण स्मृति-

[1] संक. सू. ६-३८.

प्रथमानीतस्य निदिध्यासनं, तत्र किंचित्प्रमादादिना निद्रालस्यादिप्रसङ्गे मोहवशात् संस्कारविच्छेदान्निदिध्यासनविलयप्रसङ्गः, तदात्वे च दृढेनाध्यवसायेन पुनः संस्कारोद्बोधसंभवात् भगवदनुध्यानसंततिलाभ इत्यादिकमुच्यते । हृदयकमलाख्ये ज्ञानभक्तिवैराग्यशान्त्याख्यैश्चतुर्भिर्मणिस्तम्भैरवष्टब्धे रत्नमण्डपे दिव्यकिरीटहारकेयूरकटकादिविभूषितं शङ्खचक्रगदापद्मशार्ङ्गादिभिरुपासितं श्रीवत्सवनमालाश्रीतुलसीकौस्तुभोज्ज्वलं हरिं पीताम्बरधरं ध्यायेदिति च संग्रहेण प्रतिपादितम् । ततः संस्कारेण चित्तभित्तौ लिखितस्य प्रपञ्चालेख्यस्य विवेकसुमतिव्यवसायैर्दर्शनव्याजेन ध्यानालम्बनविशेषनिर्णयौपयिकभगवदवताराणां वर्णनं, कर्मपरवशानां हिरण्यगर्भादीनां ध्यानविषयतानर्हतया भगवद्दिव्यस्वरूपदिदृक्षा, तत्रापि वासुदेवसंकर्षणादिपरव्यूहानां दुरधिगमत्वात् मत्स्यकूर्मादिदिव्यावतारेषु निदिध्यासनसौकर्यं तन्निदिध्यासनस्यापि मोक्षप्रदत्वं च प्रतिपाद्य,

"मत्स्यः कूर्मो वराहश्च नारसिंहश्च वामनः ।
रामो रामश्च रामश्च कृष्णः कल्की च ते दश ॥"

इत्याद्युक्तानां दशानामवताराणां महिमातिशयमुपवर्ण्य तेष्वन्यतमस्यालम्बनार्हता चोपपादिता ।

**मोहादिपराजयो नामाष्टमोऽङ्कः ।** एवं व्यूहभेदनेनापदिशमपक्रान्ताः कामादयो दुर्वासनाभिनिवेशाभ्यामुपष्टब्धा महामोहसाहायकमाधित्सवः पुनरपि पुरुषस्योपक्रान्तसमाधेश्चित्तं विषयाभिमुखमाक्रष्टुमुद्युञ्जते । एतमेवोचितकालमाकलय्य महामोहः कामादिभिर्मूलबलैः परिवृतः स्वयमेव राजानं विवेकमभियोक्तुं प्रवर्तते । ततः सालम्बनं समाधिमास्थितस्य पुरुषस्य कामादिभिरक्षोभ्यतां, तत एव विवेकस्य सर्वथाप्यजय्यतां

चावधार्य दुर्वासनाभिनिवेशाभ्यां मोहपक्षादपक्रम्य सुवासनासमाध्यभिनिवेशनाम्ना स्वपक्षाश्रिताभ्यामुपष्टब्धो विवेकः कामादीन् सपरिवारान् निहन्तुमुद्युङ्क्ते। ततो नारदतुम्बुरुसंवादमुखेन विवेकमहामोहयोः समरवर्णनम्, अन्ते विवेकेन महामोहस्य विध्वंसनं, विवेकस्य समाधिसंपादनत्वरेत्यादिकं सरसमुपवर्णितम्।

**समाधिसंभवो नाम नवमोऽङ्कः**। एवं भगवत्कटाक्षैधितविभवेन विवेकेन मोहादिषु पराजितेषु पुरुषस्य भक्तिप्रावण्यं भूयोऽभिवर्धते। परं त्विदानीमपि कर्मनाम्न्यविद्या निरस्तानपि कामादीन् पुनरुद्बोध्य पुरुषस्य सत्कारादिष्वभिलाषं परपरिभवनादिषु क्रोधं चोत्थापयेत्। अस्मिन् समये योगिना प्रमादरहितेनावधातव्यम्। समाधिसिद्धये भगवन्तं शरणमुपगम्य वर्णाश्रमादिधर्मेष्ववहितेन भाव्यम्। एवमहरहरनुष्ठीयमानवर्णाश्रमधर्मानुगृहीतोपासनाख्याराधनप्रीतो भगवान् प्राप्तकालमनन्तदुस्तरकर्मसंचयरूपाविद्यां विनिवर्त्य समाधिसिद्धिं प्रयच्छेत्। एवं निष्प्रत्यूहसमाधेः पुंसो मोक्षसिद्धये कर्तव्यं किमपि नावशिष्यते। परं शास्त्रीयमर्यादामनतिलङ्घयन् भगवत्कृपैकनियतः केवलं शरीरपातसमयप्रतीक्षो वर्तेत। तादात्विकी चास्यैषावस्था स्वापोद्बोधव्यतिकरनिभा भवेत्। नात्यन्तायास्य परिपूर्णब्रह्मानुभवः, नापि यथापूर्वं संसारे गाढमासङ्गः। अस्मिन्नवसरे यदृच्छोपनतसदाचार्योपदिष्टमन्त्रानुसंधानेन समाधेः संसिद्धिर्भवतीति विशदमुपवर्णितम्।

**निःश्रेयसलाभो नाम दशमोऽङ्कः**। विनिष्पन्नसमाधेः पुरुषस्योपासनाख्येन समाराधनेन प्रीतो भगवानस्मिन् प्रसीदति। तत्प्रसादेन च प्रेरितो भगवतो दिव्यसंकल्प उदेति। तत्र सुहृत्सु सुकृतानि दुष्कृत्सु दुष्कृतानीति विभज्य संक्राम्यन्तेऽस्य कर्माणि। ततोऽर्चिरादिनाध्वना योगिनः परमपदप्राप्तिः, तत्र च ब्रह्मसायुज्यलक्षणं मोक्षं प्राप्तस्य निरति-

शयब्रह्मानन्दानुभवः, अपुनरावृत्तिः संसृतावित्यादिकमुक्त्वा स्वकीयं प्रबन्धकरणं सात्त्विकत्यागेन भगवति वासुदेवे समर्पयति कविः ।

एवं सुविशदमध्यात्मशास्त्ररहस्यप्रतिपादनपरतया शारीरकशास्त्रप्रकरणभूतमिदं रूपकमिति वक्तुं शक्यम् । त्रिवर्गैकप्रतिपादनपराणां तत्रापि सांसारिकभोगप्रवणाधिकारिकाणां नाटकानामनुपादेयत्वम्, अपवर्गौपयिकपरविद्याप्रतिपादकानामध्यात्मशास्त्रसंबद्धानां ग्रन्थानामेवोपादेयत्वं च मन्यमानेन मान्येनानेन कविना नाटकमिदं लोकानुजिघृक्षया प्रणीतमिति तद्वाक्येनैवावगम्यते । यथा—"आदिष्टोऽस्मि अधिजिगमिषितमुक्तिघण्टापथैरौपनिषदरहस्योपदेशदेशिकैरसमीचीनपराङ्मुखैरार्यमिश्रैः[1]" इति,

"अपदिश्य किमप्यशेषगुप्त्यै
निगमान्तेषु निरूढगौरवेण ।
प्रविभक्तहिताहितः प्रयोगः
कविना कारुणिकेन कल्पितोऽसौ[2] ॥"

इति, "श्रुतिपथ्यं नाथप्रीत्यै नाटकमथ्यं व्यधितैतत्[3]" इति च । अनेन चैतत् ज्ञायते—औपनिषदमतान्तरसिद्धान्तप्रकाशनपरेण केनापि प्रयोगान्तरेणोद्वेजिताः परमैकान्तिनः सामाजिका आचार्यमेनं सद्दर्शनरहस्यप्रकाशकप्रयोगकरणाय प्रार्थयन्त । ततस्तदभ्यर्थनामङ्गीकृत्य वेदान्तगुरुरयं मुमुक्षुजनानुग्रहाय वेदान्तसंमतरहस्यार्थप्रकाशकमेनं ग्रन्थं निरमिमीतेति । तच्चोद्वेजकं प्रयोगान्तरं किं नाम स्यादिति विमर्शे औचित्यात् प्रायेण कृष्णमिश्रकृतं प्रबोधचन्द्रोदयाभिधमेवेत्यूहितुं सांप्रतम् । एवंच स्वमतस्थापनाभिसंधिरेव ग्रन्थकर्तुरेतस्य ग्रन्थस्य करणे निदानमित्यवगम्यते । अत्र केचित् कृष्णमिश्रेण सहाचार्यस्य वादे प्रसक्ते

[1] संकल्पसू. P. 13. [2] संकल्पसू. १-११. [3] संकल्पसू. १-१५.

पराभूतेन कृष्णमिश्रेण स्वकीये प्रबोधचन्द्रोदये प्रदर्शिते तत्स्पर्धया ग्रन्थमेनमरचयन्नाचार्या इत्यैतिह्यं परिकल्पयन्ति । तत्तु न हृदयंगमम्; न वा विचारसहम् । आचार्या हीमे स्पर्धादिषु सर्वात्मना विमुखा विरक्ताग्रेसराः कालमयापयन्निति तच्चरित्रविमर्शकैरसकृदुद्घुष्यते । तथा च

"यः ख्यातिलाभपूजासु विमुखो वैष्णवे जने ।
क्रयणीयदशां प्राप्तस्तस्मै भव्याय मङ्गलम् ॥"

इति कुमारवेदान्ताचार्याणां मङ्गलाशासनम् ।

किंच कृष्णमिश्रः कीर्तिवर्मनृपसमकालिक इति तदीयनाटकादवगम्यते । स कीर्तिवर्मा 1065 A.D. काले बभूवेति चरित्रविमर्शका निरणैषुः । आचार्याश्चेमे ततोऽब्दानां द्विशत्या अनन्तरं 1268 A.D. काले कृतावतारा इति कथमेषां तेन कृष्णमिश्रेण वादः स्पर्धा वा युज्यतामिति सुधियो विभावयन्तु ।

आचार्यवर्यैरेभिर्विरचितानि ग्रन्थान्तराणि यथा--

१. शतदूषणी—निर्विशेषब्रह्माद्वैतमतनिरासः शतसंख्याकैर्वादैरत्र क्रियते । परं तु षट्षष्टिर्वादा एवाधुना समुपलभ्यन्ते । परिशिष्टास्तु वादाः प्रनष्टाः । "शातितः शतदूषण्यां शंकरादिमुधाग्रहः" इति तत्त्वटीकायामनुवादात् शतं वादाः संपूर्णाः कृता इति ज्ञायते । अत्रादिपदेन भास्करयादवप्रकशयोर्ग्रहणं स्यात् । उपलभ्यमाना वादाश्चेत्थम्—१. ब्रह्मशब्दवृत्त्यनुपपत्तिः, २. जिज्ञासानुपपत्तिः, ३. ऐकशास्त्र्यसमर्थनम्, ४. अविधेयज्ञानभङ्गः, ५. बाधितानुवृत्तिभङ्गः, ६. विविदिषासाधनत्वभङ्गः, ७. शब्दजन्यप्रत्यक्षभङ्गः, ८. साधनचतुष्टयपूर्ववृत्तत्वभङ्गः, ९. परेषां कथानधिकारः, १०. निर्विशेषस्वयंप्रकाशभङ्गः, ११. निर्विशेषविषयनिर्विकल्पकभङ्गः, १२. सन्मात्रग्राहिप्रत्यक्षभङ्गः, १३. भेददूषणनिस्तारः, १४. वेदप्रामाण्यपरिग्रहानु-

पपत्तिः, १५. दृश्यत्वानुमाननिरासः, १६. व्यावर्तमानत्वानुमानभङ्गः, १७. दृग्दृश्यसंबन्धानुपपत्तिपरिहारः, १८. बाह्यप्रकाशानुपपत्तिः, १९. ब्रह्माज्ञाननिरासः, २०. अवेद्यत्वभङ्गः, २१. संविदनुत्पत्तिदूषणम्, २२. संविन्निर्विकारत्वानुमानभङ्गः, २३. संविन्नानात्वनिषेधकानुमानभङ्गः, २४. निर्विशेषत्वानुमानभङ्गः, २५. संविदात्मत्वभङ्गः, २६. अहमर्थात्मत्वसमर्थनम्, २७. ज्ञातृत्वाध्यासभङ्गः, २८. साक्षित्वभङ्गः, २९. प्रत्यक्षशास्त्रयोर्विरोधपरिहारः, ३०. असत्यात्सत्यसिद्धिभङ्गः, ३१. जीवन्मुक्तिभङ्गः, ३२. बाधार्थसामानाधिकरण्यभङ्गः, ३३. संविदद्वैतभङ्गः, ३४. उपदेशानुपपत्तिः, ३५. तिरोधानानुपपत्तिः, ३६. आत्माद्वैतभङ्गः, ३७. जीवेश्वरैक्यभङ्गः, ३८. अखण्डवाक्यार्थभङ्गः, ३९ भावरूपाज्ञानभङ्गः, ४०. जीवाज्ञानभङ्गः, ४१. अविद्यास्वरूपानुपपत्तिः, ४२. मायाविद्याविभागभङ्गः, ४३. अविद्यानिवर्तकानुपपत्तिः, ४४. अविद्यानिवृत्त्यनुपपत्तिः, ४५. ब्रह्मणः शब्दावेद्यत्वनिरासः, ४६. निष्प्रपञ्चीकरणनियोगभङ्गः, ४७. विकल्पाप्रामाण्यभङ्गः, ४८. उपबृंहणवैघट्यम्, ४९. ऐक्योपदेशान्यथानुपपत्तिभङ्गः, ५०. शास्त्राधिकारभङ्गः, ५१. मुक्तसंविन्निर्विषयत्वभङ्गः, ५२. सगुणनिर्गुणश्रुतिव्यवस्थाः, ५३. ब्रह्मोपादानत्वान्यथानुपपत्तिभङ्गः, ५४. मायोपादानत्वान्यथानुपपत्तिभङ्गः, ५५. कार्यान्यथानुपपत्तिभङ्गः, ५६. आनन्त्यनिरूपणम्, ५७. निर्विशेषब्रह्मानन्दत्वभङ्गः, ५८. निर्विशेषब्रह्मनित्यत्वभङ्गः, ५९. अद्वितीयश्रुतिविसंवादः, ६०. सत्त्वासत्त्वविवेकः, ६१. जीवैक्यभङ्गः, ६२. अपशूद्राधिकरणविरोधः, ६३. अधिकारिविवेकः, ६४. यतिलिङ्गभेदभङ्गः, ६५. अलेपकमतभङ्गः, ६६. सूत्रस्वारस्यभङ्ग इति। एतद्ग्रन्थकरणपूर्वकं विशिष्टाद्वैतमतस्थापनपरितुष्टेन भगवता श्रीरङ्गनाथेनाचार्याय वेदान्ताचार्य इति संज्ञा दत्तेति प्रथा।

२. तत्त्वमुक्ताकलापः—विशिष्टाद्वैतसिद्धान्तरीत्या वेदान्तरहस्यार्थप्रकाशकः पद्यरूपोऽयं ग्रन्थः। अत्र च पञ्चभिः सराभिख्यैर्भागैर्यथाक्रमं

जडद्रव्य-जीव-नायक-बुद्धि-अद्रव्याणां स्वरूपादिकं निर्णीतम् । आहत्यात्र पद्यसंख्या ५००. अयं च ग्रन्थः सायणात्मजेन माधवेन सर्वदर्शनसंग्रहे व्यपदिष्टः ।

३. सर्वार्थसिद्धिः—पूर्वं निर्दिष्टस्य तत्त्वमुक्ताकलापस्य व्याख्यारूपोऽयं ग्रन्थः । अत्र च प्रकाशात्मवाचस्पतिचित्सुखादिभिरभिहिता निर्विशेषाद्वैतसंबद्धा बहवो वादा अनूद्य निरस्ताः ।

४. अधिकरणसारावलिः—भगवद्रामानुजीयश्रीभाष्यरीत्या ब्रह्मसूत्राधिकरणविषयसंग्रहरूपः पद्यात्मकोऽयं ग्रन्थश्चतुर्भिरध्यायैः प्रविभक्तः । आहत्यात्र श्लोकसंख्या ५६२. "तेन देवेन दत्तां वेदान्ताचार्यसंज्ञामवहितबहुवित्सार्थमन्वर्थयामि" इति स्वकीयवेदान्ताचार्यसंज्ञाया अनुवाददर्शनात् शतदूषण्या अनन्तरमयं ग्रन्थो निर्मित इत्यवगम्यते । तथात्र तत्त्वमुक्ताकलापस्य नाम्ना निर्देशात्तदनन्तरं कृत इत्यपि ज्ञायते ।

५. अधिकरणदर्पणम्—अयं ग्रन्थोऽधुना लुप्तः कुत्रापि न लभ्यते । परं तु निक्षेपरक्षायां समुद्धृतः । विशिष्टाद्वैतसिद्धान्तरीत्या ब्रह्मसूत्राणां संग्रहेणाधिकरणविभागविषयादिप्रदर्शकः स्यादित्यूह्यते ।

६. सच्चरित्ररक्षा—अस्मिन् ग्रन्थे श्रीवैष्णवसमयसिद्धस्य सुदर्शनपाञ्चजन्यधारणस्य, द्वादशोर्ध्वपुण्ड्रधरणस्य, भगवन्निवेदितोपयोगस्य च वैधता निरवद्यता भगवत्प्रीणनता चेति यथाक्रमं त्रिभिरधिकारैरुपपादितम् । तत्र च प्रमाणतया श्रुतिस्मृतिपुराणवचनानि प्रदर्शितानि । अन्ते चात्राधिकारत्रयोपपादितान् विषयानेवं संगृह्णाति ग्रन्थकारः—

"शमितभवभयानां शङ्खचक्रादिचिह्नै-
दिविषदधिकभूम्नां दीव्यतामूर्ध्वपुण्ड्रैः ।
प्रथितगुणगणानां प्रापणप्राशनाद्यै-
रयमहमनघानामस्मि पात्रं दयायाः ॥"

इति ।

७. निक्षेपरक्षा—निक्षेपः, प्रपत्तिः, शरणागतिः, न्यासः इत्यादीन्येकार्थवाचकानि पर्यायपदानि । निक्षेपोऽपि दहरशाण्डिल्यादिविद्याभिरविशिष्टफलतया वेदान्तेषु विकल्प्यमाना ब्रह्मविद्येति परमसिद्धान्ते विमन्यमानानां वादिनां प्रत्यवस्थानान्युपक्षिप्य श्रुत्यादिप्रमाणोपन्यासपूर्वकं तानि निरस्य निक्षेपस्य ब्रह्मविद्यात्वमत्र व्यवस्थाप्यते । भागद्वयात्मकेऽस्मिन् ग्रन्थे पूर्वभागे,

> " स्वरूपलक्ष्मानुष्ठानविध्यदृष्टेर्निषेधतः ।
> ऐक्यादशक्तेरख्यातेः संप्रदायविरोधतः ॥ "

इति नवधाशङ्क्य, उत्तरभागे तेषामाक्षेपाणां प्रत्येकं समाधानं कृतम् । अत्र च शतदूषण्यधिकरणदर्पणसच्चरित्ररक्षाणां निर्देशात् तदनन्तरकालिकोऽयं ग्रन्थ इत्यवगम्यते ।

८. श्रीपाञ्चरात्ररक्षा—अत्र श्रीपाञ्चरात्रस्य भगवच्छास्त्रतया प्रख्यातस्य प्रामाण्यव्यवस्थापनपूर्वकं तस्य वेदाविरुद्धत्वं पाञ्चकालिकानामभिगमनोपादानेज्यास्वाध्याययोगानां भगवदाराधनत्वं नित्यानुष्ठेयत्वमित्यादीन्युपपादितानि । अत्र च त्रयोऽधिकाराः—सिद्धान्तव्यवस्थापनम्, नित्यानुष्ठानस्थापनम्, नित्यग्रन्थव्याख्यानं चेति । अस्मिन् ग्रन्थे निक्षेपरक्षा निर्दिष्टेति ततः परोऽयम् ।

९. न्यायपरिशुद्धिः—अत्र गौतमीयन्यायसूत्राणां वेदान्तसमयबहिष्कारपक्षे स्थितेऽपि तेषां कथंचिदबहिष्कारोऽपि वर्णयितुं शक्यत इति प्रतिज्ञाय तत्रत्यानां प्रत्यक्षानुमानादिविचारपराणां सूत्राणां वेदान्तसमयानुकूल्येनार्थवर्णनं क्रियते । प्रत्यक्ष-अनुमान-शब्द-स्मृति-प्रमेयाख्यैः पञ्चभिरध्यायैर्विभक्तोऽयं ग्रन्थः । श्रीपाञ्चरात्ररक्षा नामतोऽत्र निर्दिष्टेति तदनन्तरप्रवृत्तोऽयं ग्रन्थः ।

१०. सेश्वरमीमांसा—जैमिन्युपज्ञं पूर्वमीमांसादर्शनमर्वाचीनव्याख्याकारोक्तरीत्या न निरीश्वरपरम्, किंतु सेश्वरपरमेवेति जैमिनीयसूत्राणां दिङ्मात्रेण व्याख्याप्रदर्शनपरोऽयं ग्रन्थः। प्रथमाध्यायप्रथमद्वितीयपादयोरेव ग्रन्थ उपलभ्यते। अत्र च तत्त्वमुक्ताकलापस्य न्यायपरिशुद्धेश्च परामर्शदर्शनात्तदनन्तरोत्पन्नोऽयं ग्रन्थः।

११. मीमांसापादुका—अयं च ग्रन्थः पूर्वोदितसेश्वरमीमांसाप्रतिपादितविषयाणां पद्यात्मकः संग्रहः। अत्राहत्य पद्यानि १७३.

१२. तात्पर्यचन्द्रिका—श्रीभगवद्गीताभाष्यस्य भगवद्रामानुजीयस्य व्याख्यारूपोऽयं ग्रन्थः। प्रायेण प्रतिश्लोकं प्रतिवाक्यं प्रतिपदं चावतरणवितरणपूर्वकं भाष्यकृदाशयाविष्करणरीतिस्तथा स्वसिद्धान्तस्थापनधोरणी चान्यादृशी दरीदृश्यतेऽत्राचार्याणाम्। अत्र शतदूषण्याः सेश्वरमीमांसायाश्चोल्लेखात्ततः परोऽयं ग्रन्थः।

१३. गीतार्थसंग्रहरक्षा—श्रीभगवद्गीता बहुभिर्बहुधा व्याख्यानव्याजेनापन्थानं नीत्वा विप्लावितेति मन्वानो भगवान् यामुनाचार्यस्तस्याः समञ्जसं सांप्रदायिकं चार्थमवबोधयितुं गीतार्थसंग्रहं नामातिसंक्षिप्तं ग्रन्थं ३२ श्लोकैर्जग्रन्थ। तस्यातिगाढत्वादतिसंक्षिप्तत्वाच्च मितमतीनां दुरवबोधतामाकलय्य तदाशयं यथावद्विशदयितुं ग्रन्थमेनमरचयन्नाचार्याः। अत्र च कर्मज्ञानभक्तियोगानां निष्कृष्टं स्वरूपं परस्परं संबन्धः सार्थक्यं च विशदमुपपादितम्। अत्र निक्षेपरक्षा तात्पर्यचन्द्रिका च निर्दिष्टेति ततः पश्चात्तनोऽयं ग्रन्थः।

१४. न्यायसिद्धाञ्जनम्—न्यायपरिशुद्धावन्तिमे परिच्छेदे संग्रहेण निर्दिष्टस्य प्रमेयतत्त्वस्य विस्तरेण विचारोऽत्र क्रियते। अत्र च षट् परिच्छेदाः—जडद्रव्य-जीव-ईश्वर-नित्यविभूति-बुद्धि-अद्रव्यसंज्ञकाः। षष्ठे परि-

च्छेदेमध्य एव विच्छिन्नोऽयं ग्रन्थः। उपरि भागो नोपलभ्यते। तात्पर्यचन्द्रिकाया अत्र निर्देशः क्रियते।

१५. तत्त्वटीका—श्रीभगवद्रामानुजीयश्रीभाष्यस्य विवरणरूपोऽयं ग्रन्थः। विस्तृतव्याख्यायां श्रुतप्रकाशिकायामविचारिता बहवो विषया भाष्यकृदाशयस्थिता अत्राविष्कृताः। जीज्ञासाधिकरणमपरिसमाप्यैव विच्छिन्नोऽयं ग्रन्थ इति किं ब्रूमः कालस्य दौर्गत्यम्। अयं च ग्रन्थ आचार्येणाष्टाविंशे श्रीभाष्यप्रवचने कृत इत्यभिहितम्।

१३. ईशावास्योपनिषद्भाष्यम्—भगवद्रामानुजमुनयो वेदार्थसंग्रहश्रीभाष्याभ्यामेवोपनिषदो व्याख्यातप्राया इति मन्वानाः पृथगुपनिषद्भाष्यं नाम ग्रन्थं नारचयन्निति विदितमेतत्। अथापीशावास्यवाक्यानामर्थः सुस्पष्टं नावगत इति तदीयमाशयमनुसृत्यैवास्या उपनिषदो भाष्यमभाषिष्टासावाचार्यः। अदसीयं भाष्यमनुरुध्यैव नारायणमुनिभिर्व्याख्यान्तरमप्यारचितमित्यवगम्यते।

१७. रहस्यरक्षा—श्रीवैष्णवसमयाचारसिद्धस्य प्रपदनस्य स्वरूपं, महिमा, अङ्गानि, अनुष्ठानावश्यकता इत्यादीन्यवश्यज्ञातव्यान्यत्राविष्कृतानि। अयं च ग्रन्थस्त्रिभिरधिकारैः क्रमेण भगवद्रामानुजविरचितस्य गद्यत्रयस्य, भगवद्यामुनाचार्यविरचितस्य स्तोत्ररत्नस्य, तैरेव विरचितायाश्चतुःश्लोक्याश्च भाष्यरूपः। प्रपदनस्य मोक्षसाधनत्वे श्रियो विभुत्वे च विप्रतिपन्नानां सयूथ्यानां केषांचिदाक्षेपस्य सप्रमाणं समाधिमभिधाय सिद्धान्तः समर्थितः।

१८. वादित्रयखण्डनम्—श्रीशंकरभास्करयादवप्रकाशमतानां खण्डनरूपोऽयं ग्रन्थः। अतीव संक्षिप्तः सुललितश्चायं ग्रन्थः। अयं शतदूषणीसर्वार्थसिद्ध्यादिप्रौढतमग्रन्थानां निर्मातृभिः श्रीवेदान्तदेशिकैर्विरचित इति वक्तुं नानन्यथासिद्धं दृढतरं च प्रमाणमुपलभ्यते विना प्रारम्भे क्वचित्पुस्तकेषु विलिखितात् "श्रीमान् वेङ्कटनाथार्यः" इत्यादिध्यानश्लोकात् तथान्ते

विलिखितात् "कवितार्किकसिंहस्य कृतिषु वादित्रयखण्डनं समाप्तम्" इति वाक्याच्च । एतद्ग्रन्थवाक्यशैल्यादिपरिशीलने ग्रन्थोऽयं सुप्रसिद्धवेदान्तदेशिकविरचितो भवितुमर्हति वा न वा इति संदेहो जायते ।

१९. चकारसमर्थनम्—अयं ग्रन्थो लुप्तः । अदसीयां शतदूषणीमामूलाग्रं विमृष्टवता विद्यारण्येनैकत्र पङ्क्तौ चकारस्याधिक्ये उद्घाटिते तदावश्यकतासमर्थनपरमिदं पत्रमिति द्राविडवैभवप्रकाशिकादावुक्तम् ।

२०. न्यासविंशतिः सव्याख्या—अस्मिन् ग्रन्थे प्रपत्त्यपरपर्यायस्य न्यासस्यानुष्ठानप्रकारः, तदौपयिकशिष्याचार्यादिलक्षणम्, भक्तिप्रपत्त्योरधिकारिविभाग इत्यादिकं विंशत्या श्लोकैर्निरूप्यते । अन्ते चोपसंहारस्वानुष्ठानमुखेन द्वौ श्लोकावुपनिबद्धौ । आहत्यात्र २२ श्लोकाः । श्लोकानामभिप्रायविवरणमुखेनाचार्येणैवास्या व्याख्यापि विरचिता ।

२१. द्रमिडोपनिषत्तात्पर्यरत्नावली—अयं ग्रन्थः पद्यरूपः श्रीशठकोपाख्यदिव्यसूरेः गाथात्मकदिव्यप्रबन्धस्यार्थसंग्रहरूपः । अत्र १३०. पद्यानि वर्तन्ते । तत्रादौ उपोद्घाततया १० पद्यानि, ततः प्रतिदशकमेकैकमिति दशकशतस्य १०० पद्यानि, प्रतिशतकमेकैकमिति शतकदशानां १० पद्यानि, अन्ते चोपसंहारपराणि षट् पद्यानि, मध्ये १-४-१ गाथायाः एकम्, ४-७. १ गाथायाः एकम्, ४-९-१ गाथायाः द्वे, इत्याहत्य चत्वार्यधिकानि पद्यानीति प्रविभागः ।

२२. द्रमिडोपनिषत्सारः—अयमपि पद्यनिबद्धः । अत्र २६ पद्यानि श्रीशठकोपगाथार्थसंग्रहरूपाणि वर्तन्ते ।

२३. यादवाभ्युदयः—श्रीकृष्णस्यावतारमारभ्य भारतयुद्धसमाप्तिपर्यन्तां कथां चतुर्विंशत्या सर्गैर्वर्णयति कविसिंहोऽसावाचार्यवर्यः । वर्णनारामणीयकेन पदविन्याससौकुमार्यादिना च कालिदासीयस्य रघुवंशस्य भूयसानुकरोतीदं काव्यरत्नम् । क्वचित् क्वचित्तमतिशेते च ।

२४. हंससंदेशः—मारुतिमुखान्मैथिलीं लङ्कायामशोकवनिकागतामवगत्य राघवो राजहंसमेकं मैथिलीसकाशं प्रति दूतं प्रेषयतीति प्रतिपादनीयोऽत्र वस्तुविशेषः। ग्रन्थोऽयमाश्वासद्वयोपनिबद्धः। प्रथमाश्वासे ६० पद्यानि, द्वितीये च ५० पद्यानि सन्ति। भूयसा कालिदासीयस्य मेघसंदेशस्यानुकरोति लघुकाव्यरत्नमिदम्। मेघसंदेशे प्राकृतभोगप्रवणो यक्षः स्वभर्तुः कोपात्कान्तया विरहितो दक्षिणस्या दिश उत्तरां दिशं प्रति कामरसालम्बनभूतां कान्तामुद्दिश्य कामरसोद्दीपकं तामसं कृष्णवर्णं मेघं दूततया प्रहिणोतीति कविकल्पितं वस्तूपनिबद्धम्। हंससंदेशे तु अपवर्गश्रेयःप्रदो रघुपतिः स्वसंकल्पेनैव दयिताविरहमनुभवन् स्वस्य सहधर्मचारिणीं जगन्मातरं मैथिलीमुद्दिश्य उत्तरस्या दिशो दक्षिणां दिशं प्रति सात्त्विकं शुक्लवर्णं राजहंसं दूततया प्रेषयतीति महत् विषयवैलक्षण्यम्। अत्र चान्यापदेशेन कश्चिदौपनिषदोऽर्थविशेषः परिस्फुरति। तथाहि—अनादिकर्मवासनया भगवतो विश्लिष्यन् जीवः संसारसागरवेष्टितः क्वचित् दुःख्यन् परितप्यते। एवं गच्छति काले यदा जीवस्य प्रारब्धसुकृतवशात् मुमुक्षा जायते, तदैवापवर्गसुखप्रदो भगवांस्तामेव मुमुक्षां व्याजीकृत्य तद्बोधनार्थं कंचित् सात्त्विकमाचार्यं परमहंसरूपिणं प्रेषयति। तेन चाचार्येण स्वनिकटं प्राप्य दत्तमन्त्ररत्नाद्युपदेशोऽधिगततत्त्वज्ञानो जीवो भगवन्तं प्रपद्य संसारान्मुक्तो भवतीति वेदान्तरहस्यभूतोऽर्थोऽत्र वस्तुत्वेन निवेशित इति युक्तं काव्यस्यास्य हितोपदेशपरत्वमाचार्यस्य चास्य वेदान्ताचार्यत्वमध्यवस्यन्ति सन्तः।

२५. सुभाषितनीवी—सुभाषितानां मूलधनरूपोऽयं ग्रन्थः। अत्र द्वादश पद्धतय उपनिबद्धाः। ता यथा—१. अनिपुणपद्धतिः, २. दृप्तपद्धतिः, ३. खलपद्धतिः, ४. दुर्वृत्तपद्धतिः, ५. असेव्यपद्धतिः, ६. महापुरुषपद्धतिः, ७. समचित्तपद्धतिः ८. सदाश्रितपद्धतिः, ९. नीतिपद्धतिः,

१०. वदान्यपद्धतिः, ११. सुकविपद्धतिः, १२. परीक्षितपद्धतिश्चेति। आहत्य पद्यसंख्या १४५. अत्र च प्रायेण राज्ञामावश्यकनीतयो बोध्यन्ते। इदं च स्वपदाश्रिताय माधवात्मजाय सर्वज्ञशिंगप्पनाम्ने भूपतये सदुपदेशबोधनार्थं विरचय्य प्रहितमिति वैभवप्रकाशिकायामुक्तम्।

२६. वैराग्यपञ्चकम्—आचार्यवर्यस्यास्य वैराग्यकाष्ठामाविष्करोतीदं श्लोकपञ्चकम्। एतत्समकालिकेनैतस्मिन् सुमहतीं मान्यताप्रतिपत्तिमाबिभ्राणेन च विजयनगरसाम्राज्यधुरंधरेणविद्यारण्येन स्वामिनो राजसदस्यनितरसाधारणीं संमाननां कारयितुं राजसकाशादाह्वानपत्रिकां काञ्चनशिबिकां च संप्रेष्याभ्यर्थितोऽयं वेदान्तदेशिकः स्वस्य ख्यातिलाभपूजासु वैमुख्यं चातकवृत्त्या भगवच्चरणारविन्दकैंकर्यानुभवप्रतीक्षतां परेषां विदुषामतिक्षुद्रभूपतिप्रसादलभ्यख्यातिलाभपूजौन्मुख्येन शोचनीयतां चाविष्कर्तुं श्लोकपञ्चकमेतत् विलिख्य प्रतिसंदिदेशेति प्रसिद्धिः। अन्ते चैवमुपसंहृतमाचार्येण—

"नास्ति पित्रार्जितं किंचिन्न मया किंचिदार्जितम्।
अस्ति मे हस्तिशैलाग्रे वस्तु पैतामहं धनम्॥"

इति। सर्वैरप्यवश्यपठनीयमास्वादनीयं चेदं श्लोकपञ्चकम्।

२७. समस्यासहस्रम्—अयं ग्रन्थो लुप्तः। स्तोत्ररत्नभाष्यस्यान्ते "अगणि सदसि सद्भिर्यः समस्यासहस्री" इत्यभिधानात् एतत्कर्तृकमासीदिति विज्ञायते। इदं च सुभाषितनीवीव सुनीतिबोधकं सुभाषितरूपं स्यादित्युन्नीयते।

२८. पादुकासहस्रम्—श्रीरङ्गनाथस्य पादुकामधिकृत्य स्तोत्ररूपोऽयं ग्रन्थः। अत्र च ३२ पद्धतयः सन्ति। ता यथा—१. प्रस्तावपद्धतिः, २. समाख्यापद्धतिः, ३. प्रभावपद्धतिः, ४. समर्पणपद्धतिः, ५. प्रतिप्रस्थान-

पद्धतिः, ६. अधिकारपरिग्रहपद्धतिः, ७. अभिषेकपद्धतिः, ८. निर्यातनापद्धतिः, ९. वैतालिकपद्धतिः, १०. शृङ्गारपद्धतिः, ११. संचारपद्धतिः, १२. पुष्पपद्धतिः, १३. परागपद्धतिः, १४. नादपद्धतिः, १५. रत्नसामान्यपद्धतिः, १६. बहुरत्नपद्धतिः, १७. पद्मरागपद्धतिः, १८. मुक्तापद्धतिः, १९. मरतकपद्धतिः, २०. इन्द्रनीलपद्धतिः, २१. बिम्बप्रतिबिम्बपद्धतिः, २२. काञ्चनपद्धतिः, २३. शेषपद्धतिः, २४. द्वन्द्वपद्धतिः, २५. संनिवेशपद्धतिः, २६. यन्त्रिकापद्धतिः, २७. रेखापद्धतिः, २८. सुभाषितपद्धतिः, २९. प्रकीर्णपद्धतिः, ३०. चित्रपद्धतिः, ३१. निर्वेदपद्धतिः, ३२. फलपद्धतिरिति । अत्र च द्रमिडोपनिषत्प्रबन्धनिर्माता श्रीशठकोपमुनिः श्रीरङ्गनाथपादुकाया अवतारविशेष इति, अत एवोभयोरपि श्रीशठकोपसमाख्येति च प्रतिपाद्य द्रमिडोपनिषद्गाथासमसंख्याकैः सहस्रेण श्लोकैस्तत्रत्या विषयाः सचमत्कारं प्रतिपादिताः । उपरि चाष्टौ श्लोका उपसंहारपरा इत्याहत्याष्टाधिकसहस्रश्लोका वर्तन्ते ।

२९. अच्चुअसअअं—भगवद्भक्तिनिमग्नोऽसौ देशिकवर्यः "भक्तिः शृङ्गारवृत्त्या परिणमति[1]" इत्युक्तरीत्या भक्तिशृङ्गारमनुभवन् श्रीशठकोप इवात्मानं भगवदत्यन्तपरतन्त्रां तदनुभवैकपरां नायिकां भगवन्तं च स्वानुभवविषयभूतं कान्तं वल्लभं संभाव्य स्त्रीणां तत्रापि मुग्धानां समुचितया प्राकृतभाषया भगवन्तं स्वाभिलषितं प्रार्थयते । अत्र १०१ श्लोका वर्तन्ते ।

३०. दयाशतकम्—श्रीवेंकटाद्रिनाथस्य भगवतः श्रीनिवासस्य दयामधिकृत्य श्लोकशतेन स्तोत्ररूपोऽयं ग्रन्थः । आहत्यात्र श्लोकसंख्या १०५.

३१-५४. अन्ये स्तोत्रग्रन्था यथा—१. हयग्रीवस्तोत्रम्—३३ श्लोकाः । २. दशावतारस्तोत्रम्—१३ श्लोकाः । ३. भगवद्ध्यानसोपानम्—१२ श्लोकाः । ४. गोपालविंशतिः—२१ श्लोकाः ।

[1] द्रमिडोपनिषत्तात्पर्यरत्नावली—३.

५. श्रीस्तुतिः—२५ श्लोकाः। ६. न्यासदशकम्—१० श्लोकाः। ७. अभीतिस्तवः—२९ श्लोकाः। ८. वरदराजपञ्चाशत्—५१ श्लोकाः। ९. वेगासेतुस्तोत्रम् (यथोक्तकारिस्तोत्रम्)—१० श्लोकाः। १०. अष्टभुजाष्टकम—१० श्लोकाः। ११. कामासिकाष्टकम्—९ श्लोकाः। १२. परमार्थस्तुतिः—१० श्लोकाः। १३. शरणागतिदीपिका (दीपप्रकाशस्तोत्रम्)—५९ श्लोकाः। १४. देवनायकपञ्चाशत्—५३ श्लोकाः। १५. देहलीशस्तुतिः—२८ श्लोकाः। १६. न्यासतिलकम्—३२ श्लोकाः। १७. रघुवीरगद्यम्। १८. भूस्तुतिः—३३ श्लोकाः। १९. गोदास्तुतिः—२९ श्लोकाः। २०. षोडशायुधस्तोत्रम्—१९ श्लोकाः। २१. सुदर्शनाष्टकम—९। २२. गरुडदण्डकः। २३. गरुडपञ्चाशत्—५२ श्लोकाः। २४. यतिराजसप्ततिः—७४ श्लोकाः। आहत्य स्तोत्रग्रन्थाः २४.

५५-५९. १. वेदार्थसंग्रहव्याख्यानम्। २. हरिदिनतिलकम्। ३. आराधनकारिका। ४. यज्ञोपवीतप्रतिष्ठा। ५. भूगोलनिर्णय :सव्याख्यः—इत्येते पञ्च ग्रन्था अप्याचार्यैर्विरचिता इति वदन्ति। अत्र प्रथमो लुप्तः। अन्ये चत्वार उपलभ्यन्ते।

**इति संकल्पसूर्योदयेनानेन सह षष्टिः (६०) ग्रन्थाः संस्कृतभाषामयाः।**

अथ संस्कृतद्रमिडभाषासंमेलनरूपमणिप्रवालभाषामया रहस्यनाम्ना प्रथिता ग्रन्थाः—

६१. रहस्यत्रयसारः—अत्र श्रीवैष्णवसंप्रदायसिद्धा विशिष्टाद्वैतप्रतितन्त्रसिद्धान्तभूताश्चानेके विषयाः प्रतिपाद्यन्ते। मूलमन्त्रद्वयचरमश्लोकाख्यमन्त्रत्रयस्य विस्तरेण विवरणरूपतया रहस्यत्रयसार इत्यस्य नाम प्रथते। अत्र चतुर्भिर्भागैर्विभक्ता द्वात्रिंशदधिकारा वर्तन्ते। ते च—१. उपोद्घाताधि-

कारः, २. सारनिष्कर्षाधिकारः, ३. प्रधानप्रतितन्त्राधिकारः, ४. अर्थपञ्चकाधिकारः, ५. तत्त्वत्रयचिन्तनाधिकारः, ६. परदेवतापारमार्थ्याधिकारः, ७. मुमुक्षुत्वाधिकारः, ८. अधिकारिविभागाधिकारः, ९. उपायविभागाधिकारः, १०. प्रपत्तियोग्याधिकारः, ११. परिकरविभागाधिकारः, १२. साङ्गप्रपदनाधिकारः, १३. कृतकृत्याधिकारः, १४. स्वनिष्ठाभिज्ञानाधिकारः, १५ उत्तरकृत्याधिकारः, १६. पुरुषार्थकाष्ठाधिकारः, १७. शास्त्रीयनियमनाधिकारः, १८. अपराधपरिहाराधिकारः, १९. स्थानविशेषाधिकारः, २०. निर्याणाधिकारः, २१ गतिविशेषाधिकारः, २२. परिपूर्णब्रह्मानुभवाधिकारः। इति प्रथमो भागः। २३. सिद्धोपायशोधनाधिकारः, २४. साध्योपायशोधनाधिकारः, २५. प्रभावव्यवस्थाधिकारः, २६. प्रभावरक्षाधिकार.। इति द्वितीयो भागः। २७. मूलमन्त्राधिकारः, २८. द्वयाधिकारः, २९. चरमश्लोकाधिकारः। इति तृतीयो भागः। ३०. आचार्यकृत्याधिकारः, ३१. शिष्यकृत्याधिकारः, ३२. निगमनाधिकारः। इति चतुर्थो भागः।

६२. परमतभङ्गः—अत्र चतुर्विंशत्याधिकारैः स्वसिद्धान्तस्थापनपूर्वकं लौकायतिक, बौद्ध, शांकर, भास्करीय, यादवप्रकाशीय, वैयाकरण, वैशेषिक, नैयायिक, कौमारिल, प्राभाकर, कापिल, यौग, पाशुपतादिमतानां विस्तरेण निरासः कृतः। अत्र शतदूषणीसेश्वरमीमांसयोर्निर्देशादस्य तदनन्तरकालिकत्वमवगम्यते।

६३. गुरुपरंपरासारः—अत्र श्रीवैष्णवगुरुपरंपरायाः क्रमः, प्रतिदिनं तदनुसंधानावश्यकता, तद्विरचितग्रन्थानां नामानीत्यादिकं संग्रहेण निरूप्यते। अयं च ग्रन्थः प्रायेण रहस्यत्रयसारेण सहानुसंधीयते, तथा कोशेषु प्रकाश्यते च। अथापि ततो भिन्न एव।

६४. परमपदसोपानम्—अत्र ब्रह्मविद्भिरधिरोहणीयस्य परमपदस्य प्राप्तिक्रमः कथ्यते। अत्र नव पर्वाणि वर्तन्ते। तानि यथा—१. विवेक-

पर्व, २. निर्वेदपर्व, ३. विरक्तिपर्व, ४. भीतिपर्व, ५. प्रसादहेतुपर्व, ६. उत्क्रमणपर्व, ७. अर्चिरादिमार्गपर्व, ८. दिव्यदेशप्राप्तिपर्व, ९. मोक्षानुभवपर्वेति ।

६५. हस्तिगिरिमाहात्म्यम्—ब्रह्माण्डपुराणोक्तप्रकारेण सत्यव्रतक्षेत्रापरपर्यायकाञ्चीनगरीस्थस्य हस्तिगिरेर्माहात्म्यं, तत्र हिरण्यगर्भेणाश्वमेधकरणं, तत्र भगवतो वरदराजस्याविर्भाव इत्यादिकमुपवर्णितम् ।

६६. स्तेयाविरोधः—इदंनामा कश्चन ग्रन्थो गुरुणानेन कृत इति पूर्वाचार्यैः परिगण्यते । परं त्वधुना लुप्तः । श्रीपरकालेन भक्ताग्रेसरेणान्येषां धनान्याहृत्य श्रीरङ्गादिक्षेत्रेषु भगवदालयनिर्माणादिकं कृतमित्यैतिह्ये विमन्यमानानामयं समाधानप्रदर्शक इति संप्रदायावगम्योऽस्य विषयः ।

६७-९४. अथ लघुरहस्यनाम्ना प्रथिताः संप्रदायग्रन्थाः । ते च अमृतरञ्जनीति अमृतास्वादनीति च भागद्वयेन विभिद्य व्यवह्रियन्ते । तत्राद्या यथा—१. संप्रदायपरिशुद्धिः, २. तत्त्वपदवी, ३. रहस्यपदवी, ४. तत्त्वनवनीतम्, ५. रहस्यनवनीतम्, ६. तत्त्वमातृका, ७. रहस्यमातृका, ८. तत्त्वसंदेशः, ९ रहस्यसंदेशः, १०. रहस्यसंदेशविवरणम्, ११. तत्त्वरत्नावली, १२. तत्त्वरत्नावलीविषयसंग्रहः, १३. रहस्यरत्नावली, १४. रहस्यरत्नावलीहृदयम्, १५. तत्त्वत्रयचुलकम्, १६. रहस्यत्रयचुलकम्, १७. सारदीप इत्याहत्य १७ रहस्यानि । द्वितीया यथा—१. सारसारः, २. अभयप्रदानसारः, ३. तत्त्वशिखामणिः (लुप्तः), ४. रहस्यशिखामणिः, ५. अञ्जलिवैभवम्, ६. प्रधानशतकम्, ७. उपकारसंग्रहः, ८. सारसंग्रहः, ९. मधुरकविहृदयम्, १०. मुनिवाहनभोगः, ११. विरोधपरिहार इत्याहत्य ११ रहस्यानि । एवममृतरञ्जन्यमृतास्वादन्योराहत्य २८ रहस्यानि ।

९५-११२. द्रामिडगाथारूपाः १८ ग्रन्थाः । ते च श्रीदेशिक-

प्रबन्धनाम्ना व्यवह्रियन्ते । ते यथा—१. मुंमणिक्कोवै (मणित्रयमाला), २. पंदुप्पा (कन्तुकगाथा, ३. कऴल्पा, ४. अम्मानैप्पा, ५. ऊशल्पा, ६. एशल्पा, ७. अडैक्कलप्पत्तु, ८. अर्थपञ्चकम्, ९ श्रीवैष्णवदिनचर्या, १०. पन्निरुनामम्, ११. तिरुच्चिन्नमालै, १२. गीतार्थसंग्रहगाथा, १३. नवरत्नमाला, १४. आहारनियमः, १५. तिरुमन्त्रच्चुरुक्कु, १६. द्वयच्चुरुक्कु, १७. चरमश्लोकच्चुरुक्कु, १८. प्रबन्धसार इति ।

११३. निगमपरिमलम्—अयं ग्रन्थो लुप्तः । श्रीशठकोपदिव्यसूक्तीनां विस्तृतव्याख्यानरूपोऽयमिति चतुःसप्ततिसहस्र(७४०००) ग्रन्थपरिमित इति च पूर्वाचार्याणामभिप्रायः ।

११४. शिल्पसारः—शिल्पशास्त्रार्थसारसंग्रहरूप एतन्नामा कश्चन ग्रन्थः श्रीवेदान्तदेशिकैर्विरचित इति केचिदभिप्रयन्ति । अयं ग्रन्थो लुप्तोऽधुना नोपलभ्यते ।

११५. गुरुरत्नावलिः । भागद्वयात्मकोऽयं ग्रन्थः श्रीवैष्णवगुरुपरंपरां प्रकाशयति । अयमपि ग्रन्थोऽनेनाचार्येण कृत इत्यवगम्यते ।

एवमाहत्य ११५ ग्रन्था एतैर्विरचिताः ।

अथेत्थमस्य ग्रन्थकर्तुरभिमता औपनिषदमतप्रक्रिया—विशिष्टाद्वैतमस्याभिरुचितं गुरुपरंपरागतमौपनिषदं मतम् । विशिष्टाद्वैतं नाम विशिष्टस्याद्वैतम् । अशेषचिदचिद्विशिष्टस्य ब्रह्मणोऽद्वैतम् एकत्वमित्यर्थः । चिदचिदीश्वररूपेण तत्त्वानि त्रिविधानि । तत्र चितामचितां चेश्वरेण सह प्रकारप्रकारिभावेन संबन्धः । चितः अचितश्च प्रकारभूताः । ईश्वरस्तु प्रकारी । तेषां प्रकारत्वं चापृथक्सिद्धसंबन्धेन शरीरतया । एवं च चिदचिच्छरीरकं ब्रह्मैकमेव तत्त्वमित्युक्तं भवति । तत्र प्रकारभूतानां चिदचितां प्रकारिभूतस्य ब्रह्मणश्चात्यन्तविलक्षणत्वेन परस्परं भेदः । तथा प्रकाराणां

चितामचितां च परस्परं भेदः। एवं चितोऽपि परस्परं प्रत्येकं भिन्नाः। तथा अचितोऽपि। तथापि विशिष्टस्य ब्रह्मण एकत्वात् एकत्वव्यपदेश-स्तदितरनिषेधश्च शास्त्रेषु।

पदार्थौ द्विधा—द्रव्यम्, अद्रव्यं चेति। तत्र द्रव्यं षोढा—त्रिगुणं, कालः, जीवः, ईश्वरः, नित्यविभूतिः, मतिश्चेति।

तत्र महदाद्यवस्थाश्रयं त्रिगुणम्। परस्परसंमिश्रसत्त्वरजस्तमोगुणकत्वात् त्रिगुणमित्युच्यते। तत्र च गुणत्रयस्य परस्परमुत्कर्षापकर्षवैधुर्येण साम्येनाव-स्थितिः। तच्च विचित्रसृष्ट्युपकारकत्वात् मायेति, महदादिविकार-प्रकृतित्वात् मूलप्रकृतिरिति, विद्याविरोधित्वात् अविद्येति, भगवतो लीलोप-करणत्वात् लीलाविभूतिरिति, सर्वप्रपञ्चप्रधानकारणत्वात् प्रधानमिति, अतिसूक्ष्मत्वात् गुणसाम्यावस्थाया अप्यस्फुटत्वाच्च अव्यक्तमिति चोच्यते। इदमेवावस्थाभेदात्—प्रकृतिः, महान्, अहंकारः, एकादशेन्द्रियाणि, पञ्च तन्मात्राणि, पञ्च भूतानि चेति चतुर्विंशतिधा भवति। तत्रापि मात्रया भेदमवलम्ब्य अव्यक्ताक्षरविभक्ततमोऽविभक्ततमोरूपावस्थाचतुष्टयमुदाह-रन्ति। तत्र गुणत्रयसाम्यावस्थायामव्यक्तमिति व्यपदेशः। सा चावस्था गुणत्रयवैषम्यस्याव्यवहितपूर्वावस्था। गुणसाम्यावस्थस्यैव चेतनसमष्टिगर्भत्व-मक्षरशब्देन व्यपदिश्यते। अतश्च सर्वं प्राकृततत्त्वजातं चिदचिदात्मकमिति मन्तव्यम्। यदाहुर्महर्षयः—“प्रधानादिविशेषान्तं चेतनाचेतनात्मकम्” इति। एतादृशं चेतनसमष्टिगर्भत्वमपि यत्र विवेक्तुमशक्यं तदवस्थमतिसूक्ष्मं तमःशब्देनोच्यते। तच्च द्वेधा—विभक्तम्, अविभक्तं चेति। अक्षराद्य-नन्तरावस्थौन्मुख्यविशिष्टं विभक्तं तमः। तदौन्मुख्यरहितमविभक्तं तमः। तच्च परमात्मशरीरतयापि चिन्तयितुमशक्यं सलिलविलीनलवणकल्पं सर्वज्ञ-परमात्मैकवेद्यमवतिष्ठते। अत्र चेत्थं निदर्शनं वक्तुं शक्यते—कुसूलनिहित-बीजस्थानीयमविभक्तं तमः। मृन्निहितबीजस्थानीयं विभक्तं तमः। सलिल-

संसृष्टार्द्रशिथिलावयवबीजतुल्यमक्षरम्। उच्छूनबीजसमानमव्यक्तम्। अङ्कुर-स्थानीयो महानिति।

अथ महान्—अहंकाराव्यवहितपूर्वावस्थाविशिष्टं त्रिगुणं महान्। बुद्धितत्त्वं महानिति सांख्योक्तिस्तु बुद्धेरात्मधर्मत्वादनादरणीया। स च महान् सात्त्विकः, राजसः, तामसश्चेति त्रिधा भिद्यते। सर्वत्र गुणत्रय-सत्त्वेऽपि तत्तद्गुणस्योन्मेषवशात्तथा तथा व्यवहारः।

अथाहंकारः—इन्द्रियशब्दतन्मात्रान्यतराव्यवहितपूर्वावस्थाविशिष्टं त्रिगुणमहंकारः। अभिमानोऽहंकार इति सांख्योक्तिस्तु अहंकारस्यात्मधर्म-त्वादनादरणीया। अत्रेदमवधेयम्—अहंकारशब्दस्त्रिष्वर्थेषु प्रयुज्यते। अनात्मनि देहादावहमिति प्रातीतावेकः। तदा चाभूततद्भावे च्विप्रत्ययमुत्पाद्य व्युत्पन्नोऽयं शब्दः। तादृशप्रतीतिहेतौ त्रिगुणविकारे अपरः। प्रत्यगात्मनोऽहं-शब्दार्थतया प्रतीतावन्यः। स चायं त्रिगुणद्रव्यविकारभूतोऽहंकारः सात्त्विक-राजसतामसभेदेन त्रिविधान्महत उत्पद्यमानः स्वयमपि सात्त्विकादिभेदेन त्रिविधः। तत्र सात्त्विकाहंकारस्य वैकारिक इति, तामसाहंकारस्य भूतादिरिति च नामान्तरम्। वैकारिकादेकादशेन्द्रियाणि, भूतादेः शब्द-तन्मात्रं चोत्पद्यते। राजसाहंकारस्तूभयोरप्यनुग्राहकः।

अथेन्द्रियाणि—सात्त्विकाहंकारोपादानकं द्रव्यमिन्द्रियम्। तच्च द्विविधम्—ज्ञानेन्द्रियं कर्मेन्द्रियं चेति। ज्ञानप्रसरणशक्तमिन्द्रियं ज्ञाने-न्द्रियम्। तच्च षोढा—मनःश्रोत्रचक्षुर्घ्राणरसनात्वग्भेदात्। उच्चारणाद्यन्य-तमक्रियाशक्तमिन्द्रियं कर्मेन्द्रियम्। तच्च पञ्चधा—वाक्पाणिपादपायूपस्थ-भेदात्।

अथ तन्मात्राणि—भूतानामव्यवहितपूर्वसूक्ष्मावस्थं द्रव्यं तन्मात्रम्। तादृशी चावस्था तन्मात्रा। तन्मात्रमेव भूतोपादानम्। तच्च पञ्चधा—शब्दतन्मात्र, स्पर्शतन्मात्र, रूपतन्मात्र, रसतन्मात्र, गन्धतन्मात्रभेदात्।

अथ भूतानि—विशिष्टशब्दादिविषयाधिकरणं भूतमिति भूतसामान्यलक्षणम् । तच्च पञ्चधा—आकाशवायुतेजोजलपृथिवीभेदात् । तेषां सृष्टिक्रमश्चेत्थम्—शब्दतन्मात्रादाकश उत्पद्यते । आकाशात् स्पर्शतन्मात्रम् । तस्माद्वायुः । वायोः रूपतन्मात्रम् । तस्मात्तेजः । तेजसो रसतन्मात्रम् । तस्माज्जलम् । जलात् गन्धतन्मात्रम् । तस्मात् पृथिवीति । तत्रोत्तरोत्तरस्मिन् भूते पूर्वपूर्वभूतगुणा अनुवर्तन्त इति सिद्धान्तः । लयक्रमस्तु व्युत्क्रमेणानुसंधेयः । अन्धकारः पार्थिवं द्रव्यम, अबाधितनीलादिप्रतीतेः । सर्वाण्यप्येतानि भूतानि प्रत्यक्षाणि ।

अथ पञ्चीकरणप्रक्रिया—पञ्च भूतानि प्रत्येकं द्विधा कृत्वा भागमेकं निधाय भागान्तरं चतुर्धा विभज्य तांश्चतुरो भागान् भूतान्तरेषु चतुर्षु संयोजयेत् । एवं सर्वेषु भूतेषु क्रियमाणेष्वेकैकस्य भूतस्यार्धं स्वभागः, अर्धान्तरं चतुर्णां भूतान्तराणां भागैः समुच्चितमिति ज्ञातव्यम् । तथाच सर्वाणि भूतानि सर्वभूतावयवसमाहाररूपाणि । तथापि स्वस्वभागस्य भूयस्तया परभागानामल्पीयस्तया चाकाशादिव्यपदेशः । एवं संमेलने प्रकृतिमहदहंकारादिगणने चाष्टीकरणाद्यपि ज्ञेयम् ।

अथ शरीरम्—पञ्च भूतानि प्रकृतिमहदहंकाराश्चेत्यष्टौ शरीरोपादानभूतानि । तत्र शरीरं नाम—चेतनं प्रति सर्वात्मना आधेयतया विधेयतया शेषतया चापृथक्सिद्धप्रकारभूतं वस्तु ।

अथ कालः—अयमप्यचिद्विशेयो गुणत्रयरहितो विभुर्नित्यो निमेषकाष्ठाकलामुहूर्तदिवसादिपरिणामी भूतादिव्यवहारहेतुश्च । विभोरपि परिणामित्वं न विरुध्यते । प्रत्यक्षश्चायम्, वर्तमानो घट इत्यादिप्रतीतेः ।

अथ जीवः—अणुश्चेतनो जीवः । स च न देह एव, नेन्द्रियाण्येव, नापि प्राणा एव, 'मम देहः, मम नेत्रं, मम प्राणाः' इत्यदिव्यतिरेकदर्शनात् । नापि संविदेव, 'सोऽहं जानामि' इति संविदाश्रयत्वप्रतीतेः । नापि धीरियं

भ्रान्तिः, अबाधात्; भ्रान्तित्वेऽपि ज्ञातारमन्तरेणानुपपत्तेः । किंच अहमित्यहमर्थतया ह्यात्मनः प्रतीतिः । धियश्चाहमर्थत्वासंभवः, अहं जानामीत्यहमर्थनिष्ठतया प्रतीतेः । नापि चिच्छायापत्त्या अन्तःकरणस्यैव ज्ञातृत्वप्रतीतिरहमर्थत्वं चेति युक्तम्, अचाक्षुषयोर्बिम्बाधिकरणयोश्छायापत्त्ययोगात् । अध्यासमात्रे छायापत्त्युपचार इति चेत्; अत्रेदं विवेचनीयम्—कुत्र कस्याध्यास इति । अन्तःकरणे चैतन्यस्येति चेत्, तर्हि तत्र चैतन्यमेव मिथ्या स्यात् । जपायामध्यस्तो हि रक्तिमा मिथ्येति परेषां मतम् । चैतन्ये अन्तःकरणस्याध्यास इति चेत्, तर्हि ज्ञानस्यान्तःकरणाश्रयता भ्रमः स्यात्, न तु अन्तःकरणस्य ज्ञातृत्वं भ्रमः । स चात्मा अहमिति प्रतीतिसिद्धः पुण्यपापादिकर्ता च । कर्तृत्वं च तस्य परमपुरुषाधीनम् । स च स्वयंप्रकाशो नित्यो नाना च । तस्य स्वयंप्रकाशत्वात् क्वचित् ज्ञानत्वव्यपदेशोऽपि । तदेवं ज्ञानं धर्मिभूतज्ञानं धर्मभूतज्ञानं चेति द्विविधम् । धर्मिभूतज्ञानं जीवः । धर्मभूतज्ञानं तस्य धर्मः । स च जीवः प्रतिशरीरं भिन्नः । सौभरिप्रभृतीनां शरीरेषु त्वेकमेव शरीरं जीववत् । अन्यानि तु धर्मभूतज्ञानव्याप्ततया सुखाद्युपलब्धिसाधनानि भवन्ति । धर्मभूतज्ञानस्य शास्त्रप्रमाणेन कर्मकृतसंकोचाभ्युपगमात् बद्धदशायां संकुचितत्वम् । मुक्तदशायां तु कर्माभावात् विकासित्वात् सर्वविषयत्वमिति ज्ञेयम् । जीवस्य नित्यत्वेऽपि देहसंबन्धोत्पत्तिविनाशप्रयुक्ताः 'उत्पन्नो जीवः नष्टो जीवः' इत्यादिका व्यवहाराः । स च जीवस्त्रिविधः—बद्धमुक्तनित्यभेदात् । तत्र बद्धाः संसारिणः कर्मपरवशा ब्रह्मादिस्तम्बपर्यन्ताः । मुक्ताः कंचित्कालं संसारिणो भूत्वा भक्तिप्रपत्तिभ्यां समाराधितभगवत्संकल्पेन निवृत्तसंसाराः । नित्याः कदाचिदप्यसंसारिणो भगवदनुभवतत्कैंकर्यपरा अनन्तगरुडादयः ।

अथ ईश्वरः—विभुश्चेतन ईश्वरः । अयमेव परब्रह्मेति भगवानिति ईश्वर इति परमपुरुष इति नारायण इति सर्वशरीरीति चोच्यते । स सर्वमपि

चिदचिदात्मकं जगत् अन्तर्यामितया व्याप्य वर्तते । अतः सर्वमपि जगत् तस्य शरीरम् । शरीरवाचिपदानां शरीरिपर्यन्ततया लोकसिद्धत्वेन सर्वाण्यपि पदान्यपर्यवसानवृत्त्या भगवत्पराणि । अत एव "सर्वं खल्विदं ब्रह्म[1]" "विश्वमेवेदं पुरुषः[2]" "तदेवाग्निस्तद्वायुस्तत्सूर्यस्तदु चन्द्रमाः[3]" इत्यादिसामानाधिकरण्यश्रुतिः । अयमीश्वरश्चिदचिद्विशिष्टवेषेण जगदुपादानम् । यथोक्तम्—"सच्च त्यच्चाभवत्[4]" इत्यादि । संकल्पविशिष्टवेषेण निमित्तकारणम् । यथोक्तम्—"सोऽकामयत बहु स्यां प्रजायेयेति । इदं सर्वमसृजत[5]" इति । कालादिरूपेण सहकारिकारणं च । स चायमीश्वरोऽनन्तकल्याणगुणनिधिः, अस्पृष्टदोषगन्धश्च । एतदेव ब्रह्मण उभयलिङ्गमित्युच्यते । श्रुतिस्मृत्यादिषु ब्रह्मनैर्गुण्यवादा ब्रह्मणो हेयगुणनिषेधपराः । सागुण्यवादाः स्वाभाविकज्ञानशक्त्यादिकल्याणगुणवैशिष्ट्यपराः । "स्वाभाविकी ज्ञानबलक्रिया च[6]" इति गुणानां स्वाभाविकत्वं हि श्रूयते । एकस्मिन्नेव हि वाक्ये "विजिघत्सोऽपिपासः[7]" इति हेयगुणान्निषिध्य "सत्यकामः सत्यसंकल्पः[8]" इति गुणोक्तिर्दृश्यते । अतः सगुणनिर्गुणवाक्ययोरुत्सर्गापवादन्यायेनोपक्रमोपसंहारन्यायेन वा विषयव्यवस्था । नियतपौर्वापर्यादपच्छेदन्यायस्य नात्रावसरः । अनियतपौर्वापर्यस्थले हि सः । 'ब्रह्म निर्विशेषम् । तस्याच्छादिकया अविद्यया तिरोधानान्न प्रकाशः । विक्षेपिकया अविद्यया तस्मिन् प्रपञ्चाध्यासः । स एव सृष्टिः' इति वादस्तु न विचारसहः, ब्रह्मणो ज्ञानानन्दमयस्याविद्यादिदोषगन्धायोगात् । तस्य निर्धर्मकत्वे तिरोधेयधर्माभावात्तिरोधानायोगः । तत्स्वरूपस्यैव तिरोधाने तस्यैव हानिप्रसङ्गः । 'प्रपञ्चो मिथ्या दृश्यत्वात् व्यावर्तमानत्वात्' इत्यपि

[1] छा-उ. ३-१४. [2] महा-उ. ३. [3] महा-उ. १-७.
[4] तै-उ. २-७-१. [5] तै-उ. २-६-१. [6] श्वे-उ. ६-८.
[7] छा-उ. ८-१-५. [8] छा-उ. ८-१-५.

न सम्यक्, प्रपञ्चोपहितस्य ब्रह्मणो दृश्यत्वेन मिथ्यात्वापातात्। एममनुपहितस्यापि। घटे देशान्तरं नीते 'इहेदानीं घटो न सन्' इति सत्त्वस्य व्यावर्तमानत्वेन सत्त्वसामान्यस्यापि मिथ्यात्वप्रसङ्गाच्च। न च तत्तद्देशकालावच्छेदेन व्यावर्तमानत्वविवक्षणान्न दोषः, तथाहि सति तादृशप्रतीतेर्भ्रमत्वाङ्गीकारात्। वाचस्पत्युक्तरीत्या मिथ्यापदस्यानित्यपरत्वे तु न कोऽपि विवादः, प्रपञ्चानित्यत्वस्य सर्वेषामभिमतत्वात्।

ब्रह्मैव च जगत उपादानं निमित्तं च। ब्रह्मस्वरूपस्याविकारित्वेन प्रकारभूतचिदचिदंशे परिणामाङ्गीकारः। तत्राप्यचिदंशे स्वरूपविकारः। चिदंशे तु धर्मभूतज्ञानांश इति विवेकः। नित्यस्यापि जीवधर्मभूतज्ञानस्य कर्मकृतसंकोचविकासात्मकविकारः प्रामाणसंप्रतिपन्नत्वेनेष्ट एव। निमित्तत्वं तु स्वरूपेणैव। ब्रह्मनिर्विशेषवादे तु तत्स्वरूप एव विकारस्याङ्गीकरणीयत्वान्निर्विकारत्वश्रुतिविरोधः। मायारूपोपाध्यंशे विकार इति तु न सुवचम्, उपाधेस्तदभिन्नत्वे स्वरूपानतिरेकात्। भिन्नत्वे तु सविशेषत्वमेवायातम्। "सदेव सौम्येदमग्र आसीत् एकमेवाद्वितीयम्[1]" इत्यादौ इदमिति स्थूलचिदचिच्छरीरकं ब्रह्म परामृश्य तस्य सृष्टेः प्रागिदानीं परिदृश्यमाननामरूपविभागानर्हतया केवलं सच्छब्दवाच्यसूक्ष्मचिदचिच्छरीरकब्रह्मोपादनकत्वं सदेवेत्येकमेवेति चोच्यते। अद्वितीयमिति निमित्तान्तरराहित्यमित्यभिन्ननिमित्तोपादानत्वं सिध्यति। एवं च सद्विद्यादिरपि षड्विधतात्पर्यलिङ्गैः सविशेषब्रह्मोपासनपरैव। "सत्यं ज्ञानमनन्तम्[2]" इत्यादिभिर्ब्रह्म सत्यत्वादिविशिष्टमेव बोध्यत इति सविशेषमेव ब्रह्म। यत्तु—'सत्यं ज्ञानमनन्तमिति वाक्यमखण्डार्थपरम्, लक्षणवाक्यत्वात्, प्रकृष्टप्रकाशश्चन्द्र इति वाक्यवत्। न चैतत् स्वरूपबोधकं न भवतीति वक्तुं शक्यते, कश्चन्द्र इति चन्द्रस्वरूपस्यैव पृष्टत्वेनोत्तरस्यापि स्वरूपबोधकत्वावश्यकत्वात्। यदेव पृष्टं तदेव हि प्रतिवक्तव्यम्, अन्यथा

[1] छ-उ. ८-२-१. [2] तै-उ. २-१-१.

आम्रान् पृष्टः कोविदारानाचष्टे इति न्यायावतारप्रसङ्गादित्' इति। तत्रेदं वक्तव्यम्—सत्यादिवाक्यं लक्षणपरमिति सर्वसंमतम्। लक्षणं हि नामासाधारणो धर्मः। तद्वाचिनः कथं निर्विशेषपरत्वम्? दृष्टान्तोऽपि साध्यविकलः, तस्यापि वाक्यस्य चन्द्रासाधारणधर्मप्रतिपादनपरत्वात्। नाप्यपृष्टोत्तरम्, प्रष्टा खलु सामान्यतश्चन्द्रशब्दार्थं प्रतिपद्य तद्विशेष-जिज्ञासुस्तदसाधारणधर्ममप्राक्षीत्। वक्ता च तदसाधारणधर्मरूपं लक्षणं प्राहेति कोऽत्र विरोधः? अतः प्रश्नोऽपि सविशेषपरः, उत्तरमपि तथैवेत्यवगन्तव्यम्। "भिन्नप्रवृत्तिनिमित्तानां शब्दानामेकस्मिन्नर्थे वृत्तिः सामानाधिकरण्यम्[1]" इति हि शब्दविद आमनन्ति। यत्त्वत्र भिन्नप्रवृत्ति-निमित्तानामिति प्रायिकाभिप्रायम्, कोशपठितेषु पर्यायपदेषु तदभावादिति कस्यचिदाधुनिकस्य कल्पनं, तत्तु नादरणीयम्—पर्यायपदेष्वपि "अमरा निर्जरा देवाः[2]" इत्यादिषु प्रवृत्तिनिमित्तभेदसत्त्वात्, अन्यथा घटः घटः घटः इत्यादिवदुन्मत्तप्रलापापातात्। सोऽपि हि "न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते। अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते[3]॥" इत्यादिना शब्दानुविद्धामेव तत्तत्पदार्थप्रतीतिमाचष्टे। इदं ब्रह्मैव हिरण्य-गर्भादिशरीरकं जगत् सृजति। विष्णुरूपेण रक्षति। रुद्रान्तकाद्यन्तर्या-मितया तच्छरीरकं संहरतीति तदेव जगज्जन्मस्थितिलयकारणं भवति। एवं च निरुपाधिकं ब्रह्म सोपाधिकमीश्वर इत्युच्यत इति परेषां मतं नाङ्गीक्रियत इति ज्ञेयम्।

स चायमीश्वरः परव्यूहविभवार्चान्तर्यामिरूपेण पञ्चधात्मानं प्रतिपद्यते। परो नाम श्रीवैकुण्ठे श्रीभूमिनीलासहितः षाड्गुण्यपरिपूर्णः परब्रह्मपरवासुदेवनारायणादिशब्दवाच्यः। व्यूहो नाम स एवोपासनाद्यर्थं वासुदेवसंकर्षणप्रद्युम्नानिरुद्धभेदेन चतुर्धा व्यूह्यावस्थितः। केशवादयो

[1] महा-प्र. १-२-४२. [2] नाम. १-१-७. [3] वाक्य. १-१२४.

व्यूहावान्तरभेदाः । विभवो नाम मत्स्यकूर्माद्यवतारविशेषाः । अर्चा नाम स्वयंव्यक्तदैवसैद्धमानुषादिभेदेन देवालयादिषु समर्च्यमानो मूर्तिविशेषः । अन्तर्यामी नाम समस्तचिदचिदन्तर्व्याप्त्या तेषां ध्यानोपयोगितया सदा संनिहितः स्वरूपविशेषः । अणुरूपे जीवे ब्रह्मणः कथमन्तः प्रवेश इति चेत्; अत्र केचित्—अघटितघटनाशक्त्येति वदन्ति । वस्तुतस्तु—तदप्रविष्टभागाभावो दशदिक्संबन्ध एव वा सर्वव्याप्तिरिति न दोष इति ।

अथ नित्यविभूतिः । इयं शुद्धसत्त्वशब्देन चोच्यते । रजस्तमोऽसंसृष्टशुद्धसत्त्ववती नित्यविभूतिः । अचेतना चेयम् । स्वयंप्रकाशत्वात् ज्ञानात्मिका । इयं च नित्यमुक्तेश्वराणामिच्छानुरूपशरीरादिरूपेणावतिष्ठते । तत्र नित्यमुक्तयोः शरीरपरिग्रहो भगवदभिमतकैंकर्यलाभाय । भगवतस्तु स्वभोगाय स्वशेषभूतनित्यमुक्तानन्दाय मुमुक्षूपास्यत्वसिद्धये च स्वसंकल्पादेव ।

शुद्धसत्त्वमयं श्रीवैकुण्ठं प्राप्तस्य निर्दुःखनिरतिशयानन्दरूपभगवदनुभवतत्कैंकर्यात्मको मोक्षः । न तु स्वात्मानुभवरूपकैवल्यमेव, तस्य परिमितानन्दप्रदत्वात् । एवं चाप्राकृतशुद्धसत्त्वमयलोकप्राप्त्यनन्तरमेव जीवस्य मुक्त इति व्यवहारः । न तु ततः पूर्वमिति स्थितिः । पराभ्युपगता जीवन्मुक्तिर्न संमन्यते, जीवतो मुक्तत्वासंभवात् । मुक्तिसादृश्यात् गौणव्यवहारे तु न विरोधः ।

अथ मतिः । अर्थप्रकाशो मतिः । सा च जीवेश्वरनिष्ठा । नित्येष्वीश्वरे चाविकारा नित्या विभुश्च । तथापि सा बद्धानां तिरोहिता । मुक्तानां पूर्वं तिरोहिता, अनन्तरमाविर्भूता । तस्या उत्पत्तिनाशादिव्यवहारस्तु संकोचविकासपरः । सा च स्वतः प्रमाणभूता स्वप्रकाशा च । यतः सा संकोचविकासवती, अतो द्रव्यम् । नियमेनात्माश्रितत्वात् गुणश्च । एकस्यैव द्रव्यत्वं गुणत्वं च न विरुद्धम् । न हि वयमाक्षपादा इवाद्रव्यमेव गुणमाचक्ष्महे । किं तु अवस्थाश्रयो द्रव्यम्, नियमेन किंचिदाश्रितं

गुण इति द्रव्यगुणयोर्लक्षणं ब्रूमः। यथा प्रभा प्रभावतो गुणोऽप्युष्णस्पर्शाश्रयत्वात् प्रभावन्तं विहायान्यत्र प्रसरणाच्च द्रव्यमपि, तथा प्रकृतेऽपि। सैषा मतिरेवोपाधिभेदात् सुखदुःखेच्छाद्वेषकामसंकल्पव्यवहारभाग्भवति। प्रत्यक्षानुमानशब्दजाः प्रमितयोऽपि तद्भेदा एव। तत्र ज्ञातकरणजज्ञानस्मृतिभिन्ना मतिः प्रत्यक्षप्रमितिः। सा च द्विविधा-निर्विकल्पकसविकल्पकभेदात्। उभयविधापि विशिष्टविषयैव, इन्द्रियार्थसंबन्धैकजन्या च। केचित्तु शब्दजन्यामपि प्रत्यक्षप्रमितिमिच्छन्ति; तथाहि—'तत्त्वमसि' इत्यादिवाक्यार्थेऽवगते जीवाभिन्नब्रह्मसाक्षात्कारो जायते। दृश्यते च 'दशमस्त्वमसि' इति वाक्यात् दशमत्वापरोक्षप्रमितिः। अत एव श्रूयते—"यत्साक्षादपरोक्षाद् ब्रह्म[1]" इति। अत्रेदं वक्तव्यम्—शब्दस्यापरोक्षज्ञानजनकत्वं न संभवति, व्याघातात्। अज्ञातकरणजन्यत्वस्य प्रत्यक्षत्वस्य ज्ञातकरणके शाब्देऽवृत्तेः। यद्यपि संस्कारस्य परोक्षस्मृतिजनकतैकस्वभावस्यापि क्वचिदपरोक्षभूतप्रत्यभिज्ञाजनकत्वं दृष्टम्, तथापि तत्रेन्द्रियसहभावरूपविशेषसत्त्वात् तथात्वम्। अत्र तु शब्दस्य न तादृशेन्द्रियसहभावोऽस्तीति वैषम्यम्। दशमस्त्वमसीति दृष्टान्तोऽप्यसंगतः। तत्र त्वमर्थमात्रं प्रत्यक्षम्। दशमोऽहमिति तु न प्रत्यक्षमिति सर्वसंप्रतिपन्नम्। अयं भावः—दशमस्त्वमसीति वाक्यं दृष्टान्तयतः कोऽभिप्रायः? किमयमुपदेशोऽनवगतदशमभावं प्रति? उत अवगतदशमभावं प्रति? आद्ये दशमत्वस्यानवगतत्वात् उपदेशलभ्यं तदिति परोक्षमेव। यदीन्द्रियं पुरुषवचनमनपेक्ष्यात्र स्वतन्त्रमेव बोधयेत्, तर्हि कुतोऽनवगतं तत्? यदि च त्वमर्थे विशेष्यांशे चक्षुःसंनिकर्षयोग्यतामात्रेण विशेषणांशे शब्दजन्येऽपि ज्ञाने प्रत्यक्षत्वाभ्युपगमः, तर्हि धर्मवांस्त्वमसीति कार्तान्तिकोपदेशादौ धर्मादेरपि प्रत्यक्षत्वं प्रसजेत्। द्वितीये तु पक्षे माषराशिप्रविष्टमषीन्यायेन

[1] बृ-उ. ३-४-१.

पूर्वापरापरोक्षधीनैरन्तर्येण मध्यवर्तिशब्दजन्यधियोऽप्यपरोक्षत्वव्यवहारः, यदि तादृशो व्यवहारः प्रामाणिकः स्यात् ।

मोक्षसाधनतयावगते भक्तिप्रपत्ती अपि मतिभेदावेव । तत्र भक्तिर्नाम यमनियमाद्यङ्गवती तैलधारावदविच्छिन्नस्मृतिसंततिरूपा । सा च त्रैवर्णिकमात्राधिकारा कर्मयोगज्ञानयोगाङ्गिका च । सा च दहरविद्यादिभेदेन बहुधा । प्रपत्तिर्नाम न्यासविद्या । तस्याः पञ्चाङ्गानि—

"आनुकूल्यस्य संकल्पः प्रातिकूल्यस्य वर्जनम् ।
रक्षिष्यतीति विश्वासो गोप्तृत्ववरणं तथा ।
आत्मनिक्षेपकार्पण्ये षड्विधा शरणागतिः[1] ॥"

इति । अत्रात्मनिक्षेपोऽङ्गी । इतराणि तदङ्गानीति विवेकः । अस्यां च प्रपत्तावधिकुर्वाणैरवश्यावगन्तव्याः पञ्चार्थाः । ते च—

"प्राप्यस्य ब्रह्मणो रूपं प्राप्तुश्च प्रत्यगात्मनः ।
प्राप्त्युपायः फलं चैव तथा प्राप्तिविरोधि च[2] ॥"

इति । किंचैषा प्रपत्तिस्त्रैवर्णिकैस्तदितरैश्चाधिकर्तुं शक्या, न तु भक्तियोगवत् त्रैवर्णिकैरेव । अस्याश्च "ब्रह्मणे त्वा महस ओमित्यात्मानं युञ्जीत[3]" "तस्मान्न्यासमेषां तपसामतिरिक्तमाहुः[4]" "मुमुक्षुर्वै शरणमहं प्रपद्ये[5]" इत्यादिवैदिकवाक्यप्रतिपाद्यत्वेऽपि सत्यवदनादिवत् सर्वाधिकारत्वं न विरुध्यत इति संप्रदायः । भक्तियोगस्य साधनभक्तिरिति न्यासयोगस्य साध्यभक्तिरिति च प्रख्यान्तरम् । तत्र साधनभक्तिः प्रारब्धेतरकर्मनाशनी । साध्यभक्तिस्तु प्रार्थनानुसारेण प्रारब्धकर्मणोऽपि विनाशनीति सिद्धान्तः । प्रपत्तेरपि ज्ञानविशेषरूपतया ब्रह्मज्ञानान्मुक्तिं वदन्तीभिस्तदितरोपायनिषेधपराभिश्च श्रुतिभिर्न विरोधः । प्रपत्तिलक्षणं तु—

[1] अहि. सं. ३७-२-२७, २८.
[2] हारी-सं.
[3] महा-उ. २४-१.
[4] महा-उ. २४-१.
[5] श्वे-उ. ६-१८.

"त्वमेवोपायभूतो मे भवेति प्रार्थनामतिः ।
शरणागतिरित्युक्ता सा देवेऽस्मिन् प्रयुज्यताम्[1] ॥"

इत्यादिकमुक्तम् । विस्तरस्तु श्रीमद्रहस्यत्रयसारे निक्षेपरक्षादौ चावगन्तव्यः । भक्तस्य भगवदनुभव एव फलम्, प्रपन्नस्य तु तत्कैंकर्यमपीति फलभेद-कल्पनं तु न चतुरश्रम्, प्रमाणाभावात् ।

अथ अद्रव्यम्—संयोगरहितमद्रव्यम् । तच्च सत्त्वरजस्तमांसि शब्दस्पर्शरूपरसगन्धाः संयोगः शक्तिरिति दशधा । संख्यापरिमाणादीनां दर्शनान्तरोक्तानां तत्तद्द्रव्यस्वरूपमादायोपपत्तेर्नातिरिक्तता ।

एवं नाथयामुनयतीन्द्रादिसत्संप्रदायसिद्धोऽप्ययं विशिष्टाद्वैतसिद्धान्तो भगवद्रामानुजशिष्यपरंपरायामन्यतमैः श्रीप्रणतार्तिहरदेशिकैः श्रीगोविन्दयति-भिश्च प्रवर्तितः वात्स्य-वरदाचार्याद्यैः श्रीलोकाचार्याद्यैश्च सूक्ष्मेक्षिकया विमृष्टो मनागिवाष्टादशसु विषयेषु मतिभेदमापद्यत । स च भेद इत्थं समगृह्य-ताभियुक्तैः—

"भेदः स्वामिकृपाफलान्यगतिषु श्रीव्याप्त्युपायत्वयो-
स्तद्वात्सल्यदयानिरुक्तिवचसोर्न्यासे च तत्कर्तरि ।
धर्मत्यागविरोधयोः स्वविहिते न्यासाङ्गहेतुत्वयोः
प्रायश्चित्तविधौ तदीयभजनेऽणुव्याप्तिकैवल्ययोः[2] ॥"

इति । अयमर्थः—१. भगवतः कृपा निर्हेतुका पुरुषार्थं जनयति । तस्याः सहेतुकत्वे भगवतोऽवाप्तसमस्तकामत्वं भज्येत । अतो भगवति मुक्तिं दित्सति सति पुरुषस्यानिवारणमात्रमपेक्षितम् । लोकेऽपि स्वामी स्वकीय-वस्तुनो रक्षणे स्वयमेव प्रवर्तते, न तु तदीयां रक्षापेक्षां प्रतीक्षते ।

[1] अहि-सं. ३७-३१. [2] अष्टाद-वि. २.

अतो निर्हेतुकैव भगवत्कृपा । भक्तिप्रपत्तिभ्यां न मनागपि तत्रोपयोग इति परेषां मतम् ।

श्रीवेदान्तदेशिकमतं तु—भगवत्कृपा निर्हेतुकापि भक्तिप्रपत्त्योरन्यतरं व्याजमवलम्ब्यैव प्रवर्तते । यथोक्तम्—

"सर्वज्ञोऽपि हि विश्वेशः सदा कारुणिकोऽपि सन् ।
संसारतन्त्रवाहित्वाद्रक्षापेक्षां प्रतीक्षते[1] ॥"

इति । अन्यथा सर्वमुक्तिप्रसङ्गो मोक्षोपायविधिशास्त्रवैयर्थ्यं च स्यात् । सूत्रकारश्च "वैषम्यनैर्घृण्ये न, सापेक्षत्वात्[2]" इत्याह । सा स्वरूपतो निर्हेतुकापि व्याजं कंचनावलम्ब्यैव रक्षणोन्मुखा भवति । न च तावता तस्याः कापि हानिः । यथा कल्पकतरुरीप्सितप्रदोऽप्यर्थिनामेव ददाति, नान्येषामित्येतावता तस्य मनागपि न वदान्यताहानिस्तथा प्रकृतेऽपीति ।

२. फलं मोक्षः । स च भक्तियोगनिष्ठानां भगवदनुभव एव । प्रपत्तियोगनिष्ठानां तु भगवत्कैंकर्यम् । एषा च व्यवस्था तत्क्रतुन्यायसिद्धा । अतः फले द्वयोर्भेदो वर्तत इति परेषां मतम् ।

स्वमतं तु—भक्तप्रपन्नयोरुभयोरपि मुक्तत्वाविशेषात् भगवदनुभवस्तत्कैंकर्यं चेत्युभयमपि फलमेव । न हि वयमानन्दतीर्थीया इव मुक्तितारतम्यवादिनः । न चात्र तत्क्रतुन्यायविरोधः । स हि न्याय उपासनायां ये विषयाः, तेषां फलदशायामवश्यंभावित्वमभिसंधत्ते न त्वन्येषामभावम् । यदाहुराचार्याः—

"उपासितगुणादेर्या प्राप्तावप्यबहिष्क्रिया ।
सा तत्क्रतुनयग्राह्या नाकारान्तरवर्जनम्[3] ॥"

इति ।

[1] ल-त. १७-७८. [2] ब्र-सू. २-१-३४. [3] रह-सार:. ९.

३. अन्यगतिः—प्रपत्तिव्यतिरिक्तोपायः । कर्मयोगज्ञानयोगभक्तियोगाचार्याभिमानयोगभेदाच्चतुर्विधो मोक्षोपायः। स प्रत्येकमन्यानपेक्षया मोक्षसाधक इति परेषां मतम् ।

स्वमतं तु—प्रपत्तिव्यतिरिक्तो मोक्षोपायो भक्तियोग एक एव । उपासनाविरोधिपापनाशनेन कर्मयोगस्य आत्मावलोकनसाधनतया ज्ञानयोगस्य च परंपरया साधनत्वम् । आचार्याभिमानयोगस्तु प्रपत्तियोगभेद एवेति ।

४. श्रीव्याप्तिः— श्रीः स्वरूपेणाणुः, न विभुः । किंच सा जीवकोटावेवान्तर्भवति, न त्वीश्वरकोटौ; ईश्वरद्वित्वप्रसङ्गादिति परेषां मतम् ।

स्वमतं तु—श्रीः विभुरेव, "यथा सर्वगतो विष्णुस्तथैवेयं द्विजोत्तम[1]" "त्वयैतद्विष्णुना चाम्ब जगद् व्याप्तं चराचरम्[2]" इत्याद्युक्तेः । सा चेश्वरकोटावेवान्तर्भवति । न चेश्वरद्वित्वप्रसङ्गः, श्रीविशिष्टस्यैव तत्त्वात् । यदाहुः—"उभयाधिष्ठानं चैकं शेषित्वम्[3]" इति । आत्महविःसमर्पणे अग्नाविष्णुसमुदायस्येव लक्ष्मीश्वरसमुदायस्यैवोद्देश्यत्वमिति निष्कर्षः।

५. श्रिय उपायत्वम्—मोक्षोपायत्वं भगवत एव, न लक्ष्म्याः । सा तु पुरुषकारतया परंपरया मोक्षोपायभूता, न साक्षात् । अन्यथोपायद्वित्वं प्रसजेदिति परेषां मतम् ।

स्वमतं तु—श्रीरपि भगवानिव साक्षान्मोक्षप्रदैव । यथोक्तम्—"आत्मविद्या च देवि त्वं विमुक्तिफलदायिनी[4]" इति । यथा भगवतः श्रीविशिष्टतयैव मोक्षप्रदत्वेऽपि तदविनाभावान्नोपायद्वित्वं, तथा श्रियोऽपि भगवन्महिषीत्ववेषेणैव मोक्षप्रदत्वात नोपायद्वित्वप्रसक्तिरिति ।

६. वात्सल्यम्—दोषभोग्यत्वमेव वात्सल्यम् । अतः प्रपन्नैः क्रियमाणान् दोषान् भगवान् स्रक्चन्दनादीव भोग्यतया स्वीकरोति ।

[1] वि-पु. १-८-१७.
[2] वि. पु. १-९-१२४.
[3] षड-सं.
[4] वि-पु. १-९-११८.

अत एव "दोषो यद्यपि तस्य स्यात् सतामेतदगर्हितम्[1]" इति भगवद्वचनं संगच्छत इति परेषां मतम् ।

स्वमतं तु—दोषादर्शित्वमेव वात्सल्यम् । अदर्शनं नामोपेक्षा । एतदेवाभिप्रेत्य सहस्रनामस्तोत्रे 'अविज्ञाता' इत्युच्यते । भक्तदोषादर्शित्वमेव हि तत्राविज्ञातृत्वम्, अन्यथा सर्वज्ञत्वविरोधात् । परोक्तरीत्या दोषभोग्यत्वे भगवत्प्रीतिकामेनाकृत्यकरणादेरवश्यकर्तव्यता प्रसजेत् । प्रायश्चित्तविधिवैयर्थ्यापातश्च ।

७. दया—परदुःखदुःखित्वं दया । अत एव "व्यसनेषु मनुष्याणां भृशं भवति दुःखितः[2]" इति वचनं संगच्छते । तद्धि गुणवर्णनप्रकरणे दृश्यते । अतो भगवतो गुणरूपा दया परदुःखदुःखित्वरूपैव । दृश्यते हि श्रीरामभद्रस्य परदुःखदर्शनेन स्वयं दुःखित्वमिति परेषां मतम् ।

स्वमतं तु—परदुःखासहिष्णुत्वमेव दया । सा च तन्निराकरणेच्छापर्यन्ता, शक्तौ सत्यां निराकरणपर्यन्ता च । परदुःखदुःखित्वरूपत्वे भगवतः सदा दुःखित्वप्रसङ्गः । अनन्ते हि जीववर्गे प्रायशः सर्वे दुःखिन एव वर्तन्ते । तान् दृष्ट्वा भगवतापि नित्यदुःखिनैव भवितव्यमिति हेयप्रत्यनीकत्वविरोधः । "भृशं भवति दुःखितः[2]" इत्यादिकं तु दुःखाभिनयमात्रपरमित्यगत्या सर्वैः समाधातव्यम् ।

८. न्यासः—भगवति रक्षोन्मुखे स्वस्यानिवारणमात्रं परशेषतैकरसात्मयाथात्म्यज्ञानं वा प्रपत्तिः । न त्वात्मसमर्पणरूपा मानसी क्रिया, अत्यन्तपरतन्त्रस्य स्वरूपविरुद्धत्वेन कस्यचिदप्यनुष्ठानस्यानुपपत्तेः । स्वामिनि स्वकीयस्वभूतस्यात्मनो रक्षण उन्मुखे सति स्वानुष्ठानस्यैव वैयर्थ्याच्चेति परेषां मतम् ।

[1] रामा. ६-१८-३. [2] रामा, २-२-४०.

स्वमतं तु—आत्मनिक्षेपानुष्ठानमेव न्यासः। न तु केवलं पारतन्त्र्यज्ञानादिः। अत एव "मुमुक्षुर्वै शरणमहं प्रपद्ये[1]" "मामेकं शरणं व्रज[2]" इत्यादावनुष्ठानविधिः संगच्छते। किंच "रक्षापेक्षां प्रतीक्षते[3]" इति पुंसो रक्षापेक्षा कर्तव्यतयोपदिश्यते। अनिवारणमात्रस्य न्यासत्वे निवारणासमर्थानामचितामनिवारणस्य स्वतः सिद्धतया नित्यमुक्तत्वं स्यात्।

९. न्यासकर्ता—गीतायां भगवता विविधान् धर्मान् भक्त्यङ्गतयोपन्यस्यान्ते सर्वधर्मपरित्यागविधानात् भक्तौ विश्वासमान्द्यमुदेति। तादृशविश्वासमान्द्यवान् प्रपत्तावधिकारी। किंच प्रपत्तिगर्भितद्रमिडवेदान्ताध्याय्येव प्रपन्नः, नान्य इति परेषां मतम्।

स्वमतं तु—अनन्यगतिः अकिंचनः विलम्बाक्षमश्च न्यासाधिकारी। ज्ञानशक्त्यादिमान् विलम्बक्षमश्च भक्त्यधिकारीति प्रमाणिकी व्यवस्था सर्वाचार्यसंमता। "न भक्तिमांस्त्वच्चरणारविन्दे। अकिंचनोऽनन्यगतिः[4]" इति यामुनेयश्रीसूक्त्या भक्तिराहित्यादाकिंचन्यमनन्यगतित्वं चाधिकारतया प्रतीयते। न तु भक्तौ विश्वासमान्द्यम्। किं चाधीतद्रमिडप्रबन्धः प्रपन्नो नेतर इति पक्षोऽपि न साधुः। न हि प्रपत्तिगर्भितसूक्तिपाठमात्रेण कश्चित् प्रपन्नो भवितुमर्हति। अन्यथोपासनागर्भितोपनिषद्वाक्यपटनमात्रेणोपासकः स्यात्। अत आकिंचन्यादिविशिष्ट एव प्रपत्तावधिकारीति।

१०. धर्मत्यागः—सर्वधर्मान् परित्यज्येति चरमश्लोके सर्वधर्मपरित्यागवचनात् प्रपन्नैः काम्यकर्माणीव नित्यनैमित्तिककर्माण्यपि त्याज्यानि, देवतान्तरगर्भितत्वात्। किंच सर्वधर्मत्यागस्य प्रपत्त्यङ्गतया विधानात् प्रपत्तिसाद्गुण्यार्थं नित्यनैमित्तिकानामपि कर्मणां त्यागोऽवश्यकर्तव्य इति परेषां मतम्।

[1] श्वे-उ, ६-१८. [2] भ-गी, १८-६६. [3] अ-त, १७-७८. [4] स्तो-र, २२.

स्वमतं तु—विहितत्वादकरणे प्रत्यवायावहत्वाच्च नित्यनैमित्तिककर्माणि प्रपन्नैरपि न परित्याज्यानि। सूत्रकारश्च "विहितत्वाच्चाश्रमकर्मापि[1]" इत्याह। तेषां देवतान्तरगर्भितत्वशङ्का तु प्रतर्दनविद्यान्यायेन तत्तद्देवतान्तर्यामिपरत्वेन वा "[2]साक्षादप्यविरोधं जैमिनिः" इति न्यायेन वा तेषां भगवत्परतया समाधातव्या। सर्वधर्मपरित्यागवचनं तु फलत्यागादिपरम्।

११. विरोधः—स्वतः शेषभूतस्य पुंस उपायान्तरमुपासनं स्वरूपविरुद्धम्। अत एव तत्राप्रवृत्तिः। न तु ज्ञानशक्त्याद्यभावात्। किंच 'अहमित्येवोपासीत' इत्युपासनस्याहंकारगर्भितत्वोक्तेश्चानुपादेयतेति परेषां मतम्।

स्वमतं तु—उपासनं स्वरूपविरुद्धं न भवति। आत्मयाथात्म्यविद एवोपासनं विहितम्। 'अहमित्येवोपासीत' इत्यत्रत्याहंशब्दोऽस्मदर्थपरः। न तु प्राकृतमहत्तत्त्वकार्याहंकाराख्यदोषपरः। तस्मात् आकिंचन्यविरुद्धमुपासनम्, न स्वरूपविरुद्धम्।

१२. स्वविहितम्—स्वमुद्दिश्य शास्त्रेषु विहिता वर्णाश्रमधर्मा लोकसंग्रहार्थमेव प्रपन्नैः करणीयाः। नावश्यकर्तव्यबुद्ध्या, प्रपन्नानां तत्त्यागविधानात्। ते चानुष्ठिता धर्मा विधवाद्यलंकारा इव निष्फलाः। न केवलमेतावदेव। पातकानीव सवासनं परित्याज्या इति परेषां मतम्।

स्वमतं तु—"मनीषी वैदिकाचारं मनसापि न लङ्घयेत्[3]" "श्रुतिः स्मृतिर्ममैवाज्ञा[4]" इत्यादिभिरकरणे प्रत्यवायस्मृतेर्वर्णाश्रमधर्माः प्रपन्नैरप्यनुष्ठेया एव। न तु परित्याज्याः।

१३. न्यासाङ्गानि—आनुकूल्यसंकल्पादीनि न्यासाङ्गतया विहि

[1] ब्र-सू, ३-४-३२.
[2] ब्र-सू, १-२-२८.
[3] ल. त, १७-९४.
[4] वि. ध, ६-३१.

*तान्यपि परमैकान्तिभिः प्रपदने नावश्यानुष्ठेयानि । किंतु यथासंभवं* ग्राह्याणि । काम्यकर्मस्वेव हि साङ्गानुष्ठानं नियतम् । मुमुक्षूणां फल-कामनाभावात् तेषामङ्गानां न नियमेनानुष्ठानावश्यकतेति परेषां मतम् ।

स्वमतं तु—अङ्गानां विहितत्वान्नियमेनानुष्ठानमावश्यकमेव । मुमुक्षुभिः फलसङ्गत्यागोऽपि प्रधानफलित्वाभिसंधित्यागविषयः, तेषां भगवदनुभवकैंकर्यादिफलसंबन्धस्यावर्जनीयत्वात् । अतस्तादृशफलावाप्त्यर्थं साङ्गप्रपदनानुष्ठानमावश्यकमेव ।

१४. न्यासस्य हेतुत्वम्—"नायमात्मा प्रवचनेन लभ्यः[1]" इति श्रुत्या भगवतः सिद्धोपायस्यैव साधनत्वावगत्या न साध्योपायस्य प्रपदनस्य मोक्षोपायत्वम् । तस्याधिकारिविशेषणत्वेनान्वयस्त्विष्ट एवेति परेषां मतम् ।

१५. स्वमतं तु—प्रपदनस्यापि साधनत्वमस्त्येव । अत एव "उपायः सुकरश्चायं दुष्करश्च मतो मम[2]" इति प्रपदनस्योपायत्वोक्तिः संगच्छते । "नायमात्मा[3]" इति श्रुतेस्तु सिद्धोपायस्य भगवतः प्राधान्ये तात्पर्यम् । न त्वेतावतान्यस्योपायत्वनिषेधः । साधनद्वित्वं तु शास्त्रसिद्धत्वान्न दोषाय । अन्यथा भक्त्यादेरप्युपायत्वं न स्यात्, तस्यापि भगवत्प्रसादमन्तरा फलप्रदानसामर्थ्याभावात् । किं बहुना ? ज्योतिष्टोमादीनामपि स्वर्गादिसाधनत्वं न स्यात् । तैस्तैः कर्मभिराराधितो भगवानेव तत्तत्फलानां प्रदायक इत्येव हि परमसिद्धान्तः ।

प्रायश्चित्तविधिः—प्रपन्नैर्बुद्धिपूर्वे पापे कृतेऽपि भगवतः क्षमैव प्रायश्चित्तस्थाने स्थित्वा तत्पापं व्यपोहयति । अतः स्मृत्यादिविहितं कृच्छ्रचान्द्रायणादि न कर्तव्यम् । "सर्वपापेभ्यो मोक्षयिष्यामि[4]" इति सर्वशब्दः पूर्वाघानीवोत्तराघान्यपि क्रोडीकरोति । एवं सत्यपि यदि प्रायश्चित्त-

[1] मु-उ, ३-२-३.
[2] ल-त, १७-१०४.
[3] मु-उ, ३-२-३.
[4] गी-भ, १८-६६.

करणेच्छा, तदापि पुनः प्रपदनमेव कार्यम् । न स्मृत्याद्युक्तम्, "प्रायश्चित्तिरियं सा तु यत्पुनः शरणं व्रजेत्[1]" इति वचनादिति परेषां मतम् ।

स्वमतं तु—बुद्धिपूर्वोत्तराघे प्रपन्नेन शक्तौ सत्यां स्मृत्याद्युक्तं प्रायश्चितं कर्तव्यम् । अशक्तौ पुनः प्रपदनमिति व्यवस्था । एवं च शक्ताशक्तविषयतया प्रायश्चित्तव्यवस्था । अन्यथा स्मार्तस्य प्रायश्चित्तविधेरानर्थक्यं स्यात् । अप्रपन्नविषयः स भविष्यतीति चेत्, मानसवारुणस्नानयोरप्येवं व्यवस्थापत्तौ धर्मवैयाकुलीप्रसङ्गः । किंच निमित्ते सत्येव नैमित्तिकस्योदय इति भाव्यघमुद्दिश्य पूर्वमेव प्रपदनस्योदय इति न संभाव्यमेतत् ।

१६. तदीयभजनम्—"न शूद्रा भगवद्भक्ता विप्रा भागवताः स्मृताः[2]" "चण्डालमपि वृत्तस्थं तं देवा ब्राह्मणं विदुः[3]" इत्यादिशास्त्रात् भागवताः शूद्रचण्डालजातयोऽपि विप्रैर्भागवतब्राह्मणा इव वन्दनादिभिः पूजनीयाः, नानादरणीया इति परेषां मतम् ।

स्वमतं तु—भागवता अपि शूद्रा भागवतब्राह्मणैः संग्राह्याः, नाभागवतशूद्रा इवानादरणीयाः । किंतु आशीर्वचनसादरसंभाषणादिभिः संतोषणीयाः, न तु वन्दनीयाः । यावच्छरीरपातं देहाश्रिता जातिस्तिष्ठत्येव, न तु प्रपन्नत्वादिनापैति । देवसुरभिरपि गौरेव भवितुमर्हति । परं त्वितरगवीभ्यो विशिष्यत इत्येव वक्तुं शक्यते । तद्वत् प्रपन्नः शूद्रोऽपि शूद्र एव । परं त्वितरशूद्रेभ्यो विशिष्यते । "न शूद्रा भगवद्भक्ताः[4]" इत्यादिकं न हि निन्दान्यायेन भक्त्युत्कर्षप्रतिपादनपरम् । तथाच यथा "पितृभिर्भ्रातृभिश्चैव पतिभिर्देवरैस्तथा[5]" इत्यादिवचनैर्दुहित्रादयो भूषणादिना पूज्या इत्युच्यते तथा ब्राह्मणैरपि यथाशास्त्रं यथाधिकारं च भागवतशूद्राः पूज्या इत्येवोच्यते ।

[1] ल-त, १७-९१. [2] भार-आश्व, १०८-३२. [3] भार-आश्व, १०६-८.
[4] भार-आश्व, १०८-३२. [5] मनु. ३-५५.

१७. अणुव्याप्तिः—अणुपरिमाणे जीवे परमात्मनः कथमन्तर्व्याप्तिः? सावयवे खलु वस्तुन्यन्तर्भागबहिर्भागादिव्यवस्था। जीवश्च निरवयवोऽणुश्च। "अन्तः प्रविष्टः शास्ता जनानां सर्वात्मा[1]" इत्यादिभिः कथमन्तः प्रवेश उच्यमानो घटेतेति शङ्कायाम्, ईश्वरस्याघटितघटनासामर्थ्यादन्तः प्रवेशो युज्यत इति परेषां मतम्।

स्वमतं तु—सर्वत्राबाधितेनार्थेनैव शास्त्रार्थनिर्वाहः कार्यः। अन्यथा परपक्षेषु बाधे उद्घाटिते अघटितघटनासमर्थेश्वरेच्छया न दोष इति परेणोक्ते किमस्माभिः प्रतिवक्तुं शक्येत? तस्मादणौ जीवे ईश्वरस्य सर्वव्याप्तिर्नाम दशदिक्संबन्धः, जीवस्येश्वरव्याप्तिरहितभागवैधुर्यं वेत्यास्थेयम्।

१८. कैवल्यम्—कैवल्यं नाम भगवदनुभवं विना आत्ममात्रानुभवः। तद्गतां स्थानमपि परमपद एव क्वचित्कोणे। तच्चानश्वरमेव। अत एव केवलजीवोपासकस्यार्चिरादिमार्गेण गमनमनिवृत्तिश्च श्रीगीताभाष्ये प्रपञ्चितम्। अत एव च कदाचिन्मोक्षोपायसंपादनयोग्यसंसारादपि कैवल्यस्यात्यन्तिकभगवदनुभवादिविघ्नकरस्य नरकप्रायतां सात्त्विका विवेकिनो मन्वत इति परेषां मतम्।

स्वमतं तु—केवलात्मानुभवतां प्रकृतिमण्डल एवावस्थानम्। नश्वरश्च केवलात्मानुभवः। अयं भावः—उपासका द्विविधाः; ब्रह्मात्मकस्वात्मोपासकाः स्वात्मशरीरकब्रह्मोपासकाश्चेति। प्रथमे पञ्चाग्निविद्यानिष्ठाः प्राकृतस्थाने हिरण्यगर्भादिस्थानादुपर्यधस्ताद्वा यत्र कुत्रचित् स्थित्वा स्वात्मानुभवमवाप्य ततोऽर्चिरादिमार्गेण परमपदं प्राप्य यथावस्थितपरिपूर्णब्रह्मानुभवं तत्कैंकर्यं च प्राप्नुवन्ति। द्वितीये तु मध्ये स्वात्मानुभवविलम्बमन्तरा द्रागेवार्चिरादिमार्गेण परमपदं प्राप्य यथावस्थितपरिपूर्णब्रह्मानुभवं तत्कैंकर्यं चावाप्नुवन्ति। गीताभाष्ये आत्मोपासकस्यार्चिरादि-

[1] तै-आर, ३-२०-४.

मार्गेण गमनमात्मानुभवश्चोच्यमानं पूर्वोक्तपञ्चाग्निविद्यानिष्ठविषयमेवेत्यवगन्तव्यम् । एवं विलम्बेन परमपुरुषार्थप्राप्तावपि किंचिदपि विलम्बमसहमानानुद्दिश्य कैवल्यस्य नरकप्रायत्वोक्तिरिति मन्तव्यम् ।

इत्थं केषुचिद्विषयेषु सयूथ्याभिप्रायभेदे सत्यपि प्रधानप्रतितन्त्रसिद्धान्ते न मनागपि मिथो विमतिरिति त्रिवेदीभद्रवेदीमधिरूढोऽयं विशिष्टाद्वैतसिद्धान्त इति यथायथं निगमयति ग्रन्थकारः—

"दृष्टेऽपह्नुत्यभावादनुमितिविषये लाघवस्यानुसारा-
च्छास्त्रेणैवावसेये विहतिविरहिते नास्तिकत्वप्रहाणात् ।
नाथोपज्ञं प्रवृत्तं बहुभिरुपचितं यामुनेयप्रबन्धै-
स्त्रातं सम्यग्यतीन्द्रैरिदमखिलतमःकर्शनं दर्शनं नः[1] ॥"

इति ।

अथ श्रीवेदान्तदेशिकचरित्रादिपराः कतिपये प्राचीनग्रन्थाः—

१. वेदान्तदेशिकमङ्गलाशासनम्—(कुमारवेदान्ताचार्य) वरदनाथकृतम्.
२. वेदान्तदेशिकविग्रहध्यानपद्धतिः. ,,
३. वेदान्तदेशिकप्रार्थनाष्टकम् . ,,
४. वेदान्तदेशिकप्रपत्तिः. ,,
५. वेदान्तदेशिकदिनचर्या. ,,
६. वेदान्तदेशिकान्तादिस्तुतिः (पिळ्ळैयन्तादि.) ,,
७. सप्ततिरत्नमालिकास्तोत्रम्—(प्रतिवादिभयंकर) अण्णनाचार्यकृतम् .
८. वेदान्तदेशिकवैभवप्रकाशिका—(वाधूल) महाचार्यकृता.
९. वेदान्तदेशिकविंशतिः. ,,
१०. वेदान्तदेशिकसहस्रनामस्तोत्रम्—(आत्रेय) गोपालदेशिककृतम् .

[1] संक. सू., २-४९.

११. आचार्यपञ्चाशत्—(आत्रेय)वेंकटाध्वरिकृता.

१२. अब्दमालिकास्तोत्रम्—श्रीनिवासाचार्यकृतम्.

१३. आचार्यविंशतिः— (बुक्कपट्टण) अण्णयाचार्यकृता.

१४. आचार्यदण्डकः—वेंकटाचार्यकृतः.

१५. ,,

१६. आचार्याष्टकम्

१७. द्वादशप्रासाष्टकम्—(श्रीशैल) श्रीनिवासाचार्यकृतम्.

१८. नक्षत्रमालिकास्तोत्रम् (श्रीशैल) श्रीनिवासराघवाचार्यकृतम्.

१९. ताराहारावलिः— जगन्नाथाचार्यकृता.

२०. वेदान्तदेशिकगद्यम्—(श्रीशैल) वेंकटाचार्यकृतम्.

२१. ,, —(कौशिक) वेदान्ताचार्यकृतम् (आचार्यचम्प्वन्तर्गतम्).

२२. वेदान्तदेशिकदिनचर्या—(श्रीभाष्य) श्रीनिवासाचार्यकृता.

२३. वेदान्तदेशिकमङ्गलाशासनम्—परकालयतिकृतम्.

२४. वेदान्तदेशिकविग्रहध्यानसोपानपद्वी—(श्रीभाष्य) श्रीनिवासाचार्यकृता.

२५. वेदान्तदेशिकवैभवम्—वेंकटाचार्यकृतम्.

२६. वेदान्तदेशिकस्तोत्रम्—(बालधन्वि) विद्याकरकृतम्.

२७. वेदान्ताचार्यविजयचम्पूः—(कौशिक) वेदान्ताचार्यकृता.

२८. वेदान्तदेशिकविंशतिनक्षत्रमालिका—(श्रीशैल) वेंकटाचार्यकृता.

२९. वेदान्तदेशिकविजयः—(श्रीशैल) श्रीनिवासाचार्यकृतः.

३०. वेदान्तदेशिकाष्टोत्तरशतनामस्तोत्रम्—(श्रीशैल) वेंकटाचार्यकृतम्.

३१. आचार्यावतारघट्टार्थः—परकालयतिकृतः.

३२. वेदान्तदेशिकप्रपत्तिः—(कौशिक)श्रीनिवासाचार्यकृता.

३३. आचार्यगुणादर्शः—वेंकटपाद्गराचार्यकृतः.
३४. वेदान्तदेशिकशतकम्—वेंकटाचार्यकृतम्.
३५. वेदान्तदेशिकचरितम्.
३६. वेदान्तदेशिकप्रार्थनासप्तकम्.
३७. आचार्यदशकम्.
३८. आचार्यद्वात्रिंशत्—श्रीनिवाससूरिकृता.
३९. आचार्यशेखरः ,,
४०. गुरुतिलकस्तुतिः—गरुडदासकृता.
४१. गुरुपरंपराप्रभावः— तृतीयब्रह्मतन्त्रस्वतन्त्रस्वामिकृतः.

एषां ग्रन्थानां परिशीलनेनावगम्यमानमाचार्यवर्यस्य श्रीवेंकटनाथस्यावतारादिचरित्रमित्थम्—

श्रीभगवद्रामानुजान्तेवासिबृन्देषु तन्मतस्थापनधुरंधरतया परिगणिताश्चतुःसप्ततिराचार्याः। तेषु चैते त्रयः श्रीमद्वेंकटनाथदेशिकस्य जन्मवंशे विद्यावंशे च कूटस्थाः समभूवन—अनन्तसोमयाजी जनककूटस्थः। वेदान्तोदयनापरनामा प्रणतार्तिहराचार्यो मातामहकूटस्थो रहस्यमन्त्रार्थोपदेशपरंपराकूटस्थश्च। कुरुकाधीशनामा शठकोपसूरिर्विद्यावंशकूटस्थः। विश्रुतविभवां काञ्चीनगरीमधिवसतो विश्वामित्रसगोत्रस्यानन्तसोमयाजिन आत्मजन्मा पुण्डरीकाक्षयज्वा नाम। तस्यात्मजोऽनन्तसूरिः, यः किल श्रीमद्वेंकटनाथस्य जनकताभाग्यमुदवहत्। प्रणतार्तिहराचार्यस्यात्रिसगोत्रस्यात्मजन्मा रामानुजाचार्यो नाम। तस्यात्मजो रङ्गराजापरनामा पद्मनाभाचार्यो नाम। तस्य च पुत्रो रामानुजाचार्यः, पुत्री च तोताद्र्यम्बा या किल श्रीमद्वेंकटनाथस्य प्रसूरभूत्। आचार्यवर्यस्यास्यावतारवैभवमेवं वदन्ति महान्तः—यामिन्यामेकस्यां परमात्मात्मयोगरूपां योगनिद्रामास्थितवतोऽनन्तसूरेः स्वप्ने भगवान् श्रीवेंकटेश्वर

आविर्भूय तं सहधर्मचारिण्या तोताद्र्यम्बया सह स्वसेवनार्थं वृषाद्रिमागन्तुमन्वशिषत् । प्रभात एव प्रमुदितौ तौ दंपती काञ्च्याः प्रस्थाय वेंकटगिरिमासाद्य भगवन्तं श्रीनिवासमासेव्य तत्रैवैकां वासतेयीं क्षेत्रवासमकुरुताम् । तदा श्रीवेंकटेशस्तयोः स्वप्न आविर्भूय स्वीयां मणिमयीं दिव्यघण्टां तोताद्र्यम्बाया हस्ते वितीर्य 'सैषा युवयोः पुत्रतामापत्स्यते' इत्यनुगृह्यान्तरधात् । अनन्तसूरिपत्नी च सद्य एव तां मणिघण्टामप्राकृततेजोरूपेण स्वगर्भमाविशन्तीमद्राक्षीत । अथ प्रभाते प्रबुद्धावेतौ दंपती मुदितमानसौ काञ्चीमागत्य कुमारावतारक्षणं प्रतीक्षमाणावास्ताम् । अथ द्वादशवर्षावसाने निखिलभागवतलक्षणसंपन्नमर्भकमनन्तपत्नी सुषुवे । स चावतारकालः ४३६९ तमे कल्यब्दे ११९० मिते शालिवाहनशकाब्दे (1268 A.D.) विभवनामसंवत्सरे भाद्रपदशुक्लदशम्यां श्रवणनक्षत्रयुक्तं शुभदिनमिति प्राचां ग्रन्थेषु प्रतिपाद्यते[1] । केचित्तु तत्समनन्तरे शुक्लनामनि संवत्सरेऽवतार इति वदन्ति । बालश्च यथाविधि जातकर्मादिभिः संस्कृतः श्रीवेंकटेशप्रसादात् श्रीवेंकटेशदिव्यघण्टावतारतया श्रीवेंकटेशतीर्थोत्सवदिनेऽवतीर्ण इति कृत्वा वेंकटनाथ इत्येव नाम्नाहूतो दिने दिनेऽन्यादृशीं सुषमाभिवृद्धिमावहन्नवर्धत ।

एतस्मिन्नेव काले पूर्वोदितस्य भगवद्रामानुजान्तेवासिष्वन्यतमस्य कुरुकाधीशापरनामधेयस्य शठकोपसूरेः प्रशिष्यः, विष्णुचित्तगुरोः शिष्यश्च वात्स्य-वरदगुरुः (नडादूर्-अम्माळ् इति ख्यातः) काञ्च्यां श्रीभाष्यादिकं शिष्येभ्यो व्यावृण्वन्नवर्तत । तेषु च शिष्येषु श्रुतप्रकाशिकाकारः सुदर्शनसूरिः, न्यायकुलिशकारो वेंकटनाथमातुलश्चात्रेयरामानुजाचार्यः, अन्ये च

[1] "उदभूद्वेंकटेशः केळीयोगये तु विभवाब्दे" इति प्राचां वचनम् । यद्यप्यनेन वचनेन शकाब्दः ११९१ इति लभ्यते, तथाप्यतीतसंवत्सराणां परिगणने ११९० तमे शकाब्द एव विभवाब्दः समभूदिति कृत्वा तथैवात्र निर्देशः कृतः । Vide L. D. Swamikannu Pillai's Indian Ephermeris Vol. I—Part I, page 250.

बहवः सुप्रसिद्धा अवर्तन्त । कदाचित् षड्वर्षदेशीयोऽयं बालकः स्वमातुलेन रामानुजाचार्येण सह वात्स्य-वरदाचार्यस्य श्रीभाष्यप्रवचनगोष्ठीं सेवितुमागतोऽदसीयाजानसिद्धदिव्यब्रह्मवर्चसदर्शनव्यग्रेषु तदवतारवैभवातिशयश्रवणपरेषु च सर्वेषु श्रीभाष्यव्याख्यानविच्छेदप्रकरणं विस्मृत्याचार्येण सह तच्चिन्तापरेषु तत्प्रकरणं स्मारयामास । तेन च विस्मयाविष्टो वरदगुरुरस्य मेधाविशेषं प्रशस्य

' वत्स,

प्रतिष्ठापितवेदान्तः प्रतिक्षिप्तबहिर्मतः ।
भूयास्त्रैविद्यमान्यस्त्वं भूरिकल्याणभाजनम् ॥'

इत्यनुजग्राह । तमेनं स्वकीयं वृत्तान्तं ग्रन्थकारोऽयं नाटकेऽत्र शिष्यं प्रति गुर्वनुग्रहापदेशेन प्रकटीकरोति[1] । अथ वरदगुरुरेनं 'स्यादसौ' इत्याशास्य स्वशिष्यस्यात्रेयरामानुजस्य हस्ते सकलाः कलाः शिक्षयितुं विशिष्य भगवद्रामानुजसिद्धान्ततत्त्वमवबोधयितुं चार्पयामास । स च तथेत्यङ्गीकृत्य स्वयमपि 'स्यादसौ' इत्यमुमनुजग्राह ।

अथ जनकेनानन्तसूरिणा यथाकालमुपनीतोऽयं वेंकटनाथो मातुलात् रामानुजाचार्यादेव पञ्चसंस्कारपूर्वकं भगवन्मन्त्रान् साङ्गान्वेदान् काव्यनाटकालंकारान् पदवाक्यप्रमाणान्युभयवेदान्तग्रन्थांश्च वयसो विंशतेरब्देभ्यः पूर्वमेवाधिजगे । ततः कृतसमावर्तन उभयकुलविशुद्धां कन्यामुपयम्य सहधर्मचारिण्या तया सह पाञ्चकालिकवर्त्मना भगवन्तं वासुदेवमाराधयन्नाचार्योपासनपरोऽवर्तत । अथाचार्ये रामानुजाचार्ये परिणते वयसि परमपदमुपयाते तत्सूनुना तच्चरमकैंकर्यं यथावत्कारयित्वा ग्रन्थप्रवचनतत्परः शब्दतर्कमीमांसादीनि सामान्यशास्त्राणि श्रीभाष्यादिकं शारीरकं शास्त्रं च शिष्यानध्यापयन् काञ्च्यामेव कांचित्कालकलामयापयत् ।

[1] संकल्पसू. २. १५.

अथ सदाचार्योपदिष्टेन गारुत्मतेन मन्त्रेण गरुत्मन्तमारिराधयिषु: काञ्च्या: प्रस्थाय तत्सांनिध्यविदितमहिम गरुडनदीप्लावितपरिसरमोषधिगिरिराजपरिक्रमितमहीन्द्रपुरनामकं क्षेत्रमागत्य तत्र हेमाब्जनायिकासमेतं भगवन्तं देवनाथमासेवमानोऽयमाचार्यवर्य ओषधिगिरौ गारुत्मतं मनुमनवरतं जपन्नास्त। तत: प्रसन्नेन गरुत्मतोपदिष्टं श्रीहयग्रीवमन्त्रमनुसंदधानस्तेनैव समर्पितां हयग्रीवार्चामूर्तिमर्चयंस्तत्रैव कंचित्कालमवात्सीत्। अथैकदा प्रसन्नो हयवदनोऽस्मै वेंकटनाथाय प्रतिमतनिरसनपटीयसीं सकलतन्त्रनिष्णाततां वादाहवशूरतां चान्वगृह्णात। ततो भगवतो देवनाथस्यादेशात् देवनायकपञ्चाशतं गोपालविंशतिं स्तेयाविरोधादिकं तथा कतिचन द्राविडप्रबन्धांश्च तत्रैवाग्रथ्नात।

अथ स्वजन्मभूमिं काञ्चीं जिगमिषुरहीन्द्रपुरात् प्रस्थाय मध्येमार्गं गोपपुर्यां देहलीशमासेव्य देहलीशस्तुतिं सदाचारनिर्णयपरां सच्चरित्ररक्षां च संग्रथ्य काञ्चीमागत: श्रीवरदराजं संसेव्य वरदराजपञ्चाशतमन्यांश्च बहून् संस्कृतद्राविडप्रबन्धान् रचयंस्तत्रैवोभयवेदान्तप्रवचनपरोऽनेकैर्विनेयवर्गैः सह कतिचिद्वत्सरान् सुखमनैषीत।

अथौत्तराहेषु दिव्यदेशेषु भगवत्सेवामारचयितुकामो देशिकवर: काञ्चीतो वेंकटाद्रिं प्राप्य तत्र श्रीनिवासं भगवन्तं संसेवमानो दयाशतकेन तं स्तुत्वा, तत: पुरुषोत्तमादिबदरिकाश्रमपर्यन्तेषु दिव्यदेशेषु भगवन्मूर्तीरासेव्य पुन: काञ्चीं प्रतिनिवृत्य यथापुरं ग्रन्थप्रवचनपरोऽध्यास्त।

तत: कले: ४४१७ तमे शालिवाहनशकस्य १२३८ तमे (1316 A. D.) नलसंवत्सरे श्रावणे मासि रोहिण्यां देशिकवर्यस्यास्य कुमार: समजनि। स च श्रीवरदराजप्रसादलब्धो वरदराजावतारश्चेति कृत्वा वरदनाथ इति नाम्नाकारितोऽभूत्। पितुरेव सकाशात् ब्रह्मोपदेश-

पूर्वकं साङ्गान् वेदान् सर्वाणि तन्त्राणि सरहस्यमध्यात्मतत्त्वं चाधिगत्य वरदनाथस्तच्चरणारविन्दन्यस्तात्मरक्षाभरस्तदेकदैवतस्तत्रैवोवास ।

कदाचित् देवाधिराजस्य ब्रह्मोत्सवे महता वैभवेन प्रवर्तमाने देवस्याग्रभागे द्रमिडाम्नायपारायणगोष्ठीं प्रयान्तीमाक्षिपत्सु मतान्तरस्थेषु विद्वत्सु, भगवदेकान्तद्रमिडाम्नायपारायणस्यानवद्यतां भगवत्कैंकर्यरूपतां च प्रसाध्य यथापुरमुत्सववैखरीं स्थापयामासाचार्यवर्यः । तेन च प्रसन्नेन श्रीदेवाधिराजेन स्वाराधनार्थमुपयुज्यमानयोः श्रीचिह्नाख्ययोर्वाद्ययोरेकमस्मै प्रदाप्यानुजग्राह । अत एवाधुनापि तस्मिन् दिव्यदेशे श्रीवरदराजस्वामिसंनिधावेकमेव तद्वाद्यमुपयुज्यत इति द्रढयत्येतच्चरितं भूतार्थम् ।

एवं गच्छति काले केचिन्मतान्तरस्थाः पण्डिताः श्रीरङ्गमागत्य तत्र भगवद्रामानुजसिद्धान्तप्रवर्तनपरान् सुदर्शनसूरिलोकाचार्यादीन् शास्त्रविषये वादाहवायाहूय 'अस्मानजित्वा श्रीरङ्गनाथस्य नित्याराधनादिकं पाञ्चरात्रप्रक्रियया न कर्तव्यम्' इति निरबध्नन् । सुदर्शनसूर्यादयश्च परिणतवयस्कतया चिरं वादाहवं सोढुमशक्नुवन्तः श्रीवेंकटनाथदेशिकं तस्यां धुरि साभ्यर्थनं नियोजयितुकामाः 'श्रीमच्छ्रीरङ्गनाथस्य विष्वक्सेनस्य शासनम्' इति मुद्रयाङ्कयित्वा किंचिदभ्यर्थनापत्रं देशिकवर्याय सपरिबर्हं प्रजिघ्युः । वेंकटनाथोऽपि श्रीमुखं तत् प्रणतिनम्रेण शिरसा प्रतिगृह्य तद्वाचनावसानक्षणमेव स्वयात्रारम्भक्षणं विधाय श्रीरङ्गमागम्य वादे प्रतिकथकान्निर्जित्य भगवदाराधनं यथापूर्वं निरवर्तयत् । तेन चातिप्रीतो भगवान् रङ्गधुरीणोऽस्मै शेषापटश्रीशठकोपादिकमनुगृह्याचार्यं वेदान्ताचार्यसंज्ञया भागवतविद्वद्गोष्ठ्यां प्रख्यापयामास । तन्महिषी च सर्वतन्त्रस्वतन्त्रनाम्ना तं प्राख्यापयत् । ततस्तद्वादक्रमसाक्षिणो विद्वांसो मिलित्वा तं वादक्रमं ग्रन्थरूपेण विलिख्य तस्य ग्रन्थस्य शतदूषणीति नामाकार्षुः । यतस्तत्र शतं दूषणान्यविचाल्यान्यघट्यन्त. ततोऽसौ शतदूषणीति नाम्ना प्रसिद्धिमगमत । अद्यापि श्रीरङ्गनायकीदेव्या

आलयस्याग्रभागे श्रीवेंकटनाथदेशिकस्यालयसंनिवेशोऽनितरसाधारणो वृत्तान्तमेनं प्रत्याययति ।

एवं कस्मिंश्चित्काले गते अहीन्द्रनगराधिपस्य भगवतः श्रीदेवनाथस्य लावण्यनिधेर्दिव्यमङ्गलविग्रहस्य सेवनेच्छया तं देशमागत्य प्रणतसत्यं तं भगवन्तमासेवमानो ग्रन्थप्रवचनपरोऽवर्तत । तदा पूर्वं श्रीरङ्गे पराभूता वावदूका बाह्यानबाह्यांश्च कथकानाकार्य तैर्मिलिता वादायाचार्यवर्यस्यास्य निकटमाजग्मुः । आचार्यास्तु वादनिःस्पृहा अपि भगवतः श्रीदेवनायकस्य निदेशात् भगवद्रामानुजसिद्धान्तप्रतिष्ठापनं परमं भगवत्कैंकर्यं मन्वानास्तैः सह वादाहवमवतीर्य सर्वानपि तान् प्रत्येकं जिगाय । कैंकर्येणानेनातितरां प्रसन्नः श्रीदेवनाथः कवितार्किकसिंहनाम्नाचार्यवर्यमेनमाहूय शेषापटादिकमनुगृह्य स्वकटाक्षपात्रमकार्षीत् । तमेतं वादक्रमं तत्र मिलिता विद्वांस आनुपूर्वीक्रमेण विलिख्य परमतभङ्गनाम्ना ग्रन्थमेनं प्रख्यापयामासुः । तत्रापि श्रीवेंकटनाथदेशिकस्यालयसंनिवेशविशेषो वृत्तान्तमेनं संस्मारयति । तत्रैव क्षेत्रे भगवन्तं देवनाथं सेवमानो बहून् वत्सरानुवास देशिकवरः । तदैव स्वमन्दिरे श्रीहयवदनाराधनाय तीर्थसंग्रहार्थं यथावास्तुशास्त्रविधि स्वकरेण कंचन कूपं निर्ममे, यः किलाधुनापि श्रीदेशिकदिव्यमन्दिरे परिपाल्यते सर्वैरपि यात्रिकैः संसेव्यते च ।

अथ ततः प्रस्थाय पुनः काञ्चीमवाप्य श्रीदेवाधिराजसेवापरोऽवर्तत । एवं देशिकवर्यस्यानितरसाधारणं वैदुष्यं ज्ञानानुष्ठानादिकं चोपश्रुत्य तदा विजयनगरराज्यधुरंधरो विद्यारण्यः स्वामिनमेनं तद्राजसभामागत्य तेन राज्ञा वितीर्यमाणं संमानादिकं स्वीकर्तुं राजपत्रिकामुखेन प्रार्थयत । गुरुवर्यस्तु संमानादिनिःस्पृहतया तदाह्वानं निराकुर्वाणः पञ्चभिः श्लोकैः प्रत्युत्तरयामास । त एव श्लोका वैराग्यपञ्चकनाम्नाधुना प्रथामुपगताः । तांश्च श्लोकानवेक्ष्य विद्यारण्यो गुरुवर्यस्य वैराग्यं प्रशस्य तस्मिन्नधिकतरां बहुमतिमुदवहत् ।

एवं ज्ञानवैराग्यानुष्ठानशेवधावाचार्यवर्ये काञ्चीमधिवसति कैश्चिद्-सूयालुभिः सयूथ्यैः प्रेषितः कश्चित् वर्णी देशिकवरमुपगम्यात्मनो विवाहार्थं धनमयाचत। ततो दिशिकोऽयं श्रीस्तुत्या कमलां प्रसाद्य तस्मै वर्णिने यथेप्सितं धनमदापयदिति वैभवप्रकाशिकायामुक्तम्।

अथ दाक्षिणात्यदिव्यदेशेषु भगवन्मूर्तीः सेवितुकामः काञ्चीतः प्रस्थाय कुरुकापुरीमासाद्य श्रीशठकोपमुनेर्वकुलभूषणस्य सेवां कुर्वंस्तदादेशात् द्रमिडोपनिषद्भाष्यस्य व्याख्यां निगमपरिमलाख्यामारचयत्, या किलाद्य कलिमहिम्ना केवलं नामशेषा वर्तते। ततो भगवद्रामानुजविजयसाक्षिभूतं यादवाचलं प्राप्य तत्र संपत्कुमारमङ्गलाशसनेन कृतकृत्यमात्मानं मन्यमानो यतिराजसप्तत्या यतिवरं संसेवमानस्तत्रैव कंचित्कालमुवास।

अत्रान्तरे पुनरपि श्रीमतो रङ्गनाथदेवस्याराधनोत्सवादिकं प्रतिमतस्थैः प्रतिहतमाकर्ण्य श्रीरङ्गं त्वरितं प्रतिनिवर्तमाने वेंकटनाथे मध्येमार्गमेकां यामिनीं कस्मिंश्चिदग्रहारे वसति सति, भगवान् हयवदनस्तस्यां रात्रौ स्वावासभूतगृहस्वामिनं स्वं दिव्यरूपं प्रदर्श्यानुजग्राहेति वदन्ति। अथ श्रीरङ्गमागत्य वादिनो विजित्य स्वमतस्थापनपूर्वकं भगवदाराधनादिकं यथापुरं प्रावर्तयत। तस्मिन्नेवावसरे संकल्पसूर्योदयमिमं निरमिमीतेति प्रथा।

एवं श्रीरङ्गनाथस्य सेवापरे देशिकवरे श्रीरङ्गमधिवसति डिण्डिम-सार्वभौमाख्यः कश्चित् कविराचार्यमिमं कवितार्किकसिंहमुपश्रुत्य तदसहनो-ऽमूनि स्वप्रशंसापद्यान्यनुचरैराचार्यवर्यस्य समीपेऽचकथत्—

“ छित्त्वा सर्वाण्यरण्यान्यतिविषमलतागुल्मदुर्गाणि सद्यः
प्राप्तं मां पक्कणान्तं बत भषकततिर्बुक्कणैर्धिक्करोति।
लज्जन्ते हन्तुमेनां मदकरटिघटाकुम्भपीठीविपाट-
क्रीडाधौरेयधारा मम खलु नखराः किं करोमि क्व यामि॥

प्राज्ञानामेव राज्ञां सदसि न सहते जल्पमल्पेतरेषां
क्षुद्रेष्वाक्षेपमुद्रां न खलु गणयते डिण्डिमः सार्वभौमः ।
भांकुर्वद्भेककुक्षिंभरिषु भयभरभ्रान्तभोगीन्द्रसुभ्रू -
भ्रूणभ्रंशी किमम्भःफणिषु पतगराट् संभ्रमी बंभ्रमीति ॥ "

इति । विकत्थनमेतदुपश्रुत्य देशिकवरः किंचित् स्मयमानवदन इत्थं प्रत्यवोचत्—

" स्पर्धन्तां सहजं नु कुञ्जरतया दिक्कुञ्जरैः कुञ्जरा
ग्राम्या वा वनवासिनो मदजलप्रस्विन्नगण्डस्थलाः ।
हा कालस्य विपर्ययं शृणु सखे प्राचीनपालीमला-
स्वादस्निग्धकपोलभित्तिरधमः कोलोऽपि संस्पर्धते ॥
बाह्यैर्वर्णाडम्बरैर्मा भ्रमन्तु च्छित्वा गर्भाभ्यन्तरं शोधयन्तु ।
निर्णेतारो नीरसत्वेन को वा डिण्डीराणां डिण्डिमानां च भेदः ॥ "

इति । ततो डिण्डिमः स्वामिनोऽनेन प्रतिवचनेनैव भग्नदर्पः पुनर्यादवाभ्युदयश्रवणजनितरसास्वादपरवशहृदयः स्वामिनश्चरणारविन्दयोः प्रणम्येत्थमुपश्लोकयामास—

" घोटीघाटीकठोरस्फुटविकटकथाटोपवाचाटकोटी-
कोटीराघाटपेटीपुटघटितमणीसंघसंघट्टिताङ्घ्रिः ।
खर्वीकुर्वन् स गर्वं जयति कवितते: सर्वतन्त्रस्वतन्त्रो
वेदान्ताचार्यवर्यो विघटितजडधीसंकटो वेंकटेशः ॥
वेदे संजातखेदे मुनिजनवचने प्राप्तनित्यावमाने
संकीर्णे सर्ववर्णे सति तदनुगुणे निष्प्रमाणे पुराणे ।
मायावादे समोदे कलिकलुषवशाच्छून्यवादे विवादे
धर्मत्राणाय योऽभूत्स जयति भगवान् विष्णुघण्टावतारः ॥ "

इति ।

अनेन डिण्डिमकविसार्वभौमेन प्रौढदेवरायपुराख्यमूलाण्डग्राममधितस्थुषां डिण्डिमकवीनां मध्येऽन्यतमेन भाव्यमित्युन्नीयते । अत्र केचित्—अत्र निर्दिष्टो डिण्डिमकविर्विजयनगरसाम्राज्याधिपं प्रौढदेवरायमाश्रितः सालुवाभ्युदयस्य भागवतचम्प्वाश्च रचयिता राजनाथडिण्डिम एवेति वदन्ति[1] । तत्रेदं विम्रष्टव्यम्—विजयनगरसाम्राज्यस्य प्रथमराजपरंपरायां प्रथितास्त्रयः प्रौढदेवराया अवर्तन्त—देवरायः प्रथमः, देवरायो द्वितीयः, देवरायस्तृतीय इति । तत्र प्रथमस्य राज्यभरणसमयः A. D. 1402 आरभ्य 1422 पर्यन्तः । द्वितीयस्य A. D. 1422 आरभ्य 1446 पर्यन्तः । तथा तृतीयस्य A. D. 1446 आरभ्य 1465 पर्यन्त इति तच्चरित्रविमर्शकैर्निर्णीतः । सालुवाभ्युदयस्य रचयिता राजनाथडिण्डिमः सालुव-नरसिंह-नरपतिमाश्रितः । स नरपतिर्विजयनगरसाम्राज्यस्य द्वितीयराजपरंपरायां प्रसिद्धः । तस्य राज्यभरणसमयः A. D. 1485 आरभ्य 1492 पर्यन्तः । भागवतचम्प्वा रचयिता राजनाथस्तु सालुवाभ्युदयकर्तुः पौत्रः अच्युतरायमाश्रितः । अच्युतरायस्य साम्राज्यसमयो विजयनगरसाम्राज्यस्य तृतीयराजपरंपरायां A. D. 1529 आरभ्य 1542 पर्यन्त इति प्रसिद्धः[2] ।

[1] See page 137 of the work 'Desika and his works' by G. Srinivasan, Triplicane Madras.

[2] See the following references for more particulars on the family of Ḍiṇḍima poets and their patrons:

(a) Vijayanagar Administration by Dr. T. V. Mahālingam, 1940, pp. 415 to 417.

(b) History of classical Sanskrit Literature by Dr. M. Krishnamachariar, 1937, pp. 220 to 224.

(c) Papers Contributed by Mr. A. N. Krishna Ayyangar and published in the—

Annals of the Bhandarkar Oriental Research Institute Silver Jubilee, Poona 1942, pp. 23 to 29:

Adyar Library Bulletin Vol V. 1941, pp. 59—68;

The Volume of Studies in Indology, published by the Oriental Book Agency, Poona 1941, pp. 1—6.

एवं स्थिते सालुवाभ्युदयकर्ता भागवतचम्पूकर्ता च राजनाथौ भिन्नावेव । तयोश्च भागवतचम्पूकर्तुः प्रौढदेवरायाश्रितत्वं कथमपि न संभवेत् । सालुवाभ्युदयकर्तुस्तत् बाल्ये संभवदपि श्रीवेंकटनाथेन सह समागमवृत्तान्तं न सर्वथा समञ्जसयेत् । श्रीवेंकटनाथस्य डिण्डिमकविसमागमवृत्तान्तो हि श्रीरङ्गनाथस्य दिव्यप्रतिष्ठायाः पूर्वकाले वृत्तः । दिव्यप्रतिष्ठा च A. D. 1347 वत्सरे कारितेति वक्ष्यते । ततस्ततः पूर्वं प्रायशः A. D. 1330 वत्सर एतेनोदन्तेन वृत्तेन भवितव्यमिति निर्णयः ।

श्रीरङ्गमधिवसन् श्रीवेंकटनाथदेशिकः कदाचित भगवत्सेवार्थं रङ्गास्थानमण्डपमागत्य संमिलितैर्भागवतोत्तमैर्विद्वद्वरैरभ्यर्थितोऽविलम्बेनैकस्मिन् यामिनीभागे श्रीरङ्गनाथपादुकाविषयं पादुकासहस्रं नाम ग्रन्थरत्नमग्रथ्नात् । तच्च भगवत्संनिधौ परिपठ्यमानं द्रमिडोपनिषत्सारगर्भितमिति औपनिषदरहस्यार्थबन्धुरमिति च सर्वे सभ्या विबुधवरा अन्वमोदन्त । तदेनां श्लाघामसहमानो वरवरनामा श्रीलोकाचार्यावरजः स्वयं श्रीरङ्गनाथपदकमलसहस्रकरणं प्रतिज्ञाय कतिपयपद्यरचनेनैव विश्रान्तप्रतिभाबलो विलज्जितो बभूव । देशिकवर्यास्तु वृत्तान्तमिममाकर्ण्यात्मानं यथाकथंचिदपि भागवतापचारहेतुकोटौ पतितमाशङ्कमान इत्थं स्वनैच्यानुसंधानेन तं प्रसादयामास—

“सूते सूकरयुवतिः सुतशतमत्यन्तदुर्भगं झटिति ।
करिणी चिराय सूते सकलमहीपाललालितं कलभम् ॥”

इति ।

एवमत्र श्रीरङ्गे देशिकवरे शिष्यवर्गैः साकं श्रीभगवद्रामानुजसिद्धान्तप्रवचनपरे निवसति, कलेः ४४३० तमे (1329 A.D.) संवत्सरे शुक्लनामनि चैत्रमासे पुनर्वसुनक्षत्रयुते शुभदिने तत्तनयो वरदनाथः स्वामिनां चरणारविन्दयोः शिष्यभावमवाप्याध्यात्मशास्त्राधिगममारेभे । तदा च तद्ध्यानपद्यमिदं स्वयमेव संग्रथ्यानुसंदधे—

'श्रीमान् वेंकटनाथार्यः कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे संनिधत्तां सदा हृदि ॥'

इति । अथ सदस्याः सुदर्शनभट्टादयो महान्तः श्लोकमिमं भावपुष्टमभिनन्द्य 'इतः प्रभृति श्रीभाष्यादिशारीरकशास्त्रग्रन्थपठनसमये शिष्यैरयं श्लोक आदावनुसंधेयः' इति नियमं चक्रुः । अथैकदा शिष्येषु विरक्ततमः कश्चित् देशिकवर्यस्याभ्यनुज्ञया तुरीयाश्रमं स्वीचक्रे, यः किलाधुना ब्रह्मतन्त्रस्वतन्त्रमुनिरिति नाम्ना व्यवह्रियते ।

एवं दिक्षु विदिक्षु च विसृत्वरीमाचार्यवर्यप्रथामसहमानाः केचित् सयूथ्याः स्वामिनश्चरणारविन्दयोरपराद्धुमारभन्त । देशिकवर्येणानुष्ठेये पितृश्राद्धे निमन्त्रितान् विप्रान् संभेद्य तेषामागमनं विजघ्नुः । अपराह्णपर्यन्तं प्रतीक्ष्यापि विप्राणामनागमनेन चेखिद्यमानमानसोऽयं वेंकटनाथगुरुः स्वाराध्यं हयवदनं भगवन्तमेव शरणमुपगम्य निमन्त्रयांचक्रे । हयवदनोऽपि विप्ररूपेणागत्य श्राद्धान्नमुपभुज्यानुजग्राह । तेन च भग्नमनोरथास्ते सयूथ्या असूयालवो देशिकवरमेनं श्रीरङ्गात् प्रस्थापयितुमुचितमुपायमन्विष्यन्तो बभूवुः ।

एकदा देशिकवर्य एकान्त उपविश्य पूर्वाचार्यग्रन्थेषु कंचन विषयमालोचयन् तदौचित्यसामञ्जस्यादिष्ववगाढमानसोऽभूत् । तदा वीथ्यां कश्चित् वाधूलो लक्ष्मणाचार्यनामाचार्यपुरुषः शिष्यैः परिवृतो गच्छन्नास्त । विषयान्तरव्यग्रचित्ततया वेंकटनाथस्तस्य गमनं नाजानात्, नोदतिष्ठच्च । एतदेव रन्ध्रमवलम्ब्य लक्ष्मणाचार्यशिष्येष्वन्यतमः सरभसमागत्य देशिकवर्यं चरणयोराचकर्ष । सद्य एवावगतार्थो वेंकटनाथ आत्मानं भागवतविषये कृतापराधमवगत्य विषीदन् स्वस्याहंयुतां परैरुद्भावितां न्यषेधत् । यथा

'अहंते नाहं ते विहरणपदं देशिकगिरः
स्वदन्ते नः स्वान्ते सपदि गतसंदेहविषयाः ।
अनायासा यासामहिपतिशया सा भगवती
धराधारा धाराधरनिकरसाधारणरुचिः ॥'

इति । एवमपराधसहने प्रार्थितेऽपि यदा परे नाक्षाम्यन्, तदा श्रीरङ्गं विहाय नातिदूरस्थं सत्याकालनामानं ग्राममधितष्ठौ । अथ जातानुशयैः परैः सपादपतनमभ्यर्थितः पुनः श्रीरङ्गमागत्यावसत् ।

एवं केषुचिद्वत्सरेषु गतेषु कलियुगस्य ४४३७ (1336 A.D.) तमे धातृसंवत्सरे मालिक्-काबूरितिनाम्नस्तुरुष्कसेनापतेर्नियोगेन सहसा तुरुष्काः केचिदश्वारूढा आयुधहस्ताः श्रीरङ्गमभिपत्य भगवन्मन्दिरादाभरणादिकं हर्तुं प्रायतन्त । अत्रान्तरे सुदर्शनसूर्यादयो भगवन्मन्दिरपालका यथाकथंचित् श्रीरङ्गनाथार्चां मन्दिराद्बहिरानीय क्वचित् गूढं परिरक्ष्य तदाभरणादिकं चानर्घं मन्दिराभ्यन्तर एव क्वचिदन्तर्भूमि गूढं निक्षिप्य मन्दिरात् बहिर्विग्रहान्तरं नूत्नमेकमवस्थाप्य परिमितैराभरणैस्तदलंकृत्य सेवमाना इव संघशोऽवतस्थिरे । तुरुष्कास्तु तं देशमागत्य तं विग्रहमाभरणानि चापहृत्य जग्मुः । तदा मन्दिराधिकारिषु प्रधानतमः सुदर्शनसूरिस्तुरुष्कसैन्यैर्हिंसितोऽस्वस्थदेहः श्रीवेदान्तदेशिकमाहूय तस्य हस्ते स्वस्य द्वौ कुमारौ श्रीभाष्यव्याख्यां श्रुतप्रकाशिकां च समर्प्य स्वकुमारावध्यात्मतत्त्वमवबोधयितुं श्रुतप्रकाशिकां सच्छिष्येषु प्रवर्तयितुं च प्रार्थयत । वेंकटनाथोऽपि स्वाचार्यस्य वादिहंसाम्बुवाहस्य सतीर्थ्य इति बहुमत्या तन्निदेशं शिरसा जग्राह । ततः श्रीरङ्गनाथस्यान्यत्र गमनात्तत्र तत्सेवामकुर्वन् क्षणमपि वर्तितुमशक्नुवानस्ततः प्रस्थाय शिष्यैः साकं पुनः सत्याकालं ततो यादवाचलं च प्राप्य तत्र श्रुतप्रकाशिकादिप्रवचनपरोऽवसत् । एतस्मिन्नन्तरे भक्तैः श्रीरङ्गनाथार्चापि वेंकटाद्रिं प्रापय्य तत्र समाराधितावर्तत ।

यादवाचलमधिवसति वेंकटनाथदेशिके द्रमिडोपनिषद्भाष्यव्याख्यां निगमपरिमलं कुमारवेदान्ताचार्यात् ब्रह्मतन्त्रस्वतन्त्रयतिर्यथावदधिजगे। तदैव यतिनानेन श्रीवेंकटनाथगुरुविषयः

"रामानुजदयापात्रं ज्ञानवैराग्यभूषणम् ।
श्रीमद्वेंकटनाथार्यं वन्दे वेदान्तदेशिकम् ॥"

इति ध्यानश्लोकः, कुमारवेदान्ताचार्यविषयः

"श्रीमल्लक्ष्मणयोगीन्द्रसिद्धान्तविजयध्वजम् ।
विश्वामित्रकुलोद्भूतं वरदार्यमहं भजे ॥"

इति ध्यानश्लोकश्च स्वयमेव कृत्वानुसंहितौ। अनयोः श्लोकयोरवतारकालः कलि 4439 शक 1260 (A. D. 1338) तमो बहुधान्यसंवत्सर इति निर्णीतः।

एवं स्थिते चेञ्जिभूमिपतिः गोप्पणो देशिकवर्यस्य महिमातिशयमुपश्रुत्य यादवाचलमागत्य गुरुवर्यं सिषेवे । तदा वेंकटनाथो गोप्पणं वेंकटाद्रेः श्रीरङ्गनाथमानीय श्रीरङ्गे तं पूर्ववत् प्रतिष्ठापयितुमादिदेश । गोप्पणोऽपि तन्निदेशं शिरसा धारयन् परिजनैः सह वेंकटाद्रिं प्राप्य श्रीरङ्गनाथं स्वनगरं चेञ्जिनामकं प्रापय्य तत्रैव कंचित्कालमाराध्य पुनः श्रीरङ्गं प्रापय्य श्रीवेंकटनाथाय वृत्तान्तमेनं व्यजिज्ञपत् । श्रीवेंकटनाथदेशिकोऽपि महता संतोषेण श्रीरङ्गमागत्य श्रीरङ्गनाथस्य यथाविधि महता वैभवेन प्रतिष्ठां निर्वर्तयामास । प्रतिष्ठा चैषा कलिसंवत्सरे ४४४८ (1347 A. D.) तमे सर्वजित्यब्दे निर्वृतेति श्रूयते।

वृत्तान्तश्चैष श्रीरङ्गनाथदिव्यालयप्राकारे शिलाशासनरूपेण श्लोकाभ्यामाभ्यामुत्कीर्णोऽद्यापि परिदृश्यते—

"आनीयानीलश्रृङ्गद्युतिरचितजगद्रञ्जनादञ्जनाद्रे-
श्चेञ्ज्यामाराध्य कंचित्समयमथ निहत्योद्धनुष्कांस्तुरुष्कान् ।

लक्ष्मीक्ष्माभ्यामुभाभ्यां सह निजनगरे स्थापयन् रङ्गनाथं
सम्यग्वर्यां सपर्यां पुनरकृत यशोदर्पणो गोप्पणार्यः ॥
विश्वेशं रङ्गराजं वृषभगिरितटाद्गोप्पणक्षोणिदेवो
नीत्वा स्वां राजधानीं निजबलनिहतोत्सिक्ततौरुष्कसैन्यः ।
कृत्वा श्रीरङ्गभूमिं कृतयुगसहितां तं च लक्ष्मीमहीभ्यां
संस्थाप्यास्यां सरोजोद्भव इव कुरुते साधुचर्यां सपर्याम् ॥"

इति ।

अथानन्तरे कल्यब्दे ४४४९ (1348 A. D.) तमे सर्वधारिवर्षे श्रीरङ्गनाथस्याध्ययनोत्सवे मतान्तरैराक्षिप्य प्रतिषिद्धे श्रीमान् वेंकटनाथदेशिकः प्रमाणोपन्यासपूर्वकं तान् समाधायोत्सवं यथापूर्वं निरवर्तयत् ।

एवं स्थिते विजयनगरनृपतिसदसि लब्धप्रतिष्ठयोः विद्यारण्याक्षोभ्यतीर्थयोः स्वस्वमतविषये वादे प्रवर्तमाने श्रीवेंकटनाथदेशिको माध्यस्थ्यमवलम्ब्य श्रीरङ्गात् निर्णयमेवं विलिख्य प्राहिणोत्—

"असिना तत्त्वमसिना परजीवप्रभेदिना ।
विद्यारण्यमहारण्यमक्षोभ्यमुनिरच्छिनत् ॥"

इति । स चायमक्षोभ्यतीर्थः श्रीजयतीर्थस्य गुरुः कलौ ४४५७ (1356 A. D.) तमे संवत्सर आसीदिति निर्णीयते । एष च वृत्तान्तः संकर्षणाख्येन कविना कृते श्रीजयतीर्थविजयेऽपि निबद्धो लक्ष्यते । यथा—

"अक्षोभ्यतीर्थमुनिराडखिलैरभेद्यो
दुर्वादिवारणविदारणकेसरीन्द्रः ।
सत्तत्वमस्यभिधवागसिना स्म विद्या-
रण्यं छिनत्ति परजीवविभेदिना तम्[1] ॥"

इति ।

[1] जय-वि. २-२३. Adyar Library MS. No. 8-D. 22.

एवं श्रीरङ्गे वसन् देशिकवर्यः श्रीभगवद्रामानुजसिद्धान्तनिर्धारणपरः पाञ्चकालिकवर्त्मना भगवन्तमाराधयन्नवर्तत ।

अथ देशिकवर्येण शिष्याणामभ्यर्थनामनुसृत्य स्वयमेव रचितां स्वस्य लोहमयीमर्चां समुचितं पीठं कृत्वा तेन योजयितुं नियुक्तस्तथा कर्तुमपारयन् कश्चित दृप्तः शिल्पिवरस्तथा स्वयं करणेन विगतदर्पोऽकारि । एष च वृत्तान्तः शालिवाहनशकस्य १२९० (1368 A.D.) तमे कीलकाब्दे धनुर्मासे समवर्ततेत्युक्तम् । एषैवार्चाहीन्द्रनगरे तत्कुमारेण वरदनाथेन प्रतिष्ठापिताधुनापि समभ्यर्च्यत इति महतां निर्णयः ।

अथात्यन्तपरिणते वयसि वर्तमानोऽयमाचार्यवर्यः श्रीमद्रहस्यत्रयसारं नाम ग्रन्थरत्नमारचय्य सर्वोपकारकेणानेन ग्रन्थेन सुमहदुपचकार मुमुक्षुलोकस्येति तस्य ग्रन्थस्य समासौ ग्रथितेन पद्येनावगम्यते । यथा

"निर्विष्टं यतिसार्वभौमवचसामावृत्तिभिर्यौवनं
निर्धूतेतरपारतन्त्र्यविभवा नीताः सुखं वासराः ।
अङ्गीकृत्य सतां प्रसत्तिमसतां गर्वोऽपि निर्वापितः
शेषायुष्यपि शेषिदंपतिदयादीक्षामुदीक्षामहे ॥"

इति ।

एवं महता वैभवेन स्वावतारप्रयोजनं निर्वर्त्य चातकवृत्त्या भगवतः कृपामेव मोक्षसाम्राज्यसंपादनक्षमां प्रतीक्षमाणः कल्यब्दे ४४७० शालिवाहनशकस्य १२९१ (1669 A.D.) तमे सौम्यवत्सरे वृश्चिकमासे कृत्तिकायुक्तराकायां भगवतो लीलाविभूतिभूतामिमां धरित्रीं विहाय नित्यविभूतिं प्रापत । पुनश्चांशेन श्रीशैलनाथस्य भगवतः श्रीनिवासस्याराधनार्थघण्टात्मना भक्तजनानुग्रहायार्चात्मना चावतीर्य लोकाननुगृह्णन् वर्तत इति सन्तो विभावयन्ति[1]।

1 "अब्दे सौम्ये च वारे गतवति तरणौ वृश्चिकं कृत्तिकर्क्षे
राकायां वेंकटेशो यतिनृपतिमतं सर्वतः स्थापयित्वा ।

अस्याचार्यस्यापदानविशेषाणां कालनिर्णयश्चेत्थम्—

| | कलि. | शालि. | A.D. | अब्दः |
|---|---|---|---|---|
| वेंकटनाथदेशिकस्यावतारः | ४३६९ | ११९० | 1268 | विभवः |
| तत्कुमारस्य वरदनाथस्यावतारः | ४४१७ | १२३८ | 1316 | नलः |
| श्रीमान्वेंकटनाथार्यध्यानश्लोकावतारः | ४४३० | १२५१ | 1329 | शुक्लः |
| डिण्डिमसार्वभौमसमागमः | ४४३१ | १२५२ | 1330 | प्रमोदः |
| श्रीरङ्गे तुरुष्कोपद्रवः | ४४३७ | १२५८ | 1336 | धातृनामकः |
| रामानुजदयापात्रध्यानश्लोकावतारः | ४४३९ | १२६० | 1338 | बहुधान्यः |
| श्रीरङ्गनाथप्रतिष्ठा | ४४४८ | १२६९ | 1347 | सर्वजित् |
| श्रीरङ्गे अध्ययनोत्सवस्थापनम् | ४४४९ | १२७० | 1348 | सर्वधारी |
| विद्यारण्याक्षोभ्यतीर्थवादे माध्यस्थ्यवहनम् | ४४५७ | १२७८ | 1356 | दुर्मुखी |
| वेंकटनाथस्यार्चानिर्माणम् | ४४६९ | १२९० | 1368 | कीलकः |
| अवतारसमापनम् | ४४७० | १२९१ | 1369 | सौम्यः |

श्रीवेंकटनाथदेशिकसमकालिकास्तच्चरितसंबद्धाश्चाचार्या इतरे महान्तश्च--

१. वात्स्य-वरदाचार्यः। अयं काञ्च्यां भगवद्रामानुजप्रियभागिनेयस्य पुत्रात देवराजगुरोर्लब्धजन्मा। अस्य चावतारकालः कलि ४२६६

वेदान्ताचार्यवर्यो विरचितविविधानेकदिव्यप्रबन्धः
श्रीशैलाधीशघण्टाकृतिवपुरभवद्देशिकेन्द्रो दयालुः" ॥

Vide page 197 of the Guruparamparāprabhāva by Tṛtīya-Brahmatantrasvatantrasvāmin, Printed at the Sri-Vani-Bhushanam Press, Triplicane, Madras, 1913.

(1165 A.D.) तमः पार्थिवाब्द इति वदन्ति । भगवद्रामानुजप्रशिष्यस्य श्रीविष्णुचित्तगुरोरयमन्तेवासी । अस्य च नडादूर्-अम्माल् इति सांप्रदायिको व्यवहारः । आत्रेय-रामानुजः सुदर्शनसूरिश्चास्यान्तेवासिषु विश्रुतनामानौ । परिणते वयसि वर्तमानस्यास्य श्रीभाष्यप्रवचनगोष्ठ्यां श्रीवेंकटनाथः पड्वर्षदेशीयस्तदनुग्रहपात्रमभूत् । तत्त्वसारप्रमेयमालादिकमनेन कृतम् ।

२. आत्रेय-रामानुजाचार्यः । अयं भगवद्रामानुजान्तेवासिनो वेदान्तोदयननाम्नः प्रणतार्तिहराचार्यस्य पौत्रात् रङ्गराजगुरोर्लब्धजन्मा । अस्य चावतारकालः कलि ४३२१ (1220 A. D.) तमो विक्रमाब्द इति वदन्ति । श्रीवेंकटनाथगुरोर्जनन्यास्तोताद्र्यम्बायाः सोदरः । वात्स्य-वरदगुरोरवाप्तसमस्तकलाकलापः । अस्मादेव श्रीवेंकटनाथेनाखिलकलाकलापोऽधीतः । अनुपदं निर्देक्ष्यमाणस्य सुदर्शनसूरेः सतीर्थ्यः । न्यायकुलिशग्रन्थोऽनेनाकारि ।

३. सुदर्शनसूरिः । अयं हारीतकुलतिलकस्य वाग्विजयिसूरेरात्मजः । वात्स्य-वरदगुरोरवाप्तसकलविद्याकलापः । पूर्वं निर्दिष्टस्यात्रेय-रामानुजाचार्यस्य सतीर्थ्यः । श्रीभाष्यस्य श्रुतप्रकाशिकां नाम विस्तृतां श्रुतप्रदीपिकां नाम संक्षिप्तां च टीकां चकार । श्रीरङ्गक्षेत्रे तुरुष्कैः कलि ४४३७ (1336 A. D.) तमे धात्रब्द उपद्रुते स्वकीयां श्रुतप्रकाशिकां श्रीवेंकटनाथहस्ते परिपालनार्थं प्रदाय परमपदमगात् ।

४. श्रीलोकाचार्यः । अयं कृष्णपादगुरोस्तनयः । भगवद्रामानुजान्तेवासिनो गोविन्दभट्टस्य शिष्यपरंपरायामतीव प्रसिद्धिमुपगतः । तत्त्वत्रयादीनां ग्रन्थानां निर्माता । श्रीवेंकटनाथमपेक्ष्य वयसा ज्येष्ठः प्रथमं क्वचित्क्वचित् सिद्धान्तविषये तद्द्वैमत्यमास्थितोऽप्यन्ते तदैकमत्यमापद्य सिद्धान्तप्रवचनपरोऽभूदिति कथ्यते । पश्चात् श्रीवेंकटनाथस्यान्तेवासितामप्यभ्युपागमदिति केचिद्वदन्ति ।

५. वरदनाथः। अयमस्याचार्यवर्यस्य तनुजः। कुमारवेदान्ताचार्य इति नयिनाराचार्य इति च व्यवह्रियते। कल्यब्दे ४४१७ (1316 A. D.) तमे नलसंवत्सरे काञ्च्यामस्यावतारः। अनेन स्वपितृपादात् श्रीवेंकटनाथदेशिकादेवाखिलाः कला अशिक्ष्यन्त। कलि ४४३० (1329 A. D.) तमे शुक्लसंवत्सरे शारीरकं शास्त्रमध्येतुमारभमाणेनानेन 'श्रीमान् वेंकटनाथार्यः' इत्यादिध्यानश्लोकः स्वयं निर्मायानुसंहितः। ब्रह्मतन्त्रस्वतन्त्रस्य सतीर्थ्यस्य द्रमिडोपनिषद्भाष्यसंप्रदायमुपदिदेश। अधिकरणसारावलीव्याख्याया अधिकरणचिन्तामणेः, मीमांसापादुकाव्याख्यायाः परित्राणस्यान्येषां च कतिपयग्रन्थानां रचयिता। अनेन शाकल्यमल्लो नाम मतान्तरस्थः कश्चन मान्त्रिकोऽस्यापकुर्वन् मन्त्रबलेनैव पराजित इत्यैतिहासिकाः। एष च वृत्तान्तः 1380 A. D. संवत्सरे रेचकोण्डाधिपस्य सर्वज्ञशिंगस्य राज्याधिपत्यसमये निर्वृत्त इति च वदन्ति[1]।

६. ब्रह्मतन्त्रस्वतन्त्रः। अयं श्रीवेंकटनाथस्य शिष्यकोटिष्वन्यतमः। संसृतौ परमां विरक्तिमधिगम्य तुरीयमाश्रममारूढः। श्रीमद्रहस्यत्रयसारश्रीभाष्यगुरुपरंपरासु श्रीमतो वेदान्तदेशिकस्य शिष्यत्वेन तत्संप्रदायप्रवर्तकतयानुसंधीयते। अनेन च श्रीदेशिकानुमत्या विमताः केचिद्वादे पराजीयन्तेति कथ्यते। द्रमिडोपनिषत्संप्रदाये श्रीवरदनाथस्य शिष्यभावमुपगत्य तत्संप्रदायप्रवर्तकोऽनुसंधीयते। अयमेव चाधुना महीशूरपुरे विराजमानस्य श्रीपरकालमठस्य स्थापक इति प्रथा।

७. विद्यारण्यः। मायणस्यात्मजेषु माधवसायणभोगनाथेषु त्रिष्वयं ज्येष्ठो माधवाचार्यनामा। विद्यारण्य इति तस्यैव नामान्तरम्। अयं

[1] Vide page 210 of the History of classical Sanskrit Literture by M. Krishnamachariar. 1937 and pp. 3 and 4 of Seshagiri S'āstris Report No. 1. 1898.

विजयनगरस्थसंगमवंश्यभूपानाममात्यो गुरुश्चासीत् । हरिहररायस्य प्रथमस्य (1336 A. D.) विजयनगरराज्यस्थापने महत् साहाय्यमकरोदिति वदन्ति । पराशरमाधवीयं नाम धर्मशास्त्रनिबन्धनं पञ्चदशीनामकमद्वैतवेदान्तप्रकारणमन्ये च बहवो धातुवृत्त्यादयो ग्रन्था अनेनारच्यन्त । किंचिन्न्यूनाधिके (1356 A. D.) तमे संवत्सरे अक्षोभ्यतीर्थमुनेरस्य च वेदान्तविषयविचारे प्रवृत्ते श्रीवेंकटनाथेन ताटस्थ्यमवलम्ब्याक्षोभ्यतीर्थपक्षानुकूलो निर्णयः कृतः । तेन च किंचिदिव विमनायमानेन विद्यारण्येनादसीयशतदूषण्यामेकत्र चकारस्य वैयर्थ्ये समुद्भाविते देशिकवर्येण चकारसमर्थनाख्यं पत्रमेकं विरचय्य तत्समाहितमिति वदन्ति ।

८. अक्षोभ्यतीर्थः । श्रीमदानन्दतीर्थीयद्वैतमतप्रवर्तकाचार्येष्वन्यतमः श्रीमज्जयतीर्थस्य टीकाकारस्याचार्यश्च । अयं च श्रीमदानन्दतीर्थीयमतगुरुपरंपरासु पञ्चमं स्थानमलंचकार । तथाहि—१ आनन्दतीर्थः, २ तस्य शिष्यः पद्मनाभतीर्थः, ३ तस्य शिष्यो नृसिंहतीर्थः, ४ तस्य शिष्यो माधवतीर्थः, ५ तस्य शिष्यः अक्षोभ्यतीर्थ इति[1] । विद्यारण्यस्यास्य च वेदान्तविषयविचारे प्रवृत्ते श्रीवेंकटनाथेन ताटस्थ्यमवलम्ब्यास्य पक्षे स्वस्य संमतिराविष्कृतेति वदन्ति ।

९. हरिहररायः प्रथमः । विजयनगरसाम्राज्यप्रतिष्ठापकेषु भूपालेषु प्रधानतमः । अस्य साम्राज्ये विद्यारण्यः सचिवपदमुदवहत् । एतद्धस्तेनैव विद्यारण्योऽभ्यर्थनापत्रं विलेख्य श्रीवेंकटनाथं सभागमनायाजुहावेत्यूह्यते । अस्य च राज्यभरणसमयः 1336-1356 A. D. इति निर्णीतः[2] ।

[1] Vide Jayatīrthavijaya, I—46 to 49. Adyar Library MS. No. 8- D-22.

[2] Vide Vijayanagar Administration, by Dr. T. V. Mahalingam, page 415; Madras 1940.

१०. सर्वज्ञशिंगभूपालः । अयं मद्रराजधान्यन्तर्गतस्य वेंकटगिरिनामकस्य खण्डदेशस्य पालकेषु चतुर्थवर्णजभूमिपालेष्वन्यतमः। तस्य च कूटस्थवंशः रेचर्लेति प्रसिद्धः । अस्य च राज्यभरणसमयः 1330 to 1380 A. D. इति निर्णीतः । श्रीवेंकटनाथवेदान्तदेशिकस्य शिष्योऽयं कदाचिदाचार्यमुपसद्य स्वेन यथा धर्मपथादप्रच्युतेन वर्तितव्यं तथोपदेशमभ्यर्थयामास । श्रीवेदान्तदेशिकः तत्त्वसंदेशं नामाध्यात्मतत्त्वबोधकं द्रमिडभाषारूपं ग्रन्थं सुभाषितनीवीनामकं लौकिकधर्मोपदेशकं संस्कृतसुभाषितं च विरचय्य तस्मै प्राहिणोदिति कथयन्ति[1] । अयं रसार्णवसुधाकरं नामालंकारग्रन्थमरचयत् ।

अथास्य श्रीवेंकटनाथदेशिकस्यात्मगुणपूर्तिः—

आत्मगुणाश्चाष्टौ गौतमेन परिगणिताः । यथा —"अथाष्टावात्मगुणाः । दया सर्वभूतेषु क्षान्तिरनसूया शौचमनायासो मङ्गलमकार्पण्यमस्पृहेति । यस्यैते चत्वारिंशत्संस्कारा न चाष्टावात्मगुणा न स ब्रह्मणः सायुज्यं सालोक्यं च गच्छति[2]" इति ।

तत्र दया नाम सर्वभूतहितचिन्तनम् । वेदानधिकारिणां सदाचाराणां स्त्रीशूद्रादीनां चण्डालपर्यन्तानामपि मोक्षोपायाधिकारसिद्धये ब्रह्मज्ञानसंपादनाय च द्रमिडभाषारूपाणामध्यात्मविषयकग्रन्थानां करणेन श्रीरङ्गनाथप्रतिष्ठादिकरणेन चानेनाचार्येण सुमहदुपकृतं लोकस्येति सुव्यक्तमेतत् ।

क्षान्तिः सुखदुःखादिद्वन्द्वसहिष्णुता । यथाह व्यासः—

"आक्रुष्टोऽभिहतो वापि नाक्रोशेन्नापि ताडयेत् ।
अदुष्टो वाङ्मनःकायैः सा तितिक्षा क्षमा स्मृता[3] ॥"

इति । कदाचिदाचार्यस्यावज्ञाकरणार्थं विमतस्थैः कैश्चित् स्वपादरक्षा

[1] Vide M. Seshagiri Sastris Report No. I, page 7, Madras 1898.
[2] Gautamadharmasūtra VIII-20 to 22. [3] Quoted by Maskarin.

देशिकवर्यस्य मन्दिरदेहल्यां रात्रौ निबध्यावलम्बिता। प्रातरभिगमनकाले यदा देशिकवर्यो मन्दिरान्निश्चक्राम, तदोपरि निबद्धां पादरक्षामवलोक्य कृत्यमिदं नूनं सयूथ्यैः कैश्चिद्भागवतैराचरितमिति मत्वा स्वस्य धन्यवादमेवमवादीत् —

'कर्मावलम्बकाः केचित् केचिज्ज्ञानावलम्बकाः ।
वयं तु हरिदासानां पादरक्षावलम्बकाः ॥'

इति । अन्यदैकस्मिन् दिवसे लक्ष्मणाचार्यस्य वीथीयात्रायामासीनमेनमाचार्यं कश्चित् पदयोराचकर्ष । तदापि देशिकवर्यस्य मनो नाक्षुभ्यत् । केवलम् "अहंते नाहं ते विहरणपदम्[1]" इत्यादिश्लोकपठन एव प्रवृत्तम्। इत्यादिकं तत्क्षमायाः पर्याप्तं निदर्शनम् ।

अनसूया नाम गुणवत्सु प्रद्वेषाभावः । स्वयमनितरसाधारणवैदुष्यभूषितोऽपि स्वसमकालभवेषु श्रीलोकाचार्यसुदर्शनसूर्यादिषु विद्वदग्रणीषु न मात्सर्यमुवाह देशिकवर्यः, प्रत्युताभियुक्तकोटिषु तान् परिगणय्य तदीयग्रन्थानां प्रकटनमप्याचरयत् । न केवलमयमेवानसूयालुः । किंतु परेषामप्यनसूयामुपदिशति । यथा—

"आपादचूडमनपायिनि दर्शनेऽस्मि-
न्नाशासनीयमपरं न विपक्षहेतोः ।
आपातशान्तिमधुरान्पुनरस्मदीया-
नन्योन्यवैरजननी विजहात्वसूया "[2] ॥

इति ।

शौचं नाम द्रव्यादिशुद्धिः । भगवदाराधनोपयुक्तानां द्रव्याणामुपादाने परमैकान्तिभिः श्रीत्रियैरुपहृतमयाचितोपनतं द्रव्यमेव स्वीकुर्वन्

[1] Vide page 70 of this Introduction.
[2] Vide page 264 of the text.

"न राज्ञः प्रतिगृह्णीयात्[1]" इति निषिद्धं प्रभूतमपि राजद्रव्यं न स्वीचकारेति विजयनगरनरपत्याह्वाननिराकरणादिना ज्ञायते ।

अनायासो नामात्मपीडानारम्भः । "दुरीश्वरद्वारबहिर्वितर्दिकादुरासिकायै रचितोऽयमञ्जलिः[2]" इति वदता स्पष्टीकृतोऽयं गुणः ।

मङ्गलं नाम प्रशस्तकर्माचरणम् । नित्यनैमित्तिकानि कर्माणि "मङ्गलानां च मङ्गलम्[3]" इत्युक्तपरममङ्गलभूतभगवदाराधनैकवेषेणानुतिष्ठन् क्षयिष्णुफलानि काम्यानि कर्माणि सर्वात्मना परिहरंश्चात्मनो मङ्गलैकतानतामभिव्यनक्ति देशिकवर्यः ।

अकार्पण्यं नामापद्यप्यदीनता । श्रीरङ्गक्षेत्रे तुरुष्कैरुपद्रुते कृत्याकृत्यविभागनिपुणोऽयमाचार्यो दैन्यमवधूय सद्यः श्रीरङ्गात् प्रस्थाय यदुशैलं प्राप्य तत्रत्य एव श्रीरङ्गनाथस्य पुनरालये प्रतिष्ठापनसंविधानानि कुर्वन्नास्तेति पर्याप्तमिदं निदर्शनम् । किंच धनरहितोऽपि कदाचिदपि कार्पण्यं नावलम्बत ।

अस्पृहा नाम यदृच्छालाभसंतोषः ।

"नास्ति पित्रार्जितं किंचिन्न मया किंचिदार्जितम् ।
अस्ति मे हस्तिशैलाग्रे वस्तु पैतामहं धनम्[4] ॥"

इति वदता सम्यगाविष्कृतोऽसौ गुणः ।

श्रीवेंकटनाथदेशिकैरत्र नाटके ग्रन्थान्तरेभ्यः समुद्धृतेषु वाक्येषु बहून्युपनिषद्वाक्यानि लौकिकन्यायवाक्यानि च सन्त्यपि न विशेषतोऽत्र गणनामर्हन्ति । अत्र प्रस्तावनायां समुद्धृतः

"न तच्छास्त्रं न सा विद्या न तच्छिल्पं न ताः कलाः ।
नासौ योगो न तज्ज्ञानं नाटके यन्न दृश्यते[5] ॥"

[1] मनु. ४-८४. [2] वै. रा. ४. [3] महा. आनु. २५४-१०.
[4] वैरा. प.६. [5] सं-सू. १-२०.

इति श्लोकः अमृतानन्दकृते अलंकारसंग्रहेऽनयैवानुपूर्व्या पठ्यते[1]। प्रभाविलासकारोऽहोबलोऽपि "अमृतानन्दश्लोकमुदाहरति—न तदिति[2]" इति पद्यमिदमलंकारसंग्रहादुद्धृतं निर्दिशति। तस्मादलंकारसंग्रहकारोऽमृतानन्दः कवेरस्मात्पूर्वकालिक इत्यवगम्यते। तस्य समयः प्रायेण 1200 A. D. भवेदिति वक्तुं शक्यते। पञ्चमेऽङ्के "तुण्डीरं मण्डलं मे कुलपतिरपि स्कन्दभूपालवन्द्यः[3]" इति दर्पवाक्येन स्कन्दभूपालं कंचन निर्दिशति कविः। स च स्कन्दभूपालः "कश्चित् शूद्रप्रभुः[4]" इति प्रभाविलासे विवृतः। स च भूपालो गण्डगोपालराय इति तदीयं किमपि शासनं शकाब्दे ११५२ (A. D. 1230) तमे प्रवर्तितमुपलभ्यत इति च चरित्रविमर्शकाः सांप्रदायिकाश्च कथयन्ति[5]। दर्पवाक्ये स्वकुलपतिः स्कन्दभूपालवन्द्य इत्युक्तेः प्रकृतग्रन्थकर्तुः कालविशेषनिर्णये स निर्देशः कथमपि नोपकर्तुं प्रभवतीति प्रमाणान्तरैः कविकालः सुस्पष्टं निर्णीत एवेति च तस्य भूपालस्योदन्ताद्यन्वेषणेऽस्माभिर्नातीव परिश्रमः कर्तव्य इत्युदास्महे।

अत्र मुद्रितयोः प्रभाविलासप्रभावल्योर्व्याख्ययोः प्रभाविलासस्य कर्ता श्रीमान् अहोबलसूरिः प्रारम्भश्लोके आत्मानमत्रिगोत्रजं श्रीपराङ्कुशसंयमिशिष्यं च निर्दिशति। यथा—

> "श्रीशं श्रियं वेंकटदेशिकेन्द्रं पराङ्कुशार्यं यमिनं प्रणम्य।
> अहोबलोऽयं विवृणोमि विद्वान् संकल्पसूर्योदयमत्रिवंश्यः[6] ॥"

[1] अलं-सं. ७.
[2] सं-सू. १-२०.
[3] सं-सू. ५-३६.
[4] सं-सू. ५-३६.

[5] Vide the Introduction to the Pādukāsahasra, page 12. Kāvyamālā Series, No. 92, Bombay 1911 and L. D. Swamikannu Pillai's Indian Ephermeris, Vol I-Part II page No. 79.

[6] Vide page 1 of the text.

इति । अनेनैवाहोबलसूरिणा वाल्मीकिरामायणस्य व्याख्याद्वयं नाम्ना तनिश्लोकीति वाल्मीकिहृदयमिति च रचितम् । तत्र तनिश्लोक्यारम्भे—

"भक्तप्रतिष्ठा नीलाद्रौ कलिता येन सूरिणा ।
सर्वतन्त्रस्वतन्त्रं तं पराङ्कुशमुनिं भजे[1] ॥"

इति स्वगुरुं पराङ्कुशमुनिं नीलाद्रौ भक्तार्चाप्रतिष्ठाकारिणं निर्दिशति । वासन्तिकापरिणयाख्यनाटककर्ता श्रीशठकोपमुनिरप्येनं पराङ्कुशमुनिं स्वस्य गुरुं पुरुषोत्तमे भक्तप्रतिष्ठाकारिणं च निर्दिचति । यथा—

"पूर्वं यस्तु मुकुन्ददेवविभुना स्कन्धे धृतान्दोलिकः
प्राप्तः श्रीपुरुषोत्तमं रचितवान् भक्तप्रतिष्ठापनम् ।
लब्ध्वा दन्तितुरंगरत्नशिबिकाच्छत्रद्वयीचामर-
द्वन्द्वादीनि ययौ पुनश्च विजयी कर्णाटसिंहासनम्[2] ॥"

इति । अतः श्रीशठकोपमुनिरात्रेयरामानुजश्चेत्युभावप्येकस्यैव श्रीपराङ्कुशमुनेश्छात्राविति निश्चीयते । श्रीपराङ्कुशमुनिरयं श्रीमदहोबलमठास्थानमलंकुर्वतां यतीनां मध्ये षष्ठः । अतः षष्ठ-पराङ्कुशस्वामीति प्रसिद्धिमुपगतः । यथा—

१. आदिवण्शठकोपमुनिः (1398-1458 A. D.)
२. नारायणमुनिः (1459-1472 A. D.)
३. पराङ्कुशमुनिः (1473-1485 A. D.)
४. श्रीनिवासशठकोपमुनिः (1485-1494 A. D.)
५. वण्शठकोपमुनिः (1494-1492 A. D.)

[1] Vide R. No. 1629. of the T. C. Madras Government Oriental MSS. Library.

[2] Vide D. 12662 of the D. C. Madras Government Oriental Library.

६. षष्ठ-पराङ्कुशमुनिः (1499-1513 A. D.)

७. श्रीशठकोपमुनिः (1513-1521 A. D.)

अहोबलसूरिणा प्रभाविलासे समुद्धृतेषु ग्रन्थेषु प्रधानतमा इमे ग्रन्थाः । यथा—

१. चमत्कारचन्द्रिका—विश्वेश्वरकृता (1350 A. D.)

२. साहित्यचिन्तामणिः—वीरनारायणकृतः (1420 A. D.)

३. नाटकपरिभाषा—(रसार्णवसुधाकरान्तर्गता) शिंगभूपालकृता (1350 A. D.)

४. अलंकारसंग्रहः—अमृतानन्दकृतः (1200 A. D.)

अतः प्रभाविलासकृत् अहोबलसूरिः 1530 A. D. कालस्य संनिकर्षे बभूवेति निश्चेतुं शक्यते ।

द्वितीयव्याख्यायाः प्रभावल्या रचयिता नृसिंहराजाचार्यः । अयं प्रभावल्याः प्रारम्भे समासौ चानन्तार्यं श्रीशैलतातार्यतनयं प्रणमति । अनन्तार्यं च ब्रह्मतन्त्रयतिसंप्रदायनिष्ठमावेदयति । अतो नृसिंहराजाचार्येणानेन प्रायोऽनन्तार्यशिष्येण भाव्यमिति, तेनानन्तार्येण च श्रीपरकालमठसंबद्धेन भाव्यमिति चावगम्यते । तस्य च कालं विशिष्य निर्धारयितुमधुना न पार्यते । परं तु नातीव प्राचीनो नाप्यर्वाचीन इति वक्तुं शक्यते । प्रायः 1840 A. D. कालस्यासन्नेन तेन भाव्यमित्यूह्यते ।

इदमत्र प्राप्तकालं किंचिदावेदनीयमवशिष्यते । संकल्पसूर्योदयस्य प्रभावलीसमाख्यया प्रथिते द्वे व्याख्ये वर्तेते । ते च परस्परं भिन्ने । तत्रैकाधुनात्र प्रकाश्यमाना नृसिंहराजाचार्यकृता । अपरा चाज्ञातकर्तृनामधेया । परं तु तत्प्रारम्भे "वरदार्यमहं वन्दे वरणीयगुणाकरम्[1]" इति मङ्गलकरणात् तत्कर्ता वरदाचार्यशिष्य इति ज्ञायते । कोऽयं वरदाचार्यः, कश्च

[1] Vide the Saṁkalpasūryodaya, Pandit Series, Benares.

तच्छिष्योऽत्र भवितुमर्हतीति विमर्शे औचित्यात् कौशिकवरदाचार्यशिष्यो भारद्वाजश्रीनिवासो भवेदित्यूहने नानौचित्यमिति भाति। एवं स्थिते वस्तुतत्त्वे काञ्चीपुरस्थप्राचीनविद्यासभिकैः (Conjeevaram O. L. Institute) 1901 A. D. तमे वत्सरे संकल्पसूर्योदयव्याख्या काचित् प्रभावली-समाख्या आन्ध्रलिप्यां मुद्राप्य प्रकाशिता। सा च भारद्वाजश्रीनिवासाचार्य-कृतेति तत्र निर्दिष्टा। तस्याः स्वरूपे विमृश्यमाने आदितः पञ्चानामङ्कानां व्याख्या संप्रत्यत्र प्रकाश्यमानायाः नृसिंहराजीयप्रभावलीतो न भिद्यत इति, तथा षष्ठादिदशमान्तानामङ्कानां व्याख्या पूर्वोक्तद्वितीयप्रभावलीतो न भिद्यत इति च विज्ञायते। एवं तत्र व्याख्याद्वयसांकर्ये सत्यप्येकव्याख्या-रूपेण तत्रापि भारद्वाजश्रीनिवासाचार्यकृतत्वेन च प्रकाशनं किंनिबन्धनमिति न ज्ञायते। अडयार् पुस्तकालये नृसिंहराजाचार्यकृता प्रभावलीव्याख्या आदित आरभ्य दशानामप्यङ्कानामनुस्यूतोपलभ्यत इति सैवात्र मुद्रणे परिगृहीता प्रकाशिता चेति विभावयन्तु सुधियः।

---

श्रीः

श्रीवेदान्तदेशिकविरचितः

# संकल्पसूर्योदयः

अहोबलाचार्यकृतेन प्रभाविलासेन, नृसिंहराजकृतया
प्रभावल्या च सहितः

श्रीमान् वेंकटनाथार्यः कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे संनिधत्तां सदा हृदि ॥

## प्रस्तावना

यद्भक्तिप्रचयात्मके दिनमुखे दृष्टिक्षमः क्षेत्रिणः
क्षिप्रं संसृतिशर्वरीं क्षिपति यत्संकल्पसूर्योदयः ।
तत्त्वैरस्त्रविभूषणैरधिगतः स्वाधीननित्योन्नतिः
श्रीमानस्तु स मे समस्तविपदुत्ताराय नारायणः ॥ १ ॥

### प्रभाविलासः

श्रीशं श्रियं वेंकटदेशिकेन्द्रं पराङ्कुशार्यं यमिनं प्रणम्य ।
अहोबलोऽयं विवृणोति विद्वान् संकल्पसूर्योदयमत्रिवंश्यः ॥

इह खलु भगवान् कवितार्किककण्ठीरवः सर्वतन्त्रस्वतन्त्रः श्रीमान् वेंकटनाथनामा वेदान्ताचार्यः श्रीमच्छारीरकभाष्यस्यातिगहनगम्भीरतया तत्रायासमसहमानान् शिष्यानवलोक्य दयालुतया वेदान्तार्थजातं सुखेन प्रति-

बोधयितुं नाटकापदेशेन प्रकटयन्नाशीराद्यन्यतमस्य शिष्टाचारतयाशीर्वादरूपं मङ्गलमाचरति—**यद्भक्तीत्यादिना**। यत्पदद्वयेन नारायणः परामृश्यते। भक्तिपदेन वेदनादिपदवाच्यं दर्शनसमानाकारं प्रीतिरूपापन्नं ध्रुवानुस्मरणमुच्यते। तस्याः प्रचयो विश्लेषभीरुतालक्षणं स्थैर्यम्। "स्थिरा भक्तिः सूते विपदुपरतिं पुंसि परमे" इति वक्ष्यमाणानुसारात्। भक्तिप्रचयस्य मोक्षं प्रत्यव्यवहितसाधनत्वं वक्तुं दिनमुखत्वरूपणम्। अत एव क्षिप्रं क्षिपतीत्युक्तिः। **क्षेत्रिणः**; क्षेत्रमिति प्रकृतिपरिणामभूतं शरीरमुच्यते।

"त्रिगुणा कर्मिणां क्षेत्रं प्रकृते रूपमुच्यते।"
"इदं शरीरं कौन्तेय क्षेत्रमित्यभिधीयते॥"

इति स्मरणात्। प्रशंसायामिनिः, उपासनानुकूलत्वात् चरमदेहत्वाद्वा। **दृष्टिक्षमः**; प्रत्यक्षसहः, साक्षात्कारप्रदानसमर्थो वा। **संसृतिः**; अविद्यासंबन्धः। संसारहेतुभूतवासनानां निवृत्तिमभिप्रेत्य शर्वरीं क्षिपतीत्युक्तिः। **संकल्पः**; प्रसादरूप इच्छाविशेषः, "तमक्रतुं पश्यति वीतशोको धातुः प्रसादान्महिमानमीशम्" इति श्रुतेः। **अस्त्रविभूषणैः**; अस्त्ररूपैर्विभूषणरूपैश्च। **तत्त्वैः**; प्रकृत्यादिभिः। **अधिगतः**; आधिक्यं प्राप्तः। एवमचेतनवैलक्षण्यं संसारिचेतनवैलक्षण्यं चोक्तम्। अथ नित्यमुक्तवैलक्षण्यमाह—**स्वाधीनेति**; स्वाधीना नित्या उन्नतिर्यस्य स तथोक्तः। उभयावधिराहित्यं नित्यत्वम्। तेन मुक्तव्यावृत्तिः। स्वाधीनेति नित्यव्यावृत्तिः। यद्वा सकलतत्त्वशेषित्वं किमन्याधीनं, किं वा भङ्गुरमित्याशङ्क्य नेत्याह—स्वाधीनेति। "न तस्येशे कश्चन तस्य नाम महद्यशः" "नित्यो नित्यानां चेतनश्चेतनानाम्" इति च श्रुतेः। यद्वा अधिगता प्राप्ता स्वाधीना नित्योन्नतिर्यस्येति विग्रहः[1]। तत्त्वानामस्त्रादिरूपत्वमभियुक्तैरुक्तम्—

[1] अस्मिन् पक्षे 'अधिगतस्वाधीननित्योन्नतिः' इत्येकं समस्तं पदम्।

" चेतश्चक्रति चेतनासिरमतिस्तत्संवृतिर्मालिका
भूतानि स्वगुणैरहंकृतियुगं शङ्खेन शार्ङ्गायते ।
बाणाः खानि दशापि कौस्तुभमणिर्जीवः प्रधानं पुनः
श्रीवत्सं कमलापते तव गदामाहुर्महान्तं बुधाः ॥ "

इति । **श्रीमानिति**; भूमनित्ययोगयोर्मतुप् । तदुक्तम्—

" भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने ।
संसर्गेऽस्तिविवक्षायां भवन्ति मतुबादयः ॥ "

इति । भूमत्वं चास्या भर्तुरप्यतिशयाधायकत्वम् । तच्च " अप्रमेयं हि तत्तेजो यस्य सा जनकात्मजा " इत्यादावुक्तम् । नित्ययोगस्तु—" नित्यैवैषा जगन्माता विष्णोः श्रीरनपायिनी " " अनन्या राघवेणाहं भास्करेण प्रभा यथा " इत्यादावुक्तम् । **सः**; पूर्वं यच्छब्दद्वयनिर्दिष्टः । **नारायणः**; नारा आपः, " आपो नारा इति प्रोक्ताः " इत्युक्तेः, अयनं स्थानं यस्य सः । " यमन्तःसमुद्रे कवयो वयन्ति " इति श्रुतेः । " नराज्जातानि तत्त्वानि नाराणीति विदुर्बुधाः " इत्युक्तेर्नाराणां तत्त्वानामयनमिति वा । समासद्वयेनोभयव्याप्तिरुक्ता, " अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः " इति श्रुतेः । विपच्छब्देन गर्भजन्मजरामरणस्वर्गनरकाध्यात्मिकादयः; तदवान्तरभेदाः समस्तशब्दोक्ताः ।

एवं श्रौतमाशीरूपं मङ्गलमाचरितम् । श्लोकादौ मगणयवर्णाभ्यां च मङ्गलं सूचितम् । तदुक्तं चमत्कारचन्द्रिकायाम्—" क्षेमं सर्वगुरुर्धत्ते मगणो भूमिदैवतः " इति । " मकारः क्षेमकृद्यस्तु श्रीदो रेफस्तु दाहकृत् " इति च । अर्थाच्छास्त्रप्रतिपाद्यार्थसंग्रहः कृतः—तत्त्वैरस्त्रविभूषणैरधिगत इति सकलतत्त्वशेषित्वोक्त्या समन्वयाध्यायार्थः संगृहीतः; स्वाधीननित्योन्नतिरित्य-

विरोधलक्षणार्थः; यद्भक्तिरिति साधनलक्षणार्थः; संसृतिशर्वरीं क्षिपतीति फललक्षणार्थः; तत्त्वैरिति लीलाविभूतियोगः; श्रीमानिति नित्यविभूति-योगः सौलभ्यं च, श्रियो नित्यघटितत्वात्; नारायण इति परत्वोभय-लिङ्गत्वे। परपक्षप्रतिक्षेपश्चार्थिकः। भक्तेर्मोक्षहेतुत्वोक्त्या ज्ञानमात्रस्य मोक्षहेतुत्ववादिनो मायिनो निरस्ताः। ईश्वरस्य फलप्रदत्वोक्त्या कर्ममीमांसका निरस्ताः। प्रधानादेः पारतन्त्र्योक्त्या सांख्या निरस्ताः। स्वाधीनोन्नतिरिति उत्तीर्णब्रह्मवादिनः, नित्योन्नतिरिति क्षणिकाः, नारायण इति हैरण्यगर्भपाशुपतादयो निरस्ताः। काव्यार्थसूचकत्वं च नान्दीश्लोकस्याङ्गी-कुर्वन्ति केचित्—"काव्यार्थसूचकैर्वर्णैर्नान्दीश्लोकः प्रशस्यते" इति। विद्यानाथेनाप्युक्तम्—"अर्थतः शब्दतो वापि मनाक्काव्यार्थसूचनम्" इति। तस्यैषा दिक्—भक्तिदृष्टिशब्दाभ्यां बुद्ध्यनुप्रविष्टा विवेकव्यवसायसु-मतिप्रभृतय उक्ताः; संसृतिपदेन संसारहेतुभूता मोहादयो विवक्षिताः; क्षेत्रीति वंशद्वयकूटस्थोक्तिः; क्षिपतीति युद्धे मोहादिवधो लक्षित इति। इयमष्टादशपदा नान्दी विज्ञेया। तदुक्तमभिनवगुप्ताचार्यैः—

"नान्दी पदैर्द्वादशभिरष्टाभिर्वाप्यलंकृता।
षड्भिः षोडशभिर्वापि चतुर्भिस्त्रिभिरेव वा॥
अष्टादशपदैर्वापि द्वाविंशतिपदैस्तथा।
शङ्खचक्राब्जचन्द्रेन्द्रकोककैरवशंसिनी।
त्र्यश्रा वा चतुरश्रा वा तालमार्गानुसारिणी॥"

इति। अष्टादशपदनान्द्यास्त्रिषट्करूपत्वात् त्र्यश्रतालानुसारित्वम्। नारायण-श्रीपदाभ्यां शङ्खचक्रादिसंबन्धो ज्ञापितः। द्वितीयव्याख्याने सप्तदशपदत्वेन संख्यानियमाभावो द्रष्टव्यः। उक्तं च सरस्वतीविलासे—"पदादिनियमोऽपि न" इति। श्लोकद्वयेन पादस्यैव पदत्वमतानुसारेणाष्टपदा वा नान्दी विज्ञेया।

अत्र श्लोके दिनमुखशर्वरीसूर्योदयानामुपमानानां भक्तिप्रचयसंसृतिसंकल्परूपोपमेयतया रूपणात् रूपकालंकारः ।

"उपमेयतया यस्मिन्नुपचारप्रयोगतः ।
उपमानं निरूप्येत रूपकं तन्निरूपितम् ॥"

इति लक्षणात् । वैदर्भी रीतिः । असमासा हि सा । तल्लक्षणं तत्रैव—

"रीतिः पदानां घटना प्रोक्ता रीतिविशारदैः ।
रीङ् गतावित्यतो धातोरियं रीतिरितीर्यते ॥
असमासा समासेन मध्यमेन विभूषिता ।
अतिदीर्घसमासा च मिश्रा चेति चतुर्विधा ॥"

इति । अत्र सुकरसमासत्वमेवासमासत्वं नाम । तदुक्तं तत्रैव—"द्वयोस्त्रयाणां वा पदानां समासेऽपि सहृदयचित्तानामनुद्वेगदायित्वेनासमासत्वमेव" इति ॥ १ ॥

## प्रभावली

ब्रह्मतन्त्रयतीन्द्रोक्तरहस्यार्थविचक्षणम् ।
श्रीशैलताततनयमनन्तार्यमहं भजे ॥
भगवन्तमिवानन्तकल्याणगुणसागरम् ।
वेदान्तदेशिकं नौमि वेंकटेशगुरूत्तमम् ॥
संसाराख्यनिशीथसुप्ततनुभृत्संबोधनायाग्रणीः
सूरीणां स गुरुर्व्यधात् प्रकरणं संकल्पसूर्योदयम् ।
तत्रैतत्परिचिन्वतां स भगवत्संकल्पसूर्यो निशां
मायां भागवतीं विमोक्ष्य विमलां धत्ते दृशं शाश्वतीम् ॥
यत्र सर्वे गुणाः पूर्णा दोषो यत्र न कश्चन ।
व्याकुर्महे तं संकल्पसूर्योदयमनुत्तमम् ॥

वेदान्तदेशिकगिरां भावः केनावगम्यते ।
अथापि तद्दयाधारो व्याख्यास्यामि यथामति ॥

इह संकल्पसूर्योदये सकलशारीरकशास्त्रार्थः संगृहीतः । शारीरकशास्त्रार्थश्च पञ्चविधः । स्वसिद्धान्तप्रतिष्ठापनं प्रथमम्; ततस्तत्प्रतिपक्षनिरासः; ततस्तदुक्तोपायनिश्चयः; ततस्तद्विरोधिविलयपूर्वकमुपायपरिग्रहः; ततो मोक्षप्राप्तिरिति । इमे पञ्चार्थाः पञ्चस्वङ्केषु वक्तव्याः । अत्र द्वैगुण्येन दशाङ्काः प्रयुक्ताः । तत्र प्रथमेऽङ्के स्वसिद्धान्तस्थापनम् । द्वितीयेऽङ्के स्वसिद्धान्तविरोधिनः परसिद्धान्ताः प्रतिक्षिप्ताः । तृतीये तु स्वसिद्धान्तोक्तोपायनिश्चयः । चतुर्थादिष्वष्टमान्तेषूपायविरोधिनो निरस्ताः, उपायपरिकराश्चोक्ताः । उपायविरोधिनः कामक्रोधादयः । तत्र चतुर्थेऽङ्के कामादीनामापाततः प्राबल्यकथनपूर्वकं दौर्बल्यप्रतिपादनम् । पञ्चमेऽङ्के डम्भादीनां निरसनीयत्वख्यापनम् । उपायपरिकरस्तु द्विविधः, समाधिस्थानमालम्बनं चेति । समाधिस्थानं निरूपितं षष्ठेऽङ्के । सप्तमे त्वालम्बनरूपः शुभाश्रयो निर्णीतः । अष्टमे कामक्रोधलोभमोहादिविजय उक्तः । नवमेऽङ्के जितविरोधिनः परिगृहीतस्थानशुभाश्रयस्य समाधिरूपोपायलाभ उक्तः । दशमेऽङ्के निःश्रेयसलाभ उक्तः । अयमेव मुमुक्षूणामनुष्ठानक्रमश्च । प्रथमं स्वसिद्धान्तं ज्ञात्वा, ततस्तत्प्रतिपक्षनिरासं ज्ञात्वा, स्वसिद्धान्तोक्तोपायं स्वयोग्यं निश्चित्य, कामादीनां हेयतां ज्ञात्वा, कामादीन्निरस्य, समाधिस्थानं निरूप्य, शुभाश्रयं निध्याय, स्वशक्यमुपायं परिगृह्य, क्रमेणार्चिरादिमार्गेण परमपदाधिरोहणमिति । अत्र बीजारम्भसमन्वयरूपः प्रथमोऽङ्कः । बिन्दुयत्नसमन्वयरूपो द्वितीयः । पताकाप्राप्त्याशासमन्वयरूपस्तृतीयः । प्रकरीनियताप्तिसमन्वयरूपश्चतुर्थः । कार्यफलसमन्वयरूपः पञ्चमः । बीजारम्भसमन्वयरूपो मुखसन्धिः प्रथम उच्यते । बिन्दुयत्नसमन्वयरूपः प्रतिमुखसन्धिर्द्वितीयः । पताकाप्राप्त्याशासमन्वयरूपस्तृतीयो गर्भसन्धिः । प्रकरीनियताप्तिसमन्वयरूपश्चतुर्थोऽवमर्शसन्धिः । कार्यफलसमन्वयरूपः पञ्चम उपसंहारसन्धिः । यथोक्तम्—

"मुखं प्रतिमुखं गर्भः सावमर्शोपसंहृतिः ।
युक्तयः पञ्च कर्तव्यास्तावन्तः सन्धयः स्मृताः ॥

अङ्का दश प्रयोक्तव्याः शान्तिः स्थायी रसो मतः ।
चतुर्वर्गफलं तत्र कथा दिव्याश्रया भवेत् ॥"

इति । यद्यप्ययं प्रबन्धः पदवाक्यप्रमाणश्रुतिस्मृतिपुराणकाव्यनाटकालंकार-संस्कृतप्राकृतभाषातत्संस्कारजनितभाषान्तरादिलौकिकवैदिकव्यवहारसरणिनिपुणतरजनैरनुसरणीयः; यद्यप्यत्र सन्धितदङ्गोत्तमाधमपात्रस्वरूपतदुच्यमानभाषा-विशेषतन्नैपथ्यरचनाविशेषाङ्किकादिचतुर्विधाभिनयप्रकारतदङ्गोपाङ्गप्रत्यङ्गस्व-रूपतन्निर्वर्त्याभिनयविशेषतत्तदभिनयविशेषतत्तदभिनयसाधनभूतसंयुक्तासंयुक्तनृत्त-हस्तसभ्यसभाशालालक्षणवीणावेणुमृदङ्गादिलक्षणादयः सर्वे वक्तव्याः; अथाप्य-ध्यात्मतत्परमुमुक्षूणामत्यन्तानादरणीयत्वादनपेक्षितत्वाच्च नास्माभिस्तत्र प्रयस्यते । मुमुक्ष्वपेक्षितार्थविशेषा एव यथामति यथाश्रुतमत्र वर्ण्यन्ते ।

सुधारसविधाभृतः शशिकराकृतिव्याकृताः
पुरस्कृततिरस्कृतेक्षुरसशर्करासत्क्रियाः ।
कथं न्ववितथं विशङ्कटितवेङ्कटार्योक्तयः
स्फुटं विकटबुद्धिभिः सपदि विव्रियेरन्निह ॥
अतीतोदन्वति प्रौढं हनूमति तु जाग्रति ।
सांयात्रिकाः संचरन्ते किं न पोतैर्महार्णवे ॥
महत्सु सत्सु विद्वत्सु संकल्पमिहिरोदयम ।
व्याख्यातुमुत्सुको मोहादहं तत्क्षन्तुमर्हथ ॥

इह खलु वेदान्ताचार्यः सर्वजगत्प्रसिद्धः कवितार्किकसिंहापरगुणनामधेयः श्रीवेंकटेशगुरुसार्वभौमः संसारदवदहनदन्दह्यमानं सकलं जनं विलोक्य करुणया दोदूयमानचेतास्त्रय्यन्तसुधारसपरिवाहेनाप्लावयिष्यन् आलस्याद्युपहतमनस्कान् कोमलबुद्धीनप्यनुजिघृक्षुः सर्वोपनिषत्सारार्थजातं संकल्पसूर्योदयाख्येन नाटकेन संगृह्य विवक्षुरविघ्नपरिसमाप्त्यादिप्रयोजनस्य शिष्टाचारप्राप्तस्य मङ्गलाचारस्य कर्तव्यतया वाचनिकवृत्त्याभिमतप्रार्थनाद्योतकमाशीर्वादरूपं मङ्गलमादौ तावन्नि-बन्धाति श्लोकद्वयेन । तत्र प्रथमश्लोकेन भक्त्युपायं निरूपयति । द्वितीयेन श्लोकेन प्रपत्त्युपायमिति विवेकः । **यद्भक्तीति** । नारायणो मे समस्तविपदुत्ताराया-स्त्वित्यन्वयः । **यत्संकल्पसूर्योदयः** यस्य श्रीमतो नारायणस्य भक्तिर्निदिध्या-

सनं, तस्य प्रचयः दर्शनसमानाकाररूपपरिपाकविशेषः, तदात्मके **दिनमुखे** प्रातः काले **दृष्टिक्षमः** भक्तिमतां ज्ञानगोचरः सन् **क्षेत्रिणः** जीवस्य; जात्येकवचनम्; **संसृतिशर्वरीं** संसाररूपरात्रिं **क्षिप्रं** प्रारब्धकर्मावसान एव **क्षिपति** निरस्यति। अथात्र यच्छब्दोक्तां स्वाभीष्टदेवतामुत्तरार्धे शृङ्गग्राहिकया दर्शयति—**तत्त्वैरिति**। **अस्त्राणि** चक्रादीनि, **भूषणानि** श्रीवत्सकौस्तुभादीनि; **अस्त्रविभूषणायमानैस्तत्त्वैः** प्रकृत्यादिभिः पञ्चविंशतिसंख्यैरुपलक्षितः। इत्थंभावे तृतीया। अनेन भगवतो दिव्यमङ्गलविग्रहः सूच्यते। **अधिगता** प्राप्ता **स्वाधीना नित्या उन्नतिः** ज्ञानशक्त्यादिगुणसंपत्तिः सर्वेश्वरता वा येन सः। यद्वा अस्त्रभूषणैस्तत्त्वैरधिगता विदिता स्वाधीना नित्योन्नतिर्यस्य सः **श्रीमान्नारायणः** मम **समस्तविपदां** प्रारिप्सितग्रन्थसमाप्तिविघ्नरूपादिविपदा**मुत्ताराय** उत्तरणं कर्तुं भवतु। यद्वा समस्तविपद्भ्यो मामुत्तारयितुमस्तु। पूर्वत्र शर्वरीक्षेपणं संकल्पसूर्योदयकर्तृकम्; उत्तरत्र समस्तविपन्निवर्तनमीश्वरकर्तृकम्। अस्त्विति प्रार्थनायां लोट्। ऐहिकसर्वविपदपेक्षया समस्तशब्दप्रयोगः। अत्र नारायणशब्दं प्रयुञ्जानस्यायं भावः— समस्तविपदुत्तारप्रार्थनया मोक्षप्राप्तिरपि प्रार्थिता भवति। मोक्षप्रापकत्वं च "ब्रह्मविदाप्नोति परम्" इत्यादिश्रुतिभिः परब्रह्मज्ञानस्येत्याशङ्क्य "नारायण परं ब्रह्म" इत्यादिश्रुतेर्नारायणशब्दार्थपर्यालोचनया नारायणस्यैव परब्रह्मत्वमिति। अयमत्र नारायणशब्दार्थसंग्रहः—रीयन्ते क्षीयन्त इति व्युत्पत्त्या रशब्दः क्षयिष्णुपदार्थवाचकः; स न भवतीति नगनैकादिशब्दवन्नसमासे नरशब्दो नित्यपदार्थवाचकः। नित्याश्च पदार्थाः प्रकृतिकालजीवादयः। अतो नरशब्देन भगवत्स्वरूपव्यतिरिक्तमुभयविभूतिगतं सर्वमप्युच्यते। सर्वे पदार्थाः स्वरूपतः प्रवाहतया वा नित्याः। नार इत्यण्प्रत्ययेन तत्समूहा उच्यन्ते। नाराणां नित्यपदार्थसमूहानामयनमाधार उपायश्चेति नारायणः। यद्वा नारा अयनं वासस्थानं व्याप्यं च यस्येति नारायणः। अयनशब्दस्य तत्पुरुषसमासे पुंलिङ्गत्वं छान्दसम्। ईयतेऽनेनेति व्युत्पत्त्या अयनशब्द उपायवाचकः। ईयत इति कर्मव्युत्पत्त्या उपेयवाचकः; ईयते यत्रेत्यधिकरणव्युत्पत्त्याधारत्वं व्याप्यत्वं चोच्यते। समासद्वयेनान्तर्बहिर्व्याप्ती उक्ते। भक्त्यादीनां साक्षान्मोक्षोपायत्वमाशङ्क्य सिद्धोपायत्वं साध्योपायत्वं च नारायणस्यैवेति नारायणशब्दो दर्शयति। महाकवयश्च "स स्वेनैव फलप्रदः फलमपि स्वेनैव

नारायणः" इत्याहुः। "उपायः स्वप्राप्तेरुपनिषदधीतः स भगवान्" इत्युत्त-रत्र वेदान्ताचार्याश्च वक्ष्यन्ति। उपायत्वादिकं सर्वं श्रीसहितस्यैवेत्यभिप्रेत्य श्रीमानित्युक्तम्। अत्र श्रीशब्देन निरुपाधिकमङ्गलरूपा जगन्माता विष्णुपत्नी लक्ष्मीरुच्यते। श्रीशब्दस्य षोढा व्युत्पत्तिः प्रदर्शिता पूर्वाचार्यैः—स्वेतर-समस्तदेवैः स्वस्वकार्यार्थमाश्रीयत इति श्रीः। आश्रितार्थं स्वयं भगवन्तं नारायणमाश्रयतीति श्रीः। आश्रितानामार्तवाक्यं शृणोतीति श्रीः। तच्च वाक्यं काले नारायणं श्रावयतीति श्रीः। शृणात्याश्रितदोषमिति च श्रीः। श्रीणाति गुणैराश्रितानिति च श्रीः। शृणाति दोषं, श्रीणाति च गुणैरित्यनिष्टनिवर्तकत्वेष्ट-प्रापकत्वे उच्येते। अत एवास्या उपायत्वं सिद्धम्।

"लक्ष्म्या सह हृषीकेशो देव्या कारुण्यरूपया।
रक्षकः सर्वसिद्धान्ते वेदान्तेषु च गीयते॥"

इत्यादीन्यत्र प्रमाणवचनानि द्रष्टव्यानि। "अस्येशाना जगतो विष्णुपत्नी" इति जग-दीशानायाः श्रियः पतित्वेन नारायणस्य परत्वं सुगमम्। लक्ष्मीसहितस्यैव रक्षकत्व-स्मृतेरुपायत्वान्तर्भावश्च तस्याः सुगमः। अथ सर्वातिशायिदिव्यमङ्गलविग्रहवत्त्वा-दपि नारायण एव परं ब्रह्मेत्याह—**तत्त्वैरित्यादि**। तत्त्वानामस्त्रभूषणत्वं श्रीविष्णु-पुराणेऽस्त्रभूषणाध्याये द्रष्टव्यम्। नित्योन्नतिः सर्वस्मात्परत्वम्। संसृतेर्दुरुच्छेदा-नाद्यनन्तकर्माख्याविद्यासंचितत्वात्कथं प्रार्थितमोक्षप्रदत्वं भगवत इत्यत आह—**यत्संकल्पेति**। "तद्यथेषीकतूलमग्नौ प्रोतं प्रदूयेतैवं हास्य सर्वे पाप्मानः प्रदूयन्ते" "एवंविदि पापं कर्म न श्लिष्यते" "तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ" इति श्रुतिस्मृत्यादिभिः सर्वपाप्मनां ब्रह्मज्ञानेनाश्लेषविनाशदर्शनान्नोक्तदोषप्रसङ्गः। संकल्पस्य सूर्योदयत्वरूपणेन तमःस्थानीयानां कर्मणां क्षिप्रविनाश्यत्वमुपपद्यते। तच्च सर्वपापनिवर्तकं ब्रह्मज्ञानं कीदृशमित्यपेक्षायां भक्तिप्रपत्ती वदन् प्रथमं भक्तिं दर्शयति—**यद्भक्तीत्यादि**। "स्नेहपूर्वमनुध्यानं भक्तिरित्यभिधीयते" इत्युक्त-त्वात् भक्तिशब्देन प्रेमरूपनिदिध्यासनं विवक्षितम्। **दृष्टिक्षमः**; दर्शनयोग्यः, भगवत्साक्षात्कारसमर्थनक्षम इति वार्थः। क्षेत्रिण इत्यस्य काकाक्षिवदुभयत्र संबन्धः। तथाचाव्याहतसंकल्पो भगवान् भक्तिप्रीतः सन् जीवमोक्षं संकल्पयतीति भावः। अनेनैतत्प्रबन्धप्रतिपाद्यो जीवमोक्षः संक्षिप्तो भवति॥ १॥

2

[1]अपिच,

**लक्ष्ये यत्र श्रुतिमितगुणाकृष्टिलब्धावधानैः**
**प्रत्यग्बाणः प्रणवधनुषा सत्त्ववद्भिः प्रयुक्तः ।**
**मध्येवक्षः स्फुरति महसा पत्रलः कौस्तुभात्मा**
**पद्माकान्तः स भवतु दयादुग्धसिन्धुः श्रियै वः[2] ॥ २ ॥**

### प्रभाविलासः

एवं सप्रपञ्चं भजनं निरूपितम्। अथ प्रपदनं निरूपयति—**लक्ष्य इति**। प्रसिद्धपरामर्शिना यत्पदेन "यतो वा इमानि भूतानि जायन्ते" "यः सर्वज्ञः सर्ववित्" इत्यादिवेदान्तप्रसिद्धं ब्रह्माभिधीयते। **यत्र लक्ष्ये**; शरव्ये "लक्षं लक्ष्यं शरव्यं च" इत्यमरः। श्रुतिषु वेदान्तेषु मिताः प्रमिता गुणाः सर्वज्ञत्वादयो यस्य स ईश्वरः, तस्याकृष्टिराकर्षणं वशीकरणमिति यावत्, तस्यां लब्धमवधानं कौशलं येषां तैः। अन्यत्र श्रुतिमितं श्रवणपर्यन्तम्; "वेदे श्रवसि च श्रुतिः"

### प्रभावली

अथ "नाना शब्दादिभेदात्" इति सूत्रेण सूत्रकारसूचितायाः "ओमित्यात्मानं युञ्जीत" इति प्रतिपादितायाः प्रपत्तेर्भगवत्प्रसादोपायत्वं दर्शयति—लक्ष्य इति। यत्र लक्ष्ये श्रीमति नारायणे श्रुतिमितगुणाकृष्टिलब्धावधानैः सत्त्ववद्भिः प्रणवधनुषा प्रयुक्तः कौस्तुभात्मा प्रत्यग्बाणः मध्येवक्षः स्फुरति दयादुग्धसिन्धुः स नारायणः वः श्रियं अस्त्विति संबन्धः। यत्र लक्ष्ये; शरव्ये नारायणे; लक्ष्य इत्यनेन भगवत आत्मसमर्पणविषयत्वं सूच्यते। "ब्रह्म तल्लक्ष्यमुच्यते" इति ह्युक्तम्। शरव्यतारोपणेन तदेकमनस्कत्वसूचनया देवतान्तरभजननिरासरूपानन्यगतित्वं फलितम्। **श्रुतिमितगुणाकृष्टिलब्धाव-**

[1] अपिच omitted—क. ख.　　[2] नः—क. ग. छ.

## प्रभाविलासः

इत्यमरः । गुणस्य मौर्व्या आकृष्टावाकर्षणे लब्धावधानैः । **प्रत्यग्बाणः;** प्रत्यगात्मैव बाणः, समर्प्यमाणपदार्थ इति यावत् । अन्यत्र पूजितो बाणः । "अञ्चु गतिपूजनयोः" इति धातुः । **प्रणवधनुषा;** प्रणव एव धनुः समर्पणसाधनं तेन । साधनत्वं चास्यानुष्ठेयार्थप्रकाशकत्वात् "ब्रह्मणे त्वा महस ओमित्यात्मानं युञ्जीत" इति प्रथनलवनादिवन्मन्त्ररूपत्वात् । अन्यत्राभिनवधनुषा दृढेनेति यावत् । **सत्त्ववद्भिः;** सात्त्विकैः बलवद्भिश्च । **महसा;** धर्मभूतज्ञानेन । **पत्रलः;** व्यापनशीलः । अन्यत्र महसा तेजसा युक्तः । पत्रलः पत्रवान् । **कौस्तुभात्मा;** कौस्तुभस्वरूपः । अन्यत्र वज्रमयः । **पद्माकान्त** इति मन्त्ररत्नोक्तश्रीमच्छब्दार्थो विवृतः । अनेन रक्षकत्वसामर्थ्यं प्रतीतम् । अथ श्रीसंबन्धोत्तेजितं सानुक्रोशत्वमाह—**दयेति** । तेन शरण्यत्वोपयुक्तगुणा उक्ताः, "सानुक्रोशे समर्थे प्रपदनमृषिभिः स्मर्यतेऽभीष्टसिद्ध्यै" इत्युक्तत्वात् । **दुग्धसिन्धुरिति** निरतिशयभोग्यत्वं व्यज्यते । **श्रियै;** "सा हि श्रीरमृता सताम्" इत्युक्तत्रय्यन्तसारभूतपुरुषार्थाय । अत्र

> "प्रणवो धनुः शरो ह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते ।
> अप्रमत्तेन वेद्धव्यं शरवत्तन्मयो भवेत् ॥"

## प्रभावली

**धानैः;** श्रुतिषु मितानां प्रतिपन्नानां गुणानां ज्ञानशक्तिकरुणादीनामाकृष्टिराकर्षणमुपसंहारः, तत्र लब्धावधानैः प्राप्तैकाग्र्यैः । अन्यत्र श्रोत्रपर्यन्तज्याकर्षणे लब्धाभ्यासैः । **सत्त्ववद्भिः;** सत्त्वगुणवद्भिः, सात्त्विकैरिति यावत् । अन्यत्र बलवद्भिः । **प्रणवधनुषा;** प्रणवस्य धनुष्ट्वरूपणं मार्गणसमर्पणसाधनत्वात्; "ओमित्यात्मानं युञ्जीत" इति हि श्रुतिः । युञ्जीत समर्पयेदित्यर्थः । **प्रयुक्तः;** प्रकर्षेण समर्पितः । युञ्जीतेति श्रुतिसूचनायात्र युजिधातुप्रयोगः । प्रशब्देनात्र

## प्रभाविलासः

इति श्रुत्यर्थोऽभिप्रेतः। तन्मय इति तदपृथक्सिद्धत्वम्, तत्साम्यापत्तिरिति यावत्। न पुनरैक्यम्। अत एव 'मध्येवक्षः स्फुरति' इत्युक्तम्। न च "ब्रह्म वेद ब्रह्मैव भवति" इति वाक्यान्तरावगतैक्यस्वारस्यादैक्यमेव वक्तव्यमिति वाच्यम्, तत्रापि "विष्णुरेव भूत्वेमान् लोकानभिजयति" इत्यादिवत् साम्यमात्रपरत्वात्, "निरञ्जनः परमं साम्यमुपैति" इति श्रुत्यन्तरानुगुण्यात्, "सोऽश्नुते सर्वान् कामान् सह। ब्रह्मणा विपश्चिता" इति मुक्तौ भेदश्रवणाच्च। एवं "प्रसक्त्यै तस्योक्ते प्रपदननिदिध्यासनगती" इति वक्ष्यमाणानुसारेण भक्तिप्रपत्त्योरपवर्गसाधनत्वमुपपादितम्। न च "नान्यः पन्था अयनाय विद्यते" इति श्रुतेः प्रपत्तेर्न पृथगुपायतेति वाच्यम्, तस्या अपि ज्ञानविशेषत्वेन पार्थक्याभावात्; दहरादिविद्याभेदवत् विद्याभेदेनाविरोधाच्चेति। इयं चाष्टादशपदा नान्दी। पद्मापदेन चन्द्रसंबन्धो व्यञ्जितः। तदुक्तम्—

"नान्दीश्लोको विधातव्यश्चन्द्रनामाङ्क एव सः।
अतो हि चन्द्रसंबन्धो लक्ष्यते व्यज्यतेऽथवा॥"

इति। श्लेषानुप्राणितो रूपकालंकारभेदः। पाञ्चाली रीतिः॥ २॥

## प्रभावली

महाविश्वासो गम्यते। **प्रत्यग्बाणः**; प्रत्यगात्मा बाण इव, जीवात्मरूपो बाणः। प्रत्यक्त्वं स्वस्मै स्वयं भासमानत्वम्। प्रत्यगात्मनो बाणत्वेन रूपणं भगवति समर्प्यमाणत्वात्। **मध्येवक्षः**; वक्षसो मध्ये; लक्ष्यभूतब्रह्मणो वक्षसीत्यर्थः। **महसा**; कौस्तुभकान्त्या। **पत्रलः**; कङ्कपत्रवान्। **कौस्तुभात्मा**; कौस्तुभ आत्मा स्वरूपं यस्य, कौस्तुभस्य जीवात्माधिदेवतात्वात्। अन्यत्र कौस्तुभस्यात्मे-

(नान्द्यन्ते)

**सूत्रधारः**—आदिष्टोऽस्मि [1]निखिलसुरासुरकोटीरकोटिमणिकिरण[2]निकरनीराजितपादपीठस्य[3] शरणागतपरित्राणसप्ततन्तुदीक्षितस्य सरसी-

**प्रभाविलासः**

**नान्द्यन्त इति**। उक्तलक्षणा नान्दी पूर्वरङ्गस्याङ्गम्। पूर्वरङ्गलक्षण सरस्वतीविलास उक्तम्—

"यन्नाट्यवस्तुनः पूर्वं रङ्गविघ्नोपशान्तये।
कुशीलवाः प्रकुर्वन्ति पूर्वरङ्गः स कीर्तितः॥"

इति। तस्याङ्गानि द्वाविंशतिः प्रत्याहारावर्जनादीनि। तेषां मध्येऽन्येषामनुपयोगात् पद्यरूपाया नान्द्या एवोपयोगः। तदुक्तं वसन्तराजीये—

"यद्यप्यङ्गानि भूयांसि पूर्वरङ्गस्य नाटके।
तेषामवश्यकर्तव्या नान्दी नन्दीश्वरप्रिया॥"

**प्रभावली**

वात्मा यस्य। तेन लोहितत्वमुक्तं भवति। **स्फुरति**; सदोज्ज्वलो वर्तते। दयैव दुग्धं पयः; तस्य सिन्धुत्वरूपणेनापारत्वं गम्यते। **स पद्माकान्तः**; अनेन प्रपत्तिविषयो भगवान् श्रियः पतिरेवेति सूचितम्। **वः श्रियै**; एतत्प्रबन्धस्य पठने श्रवणे च प्रवृत्तानां वः ऐहिकामुष्मिकरूपसर्वसंपत्समृद्ध्यै भवत्वित्याशीर्वादः॥२॥

एवं मङ्गलमारचय्याथ पूर्वरङ्गापरपर्यायमामुखं नामाङ्गं साङ्गमारभ्यते—**नान्द्यन्त** इति। नान्दी रङ्गस्थलपूजा; तदवसाने सूत्रधारः नाट्याचार्यः प्रविश्याहेति शेषः। किमाहेत्यत्राह—**आदिष्टोऽस्मीत्यादि**। 'तेनास्वादं सतामुपचिनु' इत्यादिष्टोऽस्मीत्यन्वयः! आदिश्यमानोऽस्मीत्यर्थः। "धातुसंबन्धे प्रत्ययाः" इति वर्तमानधात्वर्थसंबन्धादयथाकालविहितोऽपि निष्ठाप्रत्ययो वर्त-

[1] सकल—क. [2] किरण omitted—ग. [3] पादपद्मस्य—च.

रुहवासिनीसहचरितधर्मणः संसरणदवदहनतापनिर्वापण[1]महावलाहकस्य सर्वेश्वरस्य भगवतः श्रीरङ्गवृषगिरिसत्यव्रतयदुगिरिपुरुषोत्तमपाण्डुरङ्गप्रभृतिषु दिव्याभिव्यक्तिदेशेषु यथाभिमतयात्रोत्सवसेवाहेवाकविहितगतागतचटुल[2]चरणनलिनधूलीपटलपवित्रितक्ष्मातलैः, यदृच्छया मरुद्वृधान्तरीपमध्य[3]मध्यासीनैः, शेषशेषाशनगरुडनिर्विशेषैः,

प्रभाविलासः

इति । नान्द्यन्त इति ; नान्दीं प्रयुज्य पूर्वसूत्रधारे विनिर्गते द्वितीयसूत्रधारो नटाख्यः प्रविशतीति शेषः । तदुक्तं दशरूपके—

"तत्पूर्वकं विधायादौ सूत्रधारे विनिर्गते ।
प्रविशेत्तद्वदपरः कार्यमास्थापयन्नटः ॥"

इति । "प्रथमं पूर्वरङ्गः स्यात्ततः प्रस्तावनेति च" इति क्रमप्राप्तां प्रस्तावनां विवक्षुस्तदङ्गभूतां प्ररोचनामाह—**आदिष्ट इत्यादिना** । प्ररोचनालक्षणं तु

प्रभावली

मानार्थ एव साधुर्भवति । प्रथमं भगवतः सर्वनियन्तृत्वमाह—**निखिलेति** । कोटीरं किरीटम्, तस्य कोट्योऽग्राणि, तत्रस्था मणयः नीलरत्नादयः । नीराजितम् ; मङ्गलारात्रिकविषयीकृतम् । संश्रितरक्षणैकस्वभावतामाह—**शरणागतेति** । परित्राणमेव सप्ततन्तुर्मखः, तत्र दीक्षितस्य दीक्षां प्रविष्टस्य ; दीक्षाशब्देन संश्रितासंरक्षणसंरक्षणयोर्हानिवृद्धी भगवत एवेति सूच्यते । दीक्षावैकल्यसाकल्यफलभाक्त्वं यजमानस्यैव । शरणागतपरित्राणं च लक्ष्मीविशिष्टस्यैवेत्याह—**सरसीरुहेति** । सरसीरुहवासिन्या सह चरितो धर्मः संश्रितरक्षणाख्यो येन सः । "धर्मादनिच् केवलात्" इत्यनिच् । सह सार्धं चरितधर्मेति "सुप्सुपा" इति समासः । श्रियः पत्युरेव मोक्षप्रदत्वमाह—**संसरणेति** । **निर्वापणम्** ; उपशमनम्,

[1] महा omitted—ग. [2] चटुल omitted—ग. [3] मध्य omitted—क.

अशेषजनसंभावनीयैः, असंभवदवद्यगन्धैः, अभिजनविद्या[1]समुचित-सदाचारशीलशालिभिः, अनादिमायामहावर्तबम्भ्रम्यमाणबाह्य[2]क-थकरम्भावनमथनगन्धसिन्धुरैः, अधिजिगमिषितमुक्तिघण्टापथैः,

## प्रभाविलासः

" निवेदनं प्रयोज्यस्य निर्देशो देशकालयोः ।
काव्यार्थसूचकैर्वर्णैः सभायाश्चानुरञ्जनम् ।
कविकाव्यनटादीनां प्रशंसा च प्ररोचना ॥ "

इति । तत्रादिष्ट इति प्रयोज्यनिवेदनं सूचितम् । एवंनाटकं त्वयाभि-नेतव्यमित्यादेशख्यापनं प्रयोज्यनिवेदनम् । **कोटीराणि** ; किरीटानि, तेषां **कोटिः** अग्रम्, शतलक्षसंख्या वा । **सप्ततन्तुः** ; यज्ञः । **सरसीरुह-वासिनी ;** लक्ष्मीः ; तया सह चरितो धर्मो येन तस्य । **निर्वापणम् ;** निवर्तनम्, प्रशमनमिति यावत् । **वलाहकः ;** मेघः । **हेवाकः ;** अभि-

## प्रभावली

मोक्षप्रदानमित्यर्थः । उभयविभूतिमत्त्वमाह— **सर्वेश्वरस्येति** । निखिलहेयप्रत्य-नीककल्याणैकतानत्वमाह—**भगवत** इति । भग इत्यंशेन कल्याणास्पदत्वं वदित्यंशेन निखिलहेयप्रत्यनीकत्वं चोच्यत इति विवेकः । स्वयंव्यक्तस्थाना-न्युद्दिशति—**श्रीरङ्गेत्यादि** । सर्वदिव्यक्षेत्राणामादिमतया निरतिशयवैभवतया च श्रीरङ्गक्षेत्रस्य प्रथममुद्देशः । अनन्तरं वृषगिरीति श्रीयादवाद्रिवेङ्कटाद्रयो-स्तन्त्रेणोद्देशः । तदनु सत्यव्रतक्षेत्रस्य हस्तिगिर्यपराभिधानस्य। तदनु यदुगिरे-र्दक्षिणबदरिकाश्रमापरनामधेयस्य। पुरुषोत्तमं नाम जगन्नाथस्थानम् । पाण्डुरङ्गं विजयपुरपश्चिमभागे भीमरथीतीरे विट्ठलेश्वरस्थानं यत्र कृष्णो निवसति। प्रभृतिशब्देन कुम्भकोणादयः संगृहीताः । दिव्याश्च ते अभिव्यक्तिदेशाः अर्चावतारस्थानानि तेषु । यथेष्टं भगवद्यात्रा एवोत्सवाः ; यात्राश्चोत्सवाश्चेति वा ;

[1] विद्या omitted—ङ. [2] कुदृष्टि added before—क, घ.

अखण्डदिङ्मण्डलशिखण्डकैः, औपनिषदरहस्योपदेशदेशिकैः[1], अवगतसकलकलाकलापैः, [2]अत्रभवद्भिरार्यमिश्रैः । यदुत—

प्रभाविलासः

लाषः । **मरुद्वृधा;** कावेरी । **अन्तरीपः;** द्वीपः । "द्वीपोऽस्त्रिया-मन्तरीपम्" इत्यमरः । **शेषाशनः;** विष्वक्सेनः । **असंभवदवद्यगन्धैः;** असंभावितदोषलेशैः । **अभिजनः;** वंशः । **शीलम्;** सत्स्वभावः । "शीलं स्वभावे सद्वृत्ते" इत्यमरः । **अनादिमाया;** कर्मरूपाविद्या । **रम्भा-**

प्रभावली

तत्र हेवाकोऽभिलाषः, तेन विहितं गतागतम्, तेन चटुलं चञ्चलं यच्चरणनलिनम्, तस्य धूलीपटलैः समूहैः, पवित्रितं संजातपवित्रम्; यद्वा पवित्रं क्रियत इति पवित्रितम्; "तत्करोति" इति ण्यन्तान्निष्ठा । **यदृ-च्छया;** दैववशतः । **मरुद्वृधा;** कावेरी; तस्या अन्तरीपं मध्यदेशः; श्रीरङ्ग-क्षेत्रमित्यर्थः । अनेनार्यमिश्राणामनवरतभगवत्सेवापरत्वं व्यज्यते । अथात्रैवैषां मुक्तवत्संसारवैमुख्यमाह—**शेषे**ति । शेषोऽनन्तः । भगवच्छेषमेवाशनं यस्य स शेषाशनः विष्वक्सेनः सेनाधिनाथः । सदा भगवदङ्गसुखानुभवरूपातिशयात् शेषस्य प्रथममुद्देशः । समस्तभरनिर्वहणात् गरुडात्पूर्वं विष्वक्सेनस्योद्देशः । इत-रवैमुख्यपूर्वं भगवदनुभवपरत्वे निर्विशेषैः । **अशेषजनाः;** कर्मज्ञानादिनिष्ठाः । यद्वा देवर्षिप्रमुखाः । हेयगुणराहित्यमाह—**असंभवदि**ति । भगवन्मुक्तवदविद्य-मानदोषगन्धैः; गन्धशब्दो वासनापरः । वैदिकधर्मनिष्ठामाह—**अभिजने**ति । अभिजनः कुलं, विद्या वेदान्ताधिगमः; तयोः समुचितो यः सदाचारः, तथा शीलं स्वभावः तच्छालिनः । दुर्वादिनिरसनमाह—**अनादी**ति । अना-दिर्या माया सैव महाजलभ्रमः । **बाह्यकथकाः;** बाह्यकुदृष्टयः । **गन्ध-सिन्धुराः;** मत्तगजाः । मोक्षे त्वरामाह—**अधी**ति । अधिजिगमिषितः प्राप्तु-

[1] "एतद्वै महोपनिषदं देवानां गुह्यम्" इत्युक्तप्रपदनतत्त्वोपदेशदेशिकैरिति सांप्र-दायिकोऽस्यार्थः ।

[2] अनवरतपरिचितगान्धर्वविद्याप्रसादितपरमपूरुषैः added before—क, ख.

**ललितमनसां प्रीत्यै बिभ्रद्रसान्तरभूमिका-**
**मनवमगुणो यस्मिन्नाट्ये रसो नवमः स्थितः ।**
**जननपदवीजङ्घालार्तिच्छिदा[1]नुगुणीभव-**
**न्नटपरिषदा तेनास्वादं सतामुपचिन्विति ॥ ३ ॥**

## प्रभाविलासः

**वनम्**; कदलीवनम् । **सिन्धुरः**; गजः । **अधिजिगमिषितः**; प्राप्तुमिष्टः । **शिखण्डकः**; शिरोभूषणम् । **अत्रभवद्भिः**; पूज्यैः । **ललितेति** । **ललितमनसाम्**; त्रिवर्गनिष्ठानाम् । **रसान्तराणि**; शृङ्गारादीनि । **भूमिका**; वेषपरिग्रहः । अनवमा अहीना गुणा यस्य सः । **नवमो रसः**; शान्तरसः । अनवमोऽपि नवम इति विरोधाभासोऽलंकारः । "आभासत्वे विरोधस्य विरोधाभास इष्यते" इति लक्षणात् । स च व्यञ्जकाप्रयोगात गम्यः । **जननपदव्यां** संसारमार्गे जङ्घालानामत्यन्तं संचरतामार्तेः पीडायाः छिदायाः छेदनस्यानुगुणीभवन्ती नटपरिषत्

## प्रभावली

मिष्टः मुक्तेर्घण्टापथः अर्चिरादिमार्गः यैः । भूमण्डलभूषणत्वमाह—**अखण्डेति** । अखण्डं दिङ्मण्डलं भूवलयं तस्य शिखण्डकैः काकपक्षस्थानीयैः; काकपक्षाभावे मुण्डितं शिरो यथा न शोभते तद्वदेषामभावे भूमण्डलमपीति भावः । वेदान्तसंप्रदायप्रवर्तकत्वमाह—**औपनिषदेति** । उपनिषत्संबन्धि औपनिषदम्, रहस्यं तात्पर्यार्थः, तदुपदेशेन देशिकत्वं प्राप्तैः । वेदान्तव्यतिरिक्तसकलशास्त्रहृदयवेदित्वमाह—**अवगतेति** । सकलशब्देन शब्दतर्कमीमांसाकाव्यनाटकालंकारादि गृह्यते । **कलापः**; समूहः । **अत्रभवद्भिरित्येकं** पदं पूज्यवाचि । किमादिष्टमित्यत्राह—**यदुतेति** । **सतामुपचिन्विति** यत् तदादिष्टमित्यन्वयः । यच्छब्दोक्तं दर्शयति—**ललितेति** । यस्मिन्नाट्ये ललितमनसां कोमल-

[1] छिदा नुगुणी—ख, ग, ङ.

[1]प्रतिगृहीता च मया भरतमतोपाध्यायस्य [2]सन्मार्गवर्धनस्यान्तेवासिनः संतोषपालकनामधेयस्य शैलूषचक्रवर्तिनः पुत्रेण प्रति-

**प्रभाविलासः**

विवेकादिपात्रसमूहो यस्मिंस्तत् तथोक्तम्। मोहादीनां हेयतया ज्ञातव्यत्वेनानुगुण्यम्। नृगुणीभवदिति पाठे नटपरिषदो नृगुणभवनासंभवेन च्विप्रत्ययोपपत्तिः। **आस्वादम्**; रुचिम्। **उपचिनु**; कुरु। इत्यादिष्टोऽस्मीति पूर्वेण संबन्धः। अत्र निखिलसुरासुरेत्यादिना संस्कृतबाहुल्येन भारती वृत्तिरपि निरूपिता। तदुक्तम्---

"भारतीं वृत्तिमाश्रित्य कुर्यात् प्रस्तावनाविधिम्।
भारती संस्कृतप्रायो वाग्व्यापारो नटाश्रयः॥" इति॥ ३॥

**प्रतिगृहीतेत्यादि**। **सन्मार्गवर्धनस्येति** गुरोः संज्ञा। तस्यान्तेवासिनः शिष्यस्य। शैलूषकुशीलवशब्दौ नटवाचकौ। कण्ठीरवपदेन

**प्रभावली**

चेतसां, त्रिवर्गनिष्ठानामित्यर्थः। **प्रीत्यै**; प्रीत्यर्थम्। **रसान्तरस्य**; शृङ्गारादेः। **भूमिकां** वेषपरिग्रह विभ्रत्। **अनवमगुणः**; अनवमश्चासौ गुणश्च, उत्कृष्टगुणः। **नवमो रसः**; शान्तिरसः। **स्थितः**; स्थायी भवति। नवमस्यानवमत्वं न संभवतीति विरोधद्योतकोऽपिशब्दः। **जननपदवी**; संसारमार्गः। तत्र जङ्घालानां जङ्घाबलवताम्; सततसंचरणेऽपि श्रमरहितानामिति यावत्। अनवरतं संचरतामिति भावः। आर्तिं छिनत्तीति आर्तिच्छित्, तेन। क्विपि तृतीया। **नृगुणाः**; विवेकमोहादयः। नटपरिषद्भवन्तः पात्रीभवन्तो नृगुणा यत्र तेनेत्यर्थः। यद्वा छिदानुगुणीभवदिति पाठः। आर्तिच्छिदायां छेदने अनुगुणीभवन्ती अनुरूपीभवन्ती नटपरिषत् विवेकादिपात्रपरिषत् यस्मिन्निति। **तेन**; नाटकेन। **सताम्**; सात्त्विकानाम्। **आस्वादम्**; प्रीतिम्। **उपचिनु**; संपादयेति॥ ३॥

आर्यमिश्रैरादिष्टेन त्वया किं कृतमित्यत्राह---**परिगृहीता च मयेति**। परिग्रहणे हेतूनुपन्यस्यति---**भरतेत्यादिना**। भरतशास्त्रोपाध्यायस्य गुरोः

[1] परिगृहीता---ग. [2] सन्मार्गसंवर्धनस्य---क.

भटकुशीलवकुञ्जरकण्ठीरवेण वैकुण्ठविनोदिना सप्रतिज्ञं विदुषामाज्ञा। दिव्यप्रयोगदिदृक्षादत्तक्षणा विचक्षणाश्च समुदिताः [1]सामाजिकाः। तथा हि—

**अवधारितनाट्यदेशिमार्गैरसमीचीनपराङ्मुखैरमीभिः।**
**भरतागम[2]दैवतैरिवैषा परिषत् संप्रतिभासते महद्भिः॥ ४॥**

**प्रभाविलासः**

कवितार्किककण्ठीरवो व्यञ्जितः। तेन कविप्रशंसारूपं प्ररोचनाङ्गमुक्तम्। वैकुण्ठो विष्णुः। **वैकुण्ठविनोदिनेति** संज्ञा। **दिव्यप्रयोगेति** काव्यप्रशंसारूपं प्ररोचनाङ्गमुक्तम्। **दत्तक्षणाः**; दत्तावसराः। अनेन कालरूपं प्ररोचनाङ्गमुक्तम। **समुदिताः**; संघीभूताः। **अवधारितेति**। नाट्यदेशिमार्गलक्षणान्युक्तानि संगीतशास्त्रे—

**प्रभावली**

सन्मार्गवर्धनाख्यस्यान्तेवासी शिष्यः संतोषपालकनामधेयो मम पिता; सोऽपि शैलूषानां नटानां चक्रवर्ती भवति। तस्य पुत्रेण मया। भरतमतोपाध्यायप्रशिष्यस्य शैलूषचक्रवर्तिपुत्रस्य मम परिषदादेशपरिग्रह उचित इति भावः। हेत्वन्तरं चाह--**प्रतिभटेति**। प्रतिभटशैलूषकुञ्जरसिंह इति बिरुदवत इति भावः। स्वनामधेयमाह—**वैकुण्ठविनोदिनेति**। वैकुण्ठं श्रियः पतिं वैकुण्ठभक्तांश्च विनोदयति नाट्येनेति वैकुण्ठविनोदी। अपरिग्रहे वैकुण्ठविनोदित्वं भज्येतेति भावः। **सप्रतिज्ञं च परिगृहीता**; यदि तादृशेन नाटकेन सतां प्रीतिं नोपचिन्वीय, तदा पूर्वागतं बिरुदं त्यक्ष्यामीति प्रतिज्ञापूर्वकं गृहीता सतामाज्ञा कथमतिलङ्घ्येतेति भावः। परिगृहीता चेत्ततः परित्यज्यतामित्यत्राह—**दिव्येति**। **दिव्यप्रयोगः**; अपूर्वनाटकम्। तद्दिदृक्षायां दत्तावसराः सावधाना इत्यर्थः। **सामाजिकाः**; सभ्याः। **समुदिताः**; संघीभूतास्तिष्ठन्ति। तत् कथं परित्यक्तुं शक्यत इति भावः। सामाजिकानां समुदितत्वं प्रतिपादयति—**तथाहीति**। **अवधारितेति**। नाट्यं च

[1] सर्वे added before—ग. [2] देशिकैरिव—क.

**प्रभाविलासः**

" नाट्यशब्दो रसे मुख्यो रसाभिव्यक्तिकारणम् ।
चतुर्धाभिनयोपेतं लक्षणावृत्तिबोधकैः ।
नर्तनं नाट्यमित्युक्तम् ।" इति,

" गात्रविक्षेपमात्रं तु सर्वाभिनयवर्जितम् ।
आङ्गिकोक्तप्रकारेण नृत्तं देशीति कथ्यते ॥
आङ्गिकाभिनयैरेव भावानेव व्यनक्ति यत् ।
नृत्तं तन्मार्गशब्देन प्रसिद्धं मार्गवेदिनाम् ॥"

इति च । चतुर्धाभिनयलक्षणं तत्रैवोक्तम्—

" आङ्गिको वाचिकस्तद्वदाहार्यः सात्त्विकोऽपरः ।
चतुर्धाभिनयस्तस्मिन्नाङ्गिकोऽङ्गैः प्रदर्शितः ।
वाचा विरचितः काव्यनाटकादिषु वाचिकः ।
आहार्यो हारकेयूरकिरीटादिविभूषणम् ।
सात्त्विकः सात्त्विकैर्भावैर्भावुकेन विभावितः ॥"

इति । **असमीचीने**; असद्वादे, पराङ्मुखैः । तेन सभासदां लक्षणं **सूचितम्** । उक्तं च संगीतरत्नाकरे—

" मध्यस्थाः सावधानाश्च वाग्मिनो न्यायवेदिनः ।
अगर्वा रसभावज्ञास्तौर्यत्रितयकोविदाः ।

**प्रभावली**

**देशिश्च मार्गश्च** । आङ्गिकादिचतुर्विधाभिनयेन धीरोदात्ताद्यवस्थानुकरणं नाट्यम् । ताललयैकस्वभावं केवलाङ्गविक्षेपमात्रं नृत्तम् । देशिरभिनयात्मिका । भावाश्रयं नृत्तं मार्गः । अवधारिताः निश्चिताः नाट्यदेशिमार्गाख्यनृत्तविशेषाः यैस्ते । **असमीचीनेषु**; लक्षणरहितेषु नृत्तेषु पराङ्मुखैः । अत एव भरतशास्त्र-

तदहमशेषविद्यास्थानसंपदुपलम्भनीम्, अभूतपूर्वबहुविध-भूमिकापरिग्रहेऽप्यतिरस्कृतपारम्याम्, [1]अनवबोधजलधिकुक्षिभरीम्, [2]अनन्यभक्त्युन्मीलनीम्, आदिमां देवतामभिगच्छामि[3]।

## प्रभाविलासः

असद्वादनिषेद्धारश्चतुरा मत्सरच्छिदः।
आनन्दरसनिष्यन्दहृदयाः स्युः सभासदः॥"

इति। अत्रासमीचीनपराङ्मुखैरिति मोहादिविरोधिविवेकादिपात्रसूचनायुक्तं सभानुरञ्जनं नाम प्ररोचनाङ्गं कथितम्। एषेति पुरोवर्तिपरामर्शात् देशलक्षणं प्ररोचनाङ्गमुक्तम्॥ ४॥

**तदहमिति। विद्यास्थानानि;** अष्टादश विद्याः। **उपलम्भनीम्;** संपादिकाम्। **पारम्यम्;** परत्वम्। **कुक्षिंभरीम्;** भक्षिकां, निवर्तिकामिति

## प्रभावली

दैवतैरिव स्थितैः अमीभिः महद्भिः परिषत् गोष्ठी संप्रतिभासते। तत उदासितुमशक्यमिति भावः॥ ४॥

तर्हि किं कर्तव्यमित्यत्राह—तदहमिति। **तत्**; तस्मात्। आदिमां देवतां हयग्रीवमूर्तिं भगवन्तमभिगच्छामि, उपास इत्यर्थः। कीदृशीम्—**अशेषेति।** अशेषाणां विद्यास्थानसंपदाम्; " अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः। पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश॥" आयुर्वेदाद्युपवेदाश्चत्वारश्चेत्यष्टादश विद्यास्थानानि। **उपलम्भनीम्**; उपलम्भस्थानभूताम्; संप्रदायप्रवर्तनीमित्यर्थः। एवंच तत्तद्विद्योपलम्भनार्थं तत्तदवतारपरिग्रहे बहुविधजन्मपरिग्रहे जीवात्मन इव

[1] अबोध—क, ख.

[2] अन्यभक्त्युन्मूलनीम्—इति प्रभावलीसंमतः पाठः।

[3] (सप्रणामम्) added after—ढ.

**प्राची संध्या काचिदन्तर्निशायाः**
**प्रज्ञादृष्टेरञ्जनश्रीरपूर्वा ।**
**वक्त्री वेदान् भातु मे वाजिवक्त्रा**
**वागीशाख्या वासुदेवस्य मूर्तिः ॥ ५ ॥**

### प्रभाविलासः

यावत् । **आदिमाम्;** प्रथमावतारभूताम् । **प्राचीति । अन्तर्निशा;** अन्तर्व्याप्ताज्ञानरूपा निशा, तस्याः । बाह्यतमोनिवर्तकप्रसिद्धसन्ध्या-वैलक्षण्यं काचिदित्युक्तम् । **अपूर्वा;** अलौकिकतत्त्वसाक्षात्कारजननी । **वक्त्री;** वचनशीला । **वेदान्;** "न लोक" इत्यादिना षष्ठीनिषेधः । साक्षाद्भगवदवतार एव, नांशावतार इति वक्तुं **वागीशाख्ये**त्युक्तिः । संज्ञामात्रमेव भिद्यत इति भावः ॥ ५ ॥

### प्रभावली

पारम्यं तिरस्कृतं स्यादित्यत्राह—**अभूतेति** । भूतपूर्वा न भवन्तीत्यभूतपूर्वाः; पूर्वमपरिगृहीताः प्रतिजन्म नूतना इत्यर्थः, बहुविधा हंसहयग्रीवमत्स्यकूर्मादिरूपा भूमिका वेषपरिग्रहा अवतारा इत्यर्थः । तत्परिग्रहेऽप्यसंकुचितसर्वेश्वरभावाम् । **अनवबोधजलधिकुक्षिंभरीम्** ; स्वविषयाज्ञानादिनाशनीम् । **अन्यभक्त्युन्मूल-नीम्;** स्ववैलक्षण्यज्ञापनेनान्यदेवताभक्त्युच्छेदनीम् । अभिगमप्रकारः प्रदर्श्यते —**प्राचीति । अन्तर्निशा;** अज्ञानम् । अज्ञानाख्यरात्रेः प्रातः संध्या, तन्निरासि-केत्यर्थः । **प्रज्ञादृष्टिः;** कालत्रयविषयगोचरा बुद्धिः । "प्रज्ञा त्रैकालिकी मता" इत्युक्तेः । सैव दृष्टिः, तस्या अञ्जनश्रीः, दृष्टिं वर्धयन्ती । **अपूर्वा;** अन्यादृशी । अञ्जनं चेत् नीलमेव; इयं चाञ्जनश्रीः शुभ्रवर्णा । **वेदान् वक्त्री;** वेदाना-माद्योपदेष्ट्री । तृन्नन्तत्वात् "न लोक" इति षष्ठीप्रतिषेधः । **वाजिवक्त्रा;** संयोगोपधत्वात् ङीषभावः; हयमुखी । वागीश इत्याख्या यस्याः सा । **वासु-देवस्य मूर्तिः मे भातु;** मम मनसि स्फुरत्वित्यर्थः ॥ ५ ॥

([1]सविनयम् अञ्जलिं बद्ध्वा)

देवो नः शुभमातनोतु दशधा निर्वर्तयन् भूमिकां
रङ्गे धामनि लब्धनिर्भररसैरध्यक्षितो भावुकैः ।
यद्भावेषु पृथग्विधेष्वनुगुणान् भावान् स्वयं बिभ्रती
यद्धर्मैरिह धर्मिणी विहरते नानाकृतिर्नायिका ॥ ६ ॥

### प्रभाविलासः

**देव इति** । दीव्यति भूतसर्गपरिपालनादिना क्रीडतीति देवो नारायणः । "मोदते भगवान् भूतैर्बालः क्रीडनकैरिव" इति भारतोक्तेः, दिवूधातोः क्रीडार्थकत्वात्; "दिव्यो देव एको नारायणः" इति श्रुतेः । अन्यत्र नाट्ये नटराजः, "देवः सुरे घने राज्ञि" इति विश्वः । **भूमिकाम्;** अवतारम्; अन्यत्र वेषपरिग्रहम् । **दशधा;** बहुधा, "अजायमानो बहुधा विजायते" इति श्रुतेः । **निर्वर्तयन्;** निष्पादयन् । **रङ्गे धामनि;** श्रीरङ्गे नाट्यस्थाने च । लब्धो निर्भरो रसो यैस्ते लब्धनिर्भररसाः । रसो ब्रह्म; "रसो वै सः । रसं ह्येवायं लब्ध्वानन्दी भवति" इति श्रुतेः । यद्वा निर्भररसो भरसमर्पणरागः ।

### प्रभावली

एवं वाक्सिद्धये प्रथमं हयग्रीवमभिगम्याथ नटसमाधिना रङ्गिणोऽभिमतमाशास्ते—**देव इति** । दशधा भूमिकां **निर्वर्तयन्;** निर्वर्तयितुम्; "लक्षणहेत्वोः" इति तुमर्थे शतृप्रत्ययः । **दशधा;** "नाटकं सप्रकरणम्" इत्यादिदशप्रकारान् रूपकभेदान् निर्वर्तयितुम् । **रङ्गे धामनि;** श्रीरङ्गक्षेत्रे नृत्तस्थले च । **लब्धनिर्भररसैः;** प्राप्तभगवदैकान्त्यप्रीतिभिः । अन्यत्रानुभूतिस्थायिभूतैः शृङ्गारादिरसैः । **भावुकैः;** ब्रह्मविद्भिः; अपरत्र सामाजिकैः ।

[1] सविनयम् omitted—क.

## प्रभाविलासः

अन्यत्र रसः शृङ्गारादिः । **भावुकैः ;** श्रवणादिनिपुणैः, भक्तैश्च । **यद्भावेषु ;** यस्यावतारेषु । नाट्यपक्षे भावो नाम व्यापारविशेषः । तदुक्तम् —

"वागङ्गसत्त्वाभिनयैर्मुखरागोपशोभितैः ।
भावयन्नान्तरं भावं व्यापारो भाव इष्यते ॥"

इति । **यद्धर्मैः ;** यस्य धर्मैः शरणागतरक्षणादिभिः ; आङ्गिकवाचिकादि-धर्मैश्च । **धर्मिणी ;** तद्धर्मानुकूलधर्मवती । तच्च

"विभीषणो वा सुग्रीव यदि वा रावणः स्वयम् ।
आनयैनं हरिश्रेष्ठ दत्तमस्याभयं मया ॥"

इति श्रीरामोक्त्या तदनुकूलेन सीतावचनेन च दर्शितम् —

"विदितः स हि धर्मज्ञः शरणागतवत्सलः ।
तेन मैत्री भवतु ते यदि जीवितुमिच्छसि ॥"

"पापानां वा शुभानां वा वधार्हाणां प्लवंगम ।
कार्यं करुणमार्येण न कश्चिन्नापराध्यति ॥"

इति । **नानाकृतिः ;** देवादिदेहपरिग्रहवती । तदुक्तम् —

"देवत्वे देवदेहेयं मनुष्यत्वे च मानुषी ।
विष्णोर्देहानुरूपां वै करोत्येषात्मनस्तनुम् ॥"

## प्रभावली

**अध्यक्षितः ;** साक्षात्कृतः । **देवः ;** श्रीमान्नारायणः ; अन्यत्र भूमिकादिभिः क्रीडन् नटपुरुषः । **नोऽस्माकं शुभं श्रेयः आतनोतु ;** आनाड्यसमाप्ति करोतु । **पृथग्विधेषु ;** अंशावेशादिभेदभिन्नेषु । **यद्भावेषु ;** यस्य भगवतो भावेषु अवतारेषु चेष्टासु लीलासु वा । **तदनुगुणान् भावान् ;** अवतारान् चेष्टाः

(मुहूर्तमिव स्थित्वा ध्यानमभिनीय सोल्लासम्) सोऽहमिदानीं
स्वाधीनसर्वतत्त्वसत्ताकस्य स्वतन्त्रदैवतस्य कृपया कटाक्षितः

### प्रभाविलासः

इति। अन्यत्र तद्वेषसमुचितवेषसंस्थानवती। **नायिका;** सर्वलोकेश्वरी, "ईश्वरीं सर्वभूतानाम्" "अस्येशाना जगतो विष्णुपत्नी" इति च श्रुतेः। अन्यत्र नटी नायिका। **विहरते;** विलासमनुभवति। अत्रेष्ट-देवतानटपरिबृढयोः प्रस्तुतत्वेन श्लेषालंकारः। तदुक्तम्—

"एकरूपेण वाक्येन द्वयोर्वर्णनमर्थयोः।
तन्त्रेण यः स हि श्लेषः सोऽयं नैकविधो भवेत्॥"

इति। वैदर्भी रीतिः। अनेन नटप्रशंसानामकं प्ररोचनाङ्गमुक्तम्॥ ६॥

**मुहूर्त**मित्यारभ्य **कृपया कटाक्षित** इत्यन्तं स्पष्टम्। **श्रुतीति।**

### प्रभावली

लीला वा। स्वयमपि **विभ्रती।** अत एव **नानाकृतिः** "देवत्वे देवदेहेयं मनुष्यत्वे च मानुषी" इत्युक्तरीत्या देवमनुष्यादिरूपिणी। **नायिका;** लक्ष्मीः। **इह;** लीलाविभूत्याम। **यस्य** भगवतो **धर्मैः** संश्रितरक्षणादिभिः **धर्मिणी;** स्वयमपि धर्मवती। **विहरते** क्रीडति स शुभमाततनोतु। अन्यत्र पृथग्विधेषु अङ्गप्रत्यङ्गादिभेदभिन्नेषु यस्य नटस्य भावेषु अङ्गहारेषु स्वयमपि तदनुकूलानङ्ग-हारान् विभ्रती नानाकृतिः नायिका नटी इह नृत्ते यद्धर्मैः धीरोदात्ताद्यवस्थानु-करणरूपैः स्वयमपि तद्धर्मिणी तदनुरूपाकारवती विहरते नृत्यति॥ ६॥

**मुहूर्तमिवेति।** देवताध्यानाभिनयार्थं मुहूर्तं निश्चलं तूष्णीं स्थित्वा। इवशब्दो वाक्यालंकारे। स्थितिवेलायां ध्यानमभिनीय, ध्यानात् देवताकटाक्षं चा-भिनीय। **सोल्लासम्;** उल्लासो हर्षसंभ्रमः। आहेति शेषः। किमित्यत्राह— **सोऽहमिति।** कथमिदं निर्वहामीति संदिहानमानसोऽहम्। सर्वपदार्थानां **सत्ता;**

श्रुतिकिरीटविहारजुषा धिया सुरभितामिह नाटकपद्धतिम् ।
मुहुरवेक्ष्य विवेकमुपघ्नयन् मतमपश्चिमयामि विपश्चिताम् ॥ ७ ॥

(नेपथ्याभिमुखमवलोक्य) आद्रियतां तावदियमार्यया रङ्गभूमिः ।

### प्रभाविलासः

**श्रुतिकिरीटम्**; श्रुतिशिरोऽलंकारभूत ईश्वरः । तत्र विहारजुषा तत्प्रवणया । यद्वा किरीटपदेन शिरांसि लक्ष्यन्ते ; वेदान्तप्रवणयेत्यर्थः । वेदान्तवासनाभूयस्त्वं वक्तुं सुरभितामित्युक्तम् । **विवेकमुपघ्नयन्**; अन्तिकाश्रयं कुर्वन् । नायकं कुर्वन्निति यावत । "उपघ्नश्चान्तिकाश्रयः" इत्यमरः । अनेन "कविकाव्यनटादीनाम्" इत्यादिपदसंगृहीतं नायकप्रशंसारूपं प्ररोचनाङ्गमुक्तम् । **विपश्चिताम्**; टङ्कद्रमिडगुहदेवयामुनरामानुजप्रभृतीनाम् । **मतमपश्चिमयामि**; पुरस्करोमि ॥ ७ ॥

**नेपथ्येति** । नेपथ्यं नाम रङ्गस्थलव्यतिरिक्तं यवनिकान्तरितं

### प्रभावली

**स्वरूपलाभः** । स्थित्यादीनामप्युपलक्षणमिदम् । सा स्वाधीना यस्य । अत एव **स्वतन्त्रदेवतस्य**; श्रियः पत्युः । **कृपया कटाक्षितः** विषयीकृतोऽस्मीति । अत आदिष्टं निर्वहामीत्याह--**श्रुतीति** । श्रुतेः किरीटानि वेदान्ताः । तत्र विहारः परिशीलनम् । वेदान्तपरिशीलनभाजा धिया ज्ञानेन सुरभितां वेदान्तार्थगन्धिनीमित्यर्थः । नाटकमार्गमिदानीं मुहुरालोच्य विवेकं नाट्यस्याश्रयं कुर्वन्नहं विपश्चितां श्रीभाष्यकारयामुननाथमुनिशठरिपुबोधायनादीनां सिद्धान्तमपश्चिमयामि; प्रधानयामि । अपश्चिमं मुख्यम्; सर्ववेदान्तसिद्धान्तेभ्यो मुख्यतया प्रकाशयामीत्यर्थः ॥ ७ ॥

नेपथ्येति । नेपथ्यं नाम पात्रसज्जीकरणार्था तिरस्करिणी । आहेति शेषः । किमित्यत्राह—**आद्रियतामिति** । प्रथममार्यया नव्या त्वया इयं

(प्रविश्य)

**नटी—**(सविनयम्) अय्य, एसह्मि। आणविज्जउ पिअप्पेसणो एसो परिअणो।

(आर्य, एषास्मि। आज्ञाप्यतां प्रियप्रेषण एष परिजनः)

**प्रभाविलासः**

वर्णिकादिग्रहणयोग्यं नटवर्गस्थानम्। तदुक्तम्—"कुशीलवकुटुम्बस्य गृहं नेपथ्यमिष्यते" इति। एवम्—

"अङ्गान्यस्याश्च भरताश्चत्वारीति बभाषिरे।
प्ररोचनामुखं चेति वीथीप्रहसने अपि॥"

इत्युक्तप्रकारेण प्रस्तावनाङ्गेषु प्ररोचना निरूपिता। अथामुखं निरूपयति **—आद्रियतामित्यादिना।**

"सूत्रधारो नटीं ब्रूते मारिषं वा विदूषकम्।
स्वकार्यप्रस्तुताक्षेपिचित्रोक्त्या यत्तदामुखम्॥"

इति लक्षणात्। **आर्ययेति;** नटीसूत्रधारौ परस्परमार्यपदवाच्यौ। तदुक्तम् —"विप्रामात्याग्रजास्त्वार्या नटीसूत्रकृतौ मिथः" इति। **प्रविश्य नटीति;** नटीलक्षणमुक्तं भावप्रकाशे—

**प्रभावली**

रङ्गभूमिः नृत्तस्थली आद्रियतामङ्गीक्रियताम्; नृत्तभूमिमागच्छेत्यर्थः। अथ नटी रङ्गभूमिं प्रविश्याहेति शेषः। **अय्य एसह्मि**—आर्य एषास्मि। अहमागतास्मीत्यर्थः। **आणविज्जउ**—आज्ञाप्यताम्। **पिअप्पेसणो**—प्रियप्रेषणः, आज्ञापनप्रियः। **एसो**—एषः। **परिअणो**—परिजनः। आज्ञापने प्रीतिमती तव परिजनभूताहं त्वया कस्मिंश्चित्कर्तव्ये आज्ञाप्यतामित्यर्थः।

**सूत्रधारः**—आर्ये, अपि नाम सत्त्वोपपन्नसामाजिकसमादिष्ट[1]नाटकसाधनसमुचितभूमिकापरिग्रहे संनह्यन्ति [2]कुशलाः कुशीलवाः ?

प्रभाविलासः

" चतुरातोद्यभेदज्ञा तत्कलासु विशारदा ।
करणाभिनयज्ञा च सर्वभाषाविचक्षणा ।
नटानुयोक्त्री कृत्येषु नटस्य गृहिणी नटी ॥ "

इति । " स्त्रीविदूषकबालानां शूद्राणां प्राकृतं वचः " इति प्राकृतभाषामाश्रित्याह—**अय्येति** । **प्रियप्रेषण** इति; प्रियं प्रेषणं यस्य सः । नायककविप्रशंसारूपं सूत्रधारकृत्यमाह—**सूत्रधार इत्यादिना** । तल्लक्षणं भावप्रकाशे—

" आसूत्रयन् गुणान्नेतुः कवेरपि च वस्तुनः ।
रङ्गप्रसाधनप्रौढः सूत्रधार इहोच्यते ॥ "

इति । भरतागमानुमतं प्रश्नरूपसंधिमाह—**अपि नामेति** । तदुक्तम्—

प्रभावली

" म्लेच्छाभीरपुलिन्दानामपभ्रंशादि भाषितम् ।
स्त्रीणां प्राकृतभाषैव विशिष्टानां च संस्कृतम् ॥ "

इति वचनात् नट्याः प्राकृतभाषाप्रयोगः । सूत्रधार आह—आर्ये अपि नामेति । **सत्त्वोपपन्नाः** सात्विकाः ये सामाजिकाः सभ्याः, तदादिष्टस्य नाटकस्य साधने निर्वहणे समुचितो यो भूमिकापरिग्रहः वेषपरिग्रहः, तत्र कुशलाः कुशीलवा नटाः संनह्यन्ति । अपि नामेति प्रश्ने अव्ययसमुदायः । नटी तदुत्तरमाह—**कल-**

[1] नाटक omitted—ख. घ; नाट्य—ग.  [2] कुशलाः omitted—क.

**नटी**—अय्य, कलचलणदिठ्ठिकप्पा खु एदे अय्यस्स। किं ण तुह चिंतिए[1] तुरंति? एदं उण परिपुच्छम्मि[2]-किंणामअं कीरिसं रूवअं अहिणेदुं आरद्धंति[3]।

(करचरणदृष्टिकल्पाः खल्वेते आर्यस्य। किं न तव चिन्तिते त्वरन्ते? एतत् पुनः परिपृच्छामि—किंनामकं कीदृशं रूपकमभिनेतुमारब्धमिति)

**प्रभाविलासः**

"प्रश्नो दूतिश्च लेख्यं च नेपथ्योक्तिस्तथैव च।
आकाशवचनं चेति विज्ञेयाः पञ्च संधयः॥"

इति। नामेत्यभ्युपगमे। "नाम प्रकाश्यसंभाव्यकुत्साभ्युपगमेषु च" इति विश्वः। **सत्त्वोपपन्नाः**; सात्त्विकाः। **कुशीलवाः**; नटविशेषाः।

"भूमिकाभिरनेकाभिः कर्मवागङ्गचेष्टितैः।
यथाप्रकृतिसंधानकुशलास्ते कुशीलवाः॥"

**प्रभावली**

**चलणेति**। नीचपात्राणां प्राकृतभाषाप्रयोगः। करचरणदृष्टिकल्पाः खलु; अवयववत्परतन्त्राः। **एदे**—एते; परिजनभूता वयमित्यर्थः। **अय्यस्स**—आर्यस्य नटोपाध्यायस्य। **तुम्ह भासिए**—तव भाषिते; त्वयोक्तकार्य इत्यर्थः। **किं ण तुरंति**—किं न त्वरन्ते। तां कथं न कुर्वन्तीत्यर्थः। **एदं** इत्यादि।

[1] तुह्म भासिए
[2] पुच्छम्मि } प्रभावलीसंमतः पाठः। ३. आदिट्ठंति—ख.
[3] आणत्तंति

**सूत्रधारः**—आर्ये, किं न जानासि संकल्पसूर्योदयाख्यं नायकीकृतविवेकं नवीनं नाटकम्?

**भावं विदन्ति परमत्र परावरज्ञाः**
**प्रज्ञाधनाः प्रगुणनूतनसंविधानम्।**
**यस्मिन् गुणास्तनुभृतः सदसत्प्रकाराः**
**पात्रीभवन्त्यनुगुणैरधिदैवतैः स्वैः॥ ८॥**

**प्रभाविलासः**

इति लक्षणात्। **रूपकमिति**; नायकादेर्नटे रूपणोक्तेः। तदुक्तम्—

"यथा मुखादौ पद्मादेरारोपाद्रूपकप्रथा।
तथैव नायकारोपो नटे रूपकमुच्यते॥"

इति। **आर्ये किं न जानासीति**; श्रुतिकिरीटेति व्यञ्जितं किं न जानासीत्यर्थः। **भावमिति**। परे ब्रह्मादयोऽवरे यस्मात् स परावरः। सकलशासिता विष्णुः। तं जानन्तीति तथोक्ताः। अत्र; वेदान्तनाटके।

**प्रभावली**

**एदं उण पुच्छम्मि**—एतत्पुनः पृच्छामि। **किंणामअं**—किंनामकम्। **कीरिसं**—कीदृशम्; किंप्रकारकं, त्रिवर्गविषयं मोक्षविषयं पूर्वमपूर्वं वेति भावः। **रूवअं**—रूपकं नाटकम्। **अहिणेदुं**—अभिनेतुम्। **आणत्तं त्ति**—आज्ञप्तमिति; सदस्यैरिति पृच्छामीति संबन्धः। ततः सूत्रधार आह—आर्ये इत्यादि। एवमुत्तरत्रापि द्रष्टव्यम्। आर्ये नटि। पूज्यतयोक्तिरियम्। **नायकीकृतः**; प्रधानपात्रीकृतः, विवेकः परावरतत्त्वादिविवेचनाख्यो नृणां गुणः यत्र तत्। **नूतनं नाटकं किं न जानासि?** उक्तं नाटकं विविच्य दर्शयति—**भावमिति**। **अत्र**; अस्मिन्नाटके। **परावरज्ञाः**; परः परमात्मा, अवरो जीवः; परावरतत्त्व-

## प्रभाविलासः

**प्रतिपाद्यं परम्;** समाभ्यधिकरहितम् । **प्रगुणनूतनसंविधानम्;** प्रकृष्टाभिनवार्चावतारादिरचनाविशेषम् । **भावम्;** भगवदनुभावम् । **विदन्ति;** अन्ये न जानन्तीत्यर्थः ।

"अवजानन्ति मां मूढा मानुषीं तनुमास्थितम् ।
परं भावमजानन्तो मम भूतमहेश्वरम् ॥"

इत्युक्तेः । **यस्मिन्;** नाटके । **तनुभृतः;** जगच्छरीरकस्य "तत्सर्वं वै हरेस्तनुः" इति स्मरणात् । **सदसत्प्रकाराः;** सत्प्रकारा अद्वारकतया स्थिताः संकल्पादयः कृपादयश्च; असत्प्रकाराः सद्वारकतया स्थिता विवेकव्यवसायमोहादयः; पात्रीभवन्ति । यद्वा परावरज्ञाः परावरतत्त्ववेदिनोऽत्र भावं तात्पर्यं शान्तिरसस्थायिभावं वा विदन्ति । यस्मिन् तनुभृतः संसारिणो जीवस्य सदसत्प्रकाराः साधुरूपा विवेकादयः असाधुरूपा मोहादयश्च पात्रीभवन्ति । अचेतनानां कथं पात्रीभाव इत्यत आह—**अधिदैवतैरिति;** अधिष्ठानदेवतावतां गुणानां पात्रतेत्यर्थः ॥ ८ ॥

## प्रभावली

लक्षणज्ञाः । यद्वा—परे ब्रह्मरुद्रादयोऽवरे अर्वाचीना यस्येति परावरः परमात्मा; "तस्मिन् दृष्टे परावरे" इत्युक्तेः । तं स्वरूपस्वभावादिभिर्जानन्तीति तथोक्ताः; ब्रह्मविद इत्यर्थः । प्रज्ञाधनाः; ज्ञानिनः । **परम्;** केवलम् । **प्रगुणनूतनसंविधानम्;** प्रकृष्टगुणतया अपूर्वं संविधानं निर्माणं यस्मिंस्तम् । भावमभिनयं विदन्ति । एतन्नाटकाभिनयं ब्रह्मविद एव जानन्ति; नान्ये । **यत्र;** यस्मिन्नाटके संकल्पसूर्योदये । **तनुभृतः;** जीवात्मनः । **सदसत्प्रकारा गुणाः;** विवेकादयः मोहादयश्चानुगुणैः स्वानुरूपैः स्वैरधिदैवतैः तत्तद्गुणाधिष्ठातृदैवतैर्हेतुभिः पात्रीभवन्ति पात्राणि भवन्ति । "नर्तकान् पात्रमित्याहुर्नृत्ताधारतया बुधाः" इत्युक्तेः । यद्वा अधिदैवतैः सह पात्रीभवन्तीति ॥ ८ ॥

अपिच

विवेकप्रागल्भ्यस्फुरितरणवीरव्यतिकरः
परब्रह्मोदन्तप्रकटितदयावीरविभवः[1] ।
प्रबुद्धक्षेत्रज्ञस्थितिघटितशान्ताकृतिरभूत्
प्रयोगश्चित्रोऽयं भवरसभुजामप्यभिमतः ॥ ९ ॥

प्रभाविलासः

वीरशान्तादिरसानां तत्र तत्राभिव्यक्त्या विचित्रोऽयं प्रयोग इत्याह—**विवेकेति** । विवेकस्य प्रागल्भ्येन स्फुरितोऽभिव्यक्तो रणे वीरस्य वीररसस्य व्यतिकरः संपर्को यस्य सः । **परब्रह्मणः** श्रीमन्नारायणस्योदन्ताः प्रह्लादविभीषणपरित्राणहिरण्यरावणवधादिवृत्तान्ताः, तैः प्रकटितो व्यञ्जितो दयायाः करुणारसस्य वीरस्य वीररसस्य च विभवो यत्र सः । प्रबुद्धस्य क्षेत्रज्ञस्य स्थित्या शीतोष्णसहनाद्यवस्थानेन घटिता अभिव्यक्ता शान्ताकृतिः शान्तरसाकारो यत्र सः । **भवरसः**; संसाररसः शृङ्गारादिः "शृङ्गारादौ विषे वीर्ये गुणे रागे द्रवे रसः" इत्यमरः । यद्वा प्रागल्भ्येति शौर्यादि-संग्रहः । तेन वीररसानुभावोक्तिः । तदुक्तं भरतेन—

प्रभावली

पुनरपि नाटकं संसारिणामप्यभिमततयोपस्तौति—**अपि चेति** । **चित्रः**; नानाप्रकारः; आश्चर्यरूपो वा । **अयं प्रयोगः**; संकल्पसूर्योदयाख्यं नाटकम् । **भव-रसभुजां** संसारिणामप्यभिमतो भवति । आश्चर्यत्वे हेतुं नानाप्रकारं दर्शयति—**विवेकेत्यादि** । विवेकस्य प्रागल्भ्यं महामोहविजयः, तेन प्रकाशितः रणवीरस्य

[1] इदं दानवीरस्याप्युपलक्षणम् । एतेन युद्धवीरदयावीरदानवीरभेदेन त्रिविधोऽपि वीरोऽत्र वर्णितः । शान्तवीरयोर्व्यतिकराच्च चित्रत्वं भाव्यम् ।

## प्रभाविलासः

“सामादीनामुपायानां यथावद्विनियोजनम् ।
विज्ञत्वं धैर्यशौर्ये च शौर्यं त्यागो यथोचितम् ।
भाषणं ह्यवगम्भीरवाक्यं चेत्येवमादयः ॥
सर्वे गर्वानुभावाः स्युः ।” इति ।

उदन्तशब्देन श्रीरामराज्यनाशसीतावियोगादयः । तेन करुणाविभवोक्तिः । तत्रैव—

“इष्टबन्धुवियोगश्च श्रीनाशो वधबन्धने ।
व्यसनप्रभवोऽनर्थः सुतादिनिधनं तथा ।
देशभङ्गादयश्चैते श्रुता यद्वा विलोकिताः ।
विभावाः संमताः पुंसामुत्तमानां पराश्रिताः ॥”

इति । क्षेत्रज्ञस्थितीति पदेन शान्तरसविभावोक्तिः,

“संसारभीरुता दोषदर्शनं विषयेषु च ।
योगिसङ्गो मुनीनां च कृपाशमदमक्षमाः ॥”

इत्याद्युक्तेः ॥ ९ ॥

## प्रभावली

धीरोद्धतस्य नायकस्य व्यतिकरः संपर्को यस्मिन । **परब्रह्मणः**; श्रीमन्नारायणस्योदन्तेनात्मनां मुमुक्षासंपादनरूपप्रवृत्त्या प्रकटितः दयावीरस्य धीरोदात्तस्य नायकस्य विभवो यस्मिन् । **प्रबुद्धस्य** क्षेत्रज्ञस्यात्मनः स्थितिरवस्थानं, तेन घटिता संपादिता शान्ताकृतिः धीरशान्तस्याकृतिर्यस्मिन् । सोऽयं प्रयोगश्चित्रोऽभूत् । अतः संसारिणामप्यभिमत इति ॥ ९ ॥

अमुष्य तावदतिशयोक्ताववधिमपि न संभावयामि । कति कति न[1] संभवन्त्यकूपारे शङ्खाः । किं ते परिष्कृतपुरुषोत्तमपाणिपद्मः पाञ्चजन्यः ? किं च,

**ये लोकानिह वञ्चयन्ति[2] विरलोदञ्चन्महःकञ्चुका-**
**स्ते तिष्ठन्तु महद्गृहेषु मणयः किं तैरिदं चिन्त्यताम् ।**

### प्रभाविलासः

**अमुष्येति । अवधिम्**; निरूपकम् । **अकूपारे**; समुद्रे । परिष्कृतपुरुषोत्तमपाणिपद्मपाञ्चजन्यपदैः परस्परमलंकार्यालंकारकभाव उक्तः । प्रयोगातिशयवैलक्षण्यमन्यापदेशेनाह---**ये लोकानिति** । अविरलं सान्द्रं यथा भवति तथा उदञ्चन्ति महांस्येव कञ्चुकानि दृषत्त्वाच्छादकानि येषां ते तथोक्ताः, मण्याभासा इत्यर्थः । एतेन शाकुन्तलमुरारिनाटकप्रभृतीनामाभासत्वमुक्तम् । शाकुन्तलप्रभृतयो हि शृङ्गाररसैकपरा भगवद्गुणानुभवरहिताश्च । मुरारिप्रमुखास्तु भगवद्गुणानुभवेऽपि वीराद्याभासरसपरतया शान्तरसप्रतिपादनविधुरा इति भावः । **महद्गृहेषु**; महतां गृहेषु । **प्रत्नेषु**; पुरातनेषु ।

### प्रभावली

एवं प्रयोगस्यावयवशोभामुक्त्वा समुदायशोभामाह---**अमुष्येत्यादि** । **अमुष्य**; नाटकस्य । **अतिशयोक्तौ**; अतिशयवर्णने । **कति कति न संभवन्ति**; बहवः संभवन्तीत्यर्थः । **किमिति**; पुरुषोत्तमस्य पाणिपद्मं परिष्कृतं येन स पाञ्चजन्यः किं ते भवन्तीति शेषः । उक्तमेवार्थं भङ्ग्यन्तरेणाह---**किंचेत्यादि** । **ये लोकानिति** । ये मणयः विरलं स्वल्पं यथा तथोदञ्चन्महांस्येव कञ्चुकं संवरणकोशः येषां ते; अल्पतेजस इत्यर्थः । **इह** जगति जनान् मूढान् वञ्चयन्ति; 'अयमेव श्लाघ्यः' इति स्वविषयव्यामोहनं जनयन्ति; ते महतां वञ्चकानां गृहेष्वेव तिष्ठन्तु । **तैः** किं प्रयोजनम्? **इदं** वक्ष्यमाणं

[1] न सन्ति---ग.  [2] न्त्यविरल---क, ख, ग.

**श्रीवत्सप्रतिवेशदीपरुचिना सार्धं किमाभाष्यते**
**पद्मोल्लासनदर्पणेन मणिना पद्मेषु रत्नेष्वपि ॥ १० ॥**

## प्रभाविलासः

**रत्नेषु**; स्यमन्तकादिषु । **श्रीवत्स** एव प्रतिवेशः प्रतिगृहं, तत्र दीपरुचिना भासकप्रभारूपेण । अनेन मण्यन्तरवदस्य दृषत्त्वरूपजडांशो व्यावृत्तः । **पद्मायाः** लक्ष्म्या उल्लासनानि विलासाः, तेषां दर्पणेन । अत्र दर्पणग्रहणेन प्रभावयवानामतिश्लिष्टत्वमुक्तम्, प्रभामात्रे प्रतिबिम्बादर्शनात् । अत एव चन्द्रे भूच्छायाप्रसिद्धिः । तथा च श्रुतिः—"यददश्चन्द्रमसि कृष्णम्" इति । दर्शनेनेति पाठे दृश्यतेऽत्रेति दर्पणमेव लक्ष्यते । **मणिना**; कौस्तुभाख्येन । अनेन भगवत्स्वरूपरूपगुणविभूतिविग्रहपत्नीपरिजनादिबहुप्रपञ्चनपरस्यास्य प्रयोगस्य निष्प्रपञ्चनिःश्रीकचिन्मात्राभिनयवद्भ्यः प्रबोधचन्द्रोदयादिभ्यो वैलक्षण्यमुक्तम् । यद्वा पूर्वार्धेन प्रबोधचन्द्रोदयादिवैलक्षण्यम्, उत्तरार्धेन शाकुन्तलमुरारिप्रभृतिवैलक्षण्यं चेति द्रष्टव्यम् । अत्र कौस्तुभरूपाप्रस्तुतवर्णनेन प्रस्तुतकाव्यप्रतिपाद्यवस्तुसूचनादवलगितं नामामुखाङ्गमुक्तम् । तदुक्तम्—

"अप्रस्तुतार्थकथनात् क्रियते सूचनं तु यत् ।
पात्रस्य वस्तुनो वापि नाम्नावलगितं हि तत ॥"

इति ॥ १० ॥

## प्रभावली

चिन्त्यताम् । वक्ष्यमाणं दर्शयति—**श्रीवत्सेति** । श्रीवत्सो नाम भगवद्वक्षस्तिलकम्; तस्य प्रतिवेशदीपरुचिना प्रतिगृहदीपायमानेन । यद्वा श्रीवत्से प्रतिवेशः छायया प्रवेशः, प्रतिफलनमित्यर्थः; तेन दीपस्य रुचिरिव रुचिर्यस्य तेन । पद्मायाः उल्लासनं विलासः, तत्र विभ्रमालोकने दर्पणेन मुकुरेण मुकुरस्थानीयेन । विष्णुवक्षःस्थलभूषणेन लक्ष्मीदर्पणेनेति दिव्यदंपत्योरुपकारातिशयः सूच्यते ।

इतश्चायमतीव बहु मन्तव्यः । यतः,[1]

**अपदिश्य किमप्यशेषगुप्त्यै निगमान्तेषु निरूढगौरवेण ।**
**प्रविभक्तहिताहितः प्रयोगः[2] कविना कारुणिकेन कल्पितोऽसौ ॥११॥**

**प्रभाविलासः**

पुरा किल केनचित् प्रबोधचन्द्रोदयाख्यनाटकाभिनयेन वञ्चितं जनमवलोक्य श्रीरङ्गस्थमहाजनैः श्रीरङ्गराजदिव्याज्ञया वेदान्ताचार्यमानाय्य वेदान्ताचार्यपदेऽभिषिच्य संकल्पसूर्योदयाख्यं प्रबन्धं कारयित्वा यवनिकां प्रसार्य दर्शितमिति संप्रदायः । तमिममाह—**अपदिश्येति** । **किमपि**; आज्ञारूपम् । प्रयोजनं तु लोकानुग्रह एवेत्याह—**अशेषेति** । प्रबन्धकरणे सामर्थ्यमाह—**निगमान्तेष्विति** । **प्रविभक्ते** हिताहिते यस्मिन् सः । लोकानुग्रहे निमित्तमाह—**कारुणिकेनेति** ॥ ११ ॥

**प्रभावली**

तेन मणिना कौस्तुभेन सह प्रत्नेषु पुराणेष्वपि रत्नेषु ब्रह्मादिभिर्ध्रियमाणेषु कश्चिदेकोऽपि मणिः स्यमन्तकादिराभाष्यते तत्सदृशत्वेन वर्ण्यते किम्? नेत्यर्थः ॥ १० ॥

अथ प्रयोगस्य वक्तृवैलक्षण्यं बहुधा दर्शयति । वक्तृवैलक्षण्यादप्ययं बहुमन्तव्य इत्याह—**इतश्चेति** । यस्मादयं प्रयोगः कारुणिकेन कविना कल्पितः, इतश्चेत्यर्थः । **अपदिश्येति** । **किमप्यपदिश्य**; व्याजीकृत्य; कान्तासंमितत्वेनाध्यात्मज्ञानमुपदेष्टव्यमित्यभिप्रायेण । **अशेषगुप्त्यै**; सर्वजनसंरक्षणाय । वेदान्तेषु निरूढं प्रसिद्धं गौरवमाचार्यत्वं यस्य, वेदान्ताचार्येणेत्यर्थः । **कविः**; क्रान्तदर्शी अतिक्रान्तदर्शी । भूतभविष्यद्वर्तमानसर्ववस्तुसाक्षात्कर्त्रा गुरुणा । **प्रविभक्तः** प्रतिपादितः त्याज्योपादेयार्थो यस्मिन् असौ प्रयोगः नाटकं कल्पितः निर्मितः ॥ ११ ॥

[1] यतः omitted—क, ग.   [2] हिताहितप्रयोगः—घ.

**नटी**——(सकौतुकम्)[1] अय्य, कस्स उण कइणो पओओ एसो? जत्थ बहुमाणेण अह्मेसु वि पअडिअपक्खवाआ एसा परिसआ।

(आर्य, कस्य पुनः कवेः प्रयोग एषः? यत्र बहुमानेनास्मास्वपि प्रकटितपक्षपातैषा परिषत्।)

**सूत्रधारः**——आर्ये, किं न श्रुतमिदं ते। अस्ति खलु [2]समस्तलोकसंभावनीयस्य विश्वातिशायिनो विश्वामित्रगोत्रभूषणस्य [3]विशुद्धविद्याविहार[4]पुण्डरीकस्य पुण्डरीकाक्षसोमसुत्संभवस्यानन्त-

### प्रभाविलासः

**किं न श्रुतमिति**। श्रुतिकिरीटेत्यादिना निगमान्तेष्वित्यादिना चोक्तमित्यर्थः। **अस्तीति**। **विशुद्धविद्यायाः**; तरुण्या इति व्यज्यते। **विहारपुण्डरीकः**; लीलादिग्गजः, व्याघ्रशावो वा। "व्याघ्रशावे पुण्ड-

### प्रभावली

अथास्य कवेरभिजनवृत्तविद्यादि वर्णयितुं नट्या आकाङ्क्षामुद्भावयति——**नटीत्यादि**। **अय्य**——आर्य। **कस्स**——कस्य। **उण**——पुनः। **कइणो**——कवेः। **पओओ**——प्रयोगः। **एसो**——एषः। **जत्थ**——यत्र। **बहुमाणेण**——बहुमानेन। **अम्हेसु**——अस्मासु। **वि**——अपि। **पअडिअपक्खवाआ**——प्रकटितपक्षपाता। **एसा**——एषा। **परिसआ**——परिषत्। पक्षपातः प्रीतिः। श्रीमान् वेंकटनाथार्यः स्वप्रशंसाविमुखोऽपि नाटकसमयसिद्धत्वेनावर्जनीयत्वात् सूत्रधारमुखेन स्ववैभवं प्रकटयति——**आर्ये इत्यादिना**। **इदम्**; वक्ष्यमाणम्। वेंकट-

[1] सकौतुकम् omitted—क, ख, घ. [2] सकल—ग.

[3] देवतान्तरस्पर्शगन्धविधुरा विशुद्धयाजिसमादृता सात्वतनिष्ठापरिकर्मिताध्यात्मविद्येत्यर्थः।

[4] विहरण—इति प्रभावलीसंमतः पाठः

**गुणशेवधेरनन्तसूरेरात्मसंभवः श्रीरङ्गराजदिव्याज्ञालब्धवेदान्ताचार्य-पदः कवितार्किकसिंह इति प्रख्यातगुणसमाख्यः छात्रजननिबद्ध-जैत्रध्वजप्रसाधितदशदिशासौधः सर्वतन्त्रसंकटप्रशमनविशङ्कटमतिः श्रीमद्वेंकटनाथो नाम कविः ।**

### प्रभाविलासः

रीकः" इति निघण्टुः । **सोमसुत्;** सोमयाजी । **शेवधिः;** निधिः । "निधिर्ना शेवधिः" इत्यमरः । लब्धः वेदान्ताचार्यपदः वेदान्ताचार्य-सुखासनं यस्य सः । **गुणसमाख्यः;** गुणकृतनामधेयः । **छात्राः;** शिष्याः । **प्रसाधितः;** अलंकृतः । छात्रजना एव निबद्धा जैत्रध्वजाः, तैः प्रसाधिता दशदिशासौधाः यस्य सः । **विशङ्कटमतिः;** विपुल-बुद्धिः । "विशङ्कटं पृथु बृहद्विशालं पृथुलं महत्" इत्यमरः ।

### प्रभावली

नाथो नाम कविरस्तीति ते त्वया न श्रुतं किम्? । **अस्ति खल्वित्यादि** । प्रथमं त्रिपुरुषमभिजनश्रैष्ठ्यमाह—**समस्तेति** । **लोकः;** जनः, सर्वजनपूजनीयस्य । **विशुद्धा** या विद्या अध्यात्मविद्या, तस्या विहरणपुण्डरीकस्य; विहारस्थान-भूतस्येत्यर्थः । पुण्डरीकाक्षसोमयाजिनः पुत्रस्य । अनन्तानामसंख्यातानां गुणानां शमदमादीनां शेवधेर्निधिभूतस्य । **अनन्तसूरेः;** अनन्ताचार्यस्य । **आत्मसंभवः;** **श्रीरङ्गराजस्य** दिव्याज्ञया प्राप्तवेदान्ताचार्य इति गुणनामधेयः । पुरा खलु वेंकटेशगुरुः श्रीरङ्गराजसंनिधौ दुर्जयदुर्वादिनो वादेन जित्वा संतुष्टेन श्रीरङ्गराजेन वेदान्ताचार्योऽयमित्युक्त इत्यैतिह्यमस्ति । अत एवाधिकरणसारावल्याम्—

> "विश्वस्मिन्नामरूपाण्यनुविहितवता तेन देवेन दत्तां
> वेदान्ताचार्यसंज्ञामवहितबहुवित्सार्थमन्वर्थयामि ।"

इत्यन्वर्थतया स्वेनैवोक्तम् । **समाख्या;** नाम; प्रख्यातगुणनामधेयः । अस्य शिष्यप्रशिष्यैर्दिग्विजयः कृत इत्याह—**छात्रजनेति** । **छात्राः;** शिष्याः । तैरेव जैत्रध्वजैरलंकृतदशदिक्सौधः । सर्वतन्त्राणां वेदान्तमीमांसाशब्दन्यायशास्त्रादीनां

**गौडवैदर्भपाञ्चालमालाकारां सरस्वतीम् ।**
**यस्य नित्यं प्रशंसन्ति सन्तः सौरभवेदिनः ॥ १२ ॥**

**अन्येन्द्रकं भुवनमन्यदनिन्द्रकं वा**
**कर्तुं क्षमे कविरभूदयमन्ववाये ।**
**जन्म द्वितीयमृषिभिः कथितं यतः सा**
**देवी च विश्वजननी यदनन्यगोत्रा ॥ १३ ॥**

प्रभाविलासः

**गौडेति** । गौडादयो रीतयोऽधस्तादुक्ताः "असमाससमासेन" इत्यादि लक्षणोदाहरणेन । अतिदीर्घसमासा गौडी । असमासा वैदर्भी । मध्यमसमासा पाञ्चाली । **सन्तः**; निर्मत्सराः । **सौरभवेदिनः**; अलंकारशास्त्रसाराभिज्ञाः ॥ १२ ॥

**अन्येन्द्रकमिति** । **भुवनमन्येन्द्रकम्**; विद्यमानभुवनस्येन्द्रान्तरमित्यर्थः । **अन्यद्वा**; भुवनमित्यनुवर्तते । अन्यत्; सेन्द्रकं भुवनान्तरमित्यर्थः । **अनिन्द्रकं वा**; विद्यमानभुवनमनिन्द्रकं वेत्यर्थः । अनेन

प्रभावली

यः संकटः दुर्वादिकल्पितः क्षोभः, तस्य प्रशमने विपुलमतिः । वेदान्ते कुदृष्टिभिः कृतः क्षोभः शतदूषणीतत्त्वमुक्ताकलापादिभिः प्रशमितः । मीमांसायां सेश्वरमीमांसया, न्यायशास्त्रे न्यायपरिशुद्ध्या । एवमन्यदप्यूह्यम् । तस्य कवितावैलक्षण्यमाह—**गौडेति** । गौडः अतिकठिनशब्दसंदर्भरूपः पाकविशेषः । पाञ्चालो नामातिकोमलशब्दसंदर्भरूपः सः । वैदर्भः अनतिकठिनकोमलशब्दसंदर्भरूपः सः । गौडादित्रिविधमालाकारां यस्य सरस्वतीं **सौरभवेदिनः** कवितासौरभवेदिनः सन्तः नित्यं प्रशंसन्ति ॥ १२ ॥

अस्य गोत्रतः श्रैष्ठ्यं प्रशंसति—**अन्येति** । **भुवनं सर्वम्** अन्येन्द्रकं वर्तमानेन्द्रादन्येन्द्रविशिष्टं कर्तुं क्षमे समर्थे । **अनिन्द्रकम्**; इन्द्ररहितं वा कर्तुं क्षमे

अपिच ;

**वित्रासिनी विबुधवैरिवरूथिनीनां पद्मासनेन परिचारविधौ प्रयुक्ता ।**
**उत्प्रेक्ष्यते बुधजनैरुपपत्तिभूम्ना घण्टा हरेः समजनिष्ट यदात्मनेति ॥१४॥**

### प्रभाविलासः

"अन्यमिन्द्रं करिष्यामि लोको वा स्यादनिन्द्रकः" इति विवृतम् । तत्र हि—लोको वा स्यात्; सेन्द्रकं लोकान्तरं वा स्यादित्यर्थः । अनिन्द्रकः; विद्यमानलोक एवानिन्द्रकः स्यादित्यर्थः । **यतः**; यस्या गायत्र्या उपदेशात्; 'विश्वामित्र ऋषिः सविता देवता' इति गायत्र्या विश्वामित्रर्षिकत्वात् अनन्यगोत्रेत्युक्तम् । न तु तद्गोत्रत्वात्, तस्याः सांख्यायनगोत्रत्वात् ॥ १३ ॥

पुरा किल वेदान्ताचार्यमातुः पुत्रमिच्छन्त्याः श्रीशः स्वाराधन-घण्टां स्वप्ने प्रादादिति लोकगाथा । तामभिप्रेत्याह—**वित्रासिनीति ।** विबुधवैरिणो राक्षसाः, तेषां वरूथिन्यः सेनाः । अन्यत्र कुदृष्टिवर्गाः ।

### प्रभावली

**अन्ववाये**; विश्वमित्रवंश इत्यर्थः । **अयं कविः**; श्रीवेंकटनाथनामाभूत् । "अन्य-मिन्द्रं करिष्यामि लोको वा स्यादनिन्द्रकः" इत्युक्तं कुपितेन विश्वा-मित्रेण बालकाण्डे । किं च **ऋषिभिर्मन्वादिभिः । द्वितीयं जन्म**; विप्राणामुपनय-नाख्यं विद्याजन्म । **यतः**; यदुपदेशाद्धेतोः, यामाश्रित्य; ल्यब्लोपे पञ्चमी । **कथितम्**; उपदिष्टम् । **सा**; गायत्रीदेवी । **यदनन्यगोत्रा**; येन कविना एकगोत्रा ; 'सावित्र्या ऋषिः विश्वामित्रः' इत्युक्तेः । सर्वेषां द्विजत्वहेतुभूता गायत्री येन सहैकवंशसमुद्भूता तादृक्प्रभावोऽयं वेंकटेशगुरुरिति ॥ १३ ॥

नित्यसूर्यवतारविशेषतोऽपि श्रैष्ठ्यमाह—**अपि चे**त्यादि । **विबुधवैरिव-रूथिनीनां वित्रासिनी**; "आवाहनार्थं देवानां त्रासनार्थं सुरद्विषाम् । घण्टां निनादयेत्" इत्युक्त्या असुरवित्रासिनी भवति घण्टा । **परिचारविधौ**;

[1]स च;

**विंशत्यब्दे विश्रुतनानाविधविद्य-**

**स्त्रिंशद्वारं श्रावितशारीरकभाष्यः ।**

प्रभाविलासः

तासां वित्रासिनी । **पद्मासनेन प्रयुक्ता;** चतुर्मुखेन समर्पिता । अन्यत्र श्रियः पत्या दत्ता । **उपपत्तयः;** विबुधवैरिवित्रासकत्वकैंकर्योपयुक्तत्वादयः, तेषां भूम्ना बाहुल्येन । यद्वा उक्तोपपत्तिद्वयसामर्थ्येनेत्यर्थः । **यदात्मना;** यस्य वेदान्ताचार्यस्यात्मना स्वरूपेण । घण्टानादो रक्षोघ्न इति प्रसिद्धिः । श्लेषालंकारः ॥ १४ ॥

**विंशतीति** । त्रिंशद्वारश्रावितभाष्यत्वं न विंशत्यब्दान्तर्भूतम् ।

**प्रभावली**

समाराधनकर्मणि । प्रयुक्ता; कल्पिता । हरेः श्रीवेंकटनाथस्य घण्टा यदात्मना यद्रूपेणावततारेति बुधजनैः ज्ञानिभिः उपपत्तिभूम्ना युक्तिबाहुल्येन वेदान्ताचार्यकसर्वतन्त्रस्वातन्त्र्यादिमहिमदर्शनादिरूपेणोत्प्रेक्ष्यते निश्चीयते । अत्रैवमैतिह्यम्—

"वेदान्ताचार्यजननी वरपुत्राभिलाषिणी ।
स्वप्ने श्रीवेंकटेशेन दत्तां घण्टां निगीर्य सा ॥
दधार गर्भमतुलं द्वादशाब्दं पतिव्रता ।
ततो जज्ञे गुरुरयं वेदान्ताचार्यशेखरः ॥"

इति ॥ १४ ॥

तस्यासाधारणमुदन्तं कथयन् स एवेदं नाटकं कृतवानित्याह—**स चेत्यादि** । **स च;** वेंकटनाथः । विंशतेरब्दानां समाहारः विंशत्यब्दम्, तत्रैव । विश्रुताः विशेषेण पठिताः सतात्पर्यं गृहीताः नानाविधाः श्रुतिस्मृतिपुराणषडङ्गमीमांसान्यायविस्तरशब्दकाव्यनाटकालंकारज्योतिषबाहटादिरूपाः विद्याः शास्त्राणि येन । ततः परं **त्रिंशद्वारं** श्रावितं पाठितं शारीरकभाष्यं श्रीभाष्याख्यं

[1] **स च** omitted—**घ**.

श्रेयः श्रीमान् वेंकटनाथः श्रुतिपथ्यं
नाथप्रीत्यै नाटकमर्थ्यं व्यधितैतत् ॥ १५ ॥

नटी—अय्य, कहं णाम [1]एदस्य एअंतणिअमंतवि-
आणसंदिअमाणसस्स कक्कसअरतक्ककुलिसणिस्सुद्दिअ[2]पासंडद्दुमसंडा
भारई अह्मारिसकेलिजोग्गं रूवअं कुणज्ज ?

### प्रभाविलासः

किंतु नाटकप्रणयनकालावधीति संप्रदायः । **श्रेयः**; अत्युत्कृष्टम् । प्रशस्य-
शब्दादीयसुनि "प्रशस्यस्य श्रः" इति श्रादेशे श्रेय इति रूपम् । श्रेयो-
निमित्तमिति वार्थः । **श्रुतिपथ्यम्**; श्रव्यं, वेदहितकारि वा; "वेदे
श्रवसि च श्रुतिः" इत्यमरः । एतादृशदिव्यप्रयोगप्रवर्तकत्वं भागधेयातिशया-
यत्तमिति निबन्धारमभिष्टौति—**श्रीमानिति**; "अन्तरिक्षगतः श्रीमान्"
"स तु नागवरः श्रीमान्" इतिवत् । **अर्थ्यम्**; अर्थादनपेतम् ।
**व्यधित**; कृतवान् ॥ १५ ॥

### प्रभावली

श्रुतप्रकाशिकया सह येन सः । **श्रीमान्**; ज्ञानभक्तिवैराग्यविद्यासदाचार-
संपन्नः । **नाथप्रीत्यै**; श्रीरङ्गनाथप्रीत्यर्थम् । **अर्थ्यम्**; महार्थगर्भितम् । **श्रेयः**;
प्रशस्ततरम् । **श्रुतिपथ्यम्**; श्रोत्रहितम्, उपनिषदामनुकूलं वा । **एतन्नाटकम्**;
संकल्पसूर्योदयाख्यम् । **व्यधित**; निरमिमीत ॥ १५ ॥

एवं प्रयोगकर्तृवैभवं श्रुत्वा नटी वेदान्तैकप्रवणस्य तस्य दुर्वादिगर्व-
सर्वंकषा वाग्वृत्तिरस्मन्नाट्ययोग्यं रूपकं कथं कुर्यादिति पृच्छति—**नटीत्यादि** ।
अय्य कहं णाम—आर्य कथं नाम । **एदस्स**—एतस्य । **एअंतणिअमंत**—
एकान्तनिगमान्त । **विआणसंदिअमाणसस्स**—वितानसंदितमानस्य । संदितं

[1] एअस्स—घ. क. [2] णिम्मूलिअ—ङ. च, छ.

(आर्य, कथं नामैतस्यैकान्तनिगमान्तवितानसंदितमानसस्य कर्कशतरतर्ककुलिशनिस्त्रटितपाषण्डद्रुमषण्डा भारती अस्मादृश-केलियोग्यं रूपकं कुर्यात्?)

सूत्रधारः—([1]सान्तर्हासम्) यदेतदुभयमार्या पर्यनुयुङ्क्ते, तत्र तावदादौ किमेनमप्रसक्त[2]निखिलकरणव्यापारमनुभवैकतानमान-समत्यन्तनिभृतावस्थं निबन्धारमवधारयसि। [3]अथापि ब्रूमः—

प्रभाविलासः

**संदितम्**; लग्नम्। **उभयम्**; एतस्येत्यादि कर्कशेत्यादि च। **एकतानम्**; अनन्यवृत्ति। **निबन्धारम्**; ग्रन्थकर्तारम्। प्रथमपर्यनु-

प्रभावली

संबद्धम्। **कक्कसअर**—कर्कशतर। **तक्ककुलिस**—तर्ककुलिश। **निस्सुट्ठिअ**; निस्त्रुटित। **पासंडद्दुमसंडा भारई**—पाषण्डद्रुमषण्डा भारती। **अम्हारिस केलिजोग्गं**—अस्मादृशकेलियोग्यम्। **रूवअं**—रूपकम्। **कुणज्ज**—कुर्यात्। अत्र प्रश्नद्वयमभिप्रेतम्। एकान्ततो निगमान्तबद्धमनस्कस्य कथं कवितारचनेच्छा? इच्छायामपि प्रगल्भवाग्वृत्तेः कथं ललितनाटकनिर्माणमिति। **सान्तर्हासम्**; प्रश्नद्वयस्यापि सुपरिहरत्वात् अन्तर्हासविशिष्टं यथा तथाह—**यदेतदिति**। **उभयम्**; अत्यन्तनिभृतावस्थस्य कथं कवितासक्तिः? कठिनवाग्वृत्तेः कथं ललितप्रयोगरचनेति यदेतदुभयं परिपृच्छसि। **तत्रादौ** विशेषणे। **निबन्धारम्**; प्रबन्धकर्तारम्। **अप्रसक्तनिखिलकरणव्यापारम्**; परित्यक्तवैषयिकव्यवहारम्। **अनुभवे**; ब्रह्मानुभवे। **एकतानमानसम्**; एकाग्रचित्तम्। **अत्यन्तनिभृता-वस्थम्**; अनभिमतविधिनिषेधमर्यादं किमवधारयसीति शेषः। **अथापि**; तथाविधं

[1] सान्तर्हासम् omitted—**घ**.
[2] अप्रवृत्त—घ. ङ. छ.
[3] तथापि—क.

**मनुव्यासप्राचेतसपरिषदर्हा क्वचिदियं**
**सुधासिक्ता सूक्तिः स्वयमुदयमन्विच्छति जने ।**
**निरुन्ध्युः के विन्ध्याचलविकटसंध्यानटजटा-**
**परिभ्रान्ता पङ्गोरुपरि यदि गङ्गा निपतति ॥ १६ ॥**

अन्यदपि निध्यायतु भवती—

**[1]गम्भीरभीषणगतिर्गिरिखण्डनादो**
**चूडापदं पशुपतेरपि घूर्णयन्ती ।**

**प्रभाविलासः**

योगस्योत्तरमाह—**मन्विति** । स्वयमुदये मन्वादय एव निदर्शनमिति भावः । विन्ध्याचलवत् विकटाः विस्तृताः दुष्प्रवेशा वा । सन्ध्यानटस्य रुद्रस्य या जटाः, तासु परिभ्रान्ता ॥ १६ ॥

द्वितीयस्योत्तरमाह—**गम्भीरेति** । **स्रोतांसीति** बहुवचनेन

**प्रभावली**

यद्यवधारयसि तथापीत्यर्थः । **मन्विति** । तथाविधस्यापि मन्त्रयन्त्रादीन् विना केवलभगवत्प्रसादात् पराङ्कुशादीनामिव कविता लब्धा चेत् केन निवारयितुं शक्यत इत्याह । **मनुव्यासप्राचेतसपरिषदर्हा** ; तत्प्रभाववदर्शीति भावः । ब्रह्मविदामपि मनुव्यासादीनां महाभारतादिप्रबन्धनिर्माणदर्शनादित्यभिप्रायेणोक्तम् । **सुधासिक्ता** ; अमृतसिक्तेवातिस्वादुतमा । **इयं सूक्तिः** ; प्रयोगरूपदिव्यसूक्तिः । **क्वचिज्जने** ; कस्मिंश्चित्पुरुषे । स्वयमेवोदयमन्विच्छति चेत् केन निवारयितुं शक्यत इति भावः । अर्थान्तरन्यासेन तद् द्रढयति—**निरुन्ध्युरिति** । **विन्ध्याचलवत्** विकटायां विशालायां संध्यानटस्य रुद्रस्य जटायां परिभ्रान्ता गङ्गा पङ्गोरुपरि यदि निपतति तां के निरुन्ध्युः । पङ्गुश्च प्रेक्षकाश्च निपातयितृ दैवं चेत्येतेषु के निरोद्धुं शक्ताः । न कोऽपीत्यर्थः ॥ १६ ॥

द्वितीयां शङ्कां निवारयति—**अन्यदपीति** । अन्यदपि ; द्वितीयशङ्कायाः परिहाररूपमन्यदपीदं **निध्यायतु** पश्यतु । **गम्भीरेत्यादि** । **गिरिखण्डनादो** ;

[1] दम्भोलि—ख.

स्वादुप्रसन्नसुभगानि[1] वसुंधरायां
स्रोतांसि दर्शयति किं न सुरस्रवन्ती ॥ १७ ॥

**नटी**—(सानन्दम्) जुत्तं एव्व एदं वाहित्तं अय्यस्स ।

### प्रभाविलासः

"सा तत्र पतिता दिक्षु चतुर्धा प्रतिपद्यते ।
सीता चालकनन्दा च वङ्क्षुर्भद्रेति वै क्रमात् ॥"

इति श्रीविष्णुपुराणोक्तिः स्मारिता । एवं प्रश्नोत्तरपरंपरारूपमुद्घात्यकं नाम वीथ्यङ्गमुक्तम् । तदुक्तं विद्यानाथेन—

"वीथ्यङ्गान्यामुखाङ्गत्वादुच्यन्तेऽत्र स्वभावतः ।
उद्घात्यकावलगिते प्रपञ्चत्रिगते छलम् ॥
वाक्केल्यधिबले गण्डमवस्यन्दितनालिके ।
असत्प्रलापव्याहारमृदवानि त्रयोदश ॥" ॥ १७ ॥

### प्रभावली

गिरीणां हिमवदादीनां खण्डनादौ । आदिशब्दादभिवातोत्प्लवनादि गृह्यते । तत्र विषये **गम्भीरा** अगाधा **भीषणा** भयंकरा गतिर्यस्याः सा । पशुपतेः चूडापदं शिरोऽपि भ्रामयन्ती गङ्गा । वसुंधरायां; भूमौ स्वादूनि प्रसन्नानि सुभगानि च स्रोतांसि प्रवाहान् किं न दर्शयति; दर्शयत्येव । तथा दुर्वादिखण्डनादौ तन्मनोभ्रमणे च कर्कशतरवाग्वृत्तेरप्यस्य कवेर्नाटकविषये ललिता वाक् प्रसरतीति भावः ॥ १७ ॥

**सानन्दम्**; संशयोच्छेदात् । **जुत्तं एव्व**—युक्तमेव । **एदं वाहित्तं**—एतद्व्याहृतम् । **अय्यस्स**—आर्यस्य । **तहवि**—तथापि । **संतो णाम रसो**—

[1] सलिलानि—क, ख.

तह वि संतो णाम रसो णत्थित्ति गंधव्वाअमदेसिएहिं समत्थि-
ज्जइ । ता एत्थ कहं तारिसस्स रसस्स णिवेसो ?

(युक्तमेवैतत् व्याहृतमार्यस्य । तथापि शान्तो नाम रसो नास्तीति गन्धर्वागमदेशिकैः समर्थ्यते । तस्मादत्र कथं तादृशस्य रसस्य निवेशः ?)

**सूत्रधार:**—(सावज्ञावहित्थम्) आर्ये, न खलु संभावयामि तानहं भरतमतपारदृश्वनः । (विमृश्य)

प्रभाविलास:

इति । **गन्धर्वागमे** च—

"शान्तस्य शमसाध्यत्वान्नटे च तदसंभवात् ।
अष्टावेव रसा नाट्येष्विति केचिदचूचुदन् ॥"

इत्यादि । **अवज्ञा**; शान्तरसो नास्तीति श्रवणकृता । **अवहित्था**; भरताचार्यैरुक्तमित्यवज्ञागोपनम । "अवहित्थाकारगुप्तिः" इत्यमरः । एवमन्योन्यवाक्याधिक्यरूपमधिबलं नामामुखाङ्गमुक्तम् । आकारगोपनफलमाह—

**प्रभावली**

शान्तो नाम रसः । **णत्थित्ति**—नास्तीति । **गंधव्वाअमदेसिएहिं**; गन्धर्वागमदेशिकैः भरतमताचार्यैः । **समत्थिज्जइ**—समर्थ्यते । **ता**—तस्मात् । **एत्थ**—अत्र । **कहं**—कथम् । **तारिसस्स**—तादृशस्य । **रसस्स**—रसस्य । **णिवेसो**—निवेशः । सावज्ञावहित्थमाह । भरतमताचार्यविषया अवज्ञा अनादरः । अवहित्था तदाकारगोपनम् । तत्सहितं यथा तथा । **तान्**—शान्तरसाभाववादिनः भरतमताचार्यान् न गणयामि खलु । इदमवज्ञावचनम् । **विमृश्य**; शान्तरसा-

**अथवा तादृशान् सभ्यान् मत्वा जगति दुर्लभान् ।**
**शङ्के शान्तिरसोल्लासमशक्यमभिमेनिरे**[1] **॥ १८ ॥**

[2]अपि च ;

**असभ्यपरिपाटिकामधिकरोति शृङ्गारिता**
**परस्परतिरस्कृतिं परिचिनोति वीरायितम् ।**

प्रभाविलासः

**अथवेति । तादृशान् ;** शान्तरसनिष्ठान् । **दुर्लभान् मत्वे**त्यनेन "नटे च तदसंभवात्" इति विवृतम् । कुत एतदवगम्यते ? प्रकरणादिति ब्रूमः । उक्तं च तत्रैव—

"शृङ्गारवीरकरुणा रौद्रहास्यभयानकाः ।
बीभत्सश्चाद्भुतः शान्तो नवधेति रसाः स्मृताः ॥"

इति । शान्तरसस्य विभावादिकथनाच्च । अनेन श्लोकेन रसवशादुक्तान्यथाख्यापनरूपमवलगितं नामामुखाङ्गमुक्तम् ॥ १८ ॥

अतिमथने रसान्तराणामाभामतया शान्तरस एव परिशिष्यत इत्याह—**असभ्येति । परिपाटिकाम् ;** रीतिम् । **शृङ्गारिता ;** शृङ्गार-

प्रभावली

भाववचनमालोच्य । **अथवेति** तदाकारगोपवचनम् । **तादृशान् ;** शान्तरसाभिनयद्रष्टॄन् सभ्यान् जगति दुर्लभान् मत्वा शान्तिरसाभिनयमशक्यतया तेऽभिमेनिर इति शङ्के विचारयामि । न तु वस्तुतः शान्तिरसाभावादित्यर्थः ॥ १८ ॥

अथ शान्तिरस एव सतां मनोहरत्वान्मुख्यः । शृङ्गारादिरसास्तुच्छा इत्याह—**अपिचेत्यादि । शृङ्गारिता ;** शृङ्गाररसवत्ता ; शृङ्गाररस इत्यर्थः ।

[1] मिति मेनिरे—क, ख.

[2] अपि च omitted—क, ख, ङ. अन्यदपि चैतदाकर्णयतु भवती यदेतदौपनिदैरुद्रष्यते added after—ङ.

विरुद्धगतिरद्भुतस्तदलमल्पसारैः परैः
शमस्तु परिशिष्यते शमितचित्तखेदो रसः ॥ १९ ॥

### प्रभाविलासः

रसवत्ता । **वीरायितम्**; वीरवदाचरितम् । **परैः**; करुणहास्यादिभिः । **शमितचित्तखेद** इति परिशेषहेतुः । शृङ्गारहास्यबीभत्सेषु शिष्टगर्हाकृतः खेदः । वीरे तिरस्कारकृतः । अद्भुतेऽनुपपत्तिकृतः । रौद्रे भयानके च "भयं भीताद्धि जायते" इति न्यायकृतः । करुणे खेदरूपो दोषः । शान्तरसे नोक्तदोषा इत्यर्थः । उक्तं च शृङ्गारशास्त्रे—

"न यत्र दुःखं न सुखं न चिन्ता
न द्वेषरागौ न च काचिदिच्छा ।
रसः स शान्तः कथितो मुनीन्द्रैः
सर्वेषु भावेषु समप्रमाणः ॥"

इति ॥ १९ ॥

### प्रभावली

**असभ्यं**; सभायोग्यं न भवति । असभ्यस्य पद्धतिमधिकरोति; आश्रयत इत्यर्थः । **वीरायितम्**; वीरवदाचरितम्; वीररस इत्यर्थः । **परस्परतिरस्कृतिम्**; वीराणामन्योन्याभिभवम् । **परिचिनोति**; प्रकाशयतीत्यर्थः । अत्र वीरः शृङ्गार इति वक्तुमुचितत्वेऽपि शृङ्गारिता वीरायितमिति निर्देशादिदं ज्ञाप्यते—शृङ्गारादिरसास्तु न स्वरूपतोऽसभ्याः; किं त्वाश्रयविषयविशेषादिति । अन्यथा पराङ्कुशादिप्रबन्धानां चिन्तयन्त्यादिवृत्तीनां चासभ्यत्वप्रसङ्गः । **अद्भुतः**; अद्भुतरसः । **विरुद्धगतिः**; अनुपपन्नार्थदर्शकत्वात् । **तत्**; तस्मात् । **अल्पसारैः**; तुच्छैः । **परैः**; बीभत्सादिरसैः अलम् । **शमो रसः**; शान्तिरस एव । **शमितचित्तखेदः**; मनोदुःखशामकः । **रसत्वेन परिशिष्यते**; परिशेषात् शान्तिरेव रसः, नान्य इत्यर्थः । अन्यरसानां चित्तखेदकरत्वमप्युक्तं भवति ॥ १९ ॥

**नटी—**[1]अय्य, होदु णाम सणअसणंदणादिमुणिअणसंगहीदो सो वि तारिसो रसो। तह वि [2]कहं णिप्पंदणिहिलकलणणिप्पादणिज्जजोअप्पहाणो एसो सव्वजणपेक्खणिज्जेण [3]णाडअउत्तंतेण संपाइज्जइ ?

(आर्य, भवतु नाम सनकसनन्दनादिमुनिजनसंगृहीतः सोऽपि तादृशो रसः। तथापि कथं निष्पन्दनिखिलकरणनिष्पादनीययोगप्रधान एष सर्वजनप्रेक्षणीयेन नाटकवृत्तान्तेन संपाद्यते ?)

**सूत्रधारः—**आर्ये, मैवं वादीः। न हि वयमवधूतनिखिलधर्माणामलेपकानां मतमभिनेष्यामः, येनैवमाशङ्कसे। सन्ति[4] खलु भगवता गीताचार्येण सहस्रशः प्रतिपादिताः सात्त्विकेन त्यागेन

प्रभाविलासः

**न हीति।** **अलेपकाः;** सांख्याः। **गीताचार्यः;** श्रीकृष्णः। **सात्त्विकेन त्यागेन;** फलसङ्गत्यागेन,

प्रभावली

**नटीत्यादि। अय्य होदु णाम**—आर्य भवतु नाम। भवतु नामेति शान्तिरसस्याङ्गीकारः। **सणअसणंदणादिमुणिअणसंगहीदो**—सनकसनन्दनादिमुनिजनसंगृहीतः। संगृहीतः; परिगृहीतः। **सो वि तारिसो रसो**—सोऽपि तादृशो रसः। सनकादिपरिगृहीतत्वात् शान्तिरसोऽप्यस्तु नाम। **तह वि**—तथापि। **कहं**—कथम्। **णिप्पंदणिहिलकलणणिप्पाअणिज्जजोअप्पहाणो एसो**—निष्पन्दनिखिलकरणनिष्पादनीययोगप्रधान एषः; शान्तिरस इत्यर्थः। **सव्वजणपेक्खणिज्जेण**—सर्वजनप्रेक्षणीयेन। **णाडअउत्तंतेण**—नाटकवृत्तान्तेन।

[1] अय्य omitted—क, ग.
[2] कहं उण—ख.
[3] णडउत्तंतेण—ग.
[4] किंतु सन्ति इति प्रभावलीसंमतः पाठः।

परिकर्मिता निवृत्तिधर्मपद्धतिनियता विविधा व्यापाराः, यदभिनयेन रङ्गोपजीविनामाजीवावकाशः। अपिचेदं निशमयतु निशामयतु वा नाट्यवैभवं भवती। श्रूयते हि—

प्रभाविलासः

"कार्यमित्येव यत्कर्म नियतं क्रियतेऽर्जुन।
सङ्गं त्यक्त्वा फलं चैव स त्यागः सात्त्विको मतः॥"

इत्यभिधानात्। **रङ्गोपजीविनाम्;** नटानाम्; श्रीरङ्गनित्यवासिनां श्रीवैष्णवाग्रेसराणां च। **आजीवः;** देहयात्रा, आत्मसत्ता च। **निशमयतु;** शृणोतु। **निशामयतु;** पश्यतु। नाटकाभिनयानर्हं लोके किमपि वस्तु

प्रभावली

**संपाइज्जइ**—संपाद्यते। न हि वयमित्यादि। **अवधूतनिखिलधर्माणाम्;** त्यक्तश्रुतिस्मृतिधर्माणाम्। अलेपकानाम्; धर्मत्यागेऽपि पापलेपो नास्तीति वादिनां सांख्यादीनां केषांचित्। आशङ्कसे; आशङ्कां करोषि। **किंतु** इति विशेषः। **सन्तीत्यादि**। **सात्त्विकेन त्यागेन;**

"कार्यमित्येव यत्कर्म नियतं क्रियतेऽर्जुन।
सङ्गं त्यक्त्वा फलं चैव स त्यागः सात्त्विको मतः॥"

इत्युक्तेन क्रियामाणेषु कर्मसु स्वस्य स्वतन्त्रकर्तृत्वादित्यागरूपेण सात्त्विकत्यागेनालंकृताः। **निवृत्तिधर्मेति;** निवृत्तिधर्मो मोक्षधर्मः। **विविधाः;** अभिगमनोपलेपनमालाबन्धनदीपारोपणादयः। **यदभिनयेन;** येषामनुकरणेन। **रङ्गोपजीविनाम्;** नर्तकानाम्। **आजीवस्य;** जीविकायाः अवकाशः। अथ नाटकवैभवं दर्शयति—**अपिचेत्यादि**। **निशमयतु;** शृणोतु शब्दतः। **निशामयतु;** पश्यतु अर्थत इति भावः। **श्रूयते;** लोके परंपरया, श्रुतौ क्वचिदिति

न तच्छास्त्रं न सा विद्या न तच्छिल्पं न ताः कलाः ।
नासौ योगो न तज्ज्ञानं नाटके यन्न दृश्यते ॥ २० ॥

इति ।

नटी—अइदुक्खरमारद्धं तुह्मेहिं । अहं उण इत्थिआसुहाव[1]घोलंतहिअआ मच्चर[2]ग्गहग्गहिआदो पडिपक्खपंडिअजणादो भअकंपिदह्मि ।

(अतिदुष्करमारब्धं युष्माभिः । अहं पुनः स्त्रीस्वभावघूर्णमानहृदया मत्सरग्रहगृहीतात्प्रतिपक्षपण्डितजनाद्भयकम्पितास्मि ।)

### प्रभाविलासः

नास्तीत्यत्रामृतानन्दीयश्लोकमुदाहरति —न तदिति । विद्यापदेन ब्रह्मविद्योच्यते । कला इतीतरविद्याः ॥ २० ॥

### प्रभावली

वा । न तदिति । नाटके नाट्ये यन्न दृश्यते नाभिनीयते, तच्छास्त्रमप्यशास्त्रम । शास्त्रशब्दोऽत्र वेदपर्यायः । विद्याशब्देन वेदाङ्गान्युच्यन्ते । शिल्पम् ; आयुर्वेदादि । कलाः ; चतुःषष्टिसंख्याताः ऋग्यजुःसामादयः । योगः ; यमनियमादिः । ज्ञानम् ; ब्रह्मज्ञानम् । अत्रान्योन्यान्तर्भावेऽपि गोबलीवर्दन्यायो व्यवस्थापकः । विद्यादयोऽपि नाटकाविषयत्वे विद्या न भवन्तीत्यर्थः ॥ २० ॥

अथ प्रतिपक्षजनाद्भयमाशङ्कते—नटीत्यादि।अइदुक्खरं—अतिदुष्करम् । आरद्धं—आरब्धम । तुम्हेहिं—युष्माभिः । अहं उण—अहं पुनः । इत्थिआसुहावडोलंतहिअआ ; स्त्रीस्वभावडोलायमानहृदया । मच्चरग्गहग्गहिआदो—मत्सरग्रहगृहीतात् । पडिपक्खपंडिअजणादो—प्रतिपक्षपण्डितजनात । भयकं-

[1] डोलंत—क ; चंचल—ख.   [2] ग्गह omitted—क.

**सूत्रधार:**—आर्ये, अलं कातर्येण । अद्य खल्वस्माकमभिमुखं भागधेयम् । तथाहि—

**लक्षणसमृद्धिरनघा रसपरिपोषश्च सहृदयग्राह्यः ।**
**संपतति नाटकेऽस्मिन् स एष शैलूषसुकृतपरिपाकः ॥ २१ ॥**

किंच ;

**विद्यासंपन्निधिरवहितो वेंकटेश: कवीन्द्रः**
**सिद्धारम्भश्चिरमभिनये मामक: पात्रवर्गः ।**
**प्रख्यातेयं परिषदनघा पक्षपातानभिज्ञा**
**रामादीनां कुलधनमिदं रङ्गतां याति रङ्गम् ॥ २२ ॥**

प्रभाविलास:

**लक्षणेति । लक्षणसमृद्धि: ;** चतु:षष्ट्यङ्गसंपत्तिः । **सहृदयग्राह्य: ;** रसभावनाचतुरवेद्यः ॥ २१ ॥

साधनान्तरानुकूल्यमाह—**विद्येति । अवहित: ;** प्रमादरहितः । **अनघा ;** दोषारोपरहिता । तत्र हेतुमाह—**पक्षपातेति । कुलधन**मित्यनेन

प्रभावली

**पिदह्मि**—भयकम्पितास्मि । **भागधेयम् ;** भाग्यम् , अभिमुखं भवति । उक्तं प्रतिपादयति—**तथाहीत्यादिना । अस्मिन् नाटके ;** संकल्पसूर्योदये । **अनघा ;** दोषरहिता । **लक्षणानां** नाटकलक्षणानां **समृद्धि:** पौष्कल्यम् । **सहृदया: ;** मात्सर्यरहिता: । तैर्गृह्यमाणो रसानां शृङ्गारादीनां परिपोष: समृद्धि: **संपतति** संसृष्टो भवति । **स एष शैलूषाणां** नर्तकानां **सुकृतपरिपाक**विशेष: खलु ॥२१॥

सामग्र्यन्तरमप्याह—**विद्येति ।** विद्यासंपदां निधि: **वेंकटेश: कवीन्द्र:** श्रीमान्वेदान्ताचार्य: **अवहित:** सावधान: संनिहितो वर्तते । **मामक: पात्रवर्गश्च;** मदीय: पात्राणामभिनेतॄणां वर्गश्च **चिरमभिनये** नटने **सिद्धारम्भ:** प्राप्तबहुपरिचय: । **इयं परिषच्च अनघा** हेयगुणरहिता पक्षपातरहितेति **प्रख्याता ।**

अन्यच्च भवत्या भावनीयम्—

**शमधननिधिं सत्त्वप्रायं प्रयोगमयोगिनः**
**स्वगुणवशतः स्तोतुं यद्वा वरीवृतु निन्दितुम् ।**
**किमिह बहुभिः किं नश्छिन्नं न विश्वमनीश्वरं**
**तदुपनिहिता जाग्रत्येवं चतुर्दश साक्षिणः ॥ २३ ॥**

### प्रभाविलासः

"लब्ध्वा कुलधनं राजा लङ्कां प्रायाद्विभीषणः" इति श्रीरामायणोक्तिः स्मारिता ॥ २२ ॥

**शमधनेत्यादि** । अत्र शमेत्यात्मगुणानां दमादीनामप्युपलक्षणम् । शमादय एव धनं, तस्य निधिरावासः, तम् । **सत्त्वप्रायम्**; सत्त्वप्रकृतिविवेकादिपात्रप्रचुरम् । तेन चासात्त्विकमोहादेरप्रचुरता गम्यते । **अयोगिनः**; राजसतामसप्रकृतयः । **स्वगुणेति**; गुणशब्देन राजसतामसगुणौ विवक्षितौ । **वरीवृतु**; वृञ् वरणे इति धातुः[1] । **इह**; लोके । **बहुभिः**; अयोगिभिः **किं** कार्यमित्यर्थः । **नः**; अस्माकम् । **किं छिन्नम्**; किं

### प्रभावली

**रामादीनाम्**; इक्ष्वाकुवंश्यानां कुलधनभूतमिदं रङ्गं श्रीरङ्गं रङ्गतां नृत्तस्थानतां याति । इतः परं किमपेक्षणीयमित्यर्थः ॥ २२ ॥

**अन्यदपीति** । श्रीवेंकटेशगुरुः स्वाभिप्रायं नटवाक्येन प्रकाशयति— **शमधनेति** । **अयोगिनः**; अब्रह्मविदः, अशान्ताश्च । **शमधनाः**; शान्ताः मुनयः, तेषां निधिवदभिमतम् । **सत्त्वप्रायम्**; सत्त्वगुणप्रचुरं, सत्त्वस्य प्रचुरप्रतिपादकमित्यर्थः । **इमं प्रयोगम्**; नाटकम् । **स्वगुणवशतः**; स्वकीयराजसतामसगुणवशात् । **स्तोतुं वरीवृतु**; भृशं वृण्वताम्; स्तोतुमारभन्ताम् । यद्वा निन्दितुं गर्हितुमारभन्ताम् । तेषां स्तुतिर्न स्तुतिः; निन्दा च न निन्देत्यर्थः । **इह**;

[1] वृञ् वरणे इति धातोर्यङ्लुगन्तस्य लोटि प्रथमपुरुषबहुवचने वरीवृतु इति रूपम् ।

[1]अपिच नूनमतर्कितोपनता अप्यचिरद्युतिवदारम्भ[2]समयनियतावसाना मनीषिणामीर्ष्यादयः । अथवा ;

प्रभाविलासः

न्यूनम् । **तदुपनिहिताः** ; ईश्वराज्ञावर्तिनः "भीषास्माद्वातः पवते । भीषोदेति सूर्यः । भीषास्मादग्निश्चेन्द्रश्च । मृत्युर्धावति पञ्चम इति" इति श्रुतेः । **साक्षिणः** ; आदित्यादयः । तदुक्तम्—

"आदित्यचन्द्रावनिलोऽनलश्च द्यौर्भूमिरापो हृदयं दिशश्च ।
अहश्च रात्रिश्च उभे च सन्ध्ये धर्मश्च जानाति नरस्य वृत्तम् ॥"

इति ॥ २३ ॥

विवेकिनां क्वचित् प्रमादात् प्रवृत्तमपि मात्सर्यं शीघ्रं निवर्तिष्यत इत्याशयेनाह—**अपिचेति** । **अचिरद्युतिः** ; विद्युत् । **आरम्भसमयनियतावसानाः** ; आरम्भसमय एव नियतमवसानं नाशो येषां ते तथोक्ताः । तत्क्षणानिवृत्तावपि प्रयोगचातुर्यविशेषदर्शनक्रमेण मात्सर्यनिवृत्तिक्रममभिनयन् पक्षान्तरमवलम्बते—**अथवेति** । प्रथमं तावत् मा-

प्रभावली

अस्मिन् विषये । किं बहुभिः प्रलापैः । **किं नश्छिन्नम्** ; तन्निन्दादिभिरस्माकं का वा हानिः । **इदं विश्वमनीश्वरं न भवति** ; विश्वेश्वरो भगवानस्य सौष्ठवं जानाति । **एवम्** ; किंच । **तदुपनिहिताः** ; तेन जगति स्थापिताः । **चतुर्दश साक्षिणः** ; "आदित्यचन्द्रौ" इत्यारभ्य "धर्मश्च जानाति नरस्य वृत्तम्" इत्युक्ता लोकसाक्षिणो **जाग्रति** जानन्तीत्यर्थः ॥ २३ ॥

अयोगिनामपीर्ष्यादयः क्षणिका इत्याह—**अपिचेत्यादि** । **अतर्कितोपनताः** ; अवशादागता अपि । **अचिरद्युतिवत्** ; विद्युद्वत् । उत्पत्तिक्षण एव **नियतावसानाः** ; जातमात्रा एव नष्टा भवन्तीत्यर्थः । **ईर्ष्या** ; आसूया । आदिशब्दोऽत्र द्वेषादिपरः । दीर्घमत्सरत्वेऽपि प्रयोगपदवीसारस्यातिशयादवशादिमं

[1] अपि च omitted—क, ग.   [2] समय omitted—क, ख.

**मौनं बिभ्रतु मत्सरेण नमितास्तूर्णं त एव ध्रुवं**
**कालोन्निद्रकदम्बगोलवपुषः कम्पस्फुरन्मौलयः ।**

प्रभाविलासः

त्सर्यौत्कटच्येन स्तम्भीभावमाह—**मौनमिति** । सुहृदां प्रयोगविस्मयनीयत्वं पक्षपातादिना सेत्स्यति ; द्विषतां तु याथातथ्येनैवेत्याशयेनाह— **त एवेति** । स्तम्भौत्कटच्येन बाह्यव्यापारविलम्बेऽप्यान्तरव्यापारस्याविलम्बमाह—**तूर्णमिति** । "आत्मा वेद शुभाशुभम्" इति स्वहृदयसंवादं तावत् प्रतिजानाति—**ध्रुवमिति** । अथ किंचिदान्तरविलयनेन पुलकोद्भेदमाह—**कालोन्निद्रेति** । काले वर्षाकाले उन्निद्राणि यानि कदम्बपुष्पाणि तेषां गोलवत् पालीवत् सूक्ष्मकण्टकितं वपुर्येषां ते तथोक्ताः । अत्र कालग्रहणं पुष्पबाहुल्यकथनार्थम् । अनेन रसाभिव्यञ्जकसात्त्विकभाव उक्तः । पुनः प्रयोगसारस्यातिशयदर्शनपारवश्येन बाह्यचेष्टामाह **कम्पेति** । कम्पेन शिरःकम्पेन स्फुरन्तश्चलन्तो मौलयः किरीटानि येषां ते तथोक्ताः । विरोधिनां प्राबल्यं दर्शयितुं मौलिग्रहणम् । किरीटखचितरत्नप्रभाचलनव्यञ्जनार्थं स्फुरदित्युक्तम् । हन्तैषां प्रयोगमहत्त्वमविज्ञाय वृथा मात्सर्यं कृतमिति क्रमेण व्रीडा जातेत्याह **किंचिद्व्रीडितेति** । अनन्तरं

प्रभावली

प्रयोगं प्रशंसिष्यन्तीत्याह—**अथवेति** । **मत्सरेण नमिताः** ; मत्सराक्रान्ततया प्रथमं नमितशिरसः प्रतिपक्षपण्डिताः प्रयोगप्रस्तावे मौनं बिभ्रतु । संभावनायां लोट् । अनन्तरं **त एव** ; मौनिन एव । **तूर्णम्** ; क्षणात् । **कालोन्निद्रकदम्बगोलवपुषो भवन्ति ध्रुवम्** ; कालोन्निद्राणां कदम्बपुष्पाणां गोलवत् संस्थानवत् रोमाञ्चितवपुषो भवन्ति । अनन्तरं **कम्पेन स्फुरन्मौलयश्च भवन्ति** । अवशात्

**किंचिद्व्रीडितकुञ्चिताक्षमवशादुत्तानदत्ताननाः**
**प्रस्तोष्यन्त्यवधिं प्रयोगपदवीसारस्यसारस्य नः ॥ २४ ॥**

सन्तु वा निरन्तरनियमितमत्सरनीरन्ध्रहृदया निर्विकाराः ; तथापि[1] सर्वथा तावत्,

**उपवेदमुदारधीः स्वनाम्ना भरतः सूचितभावरागतालम् ।**
**यमुदाहरति स्म विश्वभोग्यं[2] तदभिज्ञैरबहिष्कृता वयं स्मः ॥ २५ ॥**

### प्रभाविलासः

दर्शनौत्सुक्येनाकारगोपनसंभवेन किंचिन्नेत्रसंचारमाह—**कुञ्चितेति** । आकारगोपनाशक्त्या व्रीडात्यागोऽनिच्छातोऽपि सेत्स्यतीत्याह—**अवशादिति** । सुहृन्मुखावलोकनादिनानुमोदनपूर्वकमवलोकनमाह—**उत्तानदत्तेति** । क्रमेण सवासनमात्सर्यनिवृत्तिफलमाह—**प्रस्तोष्यन्तीति** । **अवधिम् ;** अतिशयकाष्ठाम् । **प्रयोगपदवीसारस्यस्य ;** प्रयोगमार्गसरसतायाः, सारः स्थिरांशः "सारो बले स्थिरांशे च" इति निघण्टुः, तस्य ॥ २४ ॥

भरतशास्त्रस्यापि सम्यगालोचितत्वात् तत्प्रविष्टैरपि न रन्ध्रगवेषणस्यावसर इत्याह—**उपवेदमिति** । **उपवेदम् ;** सामवेदोपवेदम्, 'साम-

### प्रभावली

शिरःकम्पं कुर्वन्तीत्यर्थः । अनन्तरमवशाद्बलात्कारतः किंचिद् व्रीडितमीषल्लज्जान्वितं कुञ्चितं तिर्यक्कूणितमक्षि यस्मिन् कर्मणि तद्यथा तथा । उत्तानं यथा तथा दत्तमाननं यैस्ते । सलज्जमुद्यताननाः सन्तः लज्जां परित्यज्य नः अस्माकं प्रयोगपद्धतेः यत्सारस्यं सरसत्वं, तस्य यः सारः श्लाघ्यांशः, तस्यावधिमुत्कर्षं सीमानं प्रस्तोष्यन्ति प्रस्तावं करिष्यन्ति । ध्रुवं निश्चितमिति ॥ २४ ॥

वयं च सर्वथा भरतशास्त्रपरिज्ञानवन्त इत्याह—**सर्वथेत्यादि** । **उदारधीः ;** महाबुद्धिः । **भरतः ;** भरतशास्त्रकूटस्थः । **स्वनाम्ना ;** भरत इति त्र्यक्षरेण ।

[1] तथापि omitted—क.

[2] विश्वगुह्यै—क ; विश्वगोप्येति प्रभाविलाससंमतः पाठः ।

**नटी—**अय्य, एव्वं एदं। तह वि सुअगुरुएसु बहुसु विरुद्धेसु छिद्दं गवेसंतेसु कहं अप्पमत्तेहिं अह्मेहिं पडिण्णादं णिव्वह-णिज्जं?

(आर्य, एवमेतत्। तथापि श्रुतगुरुकेषु बहुषु विरुद्धेषु[1] छिद्रं गवेषयत्सु कथमप्रमत्तैरस्माभिः प्रतिज्ञातं निर्वहणीयम्?)

### प्रभाविलासः

वेदस्य गान्धर्ववेद उपवेदः' इति चरणव्यूहोक्तेः। **स्वनाम्ना;** भरतेति वर्णत्रयरूपेण रागिविरागिसाधारण्येन **विश्वगोप्ते**त्युक्तम्। **तदभिज्ञैः;** अनवरतपरिचितगान्धर्वविद्याविनोदन प्रसादितपरमपुरुषैरित्यर्थः। **अबहि-ष्कृताः;** बहिष्कृतेभ्योऽन्ये; बहूकृता इति यावत्॥ २५॥

### प्रभावली

**सूचितभावरागतालम्** यथाक्रमं सूचिता भावरागतालाध्याया यस्मिन्। **यमुप-वेदम्;** गान्धर्ववेदम्। **विश्वगुरुर्ये उदाहरति स्म,** उदाहृतवान्। **तदभिज्ञैः;** गान्धर्ववेदाभिज्ञैः। **वयमबहिष्कृताः स्मः;** अन्तरङ्गतया स्वीकृताः स्म इत्यर्थः॥ २५॥

बहुशास्त्रश्रवणवद्भ्यः प्रतिपक्षेभ्यो भयं शङ्कते—**नटीत्यादि**। **एव्वं एदं**—एवमेतत। **तहवि**—तथापि। **सुअगुरुएसु**—श्रुतगुरुकेषु; बहुश्रुतेष्वित्यर्थः। **बहुसु**—बहुषु। **विरुद्धेसु;** प्रतिपक्षेषु। **छिद्दं गवेसंतेसु**—छिद्रं गवेषयत्सु। **कहं;** कथम्। **अप्पमत्तेहिं**—अप्रमत्तैः; सावधानैरित्यर्थः। **अह्मेहिं**—अस्माभिः। **पडिण्णादं**—प्रतिज्ञातम्। **णिव्वहणिज्जं**—निर्वहणीयम। अयीत्यव्ययं संबोधने।

[1] विदग्धेषु इति प्रभाविलाससंमतः पाठः।

**सूत्रधारः**—अयि परगुणसंतोषिणि, श्रुतबाहुल्ये तव केयमास्था। अथवा अवधारितपरमार्थानामप्यवगतसंवादनार्थमुत्तरोत्तरं परिप्रश्नाः प्रवर्तन्ते। [1]भवतु नाम। विशुद्धविद्यांस्तावत्[2] बहुमन्यस्व। दृश्यते हि;

**भूयसीरपि कलाः कलङ्किताः**
**प्राप्य कश्चिदपचीयते शनैः।**

प्रभाविलासः

**विदग्धेषु;** निपुणेषु। **भूयसीरिति**। **कलाः**; विद्याः, षोडशांशभागांश्च। "कला शिल्पे कालभेदे विद्यायां षोडशांशके" इति निघण्टुः। **कलङ्किताः;** सलाञ्छनाः, सविचिकित्सादिकाश्च। **गिरी-**

**प्रभावली**

परगुणसंतोषिणीत्यनेन स्वकीयगुणान् न श्लाघस इति द्योत्यते। **श्रुतबाहुल्ये;** शास्त्रश्रवणबाहुल्ये। **केयमास्था;** को वायमादरः। ज्ञातपरमार्थानामपि ज्ञातार्थस्थिरीकरणायोत्तरोत्तरमज्ञवत्प्रश्नाः प्रवर्तन्ते। त्वयापि तथा क्रियत इति भावः। **भवतु नाम;** प्रश्नाः प्रवर्तन्तां नाम। तत्तिष्ठतु। **विशुद्धविद्यान्;** दृढपरिचितविद्यान्। **तावत्;** प्रथमम्। **बहु;** अधिकान् मन्यस्व। अशुद्धविद्येभ्य इति शेषः। अशुद्धविद्या नाम बहुश्रुतत्वेऽप्यदृढपरिचितविद्याः। उक्तमर्थं लोके सदृष्टान्तं संदर्शयति—**दृश्यते हीति**। **कश्चित्;** पुरुषः चन्द्रश्च। **कलङ्किताः;** कलङ्कयुक्ताः शङ्काकलङ्किताश्च। **भूयसीः;** बह्वीः। **कलाः;** विद्याः षोडशकलाश्च। **प्राप्यापि;** अधिकृत्यापि। **शनैः;** क्रमेण। **अपचीयते;** हीयते, अन्यत्र क्षीणो भवति।

[1] भवतु नाम omitted—क.

[2] विद्यां बहुमन्यस्व—क.

**एकयापि कलया विशुद्धया**
**योऽपि कोऽपि भजते गिरीशताम् ॥ २६ ॥**

तदहमिदानीं पराशरपाराशर्यादिबहुमताम् अबहुमतदुर्विनीतजनचित्तवृत्तिम् अनवरतपरिचितगान्धर्वविद्याविनोदनप्रसादितपरमपुरुषां परावरतत्त्वयाथात्म्यवेदिनीमेतां परिषदमेकतानयामि। (सप्रश्रयमञ्जलिं बद्ध्वा) श्रृण्वन्त्वार्यमिश्राः[1]—

प्रभाविलासः

**शताम्;** वागीश्वरताम्, अन्यत्र शिवताम्। उभयत्रापि शशाङ्कतच्छेखरौ निदर्शितौ ॥ २६ ॥

**तदहमिति। एकतानयामि;** अनन्यवृत्तिं करोमि "एकतानोऽनन्यवृत्तिः" इत्यमरः। प्रबन्धप्रमेयं संक्षेपतो दर्शयन् सामाजिकानां

प्रभावली

कलङ्कितत्वे संपूर्णकलत्वमप्यपचयहेतुरेव भवति। **योऽपि कोऽपि;** यः कश्चिदपि, अज्ञातकुलगोत्रोऽपि। **विशुद्धया;** कलङ्करहितया शङ्कादिरहितया च। **एकयापि** कलया धृतया, **गिरीशतां** गिरामीशः गिरीशः, तत्तां, रुद्रतां सर्वज्ञतां च भजते ॥ २६ ॥

एवं नटीं समाधाय स्वस्योत्तरकृत्यमाह—**तदहमिति।** तत्; तस्मात्, एवं निर्णयात्। **बहुमताम्;** पूज्यतमाम्। **अबहुमतदुर्जनचित्तवृत्तिम्;** अनादृतदुर्जनमनोवृत्तिम्। **अनवरतेति;** सततं **परिचितं** परिचरणरूपेण **कृतं** गान्धर्वविद्याया विनोदनं, तेन प्रसादितः परमपुरुषो यया ताम्। **एकतानयामि;** अनन्यवृत्तिं

[1] श्रृण्वन्त्वार्यमिश्राः omitted—ग.

**विवेकप्रारम्भे विमतमतभङ्गप्रयतने**
**मुमुक्षासंसिद्धौ मुरमथनयोगे च सफले ।**
**मुखादीन्निध्यातुं निभृतमिह नाट्ये कृतमुखै-**
**र्भवद्भिः स्थातव्यं भरतमतधौरेयमतिभिः ॥ २७ ॥**

### प्रभाविलासः

सावधानतां प्रार्थयते—**विवेकेति** । **विवेकप्रारम्भः**; पुरुषमोचनोद्योगः । अयमत्र प्रतिपाद्यसंग्रहः—प्रथमेऽङ्के पुरुषमोचनोद्योगः । द्वितीये परपक्षभङ्गः । तृतीये मुक्त्युपायारम्भः । चतुर्थे कामादिव्यूहभङ्गः । पञ्चमे दम्भाद्युपालम्भः । षष्ठे स्थानविशेषसंग्रहः । सप्तमे शुभाश्रयनिर्धारणम् । अष्टमे मोहादिभङ्गः । नवमे समाधिसंभवः । दशमे निःश्रेयसलाभ इति । एवं काव्यप्रतिपाद्येषु श्लोककण्ठोक्तेषूपलक्षितेषु च **मुखादीन्** "मुखं प्रतिमुखं गर्भः सावमर्शोपसंहृतिः" इत्युक्तसन्धीन् । **निध्यातुम्**; निरीक्षितुम् । **इह नाट्ये कृतमुखैः**; कुशलैः "कृतमुखः कृती कुशलः" इत्यमरः । **भवद्भिः निभृतं** निश्चलं स्थातव्यम् । अत्र विवेकप्रारम्भ इत्यादिसप्तम्यन्तपदपञ्चकेन आरम्भयत्नप्राप्त्याशानियताप्तिफलागमा उच्यन्ते । एषु पञ्चसु मुखादीनां

### प्रभावली

करोमि; अभिमुखीकरोमि । **सप्रश्रयम्**; सविनयम् । **विवेकेति** । विवेकस्य नायकस्य प्रारम्भे जीवस्य निःश्रेयसप्रापणरूपे उद्योगे बीजारम्भसमन्वयात्मके प्रथमेऽङ्के । **विमतानां** निःश्रेयसप्राप्तिविरुद्धानां मतानां बाह्यकुदृष्टिमतानां **भङ्गस्य प्रयतने** बिन्दुयत्नसमन्वयरूपे द्वितीयेऽङ्के । **मुमुक्षायाः** मोक्षेच्छायाः **संसिद्धौ** संभवे पताकाप्राप्त्याशासमन्वयरूपे तृतीयचतुर्थपञ्चमषष्ठसप्तमाष्टमेष्वङ्केषु । **सफले**; मोक्षलाभसहिते कार्यफलागमसमन्वयरूपदशमाङ्कार्थसहिते । **मुरमथनस्य योगे** समाधौ; प्रकरीनियताप्तिसमन्वयरूपे नवमे चाङ्के । **मुखादीन्**; मुखप्रतिमुख-

## प्रभाविलासः

पञ्चानां क्रमेण पञ्च सन्धय इति विज्ञेयम् । ननु दशाङ्कस्य रूपकस्य कथं नाटकत्वमिति चेत्, "नाटकेऽङ्का न कर्तव्याः पञ्चन्यूना दशाधिकाः" इति "पञ्चादिदशपर्यन्तमङ्काः कार्या यथोचितम्" इति च शास्त्रादिति ब्रूमः। न चात्र शृङ्गाररसस्याप्राधान्यान्न नाटकतेति वाच्यम्, वीररसप्राधान्येऽपि नाटकतोपपत्तेः। तदुक्तं विद्यानाथेन "शृङ्गारवीरयोरन्यतरस्य प्राधान्यम्" इति। न चैवं शान्तरसस्य प्राधान्यक्षतिः, शान्तरसोद्दीपकविवेकव्यापारविशेषव्यञ्जितवीररसस्य तद्वेषधारित्वात्। अत एव विवेकप्रारम्भ इत्याद्युक्तम्। शृङ्गारवेषधारिशान्तरसप्राधान्येऽपि तत्प्राधान्यानपायाच्च। अत एव रसान्तरभूमिकां बिभ्रदित्युक्तम्। वक्ष्यति च "मुनिः शान्तिव्याजान्मुखरयति शृङ्गारनिगमम्" इति। न च विरोधिरससमावेशे चमत्कारहानिः, आश्रयभेदरसान्तरव्यवधानस्मर्यमाणत्वमात्राङ्गत्वादिभिर्विरोधपरिहारात्। तदुक्तं काव्यप्रकाशे—

> "आश्रयैक्ये विरुद्धो यः स कार्यो भिन्नसंश्रयः।
> रसान्तरेणान्तरितो नैरन्तर्ये तु यो रसः॥
> स्मर्यमाणो विरुद्धोऽपि साम्येनाथ विवक्षितः।
> अङ्गिन्यङ्गत्वमाप्तौ यौ तौ न दुष्टौ परस्परम्॥"

इति ॥ २७ ॥

## प्रभावली

गर्भविमर्शोपसंहृत्याख्यान् पञ्च संधीन्। **निध्यातुम्**; निरीक्षितुम्। **इह**; नाट्ये। **कृतमुखैः**; कुशलैः, कृतावधानैरित्यर्थः। **भरतमतधौरेयमतिभिः**; भरतशास्त्रधुरीणैरित्यर्थः। **भवद्भिर्निभृतं स्थातव्यम्**; निश्चलं, सावधानमिति यावत्; स्थातव्यमिति प्रार्थना ॥ २७ ॥

(नेपथ्ये)

**समयनियतैः प्रयोगैः सत्पथसीमामनुज्झतो विदुषः ।**
**किरणैरिव दिवसकृतः क्षिप्यन्ते तामसारम्भाः ॥ २८ ॥**

प्रभाविलासः

अथ पात्रप्रवेशसूचिकां प्रावेशिकीं ध्रुवामाह—**समयेति** । ध्रुवालक्षणं तु

"प्रथयति पात्रविशेषं सामाजिकजनमनांसि रञ्जयति ।
अनुसंदधाति च रसं पात्रविशेषे ध्रुवा गीतिः ॥"

इति ।

प्रावेशिकी चान्तरा स्यात परिक्रमणिका तथा ।
अवस्थितिर्निष्क्रमणी पञ्च स्युः पञ्चसन्धिषु ॥"

इति । प्रावेशिकी नाम प्रवेशप्रयोजना । **समयेति** । **समयनियतैः**; भरतशास्त्रनियतैः, योगशास्त्रनियतैः ; उदयादिकालनियतैः । **प्रयोगैः**; पात्राभिनयैः, प्रकृष्टध्यानैः, संचारैः । **सत्पथसीमाम्**; भरतमार्गमर्यादां, योग-

प्रभावली

अत्र पञ्चसंधिश्लोकलक्षणानि--

"बीजबिन्दुपताकाख्यप्रकरीकार्यलक्षणाः ।
आरम्भयत्नप्राप्त्याशानियताप्तिफलागमाः ॥
मुखं प्रतिमुखं गर्भः सावमर्शोपसंहृतिः ।"

इति । बीजाद्यारम्भादिसमन्वये प्रत्येकं संधयः पञ्च भवन्ति । एषां स्वरूपलक्षणाङ्गानि दशरूपके द्रष्टव्यानि । अथौद्धातिकीं गीतिं दर्शयति । इयं ध्रुवागीतिरित्युच्यते । नेपथ्ये इति ; तिरस्करिण्याम् । समय इति । सत्पथः ; एकत्र सन्मार्गः ; अन्यत्र सतां नक्षत्राणां मार्गः आकाशः । सीमा ; मर्यादा ।

## प्रभाविलासः

मार्गमर्यादां, नक्षत्रमार्गमर्यादां च । " सन्नक्षत्रमुडुर्ने ना " इति निघण्टुः । **विदुषः ;** कुशलस्य विपश्चितश्च । **तामसारम्भाः ;** अनभिज्ञनटारम्भाः, मोहाद्यारम्भाः, अन्धकारारम्भाश्च । **क्षिप्यन्ते** ; निरस्यन्ते । एवमस्मद्वृत्ति मापवर्गिकीं वृत्तिं चेति वक्ष्यमाणानुसारेण विवृतम् । **समयनियतैः ;** सिद्धान्तनियतैः व्यवयवनिग्रहाष्टकादिनियमवद्भिः । **प्रयोगैः** ; युक्तिभिः । **सत्पथसीमाम् ;** समीचीनसिद्धान्तमर्यादाम् । अनुज्झतो **विदुषः ;** वादकुशलस्य । **तामसानाम् ;** तामसप्रकृतीनां कुदृष्टिप्रभृतीनां कथकानाम् आरम्भाः दुरारम्भाः क्षिप्यन्ते । **सत्पथसीमाम् ;** नीतिमर्यादामनुज्झतो विदुषोऽभिज्ञस्य विजिगीषोः **समयनियतैः ;** शरदादिकालनियतैः प्रयोगैर्दण्डाद्युपायैस्तामसारम्भा अनभिज्ञसपत्नारम्भाः । **सत्पथसीमां** मन्वाद्युक्ताचारमर्यादामनुज्झतः समयनियतैः प्रातःकालादिनियतैः प्रयोगैर्नित्यनैमित्तिककर्मानुष्ठानैः तामसारम्भाः तमःकार्याणि दुरितानि क्षिप्यन्ते । " नित्यनैमित्तिकैरेव कुर्वाणो दुरितक्षयम् " इत्यादिशास्त्रादिति दिक् ।

## प्रभावली

अनुज्झतः ; अनुसरतः । विदुषः ; विपश्चितः । नटपक्षे नाट्यशास्त्रज्ञस्य । भागवतविषये उपासकस्य प्रपन्नस्य च । समयनियतैः ; नटपक्षे भरतशास्त्रसिद्धैः । उपासकविषये प्रपन्नविषये च स्ववर्णाश्रमाद्युचितैः । आदिशब्दात्सिद्धान्तो गृह्यते । सूर्यपक्षे समयशब्दः कालपरः, तत्र नियमः, तं प्राप्तैः । प्रयोगैः ; नाट्यप्रयोगैः । उपासकपक्षे प्रकृष्टयोगैः । प्रपन्नपक्षे अभिगमनाद्यनुष्ठानैः । तामसारम्भाः ; तामसानां नटापशदानामारम्भाः प्रवृत्तयः । उपासकपक्षे तमोमूलानि पापानि, तेषां प्रवृत्तयः । प्रपन्नपक्षे तामसानां तमोमूलानामन्याभिगमनादीनां प्रवृत्तयः व्यापाराः । सूर्यपक्षे तमःसंबन्धिन आरम्भाः व्यापाराः क्षिप्यन्ते । विवेकपक्षेऽपि सत्पथसीमां सात्त्विकमार्गमर्यादामनुल्लङ्घ्य-

**सूत्रधारः**—(कर्णं दत्वा, सानन्दम्) आर्ये, सम्यगवधार्यतामस्मद्वृत्तिमापवर्गिकीं वृत्तिं च तन्त्रयन्तीयम् [1]औद्धातिकी गीतिः। ततश्च;

**दुर्जनं प्रतिपक्षं च दूरदृष्टिरयं जनः।**
**विवेकश्च महामोहं विजेतुं प्रभविष्यतः॥ २९॥**

**प्रभाविलासः**

"समयाः शपथाचारकालसिद्धान्तसंविदः।"
"योगः संनहनोपायध्यानसंगतियुक्तिषु।"

इति चामरः। अनेन त्रिगतं नामामुखाङ्गमुक्तम्। "श्रुतिसाम्यादनेकार्थयोजनं त्रिगतं मतम्" इति लक्षणात्॥ २८॥

**तन्त्रयन्ती**; तन्त्रेण ज्ञापयन्ती। **औपोद्धातिकी**; आरम्भसंबन्धिनी। पात्रप्रवेशसूचकं कथोद्धातं प्रयोगातिशयं चामुखाङ्गं प्रस्तौति—**दुर्जनमिति**। तदुक्तम्—

**प्रभावली**

यतो विदुषो विवेकस्य तत्तदवसरप्रयुक्तैः प्रयोगैः कामादीनां विजयव्यापारैः तामसस्य महामोहादेरारम्भाः संनाहाः निरस्यन्त इति॥ २८॥

**कर्णं दत्वा**; कर्णतः श्रुत्वेत्यर्थः। **सानन्दम्**; स्वविजयसूचनादिति भावः। **अवधार्यताम्**; दृढं श्रूयताम्। **अस्माकं वृत्तिम्**; वृत्तान्तम्। **आपवर्गिकीं वृत्तिम्**; मोक्षमार्गकथां च। **तन्त्रयन्ती**; तन्त्रेणैकेनैव प्रयोगेण प्रकाशयन्ती। **औद्धातिकी**; उपक्रमसंबन्धिनी, उपक्रमार्था ध्रुवा-गीतिरित्यर्थः। "ध्रुवा गीतिः प्रयोगादौ वक्ष्यमाणार्थसूचनी" इत्युक्तेः। **ततः**; अस्मादुपश्रुतिबलात्। **दुर्जनमिति**। **दूरदृष्टिः**; दीर्घदृष्टिः। इदं स्वस्य विवेकस्य च

[1] **औपोद्धातिकी—च. छ.**

(नेपथ्ये)

कः खल्वसौ कुशीलवकुलाङ्गारः करतलकलितकठोरमधुरधन्वनि[1] सुरभिसुकुमारचित्रपुङ्खे वित्रासितनिखिलवैरिजने मयि[2] जीवति सकलसुरासुरमुनिमनुजचित्तवृत्तिसार्वभौमस्य दुर्मतिसहधर्मचारिणो

**प्रभाविलासः**

"त्रीण्यङ्गान्यामुखस्यास्य कथोद्घातः प्रवर्तकः ।
प्रयोगातिशयश्चेति पात्रक्षेपस्य हेतवः ॥"

इति । **दूरदृष्टिः**; विमृश्यकारी । अत्र अयं जनो विवेकश्चेति द्वे वस्तुनी प्रतिपदद्योतकेन चकारेणैकस्यां प्रभविष्यतिक्रियायां समुच्चीयेते इति समुच्चयालंकारः । "द्रव्यादीनामनेकेषां द्रव्यादौ विनिवेशनम् । समुच्चयः स्यात्" इति लक्षणात् ॥ २९ ॥

**नेपथ्य इति**; नेपथ्योक्तिर्नाम सन्धिः कथितः । **कः खल्वसाविति**; प्रयोगातिशयाख्यमङ्गं दर्शितम् । तदुक्तम्—

**प्रभावली**

विशेषणम् । **अयं जनः**; अहमित्यर्थः ; विवेकश्च । **दुर्जनम्**; दुष्टं **प्रतिपक्षं** शत्रुं प्रतिभटकुशीलवं महामोहं च । **विजेतुं प्रभविष्यतः**; समर्थौ भविष्यतः । अत्र विवेकस्योपादानं स्वस्य दृष्टान्ततया ॥ २९ ॥

पुनश्च नेपथ्ये कामपात्रप्रवेशः—**कः खल्वित्यादि** । को वायं नटकुलविनाशकः महामोहस्य विपक्षात् पराजयमाशास्त इत्यन्वयः । कुलस्याङ्गारः उल्का; कुलदाहक इत्यर्थः । कार्यतः **कठोरं** निष्ठुरं, स्वरूपतो **मधुरं** ललितम् । **सुरभीणि** सुगन्धीनि **सुकुमाराणि** अतिमृदूनि पुष्पाण्येव **चित्रपुङ्खाः** बाणा यस्य तस्मिन्; मयीति शेषः । अथ महामोहं प्रशंसति—**सकलेत्यादि** । चित्रवृत्त्याः सार्वभौमस्य सर्वभूमिमाक्रान्तवतः । **दुर्मतिः**;

[1] कुसुमधन्विनि—घ.  [2] मयि omitted—क. ख. ग.

रणरङ्गमहानटस्य देवस्य महामोहस्य विवक्षानर्हं किमपि विपक्ष-
सकाशादाशंसते[1] ।

**सूत्रधारः**—(सभयसंभ्रमं परिवृत्य पश्यन्) आर्ये, कोऽय-

**प्रभाविलासः**

" एषोऽयमित्युपक्षेपात् सूत्रधारप्रयोगतः ।
पात्रप्रवेशो यत्रायं प्रयोगातिशयो मतः ॥ "

इति । 'विवेकश्च महामोहं विजेतुं प्रभविष्यतः' इति सूत्रधारेणोक्ते 'विवक्षानर्हं किमपि विपक्षसकाशादाशंसते' इति वाक्यार्थं गृहीत्वा प्रवृत्तत्वात् कथोद्धाताख्यमङ्गं दर्शितम् । तदुक्तम्—

" स्वेतिवृत्तसमं वाक्यमथवा यत्र सूत्रिणः ।
गृहीत्वा प्रविशेत्पात्रं कथोद्धातो द्विधैव सः ॥ "

इति । वित्रासितनिखिलवैरिजन इति असंबद्धकथाप्रायः प्रलापो नामामुखाङ्गं निरूपितम् । 'कः खलु' इत्यादिवाक्यस्य सहसोपस्थितत्वात् प्रस्तुतविरोधित्वात् गण्डं नामामुखाङ्गं दर्शितम । " नासूचितस्य पात्रस्य प्रवेशो निर्गमोऽपि वा " इति वचनात् पात्रप्रवेशं सूचयति—**सूत्रधार इत्या-**

**प्रभावली**

मोक्षदोषदृष्टिः, सैव सहधर्मचारिणी यस्य तस्य । **रण एव रङ्गं** नृत्तस्थानं तत्र **महानटः**, नटचक्रवर्तीति यावत् । रुद्रोऽपि । अनेन समरव्यापारोऽस्य लीलैवेति गम्यते । **देवस्य**; सर्वेभ्यो दीप्तिमतः । **विवक्षानर्हम्**; वक्तुमिच्छाया अप्ययोग्यम् । **किमपि**; पराजयमित्यर्थः । **विपक्षः**; विवेकः । **आशंसते**; प्रार्थयते ॥ **भयेन** संभ्रमः संभ्रान्तत्वं यस्मिंस्तथा । **परिवृत्य**;

[1] आशङ्कते—क.

**ममर्षमद[1]संप्लवादभ्यधिकलोहिताक्षः ससहाय इत एवाऽभिवर्तते ?**
**आः, कष्टमवधारितम् । अयं हि—**

**अपवर्गविरुद्धेषु त्रिषु वर्गेषु तिष्ठताम् ।**
**प्रधानपुरुषार्थस्य पश्चिमस्याधिदैवतम् ॥ ३० ॥**

### प्रभाविलासः

**दिना । संप्लवः ;** संपर्कः । **अपवर्गेति । प्रधानपुरुषार्थस्य ;** धर्मकाम-हेतुभूतस्यार्थपुरुषार्थस्य । **पश्चिमस्य ;** कामस्य । उभयोर्विशेषणविशेष्यभावे-नान्वयो वा ॥ ३० ॥

### प्रभावली

पृष्ठभागाभिमुखो भवन् । **आर्ये** इति नटीं संबोधयति । **कोऽयमिति ;** दूरत्वात् संदिग्धे । **अमर्षस्य संप्लवः** संप्रसरः । **ससहायः ;** रतिवसन्तसहितः । **इतोऽभिवर्तते ;** अत्रागच्छति । अथ काम इति निश्चयात् वदति—**आः कष्टमवधारितमिति** । आः इति मनःपीडायाम् । **कष्टम् ;** पापमस्माभिश्चिन्तितम् । अयमागच्छन् काम इत्याह—**अयं हीति । अयम् ;** पुरस्ताद् दृश्यमानः । **अपवर्गेति । अपवर्गस्य** मोक्षस्य **विरुद्धेषु** प्रतिकूलेषु ; "पुण्यपापे विधूय" इत्युक्तेः । इतरयोः प्रातिकूल्यं सुगमम् । **त्रिषु वर्गेषु ;** धर्मार्थकामेषु । **तिष्ठताम् ;** त्रैवर्गिकाणाम् । **प्रधानपुरुषार्थस्य ;** धर्मस्यार्थस्य च कामसाधनत्वात् तत्प्राधान्यम् । **पश्चिमस्य ;** शास्त्रेषु धर्मार्थकामेष्विति चरमतयोपात्तस्य, शास्त्रतो निष्कृष्टस्य चेति भावः, "सङ्गं त्यजेत मिथुनव्रतिनां मुमुक्षुः" इत्युक्तेः । तस्य कामपुरुषार्थस्य **अधिदैवतम् ;** अभिमानि दैवतम् । काम इति यावत् ॥ ३० ॥

[1] मद omitted—क, ख.

किंच ;

**अर्धावशेषितमहेश्वरपौरुषोऽयं**
**वर्गं तृतीयमवधीरयतां विनेता ।**
**रत्या सलीलपरिरम्भणलोलगत्या**
**पुष्पायुधः पुलकितैकभुजोऽभ्युपैति ॥ ३१ ॥**

प्रभाविलासः

**अर्धेति** । अर्धमवशेषितं महेश्वरस्य पौरुषं पुंस्त्वं पराक्रमश्च येन सः । **तृतीयं वर्गम्** ; कामपुरुषार्थम् । **अवधीरयताम्** ; तिरस्कुर्वताम् । **विनेता** ; शिक्षकः । अत्र दोषाणामेव गुणत्वकथनात् मृदवं नामामुखाङ्गं कथितम् । "दोषा गुणा गुणा दोषा यत्र स्युर्मृदवं हि तत्" इति लक्षणात् । **पुलकितैकभुजः** ; रत्यालिङ्गितप्रदेशे रोमाञ्चितभुजः । अनेन सात्त्विकभाव उक्तः । तदुक्तं संगीतरत्नाकरे—

"स्तम्भः स्वेदश्च रोमाञ्चः स्वरभेदोऽथ वेपथुः ।
वैवर्ण्यमश्रुप्रलयावष्टौ भावाश्च सात्त्विकाः ॥"

इति ॥ ३१ ॥

प्रभावली

तस्य प्रभावमाह—**अर्धेति** । **अर्धमवशेषितं महेश्वरस्य पौरुषं** पुरुषभावः, पराक्रमं च येन सः । अनेनास्यार्धनारीरूपं कृतमिति भावः । कामपारवश्यादुमायाः स्वशरीरेऽर्धं दत्तवानित्यर्थः । **तृतीयं** वर्गम् ; कामपुरुषार्थम् । **अवधीरयताम्** ; अवजानताम् । **विनेता** ; शिक्षकः । पुनस्तत्र प्रवर्तयितेत्यर्थः । **अयं पुष्पायुधः** सलीलं परिरम्भणेन अन्योन्यालिङ्गनेन लोला स्खलिता गतिः यस्याः सा, तया **रत्या** सह **पुलकित** एको भुजो यस्य स सन् । **अभ्युपैति** ; इत आगच्छति ॥ ३१ ॥

तदिह वयं त्वरितमपसृत्य कालोपपन्नकामोत्सवविहारसंकुले जीवलोके संवलितगुप्तवृत्तयः समनन्तरकरणीयमाचरामः ।

(इति निष्क्रान्तौ)

प्रस्तावना



### प्रभाविलासः

**प्रस्तावनेति** । प्रस्तावना साङ्गं निरूपितेत्यर्थः । उक्ताङ्गेषु केषांचिदनुक्तावपि साङ्गत्वमेव । तदुक्तम्—

"अङ्गेनान्यतमेनैषां पात्रमाक्षिप्य सूत्रधृत् ।
अनन्तरं तु निष्क्रामेत् सैषा प्रस्तावना मता ॥"

इति ॥

प्रस्तावना



### प्रभावली

अथ नटयोस्ततो भयान्निष्क्रान्तिमाह—**तदिति** । **तत्** ; तस्मात् । **इह** ; इदानीम् । **अपसृत्य** ; इतो निर्गत्य । कालप्राप्तकामोत्सवलीलानिबिडे जीवलोके **संवलिताः** संश्लिष्टाः **गुप्तवृत्तयश्च** सन्तः । यद्वा संवलितं निवर्तनं, तेन गुप्तवृत्तयः । **समनन्तरं** यत्कृत्यं, तदाचराम इति निर्गतौ । **प्रस्तावना** ; नाटकस्योपक्रमणमित्यर्थः ॥

प्रस्तावना



## प्रथमोऽङ्कः

### विष्कम्भः

(ततः प्रविशति वसन्तदत्तहस्तः कान्तासेवितः[1] कामः)

कामः—('कः खलु 'इत्यादि पुनः पठित्वा) रे रे, [2]भरत-कुलपांसन,

दरनमितमनोज्ञभ्रूलताचापभाजां
तरलहृदयलक्ष्ये तादृशस्नेहदिग्धे ।

**प्रभाविलासः**

"विष्कम्भचूलिकाङ्कास्यप्रवेशाङ्कावतारणैः ।
एभिः सूच्यं सूचयित्वा दृश्यमङ्कैः प्रदर्शयेत् ॥"

इति दशरूपकोक्तेष्वङ्काङ्गेषु विष्कम्भमारभते—**ततः प्रविशतीत्यादिना** । तल्लक्षणमुक्तं प्रतापरुद्रीये—"संक्षेपार्थस्तु विष्कम्भः" इति । **दरेति** ।

**प्रभावली**

प्रविशति ; रङ्गस्थलीमिति शेषः । 'कः खल्वसौ कुशीलवकुलाङ्गारः ' इत्यादि पुनः पठित्वा वदति—**रे रे इत्यादि** । रे रे इत्यधिक्षिप्यामन्त्रणे अव्ययम् । वीप्सायां द्विरुक्तिः । भरतकुलस्य पांसनो दूषकः । अपसृतमपि

[1] समेतः—घ. [2] पाप added before—क.

**कुवलयनयनानां कूणिते लोचनास्त्रे**

**शरणयतु विवेकः कां दिशं कांदिशीकः ॥ ३२ ॥**

प्रभाविलासः

**दरनमितेत्यन्तः** सार उक्तः । **मनोज्ञेति** ग्रन्थिराहित्यम् । **भ्रूलतेत्या**-र्जवम् । **तरलहृदयलक्ष्य इति** धानुष्ककौशलम् "उत्कर्षः स हि धन्विनां यदिषवः सिध्यन्ति लक्ष्ये चले" इति शाकुन्तलोक्तेः । **स्नेहदिग्ध इति;** स्नेहः प्रेम । तल्लक्षणं च—

"विस्रम्भे परमां काष्ठामारूढे दर्शनादिभिः ।
येनान्तरङ्गं द्रवति स स्नेह इति कथ्यते ॥"

इति । तत्स्वरूपम् 'अहमस्यैव, अयं ममैव' इत्येवंरूपम् । **तादृशेति** प्रेम्ण एव प्रणयावस्थां सूचयति । तदुक्तं **रमापतिना**—"प्रेमैवातिशये काष्ठामापन्नः प्रणयो मतः" इति । अनेन तस्यान्यानपसरणीयतालक्षण-गाढानुरागतापत्तिरुक्ता । अन्यत्र **तादृशेति** मर्मस्पृक् । **दिग्ध इति** विषलेपः । मदनो मूर्च्छानन्तरावस्थायां कुवलयं प्रयुङ्क्त इति कामशास्त्र-प्रसिद्ध्या कुवलयग्रहणम् । **कूणितम्;** अर्धनिमीलितम्; धनुषा योजितं च । लोचनानामस्त्रत्वोक्त्यातिदूरलक्ष्यवेधित्वशीघ्रगामित्वामोघत्वान्युक्तानि । **कां-दिशीकः;** भयद्रुतः । **कां दिशं शरणयतु;** न कामपि, शरण्याभावादि-त्यर्थः । अत्र कुवलयनयनानामित्यालम्बनविभावोक्तिः, नायिकानायकयो-

प्रभावली

लक्षीकृत्योक्तिः । **दरनमितेति** । दरमीषन्नमिता मनोज्ञा भ्रूलतैव चापः तद्भाजाम् । **कुवलयनयनानाम्;** स्त्रीणाम् । **लोचनास्त्रे** कीदृशे ? तरलानां चपलानां हृदयं मनो लक्ष्यं शरव्यं यस्य तस्मिन् । **तादृशेन** निरतिशयेन स्नेहेनानुरागेण; अन्यत्र स्नेहो विषतैलम् । स्नेहप्रकाशकत्वाच्चक्षुषः तद्दिग्धत्वम् । **कूणिते,** अर्धसंकुचिते;

## प्रभाविलासः

रेवालम्बनविभावत्वात् । दरनमितेत्यादिरालम्बनगुणः, "आलम्बनगुणो रूपयौवनादिरुदाहृतः" इति शृङ्गारतिलकोक्तेः । कूणित इति तच्चेष्टारूपोद्दीपनविभावः, "तच्चेष्टा यौवनोद्भूतहावभावादिका मताः" इति लक्षणात् । लोचनाम्र इत्यनुभाव उक्तः; "कार्यभूतोऽनुभावः स्यात् कटाक्षादिः शरीरजः" इति लक्षणात् । उक्तविभावानुभावैरेव सात्त्विकसंचारिभावा आक्षिप्यन्ते, समुदितानामेव रसाभिव्यञ्जकत्वात् । एतैश्च शृङ्गाररसो व्यङ्ग्यः । तदुक्तं दशरूपके—

"विभावैरनुभावैश्च सात्त्विकैर्व्यभिचारिभिः ।
आनीयमानः स्वादुत्वं स्थायी भावो रसः स्मृतः ॥"

इति । अयं चासंलक्ष्यक्रमव्यङ्ग्यध्वनिपर्याय उत्तमकाव्यभेदः । "रसभावतदाभासभावशान्त्यादिरक्रमः" इति काव्यप्रकाशोक्तेः । अत्र कैशिकी वृत्तिः "शब्दार्थयोर्मृदुत्वेन कैशिकी वृत्तिरिष्यते" इति लक्षणात् । अत्र स्निग्धाल्पपदप्रमाणत्वं संदर्भमृदुत्वम् । शृङ्गाररसत्वादर्थमृदुत्वम् "मृदू शृङ्गारकरुणौ" इत्युक्तत्वात् । अत्र शृङ्गारादीनां भूमिकामात्रत्वोक्त्या शान्तरसानुकूल्येन योजयन्ति । तत्रेयं दिक्—**दरनमितम्**; न सम्यक्, भङ्गभयात् । **लतेति** मृदुत्वोक्तिः । तरलहृदयान्येव लक्ष्याणि, न धीरहृदयानि । अतो विवेकः कां दिशं शरणयतु; न कामपि, अतिधीरत्वादिति भावः । तेन शान्तरसो व्यङ्ग्यः । न च विरुद्धसमावेशः, अङ्गिनो वीररसस्य स्फुरणात् ॥ ३२ ॥

## प्रभावली

अर्धवीक्षणविशिष्टे सति । विवेकः कांदिशीकः भयद्रुतः सन् कां दिशं शरणयतु ; आश्रयतु । न कांचिदपीति भावः ॥ ३२ ॥

**वसन्तः**—(स्वगतम्) उत्पथमनोरथोऽयमुपचितमदो[1] विषमबाणः। अहं पुनरपुनरावृत्तिवर्तनीपथिकानामातिवाहिकगणे परिगणितोऽपि न सहसा परित्यक्तुं शक्नोमि चिरंतनं चित्तजन्मसौहार्दम्। (प्रकाशम्) सखे मकरध्वज, एवमेतत्। अहं पुनर्महाराजस्य[2] महा-

### प्रभाविलासः

**अपुनरावृत्तिवर्तनी**; अर्चिरादिमार्गः। तत्र **पथिकानाम्**; मुक्तानाम्। **आतिवाहिकाः**; मुक्तान् स्वं स्वं देशमतिवाहयन्तीत्यातिवाहिकाः। **सौहार्दम्**; हितान्वेषित्वहितकारित्वे ;

"दुःखे विपत्तिसंमोहे कार्ये कालात्ययेऽपि च।
हितान्वेषी च हितकृद्यः सुहृत् सोऽभिधीयते ॥"

### प्रभावली

अथ वसन्तः **स्वगतम्** आत्मगतं यथा तथा आलोचयति—**उत्पथेत्यादिना**। **उत्पथमनोरथः**; उद्धतः। **उपचितमदः**; प्रवृद्धगर्वः। स्ववृत्तिं दर्शयति—**अहं पुनरित्यादिना**। वस्तुत आतिवाहिकगणान्तर्भूतेनापि मया चिरप्रवृत्तं कामेन सह सौहार्दं सहसा त्यक्तुं न शक्यम्, अनुचितं चेत्याह—**अपुनरावृत्तीति**। **अपुनरावृत्तिवर्तनी**; अर्चिरादिगतिः। तत्पथिकाः मुच्यमानाः। **आतिवाहिकगणः**; अर्चिर्दिनपूर्वपक्षादिदेवतागणः। तत्र "उदङ्मासाब्द" इति कालसामान्यग्रहणेन गृहीतोऽपीत्यर्थः। **चिरंतनम्**; चिरपरिचितम्। **न शक्नोमि**; अन्ततस्त्यक्ष्याम्येवेति भावः। अथ **प्रकाशं** प्रकटमाह—**एवमेतदिति**। दरनमितेत्यादि यदुक्तं तत्सत्यमेवेत्यर्थः। स्वकृत्यं निवेदयति—**अहं पुनरिति**। **माङ्गलिकम्**; मङ्गलप्रयो-

[1] अधुना विजृम्भते for उपचितमदः—क; उन्मादी for उपचितमदः—ख.
[2] इह देवस्य for महाराजस्य—क.

मोहस्य माङ्गलिकं विवेकवित्रासनं भावत्कं महोत्सवं प्रक्रमयामि ।

पश्यतु भवान्—

चूडावेल्लितचारुहल्लकभरव्यालम्बिलोलम्बकाः
क्रीडन्त्यत्र हिरण्मयानि दधतः शृङ्गाणि शृङ्गारिणः ।

### प्रभाविलासः

इत्युक्तत्वात् । **माङ्गलिकम्**; मङ्गलप्रयोजनकम् । **भावत्कम्**; भवत्संबन्धिनम् । अथ शृङ्गाररसोद्दीपनविभावानाह—**चूडेत्यादिना** । ते च संगीतरत्नाकरे—

"तत्तद्योग्योऽप्यलंकारः केयूरकटकादिकः ।
समयोऽपि वसन्तादिर्विषयाश्चन्दनादयः ।
गीतादयश्च देशोऽपि रम्यहर्म्यवनादिकः ।
कान्तानुसरणं हंसयुग्मचित्रादिदर्शनम् ।
जलकेलीत्येवमाद्याः श्रुता यद्वा विलोकिताः ।
विभावत्वेन विख्याता रसे शृङ्गारनामनि ॥"

इति । **चूडेत्यादि** । चूडायां केशबन्धे वेल्लिते ग्रथिते चारुहल्लकानां प्रत्यग्ररक्तसंध्यकानां भरे समूहे व्यालम्बिनो लोलम्बा भ्रमरा येषां ते तथोक्ताः । तन्वङ्गीनां करा एव यन्त्राणि जलनिर्गमसाधनानि, तेषां

### प्रभावली

जनकम् । भावत्कम्; भवतः संबन्धिनं, त्वद्विजयप्रकाशकमित्यर्थः । प्रक्रमयामि । चूडेति । अत्र शृङ्गारिणो भोगिनः क्रीडन्ति वसन्तोत्सवं कुर्वन्ति; पश्येत्यन्वयः । शृङ्गारिणो विशेषयति—**चूडेति** । चूडा **केशबन्धः**; तत्र वेल्लितानि ग्रथितानि यानि चारुहल्लकानि कल्हारकुसुमानि, तेषां भरे समूहे

**तन्वङ्गीकरयन्त्रयन्त्रणकलातन्त्रक्षरद्भस्त्रिका-**
**कस्तूरीपरिवाहमेदुरमिलज्जम्बाललम्बालकाः ॥ ३३ ॥**

### प्रभाविलासः

यन्त्रणे पीडने कला व्यापारस्तस्य तन्त्रं करणम् "तन्त्रं स्वराष्ट्रव्यापारे" इति वैजयन्ती। तेन क्षरता निःसरता भस्त्रिकासु प्रवेशिकासु कस्तूरी-परिवाहेण मेदुरं सान्द्रं यथा तथा मिलता संसृजता जम्बालेन पङ्केन लम्बा अलका येषां ते तथोक्ताः। यद्वा **चूडेत्यादि**। चूडायां केशपाशे, "शिखा चूडा केशपाशः" इत्यमरः। तिर्यगूर्ध्वबद्धकेशबन्ध इत्यर्थः। वेल्लिते ग्रथिते, "वेल्लिते ग्रथिते समे" इति निघण्टुः। चारूणां प्रत्य-ग्राणां हल्लकानां रक्तसन्ध्यकानाम्, "हल्लकं रक्तसन्ध्यकम्" इत्यमरः। भरः प्राग्भारः। तत्र व्यालम्बिन उपरि संचरन्तो लोलम्बाश्चञ्चरीका येषां ते। "चञ्चरीको लोलम्बेन्दिन्दिरावपि" इत्यमरः। तेनान्तरा नीलोत्पल-शबलितत्वं व्यङ्ग्यमिति भ्रान्तिमदलंकारध्वनिः। **हिरण्मयानि**; हिरण्य-विकारभूतानि। **शृङ्गाणि**; विषाणानि। हिरण्ययानीति पाठेऽपि स एवार्थः। **दधतः**; धारयन्तः। **तन्वङ्गीनाम्**; शातोदरीणाम्। तेन प्रत्यालीढस्थि-त्यादिषु शरीरलाघवं व्यञ्जितम्। करा एव यन्त्राणि जलनिर्गमसाधनानि, तेषां यन्त्रणे पीडने, कला व्यापारः, तस्य तन्त्रं करणम्, तेन क्षरता निः सरता, भस्त्रिकासु प्रवेशिकासु कस्तूरीपरिवाहेण मेदुरं सान्द्रं यथा तथा

### प्रभावली

व्यालम्बिनो लम्बमानाः लोलम्बा भृङ्गाः येषां ते। समासान्तः कः। हिरण्य-विकारभूतानि शृङ्गाणि जलासेचनयन्त्राणि गवादीनां शृङ्गाणि दधतो धार-यन्तः। पुनरपि विशिनष्टि—**तन्वङ्गीति**। तन्वङ्ग्यो युवत्यः, तासां करा एव यन्त्राणि भस्त्रिकापीडनसाधनानि, तेषां यन्त्रणकला प्रेरणव्यापारः, तया तन्त्रेण

## प्रभाविलासः

मिलता संसृजता जम्बालेन पङ्केन लम्बा अलका येषां ते तथोक्ताः । यद्वा तन्वङ्गीनां करे स्थितानि यन्त्राणि, तेषां यन्त्रणं, ग्रहणं तस्य कला व्यापरः, तस्यास्तन्त्रं करणं, तेन क्षरता, भस्त्रिकासु प्रवेशिकासु स्थिता कस्तूरी कस्तूरीमिश्रजलं तस्य परिवाहो धारासंपातः ; यद्यपि "जलोच्छ्वासः परीवाहः" इति परीवाहशब्दो जलोच्छ्वासपर्यायः, तथापि लक्षणयात्र तदुक्तिः ; तेन मेदुरं सान्द्रं यथा तथा मिलता संसृजता प्रश्लिष्टेनेति यावत् ; जम्बालेन पङ्केन लम्बा अलकाश्चूर्णकुन्तला येषां ते । अत्र भस्त्रिका एव यन्त्राणि । अथवा यन्त्रशब्देन वेणुयन्त्रभस्त्रिकायन्त्रदोहनस्वर्णरजतकुण्डिकादीनि गृह्यन्ते । भस्त्रिकेति जलपूरितके । ताभ्यां वेणुयन्त्रादिषु कस्तूरीं पूरयित्वा परस्परं सेचनं चक्रुरिति ज्ञेयम् । विभावादयः स्पष्टाः । अत्र शृङ्गाररसो व्यङ्ग्यः । यद्यप्यत्र विभावादीनां न साकल्येनाभिधानं, तथाप्येकतरोक्तावन्येषामाक्षेपः । तदुक्तं काव्यप्रकाशे "तेषामसाधारणत्वादन्यतरद्वयाक्षेपकत्वेनेति नानैकान्तिकत्वम्" इति । अत्र श्लोके ओजःकान्तिगुणौ । तदुक्तम्—

> "ओजः समासबाहुल्यमेतद् द्वेधा निगद्यते ।
> समासानामदीर्घाणां प्राचुर्यात् प्रथमं भवेत् ।
> समासस्यातिदीर्घत्वाद् द्वितीयं गौडसंमतम् ॥"

इति । "कान्तिश्छाया हि बन्धस्य कथिता बन्धकोविदैः" इति । बन्धस्यात्युज्ज्वलत्वं छाया । इयमेवोक्तगुणवती गौडी रीतिः, "ओजःकान्ति

## प्रभावली

युगपत्क्षरन्त्यः सेचयन्त्यो या भस्त्रिकाः चर्मनिर्मिता दृतयः, तत्संबन्धी यः कस्तूरीपरिवाहः कस्तूरिकारूपजलप्रवाहः, तेन मेदुरं मांसलं यथा तथा, मिल-

**कामः**—साधु वसन्त, साधु। विशेषतश्चैतत्। सर्वथा विजित एवासौ विवेकहतकः। यदिहावधीरितत्रिविष्टपविहारकान्तारेषु मरुद्वृधान्तरीपो[1]पान्तभागेषु महोत्सवारम्भः। इह च,

## प्रभाविलासः

गुणोपेता गौडीया रीतिरिष्यते" इति लक्षणात्। अत्र प्रबन्धे रसगुणालंकाररीतिवृत्तिप्रभृतीनां दिङ्मात्रेणैकत्र प्रदर्शनेऽपि यथोचितमुत्तरत्र द्रष्टव्यमिति विस्तरभयान्न लिख्यते। अत्र चूडावेल्लितेत्यनेन योग्यालंकाररूप उद्दीपनविभाव उक्तः। कस्तूरीति विषयोद्दीपनोक्तिः। तन्वङ्गीति कान्तानुसरणम्॥ ३३॥

**विवेकहतकः**; विवेकापशदः। **अवधीरितानि** तिरस्कृतानि त्रिविष्टपविहारकान्ताराणि स्वर्गक्रीडास्थानानि यैस्तेषु। **कान्तरम्**; दुर्गमं वर्त्म। "कान्तारं वर्त्म दुर्गमम्" इत्यमरः। मरुता वर्धत इति मरुद्वृधा

## प्रभावली

जम्बालाः संश्लिष्टपङ्काः। अत एव लम्बाः लम्बमानाः अलकाः चूर्णकुन्तलाः येषां ते सन्तः क्रीडन्तीति॥ ३३॥

**भो वसन्त साधु साधु**; अत्यन्तसमीचीनोऽसि। संतोषहेतुका वीप्सा। एतदुत्सवप्रवर्तनं च विशेषतः समीचीनम्। एवं सति सर्वथा विजितप्राय एव विवेकहतकः। **हतकः**; मृतप्रायस्तुच्छ इत्यर्थः। विजित एवेत्यत्र हेतुमुपन्यस्यति—**यदिदमिति**। **अवधीरितेति**। निराकृतानि स्वर्गलीलोद्यानानि यैस्तेषु श्रीरङ्गक्षेत्रप्रदेशेष्वतिभोग्यस्थलेषूत्सवारम्भात् मुक्तिक्षेत्रप्रधानभूतेष्वस्मद्विजया-वहमहोत्सवप्रवर्तनात् जितप्राय एवेति भावः। आरम्भः कृत इति यदिदमस्ति, अतः सर्वथा विजित एवेति संबन्धः। विवेकनिरोधनार्थमत्रैव नियतवासं कुर्म इत्याह—

[1] अन्तरीप omitted—छ, ग.

[1]उन्निद्राम्बुजवाटिकामुभयतो रोधोनिरोधोल्लल-
स्स्रोतःसंभृतसारणीशतकृतस्वच्छन्दकच्छाप्लवाम् ।
खेलच्चोलवधूविधूतकबरीशैवालितामन्वहं
पश्येम प्लवमानहंसमिथुनस्मेरां कवेरात्मजाम् ॥ ३४ ॥

प्रभाविलासः

कावेरी । **उन्निद्रेति** । **वाटिका**; श्रेणी । यद्यपि "अमात्यगणिकागेहोपवने वृक्षवाटिका" इति विशेषितम्, तथापि सामान्यलक्षणया तथोक्तिः । **उभयतः** पार्श्वयोः रोधसोस्तीरयोर्निरोधेनोल्ललद्भिरुद्गच्छद्भिः स्रोतोभिः प्रवाहैः संभृतानां सारणीनामल्पकुल्यानां शतेन कृतः स्वच्छन्दो निरवग्रहः कच्छानामनूपानामाप्लवो यस्याः सा, तथोक्ताम् । **खेलन्तीनां** क्रीडमानानां चोलवधूनां विधूताभिः श्लथनेन प्रसारिताभिः कबरीभिः शैवालितां संजातशैवालाम् । अत्राम्बुजशैवालस्मेरात्मजापदैः स्त्रीलिङ्गसामर्थ्येन च नायिकाप्रतीतेर्वस्तुना वस्तुध्वनिः । अम्बुजपदेन मुखप्रतीतिः । वाक्यतात्पर्य-

प्रभावली

**इह चेत्यादिना** । इह श्रीरङ्गक्षेत्रे कावेरीं पश्येम चेति चस्यान्वयः । **उन्निद्रेति** । उन्निद्रा या अम्बुजवाटिका नलिनवीथिका, तामुभयतः उभयपार्श्वतः, रोधोभ्यां निरोधात् उल्लुलन्ति उद्गच्छन्ति यानि स्रोतांसि, तैः संभृतं संपादितं यत्सारणीशतं, सारण्यः कुल्याः, तासां शतं, तेन कृतः स्वच्छन्दः कच्छस्य तीरदेशस्याप्लवः समन्तात्सेको यया सा । यद्वा उन्निद्रा अम्बुजवाटिका यस्यास्ताम् । अस्मिन् पक्षे उभयतोरोधेत्याद्येकं पदम्; पूर्ववदर्थः । **खेलदित्यादि** । खेलन्त्यः स्वस्मिन् क्रीडन्त्यः याश्चोलवध्वः, तासां विधूताभिः कबरीभिः शैवालितां संजातशैवलाम् । प्लवमानानि यानि हंसानां मिथुनानि, तैः स्मेरां मन्दहासशीलां कवेरात्मजाम् इह स्थित्वान्वहं पश्येमेत्यन्वयः । अत्र

[1] उत्फुल्ला—घ.

**रतिः**—अय्यउत्त, आवाअमहुरो एसो महूसवो। एह्निं किल अम्हकुलसामिणो महामोहस्स अणिवारिणिज्जेण केण वि विहिणा अमोहारंभो विवेओ दुज्जओ पडिपक्खोत्ति धूविअं[1] मे हिअअं।

(आर्यपुत्र, आपातमधुर एष महोत्सवः। इदानीं किल अस्मत्कुलस्वामिनो महामोहस्यानिवारणीयेन केनापि विधिना अमोहारम्भो विवेको दुर्जयः प्रतिपक्ष इति धूपितं[2] मे हृदयम्।)

**प्रभाविलासः**

विषयतया तु रसध्वनिः। तत्र खेलदिति जलकेल्युद्दीपनं हंसमिथुनोद्दीपनं च। भारती वृत्तिः, "मृद्वर्थप्रौढसंदर्भा भारती वृत्तिरिष्यते" इति लक्षणात्। **साधु वसन्तेति** कालोद्दीपनम्। **अवधीरिते**त्यादिना देशरूपोद्दीपनोक्तिः॥ ३४॥

विषमशरो जीवितेश्वरो यस्याः सा। जीवितेश्वरो नायकभेदः। तदुक्तम्—

**प्रभावली**

चोलवधूकबरी शैवालत्वेन, हंसमिथुनं मन्दहासत्वेन चोत्प्रेक्ष्यते। शैवालरूपणेनान्तः कालुष्यं व्यज्यते। कावेरी नायिका रोधसान्तर्हितं कच्छाख्यं पुरुषं पद्मिनीसक्तं ज्ञात्वा कालुष्यात्सारणीशतरूपस्वपरिजनमुखेनास्य जडतामापाद्य स्वयं स्मयमाना तिष्ठतीति कल्पितनायिकासमाधिरपि भावनीयः॥ ३४॥

**अय्यउत्त**; आर्यपुत्र। आर्यपुत्रेति भर्तुः संबोधनं गृहिण्याः। श्रीरामायणे सीता रामं प्रति "आर्यपुत्रेति भाषिणी" इत्युच्यते। **आवाअमहुरो**—आपातमधुरः। **एसो महूसवो**—एष महोत्सवः। आपात उपरिप्लवः;

[1] दुक्खिअं—ख; धूमिअं—छ. [2] दुःखितं—ख.

**कामः**—बाले विषमशरजीवितेश्वरि[1] विलासिनीदेवते, किमिति नाम समग्रबलजेतव्यलब्ध्या संतोष्टव्येऽपि भावितस्त्रीचापला विवेकवैभवं वर्णयसि? पश्यतु भवती—

**प्रभाविलास:**

" भजते यः प्रियामिष्टैः शयनासनवस्त्रकैः ।
अभीष्टाभिश्च लीलाभिर्जीवितेशः स ईरितः ॥"

इति । **समग्रं बलं** यस्य, स एव जेतव्यः, तस्य लब्ध्या । **भावितः**;

**प्रभावली**

अन्ततो मधुरत्वं नास्तीत्यर्थः । तत्र हेतुमाह—**एह्नि** इत्यादिना । **एह्नि किल**—इदानीं किल । **अम्हकुलसामिणो**—अस्मत्कुलस्वामिनः । **महामोहस्स**—महामोहस्य । **अणिवारणिज्जेण**—अनिवारणीयेन । **केण वि**—केनापि । **विहिणा**-विधिना । **अमोहारंभो**-अमोघारम्भः । **विवेओ**—विवेकः । **दुज्जओ**—दुर्जयः । **पडिपक्खोत्ति**—प्रतिपक्ष इति । **धूविअं**-धूपितं, संतप्तमित्यर्थः । **मे**—मम । **हिअअं**—हृदयम् । तां प्रतिवदति कामः—**विषमशरेति** । विषमशरस्य ममेत्यर्थः, **जीवितेश्वरि**; प्राणेश्वरि । **विलासिन्यः**; युवतयः, तासां देवते स्वामिनि । **किमिति नाम**; किं कारणम् । विवेकवैभवं वर्णयसीत्यन्वयः । **समग्रबलेति** । **समग्रबलः** संपूर्णशक्तिश्चासौ **जेतव्यः** शत्रुश्च, तस्य **लब्ध्या संतोष्टव्ये** संतोषे कर्तव्ये सति । हीनबलशत्रुत्वं वीराणां दुःखायेति भावः । एवं स्थिते सति त्वं **विभावितस्त्रीचापला**; प्रकाशितस्त्रीचापल्या सती वर्णयसि । वर्णने स्त्रीचापल्यमेव हेतुरिति भावः । विवेकस्य शत्रोस्तुच्छस्याविद्यमानं वैभवं स्वयं वर्णयसि । एवं चपला भवती मम पराक्रमं पश्येत्याह—**पश्यतु भवतीति**। सुकुमारायुधपरिकरवतोऽपि ममाज्ञां कठोरायुधपरिकरोऽपि शिवो नात्येतुं शक्त

[1] विषमशर एव जीवितेश्वरः, तस्य स्त्रीति पुंयोगे ङीष् । अथवा विषमशरस्य जीवितमीष्टे इति औणादिको वरट् । टित्त्वात् ङीप् ।

करधृतललितेक्षुधन्वनो मे

भ्रमरगुणार्पितपुष्पमार्गणस्य ।

मरुदनलशरोऽपि मेरुधन्वा

क्षणमतिलङ्घितशासनः कथं स्यात् ॥ ३५ ॥

**वसन्तः**—सखि, सत्यमेवैतत् । मा खल्विदं विकत्थनमवमंस्थाः[1] । न[2] हि जगति भवति मशको मातङ्गस्य प्रतिस्पर्धी ।

### प्रभाविलासः

संभावितः । **करेति** । इक्षुधन्वन इक्षुचापस्य पुष्पबाणस्य मम वायुवह्निबाणो मेरुधन्वा त्र्यम्बकोऽप्याज्ञां नोल्लङ्घते, किं पुनर्विवेकादय इति भावः । "अग्निमनीकं सोमं शल्यं विष्णुं तेजनं तेऽब्रुवन्" इत्यादिश्रुतिप्रसिद्ध्या मरुदनलशर इत्युक्तम् । मेरुधनुष्ट्वादिकं त्रिपुरविजये महाभारते प्रसिद्धम् । व्यतिरेकस्तु क्षणं क्षणमात्रमेव कथमतिलङ्घितशासनः स्यात् । किंतु सर्वदातिलङ्घितशासन एव, मेरुचापादिप्रबलसाधनत्वादिति ॥ ३५ ॥

**विकत्थनम्**; आत्मश्लाघा । मावमंस्थाः; विकत्थनमेवेति व्यज्यते ।

### प्रभावली

इत्याह—**करेति** । करधृतं ललितेक्षुरूपं धन्व[3] यस्य । भ्रमररूपे गुणे ज्यायामर्पिताः प्रतिसंहिताः पुष्परूपा मार्गणा येन तस्य मम । मरुत् वायुः, तद्विशिष्टोऽनलः शरः त्रिपुरदहने यस्य सः । मेरुः धन्व[3] यस्य स सन्नपि क्षणं ममातिलङ्घितशासनः कथं भवेत्; अतिलङ्घितमच्छासनः कथं स्यादित्यर्थः । सापेक्षत्वेऽपि गमकत्वात्समासः । क्षणमपि ममाज्ञां लङ्घयितुं न शक्त इत्यर्थः । अत एव ह्यर्धनारीश्वरो वर्तत इति भावः ॥ ३५ ॥

[1] मंस्थाः—क. ख. [2] घ adds before this, the stanza विकस्वरसुरद्रुम etc. which is found in act 4, stanza 13.

[3] धन्वशब्दोऽत्र धनुःपर्यायः ।

अथवा न खलु भवती विश्ववृत्तान्तवैदेशिकी। **दृष्टचर एव हि** त्वत्प्रियस्यासौ वीरायितवृत्तान्तः। तथाहि—

**वहति महिलामाद्यो वेधास्त्रयीमुखरैर्मुखै-**
**र्वरतनुतया वामो भागः शिवस्य विवर्तते।**

### प्रभाविलासः

**मातङ्गस्येति** विवेको व्यज्यते। **वैदेशिकी**; विदूरस्था, अज्ञेति यावत्। **दृष्टचर एवः**; त्र्यम्बकनेत्रोन्मीलनादिष्विति ध्वन्यते। सर्वत्र यथाश्रुतेन मदनस्तुतिः।

"यत्र वातेन नीयन्ते कुञ्जराः षष्टिहायनाः।
गावस्तत्र न गण्यन्ते मशकेषु तु का कथा॥"

इत्येतन्मनसि कृत्वाह—**वहतीति**। **महिलाम्**; स्त्रियं सरस्वतीम्। **आद्यो वेधाः**; चतुर्मुखः। **मुखरैः**; शब्दायमानैः। **वरतनुतया**; स्त्रीरूपेण। **विवर्तते**; परिणमति। **तदपि**; अखिलहेयविरुद्धतया प्रसिद्ध-

### प्रभावली

**सखीति** रत्याः संबोधनम्। इदं कामोक्तं वचनं **विकत्थनमात्मश्लाघा-**वचनमिति **मावमंस्थाः। न हीति। मशकाः;** क्लिन्नाक्ष्णां चक्षुःसमीपे पतन्तः क्षुद्रजन्तवः। ते यथा मातङ्गस्य गजस्य प्रतिस्पर्धिनः प्रतिभटा न भवन्ति, तथा विवेकोऽपि कामस्येत्यर्थः। इममर्थमजानत्यास्तव मया वक्तव्यम्, त्वं तु सर्व-वृत्तान्तवेदिनीत्याह—**अथवेति। विश्ववृत्तान्तस्य वैदेशिकी** विदेशस्था न खल्वसि। **दृष्टचरः**; पूर्वमेव दृष्टः। **वीरायितवृत्तान्तः**; पराक्रमवृत्तान्तः। तदुपपादयति—**वहतीति। आद्यो वेधाः**; नवप्रजापतीनामाद्यो ब्रह्मा। **त्रयी-मुखरैः**; वेदत्रयध्वनिमुखरितैः **मुखैः महिलां** वनितां सरस्वतीं **वहति। त्रयी-**

तदपि परमं तत्त्वं गोपीजनस्य वशंवदं
मदनकदनैर्न क्लिश्यन्ते कथं न्वितरे जनाः ॥ ३६ ॥

कामः—साधु वसन्त, साधु । कालानुरूपवादी खल्वसि ।

विश्वं युवतिसात्कर्तुं भवता दत्तसायके ।
विवेकः किं नु वर्तेत विपक्षे मयि संस्थिते[1] ॥ ३७ ॥

प्रभाविलासः

मपि । **परमं तत्त्वम्**; "तत्त्वं नारायणः परः" इति श्रुतिरत्राभिप्रेता । **कदनम्**; युद्धम । **इतरे**; विवेकादयः । मध्यकैशिकी वृत्तिः । तदुक्तम् "मृद्वर्थकेषत्प्रौढार्थसंदर्भा मध्यकैशिकी" इति ॥ ३६ ॥

**विश्वमिति । युवतिसात्कर्तुम्**; युवत्यधीनं कर्तुम् । अधीनार्थे

प्रभावली

मुखैरिति ब्रह्मणश्छान्दसत्वं ख्याप्यते । शिवस्य वामो भागः पार्श्वः वरतनुतया स्त्रीरूपेण विवर्तते विकृतं वर्तते । "यच्छौचनिःसृत" इत्यादिप्रसिद्धिद्योतनाय शिवस्येत्युक्तम् । विवर्तो नाम पूर्वावस्थाविरुद्धावस्थान्तरापत्तिः । "यदि मे ब्रह्मचर्यं स्यात्" इति प्रसिद्धया तदपि **परमं तत्त्वमित्युच्यते**; "कृष्ण एव हि लोकानाम्" इत्युक्तः कृष्णश्च । **गोपीजनस्य वशंवदं** गोपीजनाधीनं जातम् । अनेन त्रिषु मूर्तिषु मध्ये कस्यचिन्मुखं कस्यचिदर्धं शरीरं कस्यचित्सर्वाङ्गमपि कान्तायत्तं जातम्; किमुतेतरेषामित्युक्तिवैचित्री । तदुक्तम्---

"आ हृदयादा वदनादा मौलेः शौरिधातृगिरिशाः ।
चित्रं यत्र निमग्ना जयति रसः कोऽपि जीवातुः ॥"

इति ॥ ३६ ॥

[1] विपक्षेऽपि मयि स्थिते—ङ, च, छ.

**रतिः**—अय्यउत्त, एव्वं एदं । तह वि विसमट्ठिरसंठाण-वेरग्गदुग्गप्पडिट्ठिओ अप्पमत्तेहिं समदमप्पमुहेहिं अमच्चेहिं अहि-रक्खिओ सअं असहाअसूरो अणवाअसाहसो अ विपक्खो किं णाम कहिआ काहित्ति कलुसिअहिअअम्हि ।

### प्रभाविलासः

सात्प्रत्ययः । **किं नु वर्तेतेति** काकुः ; न वर्तेतैवेत्यर्थः । न वर्तेत किम् ? वर्तेतैवेति व्यज्यते ॥ ३७ ॥

**स्थिरं संस्थानं** यस्य तत् । विषमं च तत् स्थिरसंस्थानं च । तत् वैराग्यमेव दुर्गं, तत्र प्रतिष्ठितः । विषमं दुःसाधम् । **विप्रलब्धा** ; वञ्चिता । **त्वत्प्रियस्ये**त्यत्र प्रिय इति नायकविशेष उक्तः ;

" सत्यवागार्जवमतिरुपकुर्वन् प्रियं वदन् ।
भजते यः स्वयं प्रीतः प्रियः स भवति स्त्रियाः ॥ "

### प्रभावली

**कालानुरूपवादी ;** तत्तत्कालयोग्यवादी । कामादिसंबन्धादेवं वदसीति भावः । **विश्वमिति** । विश्वं जगत्साकल्येन युवत्यधीनं कर्तुं त्वया दत्तसायके विपक्षभूते मयि संस्थिते विवेकः किं नु वर्तेत ; न वर्तेतैव । मयि संस्थिते मृते सति वर्तेतेति व्यङ्ग्योऽर्थः ॥ ३७ ॥

प्रकारान्तरेण रतिर्भयं शङ्कते—**तह वीति** । तह वि—तथापि । **विसमट्ठि-रसंठाण**—विषमस्थिरसंस्थान । **वेरग्गदुग्गप्पडिट्ठिओ**—वैराग्यदुर्गप्रतिष्ठितः । वैराग्यदुर्गस्य विषमत्वं शत्रुभिर्दुरारोहत्वम् । स्थिरत्वमक्षोभ्यत्वम् । **अप्प-मत्तेहिं**—अप्रमत्तैः । **समदमप्पमुहेहिं**—शमदमप्रमुखैः । **अमच्चेहिं**-अमात्यैः । **अहिरक्खिओ**-अभिरक्षितः । **सअं असहाअसूरो**-स्वयमसहायशूरः । **अणवा-असाहसो**-अनपायसाहसः । **विपक्खो**—विपक्षः । **किं णाम**-किं नाम । कहआ-

(आर्यपुत्र, एवमेतत् । तथापि विषमस्थिरसंस्थानवैराग्य-दुर्गप्रतिष्ठितोऽप्रमत्तैः शमदमप्रमुखैरमात्यैरभिरक्षितः स्वयमसहाय-शूरोऽनपायसाहसश्च विपक्षः किं नाम कदा करिष्यतीति कलुषित-हृदयास्मि ।)

**कामः**—अयि भीरु, अलमतिशङ्कया । नूनं विपक्षपक्ष-पातिबालिशजनविप्रलब्धा स्वयूथ्यवैभवं न निर्धारयसि । पश्य तावत् विश्वविजयिनस्त्वत्प्रियस्य मे जगत्त्रयप्रसिद्धं जैत्रमुप-करणम्—

**वपुरप्रतिमं नितम्बिनीनां दृढसौन्दर्यगुणं दरावनम्रम् ।**
**श्रवणावधिनेत्रचित्रपुङ्खं धनुराद्यं मम मुष्टिमेयमध्यम् ॥ ३८ ॥**

### प्रभाविलासः

इत्युक्तत्वात् । **जैत्रम्**; जयशीलम् । **वपुरिति** । **दृढसौन्दर्यमेव** गुणो मौर्वी यस्य । दृढसौन्दर्यगुण एव गुण इति श्लिष्टरूपकम् । **चित्रपुङ्खः**; बाणः । **दरावनम्रम्**; स्तनभरादित्यभिसन्धिः । "स्तनभरनतमन्तर्ब्रह्म संचिन्त-यामि" इति हि वक्ष्यते । **आद्यं धनुः**; अस्मत्पुष्पधनुरारोपणात् पूर्वमेव स्त्रीणां विभ्रमैरेव विश्वं जितमित्यर्थः ॥ ३८ ॥

### प्रभावली

कदा । **काहित्तित्ति**-करिष्यतीति । **कलुसिअहिअअह्मि**—कलुषितहृदयास्मि । **भीरु**; भयशीले । **अतिशङ्का**; असंभावितविषये शङ्का । **नूनमित्यादि** । **विप्र-लब्धा**; वञ्चिता । **स्वयूथ्यानां** स्ववर्ग्याणामस्मत्प्रमुखानां वैभवं न निश्चिनोषि । **जैत्रमुपकरणम्**; जयशीलं साधनम् । **वपुरिति** । **अप्रतिममिति** वपुषो धनुषो वा

अपिच,

**शैलीं विलोपयति शान्तिमधः करोति**
**व्रीडां व्युदस्यति विरक्तिमपह्नुते च ।**
**कर्णामृतं किमपि तत्कलभाषिणीनां**
**नामापि किं न विकरोति निशम्यमानम् ॥ ३९ ॥**

**वसन्तः—**ननु कैमुतिकमेतत् यदिदं योषितां यदृच्छा-कीर्तनश्रवणादिकमपि चित्तसंक्षोभहेतुरिति ।

## प्रभाविलासः

**शैलीमिति** । **शैलीम्**; सद्वृत्तिम् । **निशम्यमानम्**; अवशेन श्रुतिप्राप्तम् । **नामापि**; कीदृशं तन्नामेत्यत्राह—**कलभाषिणीनामिति** । कलभाषिणी; कीरवाणी मञ्जुभाषिणीत्यादिकमर्थः ॥ ३९ ॥

## प्रभावली

विशेषणम् । **दृढेति** । सौन्दर्याख्यगुणविशिष्टम् । **गुणः**; मौर्वी । **दरावनम्रम्**; ईषदवनतम् । श्रवणावधि यन्नेत्रं तदेव चित्रपुङ्खो बाणो यस्य । मुष्टिग्राह्यमध्यं मम आदिमं धनुः । इक्षुपुष्पादयस्तदनन्तरभूता इति भावः ॥ ३८ ॥

स्त्रिय एव मम जगज्जयोपकरणमित्युक्तम् । तदेवोपपादयंस्तद्वैभवमाह—**अपिचेति** । **कलभाषिणीनां** कलमधुरभाषिणीनां स्त्रीणां तन्नामापि निशम्यमान-माकर्ण्यमानं किमपि कर्णामृतं सत् किं न विकरोति । किं कर्म विकारं न प्रापयति, सर्वं जनं विकारयत्येव । कर्मापेक्षया किंशब्दस्य नपुंसकत्वम् । विकारं विवृणोति—**शैलीमित्यादि** । शीलं सद्वृत्तमेव शैली । स्वार्थेऽणि ङीप् । निशमयितुः पुरुषस्य विलोपयति; प्रथममाचारभ्रंशं करोति; विषयतृष्णामु-त्पादयति । ततः शान्तिमधः करोति । **व्रीडां व्युदस्यति**; लज्जां त्याजयति । **विरक्तिं** विद्यमानं संसारवैराग्यं क्रमेण विनाशयति ॥ ३९ ॥

**तिष्ठतु गुणावमर्शः स्त्रीणामालोकनादिभिः सार्धम् ।**
**दोषानुचिन्तनार्था स्मृतिरपि दूरीकरोति वैराग्यम् ॥ ४० ॥**
**अपि च प्रभूतमदमेदुरात्मनो**
**विषयाटवीषु विविधासु धावतः ।**

### प्रभाविलासः

**तिष्ठत्विति** । **गुणावमर्शः** ; सौन्दर्यादिगुणवर्णनम् । आदिपदेन भाषणलीलापरिहासकेलिपरिरम्भा उच्यन्ते । **दोषानुचिन्तनं** "स्तनौ मांसग्रन्थी" इत्यादिचिन्तैवार्थः प्रयोजनं यस्याः सा ॥ ४० ॥

अस्तु मनश्चापल्यं त्वदुक्तम् । तन्निरोधे विरक्तिरप्रतिबन्धेत्याशङ्क्य सापि न सिध्यतीत्याह—**अपिचेति** । **मदेन** मेदुरः सान्द्र आत्मा

### प्रभावली

**कैमुतिकम्** ; कैमुतिकन्यायसिद्धम । **एतत** ; वक्ष्यमाणं चित्तसंक्षोभहेतुरिति यदस्ति, एतत् । तच्छब्दस्थाने एतच्छब्दस्य प्रयोगः । किमपेक्षया कैमुतिकन्यायसिद्धमित्यत्राह—**तिष्ठत्विति** । **स्त्रीणामालोकनादिभिः** आलोकप्रसङ्गसंभाषणादिभिः सह **गुणावमर्शः** सौन्दर्यादिगुणविचारस्तिष्ठतु ; पुरुषं विकारयतीत्ययमर्थस्तिष्ठतु । **दोषानुचिन्तनार्था** ;

"स्तनौ मांसग्रन्थी कनककलशावित्युपमितौ
मुखं श्लेष्मागारं तदपि च शशाङ्केन तुलितम् ।
स्रवन्मूत्रक्लिन्नं करिवरशिरःस्पर्धि जघनं
मुहुर्निन्द्यं रूपं कविजनविशेषैर्गुरु कृतम्" ॥

इति दोषविचाराय स्त्रीणां **स्मृतिः** स्मरणमपि पुरुषस्य **वैराग्यं दूरीकरोति** ; दूरतो निरस्यति । स्त्रीणां दृष्टानुभूतदोषचिन्तनस्मृतेरपि वैराग्यनाशकत्वे तासां गुणविचारार्था स्मृतिश्चित्तसंक्षोभहेतुरितीदं न वक्तव्यमित्यर्थः ॥ ४० ॥

**स्वबलेन हन्त मनसो निवर्तनं**

**बिसतन्तुनेव सुरदन्तियन्त्रणम् ॥ ४१ ॥**

**रतिः**—अय्यउत्त, दिढभूमिविब्भमसमुम्मूलणक्खमाणं जोईसराणं दिट्ठिं परिहरंतेण तुए परक्कमणिज्जं ।

(आर्यपुत्र, दृढभूमिविभ्रमसमुन्मूलनक्षमाणां योगीश्वराणां दृष्टिं परिहरता त्वया पराक्रमणीयम् ।)

**कामः**—(विहस्य) प्रिये, पश्यामि चक्षुषीव ते चेतस्यपि कातर्यम् । योजयामि खल्वहं योगीश्वरानपि युवतियोगीश्वरपादे ।

**प्रभाविलासः**

स्वरूपं यस्य तस्य । **यन्त्रणम्**; बन्धनम् ॥ ४१ ॥

**दृढभूमिः**; दृढस्थानः; स्थिर इति यावत् । विभ्रमविशेषण-

**प्रभावली**

स्त्र्यादिविषये चरतो मानसस्य स्वशक्त्या नियमनमशक्यमिति सदृष्टान्तं दर्शयति—**अपिचेति** । **अपिच**; किंचेत्यर्थः । **प्रभूतेन** बहुलेन **मदेन** गर्वेण मदोद्गमेन च **मेदुरः** मांसलः सान्द्र इत्यर्थः, आत्मा मनो यस्य तस्य । **विषयाः** शब्दस्पर्शादय एवाटव्यः । **विविधासु**; नानाविधासु । शब्दादय आश्रयभेदाद्बहुविधाः । तासु **धावतः** वेगेन संचरतः **मनसः स्वबलेन** भगवत्कृपां विना केवलं स्वयत्नेन, शब्दादिभ्यो **निवर्तनं** नियमनं न शक्यते । किमिव ? **बिसतन्तुना** पद्मनालसूत्रेण **सुरदन्तिन** ऐरावतस्य चरणबन्धनमिवाशक्यम् ॥ ४१ ॥

अथ भर्तुः सावधानतामुपदिशति—**दृढभूमीत्यादि** । **दृढभूमिविभ्रमसमुन्मूलनक्षमाणाम्**; दृढा भूमिरावासस्थानं येषां तेषां विभ्रमाणां, विशिष्टो भ्रमः देहात्मभ्रमादिकमुच्यते, तेषां समुन्मूलनं मूलेन सहोत्पाटनम्; **तत्र** समर्थानामित्यर्थः । **विहस्य**; सावधानतोपदेशात् । स्वसामर्थ्यमाह—**योज-**

सुभगपरुषैर्मदस्त्रैः कीलितमन्योन्यकवचितैकार्धम् ।
किं न विदितं भवत्या किमपि मिथः स्यूतजीवितं मिथुनम् ॥ ४२ ॥

रतिः—अय्यउत्त, अवहारिअं मए तुह माहप्पं । दाणिं उण दीहबुद्धिबलेण देव्वदिण्णहत्थेण जमणिअमप्पमुहबहुसहाअसंपण्णेण अहंडुच्चाहप्पहुत्तणमंतसत्तिणा सत्तुणा काहे किं होज्जंत्ति पबलपवणाहआ कअली विअ तरलअरह्मि । पसिद्धं खु पण्णाबलं मोक्खपेरंताणं अइदुक्खराणं सिद्धीणं साहणं ति ।

(आर्यपुत्र, अवधारितं मया तव माहात्म्यम् । इदानीं पुनर्दीर्घबुद्धिबलेन दैवदत्तहस्तेन यमनियमप्रमुखबहुमहायसंपन्नेनाखण्डो-

प्रभाविलासः

मिदम् । **विभ्रमः ;** देहात्माद्यभिमानः । अत्र शिवनेत्रोन्मीलनं ध्वनितम् । एवं ध्वनितार्थस्वीकारेण सोऽपि शिवः पश्चाद्वशीकृत इत्याह—**सुभगेति** । अस्त्राणां कुसुमरूपतया सुभगत्वम् । रागिबाधकतया परुषत्वम् । **कीलितम् ;** स्यूतम् । **कवचितं** तिरोभावितमेकमर्धं यस्य तत्तथोक्तम । न केवलं शरीरम्, प्राणा अपि कीलिता एवेत्याह—**मिथ इति** । दलद्वयविच्छेदे जीवनमपि दुर्लभमिति भावः । **मिथुनम् ;** अर्धनारीश्वराख्यम् ॥ ४२ ॥

**दीर्घबुद्धिबलेन ;** विमर्शवता । उत्साहादीनां विवेकमूलतया

प्रभावली

यामीति । युवतय एव योगीश्वराः । उक्तमर्थं दर्शयति—**सुभगेति** । स्वरूपतः सुभगैः, कार्यतः परुषैः, ममास्त्रैः अन्योन्यं कवचितं कवचायितम् एकार्धमेकपार्श्वं यस्मिंस्तद्यथा तथा कीलितं बद्धम् । **मिथः स्यूतजीवितम् ;** अन्योन्यायत्तजीवितम् । **किमपि मिथुनम् ;** उमाशंकररूपं स्त्रीपुंसयुगलं भवत्या किं न विदितम् । सर्वलोकविदितमिति भावः । स्यूतं प्रोतम् ॥ ४२ ॥

त्साहप्रभुत्वमन्त्रशक्तिना शत्रुणा कदा किं भवेदिति प्रबलपवनाहता कदलीव तरलतरास्मि । प्रसिद्धं खलु प्रज्ञाबलं मोक्षपर्यन्तानामतिदुष्कराणां सिद्धीनां साधनमिति ।)

**कामः**—(सरोषहासम्) अयि मुग्धे मञ्जुभाषिणि, गुञ्जन्मधुकरशिञ्जिनीसंहितविश्वलक्ष्यविषमविशिखस्य नित्यविजयजागरूकस्य त्वत्प्रियस्य मम संनिधौ का पुनः प्रज्ञा[1] । केन वा कस्य वा मुक्तिर्भवित्री । किमिति नाम मध्य इव भवत्या मानसेऽपि सौक्ष्म्यं नालक्ष्यते? (विहस्य) प्रिये, हन्त विदितमेतत् । नूनमिदानीं स्तनतटगतं स्थौल्यमेतदन्तरपि संक्रान्तम्[2] । अथवा अविचारितरमणीयमबलाजनस्वाभाव्यं भवत्यामपि वर्तते । संपश्यतां भवती—

### प्रभाविलासः

तदुक्तिः । **प्रज्ञाबलम्**; ब्रह्मज्ञानसामर्थ्यम । **शिञ्जिनी**; मौर्वी । गुञ्जन्तश्चरन्तश्च ते मधुकराश्च, त एव शिञ्जिनी, तया संहिता संयोजितेत्यादिरर्थः ।

"सङ्गात्संजायते कामः कामात्क्रोधोऽभिजायते ।
क्रोधाद्भवति संमोहः संमोहात स्मृतिविभ्रमः ।
स्मृतिभ्रंशाद्बुद्धिनाशो बुद्धिनाशात्प्रणश्यति ॥"

### प्रभावली

**सरोषहासम्**; शत्रुप्रशंसनाद्रोषस्तत एव च हासो यस्मिंस्तत्तथा । अथ रतिं परिहसति—**अतिमुग्धे** इत्यादिना । **अतिमुग्धे**; अतिकोमलमनस्के इति भावः । मञ्जुभाषिणि; तथापि तव वचनं मनो हरतीति भावः । **गुञ्जदित्यादि** । गुञ्जन्तो व्यक्तं शब्दायमाना मधुकरा एव शिञ्जिनी धनुर्ज्या, तस्यां संहिताः स्थानं प्रापिता विश्वलक्षाः जगच्छरव्याः बाणा यस्य । नित्यं विजये जागरूकस्य

[1] का वा प्रज्ञा—क.　　[2] स्तनतटगतमेतत्स्थौल्यमन्तरेऽपि संक्रामति—क, ग.

मयादिष्टः क्रोधः प्रथयति किमप्यान्ध्यमथ च
स्मृतिभ्रंशः सेद्धा विघटयति बुद्धिं सपदि सः ।
तया मुक्तः क्षेत्री तमसि गहने विन्दति लयं
तथा भूते किं वा जनयति[1] विवेको जडमतिः ॥ ४३ ॥

**प्रभाविलासः**

इति श्रीगीतोक्तमनुसंधत्ते— **मयेति** । अत्र मयेति काम उक्तः । कामो नाम सङ्गस्य विपाकावस्था, पुरुषो यां दशामापन्नो विषयानभुक्त्वा स्थातुं न शक्नोति । मया क्रोध इति कार्यकारणभाव उक्तः । कामे वर्तमाने विषये चासंनिहिते क्रोधो भवतीत्यर्थः । स च क्रोधः संनिहितसकलपुरुष-विषय इत्याह— **आदिष्ट इति** । आ समन्तादभितो दिष्ट इत्यर्थः । अत एव "अभिजायते" इत्युक्तम् । ईश्वरोऽपि क्रोधमभिनयन् कस्मिंश्चिदेव रक्षसि मुह्यति— "सदेवगन्धर्वमनुष्यपन्नगं जगत् सशैलं परिवर्तयाम्यहम्" इति । **आन्ध्यम्;** कृत्याकृत्यविवेकशून्यताम् । अनेन मोहशब्दो विवृतः ।

**प्रभावली**

त्वद्वल्लभस्य मम । का प्रज्ञा, मोक्षविषयिणी बुद्धिः कीदृशी, नास्तीत्यर्थः । केन साधनेन कस्य वा पुरुषस्य मुक्तिर्भविष्यति । सर्वं गगनकुसुमवदत्यन्तासंभाव्य-मित्यर्थः । सौक्ष्म्याभावात् परिहसति— **किमित्यादि** । अयि प्रिये, भवत्या मध्ये यथा सौक्ष्म्यं दृश्यते, तथा मानसे बुद्धावपीत्यर्थः, सौक्ष्म्यं सूक्ष्मता न दृश्यते । **विहस्य** तदुत्प्रेक्षते— तव मनसः स्थूलत्वस्य मूलं मया विदितमित्यर्थः । **नूनमित्युत्प्रेक्षते** । बहिः स्थितयोः स्तनयोर्गतमिदं स्थूलत्वमन्तर्मनस्यपि संक्रान्त-मिति । **अविचारितरमणीयम्**; आपातमनोहरं स्त्रीणां स्वाभाव्यं स्वभावः तद्भव-त्यामपि वर्तते । तद्विहाय मम सामर्थ्यं पश्येत्याह— **मयादिष्ट** इत्यादिना । मया कामेनादिष्टः प्रहितः क्रोधः, "कामात् क्रोधोऽभिजायते" इत्युक्तेः ।

[1] जनयतु—क, ख.

## प्रभाविलासः

समित्युपसर्गार्थमाह—**किमपीति** । पश्चाद्विषयसंनिधानेऽप्यनिवृत्तमित्यर्थः । अथ चेत्यानन्तर्येण स्मृतिभ्रंशं प्रति संमोहस्य प्रयोजकत्वमुक्तम् । सावान्तरव्यापारात् संमोहादित्यर्थः । अभाषि चावान्तरव्यापारः—"तया सर्वं करोति" इति । स्मर्यते च—"क्रुद्धः पापं न कुर्यात्कः क्रुद्धो हन्याद्गुरूनपि" इति । **स्मृतिभ्रंशः**; प्रारब्धेन्द्रियजयादिके प्रयत्ने स्मृतिभ्रंशः सेद्धा सिद्धो भवति । **सः**; स्मृतिभ्रंशः । **बुद्धिं विघटयति**; अत्र बुद्धिपदेनेतः पूर्वमात्मदर्शनासिद्धेर्भविष्यदात्मदर्शनस्य नाशायोग्यत्वात् तल्लिप्सया कृतस्तदुपायानुष्ठानाध्यवसायो विवक्षितः । प्रणश्यतीति प्रतीकं व्याचष्टे—**तमसीति** । आत्मनः स्वरूपनाशासंभवात् यथावस्थिताकारानुपलम्भ एवात्र विनाश इति भावः । **लयम्**; लीनताम् । **तथा भूते**; एवं सति । **किं वा जनयति**; न किमपीत्यर्थः ॥ ४३ ॥

## प्रभावली

कामालाभात् क्रोधप्रवृत्तिः । कोपप्रवृत्तेः पुरुषस्य **किमपि**; वाचामगोचरम् । **आन्ध्यम्**, कार्याकार्यविवेकज्ञानाभावं प्रथयति विस्तारयति । **अथ च**; क्रोधान्ध्यप्राप्त्यनन्तरम् । **स्मृतिभ्रंशः सेद्धा**; संमोहद्वारा स्मृतिभ्रंशः सेत्स्यति । संमोहः अज्ञानम् । **सः**; स्मृतिभ्रंशः **बुद्धिं** प्रज्ञां शीघ्रं **विघटयति** शिथिलयति । **तया** प्रज्ञया मुक्तः जीवः **गहने तमसि** अज्ञाने संसारे **विलयं** नाशं विन्दति । **तथा भूते पुंसि**; इत्थंभावमापन्ने । मन्दमतिः विवेकः **किं जनयति**; प्रज्ञादिमोक्षपर्यन्तेषु किं वा जनयितुं शक्नोति, न किमपीत्यर्थः । प्रज्ञाबलान्मोक्षसिद्धिरिति यत् त्वयोक्तं तत् सत्यम्; मम मन्त्रशक्त्या प्रज्ञैव नोत्पद्यत इति भावः । अत्र

> "सङ्गात्संजायते कामः कामात्क्रोधोऽभिजायते ।
> क्रोधाद्भवति संमोहः संमोहात् स्मृतिविभ्रमः ।
> स्मृतिभ्रंशाद्बुद्धिनाशो बुद्धिनाशात्प्रणश्यति ॥"

इति श्रीभगवद्गीतावचनमनुसंधेयम् ॥ ४३ ॥

तदेवमसह्यवेगमस्मद्व्यूहं विवेकामात्याः शमदमादयो न प्रसहिष्यन्ते। स्वयं च दुर्जयो निखिलसुरासुरकोटीर[1]विन्यस्तवामपादो महामोहः। न हि भवति तरक्षुर्मृगराजस्य[2] परिपन्थी[3]।

**परस्य पुरुषस्येव पञ्चभिश्च ममायुधैः।**
**समयेषु विमथ्यन्ते सत्त्ववन्तोऽपि शत्रवः॥ ४४॥**

### प्रभाविलासः

**न हीत्यादि**। तरक्षुः; क्षुद्रव्याघ्रः। **परस्येति**। **पञ्चभिश्च ममायुधैः**; अरविन्दाशोकचूतनवमल्लिकानीलोत्पलैः। अन्यत्र शङ्खचक्रगदाखड्गशार्ङ्गैः। **समयेषु**; वसन्तादिकालेषु, धर्मविप्लवेषु च। **सत्त्ववन्तः**; सात्त्विकाः, बलवन्तश्च। **शत्रवः**; विवेकादयः, असुराश्च॥ ४४॥

पुरा किल नरनारायणावतारे नारायणसमाधिभङ्गार्थमिन्द्रप्रेषितेऽप्सरोगणे स्वाभिरूप्यगर्विते नारायणेन तद्गर्वापनयनायोरुप्रदेशात् स्त्रीरत्नं निष्पाद्य दर्शितमिति भागवतादिषु प्रसिद्धम्। तदेतत् स्वानुकूल्येनानु-

### प्रभावली

अस्मद्व्यूहम्; अस्माकं बलविन्यासम्। सोढुं न समर्था भविष्यन्ति। स्वयं शूरस्य महामोहस्यास्मदपेक्षापि नास्तीत्याह—**स्वयं चेति**। **तरक्षुः**; मृगादनः। **परिपन्थी**; प्रतिभटः। स्वस्यापि शत्रुविध्वंसकत्वमाह—**परस्येति**। **परस्य पुरुषस्य**; पुरुषोत्तमस्य विष्णोरिव। **ममापि पञ्चभिरायुधैः**; शङ्खचक्रादिवत् अरविन्दाशोकादिभिः। अतिबलवन्तोऽपि शत्रवः **समयेषु** तत्तदवसरेषु विमथ्यन्ते निरस्यन्ते॥ ४४॥

किं बहूक्त्या। बदरिकाश्रमतापसो नारायणोऽपि मया जित इत्याह—

[1] मकुट—क. ख. छ; मणिमकुट—घ.
[2] सिंहराजस्य—क. ङ. छ.
[3] प्रतिस्पर्धी—क.

अपिच,

अलमिह विबुधाद्यैरागमग्राह्यवाचो
मुनिपरिषदि धर्मान् गायतो मुक्तिहेतून् ।
तपसि नियतवृत्तेस्तस्य देवस्य शान्तिं
जनितयुवतिरत्नं दर्शयत्यूरुकाण्डम् ॥ ४५ ॥

प्रभाविलासः

संधत्ते—**अलमिति**। **विबुधाद्यैः**; इन्द्रादिभिः। **अलमिति** प्रतिषेधे। तेषां मदधीनता स्पष्टेत्यर्थः। **आगमग्राह्यवाचः**; वेदतुल्यवचसः। अनेन पाञ्चरात्रोपदेशो लक्षितः। **धर्मान्**; निवृत्तिधर्मान्। "निवृत्तिलक्षणं धर्ममृषिर्नारायणोऽब्रवीत्" इति ह्युक्तम्। **गायतः**; उपदिशतः। वाचैव धर्मबोधनम्, मनस्त्वन्यथेति गानपदं प्रयुञ्जानस्य भावः। **देवस्य**; नारायणस्य, "दिव्यो देव एको नारायणः" इति श्रुतेः। **शान्तिम्**; इन्द्रियनिग्रहम्। **जनितं** युवतिरत्नं येन तत् तथोक्तम्। रत्नशब्दः श्रेष्ठ-वाची। "जातौ जातौ यदुत्कृष्टं तद्रत्नमिति कथ्यते" इति निघण्टुः। **ऊरुकाण्डं** कर्तृ शान्तिं दर्शयतीत्यन्वयः ॥ ४५ ॥

प्रभावली

**अलमिहेति**। **इह**; अस्मिन् जगति। मच्छत्रुविमथनप्रसङ्गे **विबुधाद्यैः** सुरासुरगन्धर्वाद्यैः कीर्तितैरलम्। **आगमवत्** ग्राह्या स्वीकार्या वाचो यस्य तस्य; आगमवद् ग्राह्याणि वाचो वचनानि येषां तान् वा। **धर्मान्**; धर्मशास्त्राणि। **मुक्तिहेतून्** मुनीनां परिषदि **गायत** उपदिशतः। **तपसि** आत्मध्याने **नियतवृत्तेः तस्य देवस्य** श्रीमतो नारायणस्य; **शान्तिम्**; विषयाद्विरक्तिम्। **जनितयुवतिरत्नम्**; **युवतिरत्नम्**; ऊर्वशी। सृष्टोर्वशीकम्। **ऊरुकाण्डमेव**; सक्थिदण्डमेव दर्शयति। शान्तिर्यद्यस्ति स्त्रीसृष्टिर्विरुध्येतेति भावः। तत्राप्यूरुतः सृष्टिर्विशेषतो विरुद्धा। **मुक्तिहेतून् धर्मान्**; निवृत्तिधर्मानित्यर्थः ॥ ४९ ॥

**रतिः**—अय्यउत्त, संभावेमि सच्चं तुह भासिअं। अब्बह्म-कीडं अप्पडिहअं खु तुह माहप्पं। एदं उण अण्णाअपुव्वं आण-वेदु अय्यउत्तो।

(आर्यपुत्र संभावयामि सत्यं तव भाषितम्। आब्रह्मकीटम-प्रतिहतं खलु तव माहात्म्यम्। एतत्पुनरज्ञातपूर्वमाज्ञापयत्वार्यपुत्रः।)

**कामः**—किं तत्?

**रतिः**—विवेअप्पहुदीणं महामोहप्पहुदीणं अ मिअंदमा-अंगाणं विअ किंणिमित्तं वेरंति।

(विवेकप्रभृतीनां महामोहप्रभृतीनां च मृगेन्द्रमातङ्गानामिव किंनिमित्तं वैरमिति।)

**कामः**—प्रिये, आकर्ण्यतामिदमादितः प्रभृति—

**प्रभाविलासः**

वैरस्य निदानं वक्तुं विवेकमोहादीनामुत्पत्तिं निरूपयति—

**प्रभावली**

**संभावेमीत्यादि**। **संभावेमि**—संभावयामि। **सच्चं**-सत्यम्। **तुह भासि-अं** तव भाषितम्। **अब्बह्मकीडं**-आब्रह्मकीटम्। **अप्पडिहअं**-अप्रतिहतम्। **खु**-खलु। **तुह माहप्पं**-तव माहात्म्यम्। **एदं उण**—एतत्पुनः। **अण्णाअपुव्वं**-अज्ञातपूर्वम्। **आणवेदु**-आज्ञापयतु। **अय्यउत्तो**-आर्यपुत्रः। **किं तत्**; अज्ञात-पूर्वं वृत्तान्तम्। **विवेअप्पहुदीणमित्यादि**। **विवेअप्पहुदीणं**—विवेकप्रभृती-नाम्। **महामोहप्पहुदीणं**—महामोहप्रभृतीनाम्। **विअ**—अपि। **मिअंदमादं-गाणं विअ**-मृगेन्द्रमातङ्गानामिव, सिंहगजानामिव। **किंणिमित्तं वेरंति**-किंनिमित्तं वैरमिति। अत्र मृगेन्द्रमातङ्गानामिति शाश्वतिकविरोधदर्शने दृष्टान्तीकुर्वत्या विवेकादीनां मृगेन्द्रत्वं महामोहादीनां मातङ्गत्वं च शब्दशक्त्या प्रतिपादितमिति

त्रिगुणघटिताद्भोक्तुर्बुद्धिः सती तदनुव्रता
समयनियतोच्छ्रायं त्रेधा कुलं समजीजनत् ।
प्रथममिह तद्भोगद्वेष्यं विवेकपुरःसरं
द्वितयमितरज्जुष्टं रागप्रमोहमुखं मिथः ॥ ४६ ॥

प्रभाविलासः

**त्रिगुणेति । त्रिगुणघटितात्**; त्रिगुणात्मकप्रकृतिसंसर्गिणः । **भोक्तुः**; जीवात् । भोक्तृत्वमेवास्य स्वाभाविकं निरूपकं चेति तस्य प्रवृत्तिनिमित्ततया निर्देशः । **बुद्धिः**; धर्मभूतज्ञानम् । **सती**; पुरुषान्तरानुभवानर्हा । अनेन स्वप्रकाशत्वमुक्तम् । स्वतः स्वस्मै भासमानत्वं हि तत् । **अनुव्रता**; नित्यमनुसृत्य स्थिता । "न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते" "न विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते" इति श्रुतेः । **समयनियतोच्छ्रायम्**; तत्तत्कालनियतौन्नत्यम्; सत्त्वाद्यभिव्यक्तिकालनियताभिव्यक्तिकमित्यर्थः । तदुक्तमेकादशे—

**प्रभावली**

विधिनैव विवेकादीनां बाधकत्वमितरेषां बाध्यत्वं च सूचितमिति भावः । पृष्टं प्रतिवक्तुमुपक्रमते—**त्रिगुणघटितेति । तदनुव्रता**; भोक्तुर्धर्मत्वात् तदविनाभूता । **बुद्धिः**; मतिरेव । **सती**; पत्नी । **त्रिगुणघटितात्**; त्रयाणां गुणानां समाहारस्त्रिगुणम्; पात्रादित्वात् ङीप्प्रतिषेधः । यद्वा त्रयो गुणा यस्येति त्रिगुणं प्रधानम्, तेन घटितात् संबद्धात् । **भोक्तुः**; जीवात् । **समयनियतोच्छ्रायम्**; सत्त्वरजस्तमसां तत्तत्समयेषु नियत उच्छ्राय उन्नतिर्यस्य तत् । कुलं त्रेधा समजीजनत् । इह; अस्मिन् कुलत्रये । **प्रथमम्**; सत्त्वप्रधानं **विवेकपुरःसरम्** । तद्भोगो द्वेष्यो यस्य तत् । यद्वा तद्भोगस्य द्वेष्यं शत्रुरिति तत्संसारपराङ्मुखं भवतीत्यर्थः । **रागमुखं प्रमोहमुखं च इतरत्**; द्वितीयं तृतीयं च कुलम् । **मिथः** अन्योन्यं च **जुष्टं** संगतं भवति ॥ ४६ ॥

**प्रभाविलासः**

" पुरुषं सत्त्वसंयुक्तमनुमीयाच्छमादिभिः ।
कामादिभी रजोयुक्तं क्रोधाद्यैस्तमसावृतम् ॥ "

इति । त्रैविध्यमेव विशिनष्टि—**प्रथममिति** । स्वहेतुभूतसत्त्वगुणप्राथम्येन विवेकादेः प्राथम्यम् ,

" सत्त्वात् संजायते ज्ञानं रजसो लोभ एव च ।
प्रमादमोहौ तमसो भवतोऽज्ञानमेव च ॥ "

इति श्रीगीतोक्तेः । अत्र ज्ञानमिति विवेकज्ञानमुच्यते, न सामान्यम ; लोभस्यापि तद्विशेषत्वेन पौनरुक्त्यात । **तद्भोगद्वेष्यम् ;** तस्य पुरुषस्य भोगो द्वेष्यो यस्येति बहुव्रीहिः । पुरःसरमुखशब्दाभ्यां शमदमकामक्रोधादयो गृह्यन्ते । तदुक्तमेकादशे—

" शमो दमस्तितिक्षा च तपः सत्यं धृतिः स्मृतिः ।
तुष्टिस्त्यागोऽस्पृहा श्रद्धा ह्रीर्दया धीः स्वनिर्वृतिः ॥
काम ईहा मदस्तृष्णा दम्भः स्तम्भो भिदा सुखम् ।
मदोत्साहौ यशः प्रीतिर्हास्यं वीर्यं बलोद्यमौ ॥
क्रोधो लोभोऽनृतं हिंसा याच्ञा दम्भः क्लमः कलिः ।
शोकमोहौ विषादार्ती निद्रा शान्तिरनुद्यमः ।
सत्त्वस्य रजसश्चैतास्तमसश्चानुपूर्वशः ।
वृत्तयो वर्णितप्रायाः संनिपातं ततः शृणु ॥ "

इति । विष्णुभक्त्यादेरपि सत्त्वादिप्रकृतिकत्वं तत्रैवोक्तम्—

" यदा भजति मां भक्त्या निरपेक्षः स्वकर्मभिः ।
तं सत्त्वप्रकृतिं विद्यात् पुरुषं स्त्रियमेव वा ।

अत्र विवेको महामोहश्च समानशीलाभिः प्रकृतिभिरभिषिक्तौ राजन्यौ । तयोरपि,

**मोहस्य धर्मपत्नी दुर्मतिरपवर्गदोषदृष्टिमयी ।**
**विषयरसदोषदृष्टिः सुमतिरनन्या विवेकस्य ॥ ४७ ॥**

**प्रभाविलासः**

यदा चाशिष आशास्य मां भजेत स्वकर्मभिः ।
तं रजःप्रकृतिं विद्याद्धिंसामाशास्य तामसम् ॥"

इति, "सात्त्विक्याध्यात्मिकी श्रद्धा" इति च । **रागप्रमोहमुखमिति;** रागमुखं प्रमोहमुखं चेत्यर्थः । **मिथो जुष्टम्;** अनुकूलप्रकृतिकत्वादिति भावः ॥ ४६ ॥

**समानशीलाभिः;** समानस्वभावाभिः । **प्रकृतिभिः;** अमात्यादिभिः ।

"प्रकृतिः पञ्चभूतेषु प्रधाने मूलकारणे ।
छन्दःकारणगुह्येषु जन्त्वमात्यादिमातृषु ॥"

इति निघण्टुः । दुर्मतिसुमती लक्षयति—**मोहस्येति** । अपवर्गे दोषदर्शनं दुर्मतिः । विषयरसे दोषदर्शनं सुमतिरित्यर्थः । **अनन्या;** भार्या ॥ ४७ ॥

**प्रभावली**

अत्र; कुलत्रये । **समानशीलाभिः;** विवेकस्य समानशीलाः शमदमादयः; महामोहस्य कामक्रोधादयः । गुणतः समानशीलाभिः । **प्रकृतिभिः;** प्रजाभिः । **राजन्यौ;** राजानौ । **मोहस्येति** । आर्या वृत्तम् । दुर्मतेः स्वरूपमाह—**अपवर्गेति** । अपवर्गे दोषदर्शनरूपा । सुमतेः स्वरूपमाह—**विषयेति** । विषयाः शब्दादयः । रसोऽनुभवः । तत्र दर्शनम् । अनन्या अनुकूला ॥ ४७ ॥

**रतिः**—तदो तदो ।

(ततस्ततः)

**कामः**—[1]ततश्च रजःप्रधाना रागादयस्तमःप्रसूतेः संसारचक्रवर्तिनो महामोहस्य दैत्यानुकूल[2]रक्षःकुलन्यायेन साचिव्यमाचरन्ति । सत्त्वसंभवं तु विवेककुलमसहायमल्पसारं च जगति वर्तते । जनकश्चास्माकं क्षेत्रज्ञः स्वयं मध्यस्थस्वभावोऽपि सहधर्मचारिण्या देव्या बुद्ध्या सहाद्य यावदस्मासु बहुलं दत्तदृष्टिः । तदिदमसहमाना नित्यनृशंसा विवेकादयो जातिवादिन इव स्वभङ्गमप्यनुमन्यमानाः पुरुषस्य भोगं तत्संवर्धकानस्मांश्चोत्सादयितुमीहन्ते ।

**प्रभाविलासः**

**दैत्याः**; दितिगर्भजाः । **अद्य यावत्**; एतद्दिनावधि । स्वव्या-

**प्रभावली**

**तदो तदो**-ततस्ततः । परवृत्तान्तं कथयेत्यर्थः । रागादय इति । **तमः** प्रसूतिरुत्पत्तिस्थानं यस्य तस्य महामोहस्य । **संसारचक्रं** वर्तयतीति संसारचक्रवर्ती । यद्वा संसारस्य चक्रवर्ती सार्वभौमः । **रक्षःकुलं** दैत्यानुकूलं यथा भवति तथा तन्न्यायेन । **साचिव्यम्**; सचिवत्वं, साहाय्यमिति यावत् । **सत्त्वं** संभव उत्पत्तिस्थानं यस्य तत् । **विवेककुलमसहायम्**; कुलान्तरसाचिव्यरहितम् । अत एवाल्पबलम् । **क्षेत्रज्ञः**; जीवः । **अद्य यावत्**; एतद्दिनावधीत्यर्थः । **बहुलम्**; अधिकम् । **दत्तदृष्टिः**; दत्ताभिमुख्यः । **नित्यनृशंसाः**; आश्रितघातुकाः । **जातिवादिनः**; स्वव्याघातकोत्तरवादिन इव । **पुरुषस्य**; भोक्तुः । **उत्सादयितुं** नाशयितुमुद्युञ्जते । **अनादिकालमारभ्य** भुक्तायां विविधान् दोषान्

[1] तत्र—**ख.** [2] रक्षःपिशाचकुल—च.

अस्मत्तातेन चानादिभुक्तायां प्रकृतौ विविधान् दोषानुद्घाट्य तातं च तस्यामुपजनितवैराग्यं केनचिदुपायेन [1]विघट्य्य महाप्रस्थानेनापुनरावर्तिनं कर्तुमारभन्ते[2]। तथा मर्कटरक्षःपती महापातकिनौ सुग्रीवविभीषणौ स्वकुलोत्सादने प्रमाणयन्ति[3]। अत एवास्माभिरपि परित्यक्तसौभ्रात्रैस्तेऽमी दुरात्मानो जिघांस्यन्ते। [4]ततः प्रवृत्तिनिवृत्तिपद्धती समाश्रित्य वयं च ते च संयतिष्यामहे। तदा

प्रभाविलासः

घातकमुत्तरं **जातिः**। **अनादिभुक्तायामिति** भुजिष्यासमाधिः। **अपुनरावर्तिनमिति** भर्त्सनोक्तिः; संसारबन्धरहितमित्यर्थः। प्रवृत्तिपद्धतिः संसारमार्गः। निवृत्तिपद्धतिर्मोक्षमार्गः। **ज्योतिरिङ्गणः**; खद्योतः।

प्रभावली

अल्पास्थिरत्वादिदोषान् **उद्घाट्य** प्रकाश्य **तस्यां प्रकृतौ जातवैराग्यं विघट्य्य** विघटनं कारयित्वा **अपुनरावर्तिनं** पुनरावृत्तिरहितं **कर्तुम्**। **मर्कटपतिः** सुग्रीवः। **रक्षःपति**; विभीषणः। उत्सादनविषये **प्रमाणयन्ति**; प्रमाणतया उदाहरन्ति। **अत एव**; स्वकुलोत्सादने प्रवृत्ततया। **ते**; विवेकादयोऽपि। हन्तुमिष्यन्ते। **ततः प्रभृति**; तत आरभ्येत्यर्थः। **वयम्**; प्रवृत्तिपद्धतिमाश्रिताः।

[1] विरचय्य—छ.

[2] अस्मत्तातेनेत्यारभ्य आरभन्ते इत्यन्तं omitted—क.

[3] न च तदारम्भसमये तातस्य दुर्दशा शक्या वर्णयितुम्। अयं खलु—

"जात्यन्धः परदोषदृष्टिषु परीवादेषु मूकाग्रणी-
बाधिर्यप्रथमावतारसरणिर्निन्दासमाकर्णने।
स्त्रीप्रायः परदारसंग्रहविधौ तद्वत्परावर्जने
संपद्येत समीक्षणेऽपि विकलः पापैर्विवेकादिभिः॥"

added after—क. ङ. च.

[4] ततः प्रभृति—घ.

[1]तु सत्त्वप्रधानं कुलं ज्योतिरिङ्गणज्योतिरिव द्युमणिकिरणैरस्माभि-
रभिभूयते ।

**सौहार्दमित्थमनवाप्य सहोदराणा-**
**मासीत्स्वमूलगुणभेदवशाद्विरोधः ।**
**एकप्रजापतिभुवामपि वैरबन्धः**
**स्वात्मावधिः स्वयमुदेति सुरासुराणाम् ॥ ४८ ॥**

प्रभाविलासः

विरोधं सनिदर्शनमाह—**सौहार्दमिति । सहोदराणामिति** एकमातृ-प्रसूतत्वमुक्तम् । **एकप्रजापतिभुवामिति** एकपितृकत्वमात्रोक्तिः, तेषां भिन्नो-दरत्वात् । **प्रजापतिः**; कश्यपः । अत्र निदर्शनालंकारः, "दृष्टान्तः प्रोक्तसिद्धयै यः सिद्धेऽर्थे सा निदर्शना" इति लक्षणात् ॥ ४८ ॥

प्रभावली

ते **च**; निवृत्तिपद्धतिमाश्रिताः । **संयतिष्यामहे**; संनद्धा भविष्यामः । **सत्त्व-प्रधानं** सत्त्वमूलं कुलं विवेकसंबन्धि गोत्रम् । **ज्योतिरिङ्गणः**; खद्योतः । तज्ज्योतिरिव **द्युमणिसदृशकिरणैः** अस्माभिः परिभूयते । सहोदराणां कथं विरोधः संजात इत्यत्र समाधिं दृष्टान्तेनोपपादयति—**सौहार्दमिति । इत्थम्**; उक्तप्रकारेण । सहोदराणामपि विवेकादीनां महामोहादीनां च सौहार्दं स्नेहमप्राप्यैव स्वस्वकारणभूतसत्त्वादिगुणवशाद्विरोधः संवृत्तः । एक एव कश्यपप्रजापतिः, तस्माज्जातानामपि सुराणामसुराणां च । **स्वात्मावधिः**; स्वस्वरूपमवधिर्यस्य स इत्यर्थः । **वैरबन्धः**; बध्यत इति बन्धः; वैररूपो बन्धविशेषः । **स्वयम्**; निर्निबन्धनमुदेति हि । तद्वत् ॥ ४८ ॥

[1] तु omitted—क.

रतिः—संतं पावं संतं पावं । पुत्ता एव्व पिदुणो भोअं विणासेंति[1] । तह[2] कहं सोअरा एव्व इअरेअरविद्धंसणलंपडहिअआ होंति । णाह किं ण होज्ज ताणं तुम्हाणं वि समरदुद्दसाणिवारणसाहणं[3] संधि ?

(शान्तं पापं शान्तं पापम् । पुत्रा एव पितुर्भोगं विनाशयन्ति[4] । तथा कथं सोदरा एवेतरेतरविध्वंसनलम्पटहृदया भवन्ति । नाथ, किं न भवेत्तेषां युष्माकमपि समरदुर्दशानिवारणसाधनं संधिः ?)

कामः—मुग्धे, कथंचिदपि नात्र संधिः संभाव्यते ।

[5]स्वतः सत्त्वविहीनानां सत्तयैवापराध्यताम्[6] ।
कथंकारं प्रतीकारः कल्पकोटिशतैरपि ॥ ४९ ॥

प्रभाविलासः

सन्ध्यनुपपत्तिमेव निदर्शनेनाभिव्यनक्ति—**स्वत इति**; स्वभावत

प्रभावली

**संतं पावं**—शान्तं पापम । दुर्वार्ताश्रवणजनितपापस्य शान्तिः प्रार्थ्यते—पापं शान्तमस्त्विति । **पुत्ता एव्व**-पुत्रा एव । **पिदुणो भोअं**-पितुर्भोगम । **विणासेंति**-विनाशयन्ति । **कहं सोअरा एव्व**-कथं सोदरा एव । **इअरेअर**-इतरेतर । **विद्धंसणलंपडहिअआ होंति**-विध्वंसनलम्पटहृदया भवन्ति । **णाह**—नाथ । **किं ण होज्ज**-किं न भवेत् । **ताणं तुम्हाणं वि**-तेषां युष्माकमपि ।

[1] विणासेदुं कोऊहलं पडिवज्जन्ति—क. [2] तह omitted—क.
[3] समुम्मूलणक्खमो—क. [4] विनाशयितुं कौतूहलं प्रतिपद्यन्ते—क.
[5] सतः—क. ग. छ. [6] राध्यतः—क. ग. छ.

अपिच,[1]

प्रतिपुरुषविभक्तमूर्तिभेदा
वयमितरे च मिथः प्रतीपवृत्ताः ।
क्वचिदधिकरणे समापतन्तः
सुतनु दधीमहि वध्यघातुकत्वम्[2] ॥ ५० ॥

प्रभाविलासः

एव । सत्त्वविहीनानां प्रतीकारः ; अविरोधः । यद्वा सतः सात्त्विकस्य । सत्तयैवापराध्यत इति पाठः ; स्वरूपमेव विरोधनिमित्तमिति तन्निवृत्तिमन्तरेण न प्रतीकारसंभव इत्यर्थः ॥ ४९ ॥

प्रतिपुरुषेति । पुरुषे पुरुषे ; अधिकरणभेदादित्यर्थः । विभक्तो मूर्तिभेदो व्यक्तिभेदो येषां ते तथोक्ताः । यद्वा प्रतिपुरुषं पुरुषं पुरुषं

प्रभावली

समग्गदुद्दसाणिवारणसाहणं संधि-समग्रदुर्दशानिवारणसाधनं संधिः । अत्र ; अस्मिन् विषये । कथंचिदपि ; केनापि प्रकारेण । न संभाव्यते ; न संपद्यते । इदमेवोपपादयति—सत इति । सत्त्वविहीनानाम् ; असतां दुर्जनानां च । सत्तयैव ; स्वसद्भावेनैव । अपराध्यतः ; अपराधं कुर्वतः । सतः ; विद्यमानस्य सत्पुरुषस्य च । "अन्यथैवंकथमित्थंसु सिद्धाप्रयोगश्चेत" इति णमुल् । तमःप्रकाशयोरिव सदसतोः प्रयुक्तो विरोधस्तदन्यतरासद्भावमन्तरेण दुष्परिहर इति भावः ॥ ४९ ॥

संधिर्न भवतीत्युक्तम् ; इदानीं कथंचित्संभवेऽप्यन्यतरहानिः स्यादित्याह—प्रतिपुरुषेत्यादि । यद्वा ननु व्यधिकरणासक्तानां भवतां तेषां च विरोध एव कथमित्याशङ्क्य यत्र सामानाधिकरण्यं तत्र विरोधः स्यादित्याह—प्रतिपुरुषेति । पुरुषे पुरुषे प्रतिपुरुषम् । विभक्तस्वरूपभेदाः वयं महा-

[1] अपिच omitted—ग. [2] घातकत्वम्—क, ग.

[1]न खल्वर्थकामपराणामस्माकं नारायणपरायणैः[2] कथायामपि संगतिरुपपद्यते । किंच यथाकथंचिदुपपद्यमानमप्यखण्डवैरिखण्डनपण्डितो महामोहः कथंचिदपि संधिं नानुमन्यते । अहं वा कथमसहायवीरस्तमनुमन्ये । [3]न खलु क्षुधितोऽपि शार्दूलः कदाचिदपि शाद्वलमत्ति ।

**रतिः**—अय्यउत्त, को उण तेहिं कुलग्घेहिं महाबलाणं तुम्हाणं वि उम्मूलणे उवाओ संमंतिओ[4] ?

**प्रभाविलासः**

पति विभक्तः कालभेदेनेत्यर्थः, मूर्तिभेदो येषां ते तथोक्ताः । **वयमितरे च मिथः प्रतीपवृत्ताः**; अन्योन्यं प्रतिकूलव्यापाराः सन्तः । **क्वचित्**; एकस्मिन् कालरूपे देशरूपे च । **वध्यघातुकत्वम्**; वध्यत्वं घातुकत्वं चेत्यर्थः ॥ ५० ॥

**न खल्विति** । अत्र

" अद्य प्रभृति हे लोका यूयं यूयं वयं वयम् ।
अर्थकामपरा यूयं नारायणपरा वयम् ॥

**प्रभावली**

मोहादयः इतरे विवेकादयश्च । **मिथः**; अन्योन्यम् । **प्रतीपवृत्ताः**; प्रतिकूलवर्तिनः **क्वचित्** एकस्मिन् **अधिकरणे** संगताः सन्तः, हे सुतनु वध्यत्वं घातुकत्वं च वयं दधीमहि धारयामः ॥ ५० ॥

इममर्थमुपपादयति—**न खल्विति** । **कथायामपि संगतिः**; अघटितव्यवहार आख्यायिकादिषु वक्तुं शक्यते । इयं तु संगतिर्न तत्रापीति भावः ।

[1] कथं खल्वर्थ—क.
[2] सह added after—क.
[3] न हि क्षुधितोऽपि तरक्षुः—क.
[4] चिंतिओ—ख.

(कः पुनस्तैः कुलघ्नैर्महाबलानां युष्माकमप्युन्मूलने उपायः संमन्त्रितः ?)

**कामः**—अयि भीरु, अनुद्घाटनीयमिदं राजकुलरहस्यम् ; विशेषतः स्त्रीषु ।

**रतिः**—([1]हस्तौ संगृह्य) अय्यउत्त, साविदोसि मए पिअसहेण वसंतेण अ । सच्चं विवरिज्जउ राअउलरहस्सं ।

**प्रभाविलासः**

नास्ति संगतिरस्माकं युष्माकं च परस्परम् ।
वयं तु किंकरा विष्णोर्यूयमिन्द्रियकिंकराः ॥"

इति वचनमनुसंधेयम् । **अनुद्घाटनीयः** ; अप्रकटनीयः । **नियतिविपर्यासः** ;

**प्रभावली**

**कथंचिदुपपद्यमानमपीति** । **अखण्डा** ये वैरिणः । **कथंचिदपि** ; सर्वप्रकारेणापि संधिं नानुमन्यते । यद्यपि कामादीनां क्वचिद्विहितविषये विवेकादिभिः संगतिः संभवति, तथापि कुत्रापि महामोहस्य संधिर्नास्त्येवेति भावः । **अहं वेति** । **तम्** ; संधिम् । विहितविषयः कामः कामो न भवतीति भावः । **शाद्वलम्** ; तृणम् ; विवेकादिभिर्युष्मद्विजये क उपायः संमन्त्रित इति पृच्छति—**को उणेत्यादि** । **को उण**—कः पुनः । **तेहिं कुलग्घेहिं**—तैः कुलघ्नैः विवेकादिभिः । **महाबलाणं तुम्हाणं वि**—महाबलानां युष्माकमपि । **उम्मूलणे**-उन्मूलने ; उन्मूलनमुत्सादनम् । **उवाओ संमंतिओ**—उपायः संमन्त्रितः, विचारितः । **अनुद्घाटनीयम्** ; अप्रकाशनीयम् । **राजकुलम्** ; राजवर्गः । स्त्रीषु विशेषतो न प्रकाशनीयम्, स्त्रीणां चापल्यादिति भावः । **हस्तौ संगृह्य** ; कामस्य पाणी गृहीत्वेत्यर्थः । **साविदोसि मए**-शापितोऽसि मया । **पिअसहेण वसंतेण अ**—प्रियसखेन वसन्तेन च । **सच्चं विवरिज्जउ**... सत्यं विव्रियताम् ।

[1] **सकौतुकं** added before—ख. ङ. छ.

(आर्यपुत्र, शापितोऽसि मया प्रियसखेन वसन्तेन च । सत्यं विव्रियतां राजकुलरहस्यम् ।)

**वसन्तः**—([1]स्वगतम्) किमत्र विवरणीयम्? दुष्परिहरः खल्वनिर्धारितकालो नियतिविपर्यासः । (प्रकाशम्) सखे मकरध्वज,

**मनोरथसमर्थानां महामोहविरोधिनाम् ।**
**मन्त्रभेदनमस्माभिः कार्यं तत्परिपन्थिभिः ॥ ५१ ॥**

**कामः**—प्रिये, कथयामि तर्हि । अस्ति खल्वनभिज्ञकुल-

### प्रभाविलासः

दैवप्रातिकूल्यम् । **मनोरथेति** । मनोरथ एव समर्थाः, न तु कार्यनिर्वाहे । चिन्तितार्थनिर्वहणसमर्थानामिति ध्वनिः ॥ ५१ ॥

**अनभिज्ञेति** । धर्मभूतविवेकज्ञाने ज्ञानभूतधर्मान्तराभावो व्यज्यते ।

### प्रभावली

**राअउलरहस्सं**—राजकुलरहस्यम् । न कुत्रापि प्रकाशयामीति शेषः । **स्वान्तगतं** यथा तथा । **अनिर्धारितकालः,** ईश्वरैकसमधिगम्यत्वादस्य । **नियतिविपर्यासः**; भाग्यविपर्ययः । **प्रकाशमाह** । शत्रूणां **मन्त्रभेदनमस्माभिः** कार्यमित्याह—**मनोरथेति** । **मनोरथमात्रसमर्थानाम्**, न तु कार्यतः । **विरोधिनाम्**; विवेकादीनाम् । **तस्य** विवेकस्य **परिपन्थिभिः** शत्रुभिः । **मन्त्रस्य** विचारस्य **भेदनं** भेदः ॥ ५१ ॥

**तर्हि**; अतिनिर्बन्धे इत्यर्थः । तद्वक्तुमुपक्रमते—**अस्ति खल्वि**त्यादिना । **अनभिज्ञानाम्**; अज्ञातस्वनाशानाम् । **विवेकमूलः**; विवेकहेतुः । **अकर्तृत्वाभिमानादीति**; अत्र भगवत एव स्वतन्त्रकर्तृत्वं, न ममेत्ययमकर्तृत्वाभिमानः । आदिशब्देन सङ्गत्याग उच्यते । स एव नानाविधा **विषमदृष्टिः** दुर्ज्ञानं तत्सह-

[1] **विचिन्त्य** added before—क. ख.

सार्वभौमविवेकहतकमूलाकर्तृत्वाभिमानादिनानाविधविषमदृष्टिसहकृतः कश्चिदस्मत्कुलाभिचारकाङ्क्षिभिरुपनिषदूषरनिष्ठैः कैश्चिन्निष्ठुरैरनुष्ठीयमानो निवृत्तिसंज्ञको धर्मः। यन्निष्ठस्य पुरुषस्य परदोषदर्शनादिष्वन्धबधिरमूकषण्डादिवदत्यन्त[1]मवसन्नावस्थानमाकर्ण्यते। तेन च निष्प्रतिक्रियेण केनचिदवग्रहेणेव पुरुषमाविशता बुद्धिः संगंस्यते। तस्मात् किल तत्संगमादस्मत्कुलप्रद्वेषदूषितहृदया प्रशान्त-

## प्रभाविलासः

**अकर्तृत्वाभिमानादी**त्यादिशब्देन श्रीगीतोक्तादम्भित्वादिकं गृह्यते। **परदोषदर्शनादिषु** इत्यत्रादिपदेन पारदार्यादिकं गृह्यते। **आकर्ण्यत इति**;

"परद्रव्येषु जात्यन्धाः परदारेष्वपुंसकाः।
परीवादेषु ये मूकास्त एव दयिता मम॥"

## प्रभावली

कृतः। **अभिचारः**; विनाशः। उपनिषदामूषरत्वं निःसारत्वात्। तच्च तत्र ब्रह्मणो विवक्षिततत्वाभावात्। **तन्निष्ठैः**; वेदान्तिभिः। **निष्ठुरैः**; निर्दयैः, पुत्रकलत्रादित्यागेनेति भावः। **निवृत्त्याख्यो धर्मः**; मोक्षार्थं क्रियमाणो धर्मः निवृत्तिधर्मः। **यन्निष्ठस्य**; निवृत्तिधर्मनिष्ठस्य। दोषाणां दर्शने अन्धवत्; श्रवणे बधिरवत्; परस्त्रीगमने षण्डवत्; षण्डो नपुंसकः; परदोषकथने मूकवत्; आदिशब्देन परदोषचिन्तने अचिद्वत्। **अवसन्नम्**; **कृशम्**। ततश्च निवृत्तिधर्मसहकृतबुद्धिसहितस्य परभक्तिः संभवतीत्याह—**तेन चे**त्यादि। **तेन च**; निवृत्तिधर्मेण। **निष्प्रतिक्रियेण**; निष्प्रतीकारेण, निवर्तयितुमशक्येनेत्यर्थः। **अवग्रहेण**; पिशाचेनेव। **पुरुषमाविशता**; पिशाचवत् पुरुषमाविशता। **बुद्धिः**; कूटस्थगृहिणी प्रज्ञा संगता भविष्यति। **तस्मात्**; पुरुषात्। **तत्संगमात्**; बुद्धेर्निवृत्तिधर्मसंगमः पुरुषद्वारेणेति न व्यभिचारदोषशङ्का। परभक्तिर्विशेष्यते—**अस्मत्कुलेत्यादिना**। परभक्तिर्महामोहादिकुलद्वेषिणी। प्रशान्तेन

[1] मूकादिवदत्यन्तमपहास्यमवस्थान—क.

**मधुरवेषप्रच्छन्ना भवरसभोगभीमरथी[1] परभक्त्यपरपर्याया ब्रह्मराक्षसी प्रादुर्भविष्यति । तथाहि ;**

**गुणत्रेतोन्मेषक्रमपरिणतानन्तविकृतिः**

**कचित्काले बुद्धिः कुलयुगलकूटस्थगृहिणी ।**

प्रभाविलासः

इत्यादिष्विति भावः । **संगंस्यते ;** संगता भविष्यति । **भीमरथी ;** गण्ड-विशेषः । तदुक्तम्—

"सप्तत्याः सप्तमे वर्षे सप्तमे मासि सप्तमी ।
रात्रिर्भीमरथी नाम नृणां प्राणापहारिणी ॥"

इति । **ब्रह्मराक्षसीति ;** अवग्रहसंगमात् ब्रह्मराक्षसीजननं युक्तमित्यर्थः । उक्तमेवार्थं संकलय्याह—**गुणत्रेतेति** । गुणानां त्रेता त्रित्वम् । यद्यप्य-ग्नित्रये त्रेताशब्दः प्रयुज्यते, तथापि षण्डपरिषदादीनां समूहसामान्ये प्रयोगवत् प्रयोगोऽत्र द्रष्टव्यः । तस्या **उन्मेषक्रमः ;** क्रमोन्मेष इत्यर्थः । तेन परिणता अनन्ता विकृतयो यस्याः सा । तदुक्तमेकादशे—

"यदेतरौ जयेत्सत्त्वं भास्वरं विशदं शिवम् ।
तदा सुखेन युज्येत धर्मज्ञानादिभिः पुमान् ॥

**प्रभावली**

मधुरेण च वेषेण प्रच्छन्ना । **भीमरथी ;** आत्मनो भवरसानुभवविषये भीमरथी । भीमरथी नाम पुरुषस्य कश्चिदपमृत्युकालविशेषः,

"या सप्तसप्ततितमे वर्षे मासि च सप्तमे ।
दिने तु सप्तमे घोरा रात्रिर्भीमरथी हि सा ॥"

[1] भैमरथी—क, ख.

**अतिक्रूरात्यन्तप्रलयविधिदुर्मन्त्रपरुषां**

**पुरा भीमाकारां सृजति परभक्तिं परवती ॥ ५२ ॥**

**प्रभाविलासः**

यदा जयेत्तमः सत्त्वं रजः सङ्गं भिदा चलम् ।
तदा दुःखेन युज्येत कर्मणा यशसा श्रिया ॥
यदा जयेद्रजः सत्त्वं तमोमूढं जडं लयम् ।
युज्यते शोकमोहाभ्यां निद्रया हिंसयाशया ॥ "

इति । **कुलयुगलकूटस्थस्य**; पुरुषस्य गृहिणी । **परवती**; परतन्त्रा । **क्वचित् काले**; यादृच्छिकादिसुकृतसमये । **अतिक्रूरस्य**; अतिदुर्ललितस्य । कामादिविरोधितयातिक्रूरत्वोक्तिः । **अत्यन्तप्रलयस्य** समूलविनाशस्य मुक्तेः **विधौ** करणे **दुर्मन्त्रेण** दुर्विचारेण दुर्लभाष्टाक्षरेण च **परुषाम्** । **पुरा**

**प्रभावली**

इत्युक्ता । संसारभोगस्यापमृत्युभूतेत्यर्थः । परभक्त्यपरनामधेयवती **ब्रह्मराक्षसी**; ब्राह्मणी दुष्कर्मवशात् राक्षसतां प्राप्ता तथोक्ता । उत्पत्स्यत इत्यर्थः । यथाप्रमाणं कदाचित् बुद्धिर्नियतिवशात् सत्त्वोत्तरा भूत्वा भगवति भक्तिमुत्पाद्यात्मनो मुक्तिं साधयतीत्याह—**गुणत्रेतेति** । गुणानां सत्त्वरजस्तमसां त्रेतं[1] त्रयं, तस्योन्मेषक्रमेणोत्पत्तिक्रमेण परिणता जायमाना अनन्ता बहुविधा विकृतयो यस्याः सा । **कुलयुगलस्य** रागादिकुलस्य महामोहान्तर्गतत्वात् कुलयुगलमित्युक्तिः, तस्य कूटस्थो जीवः, तस्य पत्नी बुद्धिः । **परवती**; पराधीना । यद्वा भगवदायत्ता सती । **क्वचित्काले**; जायमानकालकटाक्षसंधुक्षिताचार्यप्रसत्त्यनन्तरकाले । **अतिक्रूरेत्यादि** । कुलक्षयकरत्वादतिक्रूरत्वम् । **अत्यन्तप्रलयः**; मोक्षः । तस्य विधाने यो दुर्मन्त्रो दुष्टाचारः, तेन निष्ठुराम् । यद्वा दुर्मन्त्रः अष्टाक्षरमन्त्रः । तेन दुरभिभवाम्, " यत्राष्टाक्षरसंसिद्धः " इत्याद्युक्तेः । **भीमाकाराम्**; भयंकरवपुषम् । **परभक्तिम्**; " दर्शनं परभक्तिः स्यात् " इति

[1] त्रेता—G

ततश्च ;

**प्रव्रज्यादियुता परत्र पुरुषे पातिव्रतीं बिभ्रती**
**भक्तिः सा प्रतिरुद्धसर्वकरणं[1] घोरं तपस्तप्यते ।**

**प्रभाविलासः**

**सृजति ;** स्रक्ष्यति । "यावत्पुरानिपातयोर्लट्" इति लट् । अत्र रौद्ररस-शान्तरसयोः संसृष्टिः ॥ ५२ ॥

परभक्तेरवस्थान्तरापत्तिमाह—**प्रव्रज्येति** । **प्रव्रज्या** ; तुर्याश्रमः । आदिपदेनानशनादिकमुच्यते । तदुक्तं यतिप्रकरणे—

"अलब्ध्वा न विषीदेत काले कालेऽशनं क्वचित ।
लब्ध्वा न हृष्येद्धृतिमानुभयं दैवयन्त्रितम् ॥
एकश्चरेन्महीमेतां निःसङ्गः संयतेन्द्रियः ।
आत्मक्रीडश्चात्मरतिरात्मवान् समदर्शनः ॥
पुरसंघान् प्रजासार्थान् भिक्षार्थं प्रविशंश्चरेत ।
पुण्यदेशसरिच्छैलवर्णाश्रमरतिर्महीम् ॥"

इति । **परत्र पुरुषे** ; पुरुषोत्तमे । प्रव्रजिताया अन्यपुरुषे पातिव्रत्यमुचित-मिति परिहासोक्तिः । **प्रतिरुद्धसर्वकरणमिति** विषयान्तरनिरोधः । **तप**

**प्रभावली**

भगवत्साक्षात्काररूपाम् । **पुरा सृजति ;** अनन्तरं स्रक्ष्यतीत्यर्थः । "यावत्पुरा" इति लडर्थे लट् ॥ ९२ ॥

अथ परभक्तिकृत्यं तत्फलं चाह—**प्रव्रज्येति** । **प्रव्रज्या** विषयविरागः ; आदिशब्दात् त्याज्योपादेयज्ञानादयो गृह्यन्ते । **परत्र पुरुषे** ; परमपुरुषे । **पातिव्रतीम्** ; पतिव्रताभावम् । बिभ्रती सा भक्तिः **प्रतिरुद्धसर्वकरणं** प्रतिरुद्धानि प्रत्याहृतानि सर्वेन्द्रियाणि तेषां व्यापारा यस्मिन् कर्मणि तथा । **घोरं तपस्तप्यते ;**

[1] **करणा—क. ख.**

**तुष्टा तेन जनार्दनस्य करुणा कुर्वीत तत्किंकरं**
**कंचित्कैटभकोटिकल्पमसुरम्**

(इत्यर्धोक्ते विरमति)

**वसन्तः**—(स्वगतम्) स खलु संकल्पसूर्यः; 'निर्मूलनस्त्वेष नः' इति शेषः। अन्यथा तु पूरयामि। (प्रकाशम्)

**शेषं पुनर्दुर्वचम् ॥ ५३ ॥**

**रतिः**—(सभयसंभ्रमम्) णाह, परिरक्ख परिरक्ख।
(नाथ, परिरक्ष परिरक्ष।)

(इति भर्तारमाश्लिष्यति)

### प्रभाविलासः

इत्यैकाग्र्यमुक्तम्. "मनसश्चेन्द्रियाणां च ह्यैकाग्र्यं परमं तपः" इति स्मरणात्। अनेन संश्लेषभीरुतालक्षणावस्थोच्यते। **तेन**; तपसा। **तत्किंकरम्**; तस्या भक्तेः किंकरम्। जनार्दनस्य करुणा कंचिदसुरं तत्किंकरं कुर्वीतेत्यन्वयः। अत्र भयानकशान्तरसयोरङ्गाङ्गिभावेन संकरः ॥ ५३ ॥

### प्रभावली

उपासनात्मकं तप आर्जयतीत्यर्थः। "तपस्तपःकर्मकस्यैव" इति कर्मवद्भावः। तेन तपसा **तुष्टा** प्रीता **जनार्दनस्य करुणा कैटभकोटिकल्पं** कैटभासुरकोटिपराक्रमं कंचित् **असुरं** संकल्पसूर्यमिति यावत्। स्वबाधकत्वादसुरत्वोक्तिः। **तत्किंकरं** परभक्तिविधेयं कुर्वीतेति। **अर्धोक्ते**; श्लोकस्य समापनात्पूर्वमेव। **विरमति**, तूष्णींभूतोऽभवत्। लज्जया भीत्या वा विरतिः। आत्मविनाशकथनमनुचितमिति वाक्यशेषं नापूरयदित्यर्थः। वसन्तस्तु स्वमनसि तदभिधानपूर्वकं वाक्यशेषं यथावदापूर्य रत्याः शङ्कान्तरनिवारणाय प्रकारान्तरेण स्वयमेव कामवाक्यशेषं पूरयति—**स खल्वित्यादिना**। **निर्मूलनः**; संहर्ता। नन्द्यादित्वात् ल्युः। वक्तुमशक्यं **दुर्वचम्** ॥ ५३ ॥

कामः—(गाढमुपगुह्य, अमुक्तपूर्वमिव[1] निर्वेशं नाटयन्, आत्मगतम्)

जनितवलयभङ्गे दत्तहारावमर्दे
मुषितनिखिलखेदे मोहसंतोषहेतौ ।
सचकितपरिरम्भे [2]सांप्रतं कातराक्ष्या-
स्त्यजति युगलचिन्तामङ्गयोरन्तरात्मा ॥ ५४ ॥

प्रभाविलासः

**अपूर्वमिव निर्वेशमिति । अपूर्वम्;** गाढपरिरम्भणे स्वयं प्रवृत्तत्वात् । **निर्वेशम्;** सुखानुभवम् । "निर्वेशो भृतिभोगयोः" इत्यमरः । **जनितेति । दत्तहारावमर्दे;** दत्तो हाराणामवमर्दस्त्रुटनं स्तनकाठिन्येन स्फोटनं वा यत्र । यद्वा हेति सुखनिर्वेशाभिनयः । तस्य रावः शब्दः । तस्य मर्दो मेलनं यत्र । **अङ्गयोः;** शरीरयोः । **अन्तरात्मा;** मनः । **युगलचिन्ताम्;** 'ममेदं, तवेदम्' इति चिन्तां त्यजति । सुखरागातिश-

प्रभावली

भयप्रयुक्तः संभ्रमः । **णाह**—नाथ । परिरक्ख—परिरक्ष । **निर्वेशम्;** सुखोपभोगम् । **नाटयन्;** अभिनयन् । स्वगतमनुसंधत्ते—**जनितेति । कातराक्ष्याः;** अधीरनेत्रायाः प्रियायाः रत्याः । **सचकितपरिरम्भे;** भयसंभ्रमसहितं यथा तथा आलिङ्गने । पुनः कीदृशे? वलयानां कटकानां भङ्गो जनितो यस्मिन् । **दत्तहारावमर्दे;** हारस्यावमर्दो विच्छेदः दत्तः कृतो यस्मिन् । मुषितः निखिलः खेदः स्वस्य परिश्रमः यस्मिन् । मोहस्य संतोषस्य च हेतौ कारणभूते । **सांप्रतम् अन्तरात्मा;** मनः । **अङ्गयोः;** स्वपरशरीरयोः । **युगलचिन्ताम्;** द्वन्द्व-

[1] अपूर्वमिवेति प्रभाविलाससंमतः पाठः. [2] सादरं—क. घ.

(प्रकाशम्) सखि, महामोहसैनिकधुरंधरस्य मकरध्वजस्य मम प्रेयसी सती मा भैषीः। समाश्वसिहि समाश्वसिहि। इदं खल्वै-

प्रभाविलासः

याविर्भावेन तन्मयत्वापत्त्या बाह्यविषयकज्ञानाभावेनैक्यज्ञानाभावादवानि- र्वचनीया सुखपरवशतेति भावः। अत्र संभोगशृङ्गारः।

"अनुकूलौ निषेवेते यत्रान्योन्यं विलासिनौ।
दर्शनस्पर्शनादीनि स संभोग उदाहृतः॥"

इति लक्षणात्। तात्कालिकी जातिरलंकारः।

"नानावस्थासु सिद्धानि यानि रूपाणि वस्तुनः।
साक्षाद्विदधती तानि जातिरित्यभिधीयते॥"

इति लक्षणात्॥ ५४॥

**ऐन्द्रजालिकेति**। इन्द्रजाललक्षणम्—

"यद्देशकालापारोक्ष्यं परोक्षस्यैव वस्तुनः।
मन्त्रौषधादिभिः सोऽयमिन्द्रजाल इतीरितः॥"

प्रभावली

चिन्ताम्; इमे द्वे इति चिन्ताम्। **त्यजति**; इयं रतिः, अयं काम इति बुद्धिरेकत्वमेव भावयति। यथोपासकः स्वपरमात्मानावेकत्वेन भावयति तद्वत्॥ ५४॥

**प्रेयसी**; प्रियतमा। **समाश्वसिहि**; निर्भया भवेत्यर्थः। परभक्ति- प्रादुर्भावादिकमसत्यमित्याह—**इदमिति**। **ऐन्द्रजालिकम्**; इन्द्रजालदृष्टं यन्नगर-

न्द्रजालिकनगरनिगरणप्रायमनिपुण[1]नैगमिक[2]रथ्यापुरुषनिर्मितं किम-
प्यैतिह्यम्। तथाहि—

**कुवृत्तमिति कौक्कुटं व्रतमधिक्षिपद्भिस्तथा**
**सुधाकरशतक्रतुप्रभृतिभिः स्वयं चस्खले।**

### प्रभाविलासः

इति। **नैगमिकरथ्या**; नागरिकप्रतोलिः; वेदान्तमार्ग इति ध्वनिः। "नैगमस्तूपनिषदि धूर्ते वणिजि नागरे" इति रत्नमालायाम्। **कुवृत्तमिति।** **कुवृत्तम्**; दुराचारः। **कौक्कुटं व्रतम्**; बलाद् ग्रहणम्। सुधाकरो बृहस्पतिपत्नीं तारां बलाज्जहारेति शतक्रतुरहल्यां जहारेति च तदुपादानम्। धार्मिकता-विडम्बनाय शतक्रतुपदोपादानम्। प्रभृतिपदेन चतुर्मुखादयः। **चस्खले**;

### प्रभावली

निगरणं पत्तननिगरणं तत्सदृशम्। केन कल्पितमित्यत्राह—अनिपुणेति। अनि-पुणः; जडः। **नैगमिकः**; वैदिकः। स एव **रथ्यापुरुषः**; अध्वग इत्यर्थः। तेन कल्पितम्। **किमपि**; तुच्छम्। श्रेष्ठपत्तनवीथीगतपुरुषकल्पितमिति च। तदेवोपपादयति—कुवृत्तमिति। **कौक्कुटं व्रतम्**; कामशास्त्रानुष्ठानम्। प्रसह्योप-भोगमित्यर्थः। कुवृत्तमित्यधिक्षिपद्भिः; निन्दद्भिरेव। **सुधाकरः** चन्द्रः, तेन तारायां, **शतक्रतुः** इन्द्रः, तेनाहल्यादौ **स्वयमात्मना तथा** वाचामगोचरं यथा तथा **चस्खले** स्खलितं, विपरीतमनुष्ठितमित्यर्थः। चन्द्राद्बृहस्पतिपत्न्यां पारदारिकेण मार्गेण खलु बुधोत्पत्तिः। इन्द्रस्य तु "अहल्यायै जार" इति वेदप्रसिद्धं स्खलनम्। ब्रह्मरुद्रादयोऽपि मम शासनमतिक्रमितुं न शक्ता इत्यभिप्रायेणाह—

[1] अतिनिपुण—ङ., च. छ.    [2] नैगम—क.

**नदद्भ्रमरपङ्क्तिके नमति कार्मुके मामके**
**विरक्तिगृहदेहलीं क इह दोहली वीक्षते ॥ ५५ ॥**

तिष्ठन्तु वा मादृशा[1] महाबला मन्त्रिणः ।

**प्रमादालस्यनिद्रादिविविधव्यूहविग्रहः ।**
**प्रज्ञावरणघोरात्मा मोहः केन विजेष्यते ॥ ५६ ॥**

### प्रभाविलासः

स्खलितम् । भावे लिट । **विरक्तिगृहदेहलीम्**; विरक्तिगृहाङ्गणभूमिम् । **दोहली**; कुतुकी । **को वा वीक्षते**; न कोऽपीत्यर्थः । कश्चन वीक्षत इति च व्यज्यते ॥ ५५ ॥

**प्रमादेति** । **प्रमादः**; अनवधानता । **आलस्यम्**; कर्मस्वदक्षता । आदिशब्देन शोकचापल्यादिकं गृह्यते । तैः कृतो विविधव्यूहविग्रहः अनेकचक्रव्यूहादिसंनिवेशः । यद्वा विविधव्यूहेन साधनेन विग्रहः शत्रुकर्मककलहो यस्य सः । **प्रज्ञावरणेन** घोर आत्मा स्वरूपं यस्य सः । केनेति

### प्रभावली

**नददिति** । नदन्ती गुञ्जन्ती भ्रमरभङ्क्तिर्यस्मिन् ज्यात्वेन, तस्मिन् । **मामके कार्मुके** किंचिन्नमति क इव को वा **विरक्तिगृहस्य देहलीं** प्रघाणदेशं **दोहली** कौतूहली सन् । दोहली ; दोह लात्याददातीति दोहलं पुण्यपापरूपं कर्म तद्वान् दोहली ; कर्मी । "ला आदाने" । **वीक्षते** ; वीक्षितुमप्यशक्त इत्यर्थः ॥ ५५ ॥

महामोहविजयस्तु केनापि न शक्यत इत्याह—**तिष्ठन्तु** वेति । मया सदृशा महाबला महामोहस्य मन्त्रिवर्गाः क्रोधलोभदम्भादयस्तिष्ठन्तु । मोहस्य स्वरूपमाह—**प्रमादेति** । **प्रमादः** ; अनवधानता । आलस्यम् ; कायव्यापाराक्षमत्वम् । **निद्रा** ; प्रसिद्धा । आदिशब्देन संशयविपर्ययादिः । एवंरूपो विविधो

[1] मादृशा omitted—च. छ.

रतिः—(स्वगतम्) विहिवसेण विवरीअं भणिअं अय्य-उत्तेण। (प्रकाशम्) होज्ज मंगलं महाराअस्स।

(विधिवशेन विपरीतं भणितमार्यपुत्रेण। भूयान्मङ्गलं महाराजस्य।)

वसन्तः—

अयि मन्मथपत्नि मा स्म भैषी-
र्ननु मोहादिषु संस्थितेषु सत्सु।
प्रकृतिं पुरुषः प्रपित्समानः
प्रतिपद्येत विरक्तितो विमुक्तिम्॥ ५७॥

प्रभाविलासः

काकुः। न केनापीत्यर्थः। केनापि विजेष्यत इति च व्यज्यते॥ ५६॥

**विपरीतं भणितम्;** विनाशकालत्वात् विवक्षाननुकूलार्थमिति ध्वनिः। **महाराजस्य;** मोहस्य, विवेकस्येति ध्वनिः। **अयीति। मोहादिषु संस्थितेषु;** सम्यक् स्थितेषु। **प्रकृतिम्;** पूर्ववैषयिकवासनाम्। **प्रपित्समानः;** प्रपत्तुमिच्छन्। "प्रकृतिं यान्ति भूतानि निग्रहः किं करिष्यति"

प्रभावली

व्यूहः संनिवेशः विग्रहः स्वरूपं यस्य सः। प्रज्ञाया आवरणमाच्छादनमेव घोर आत्मा स्वभावो यस्य सः। केन विजेतुं शक्यते॥ ५६॥

विहिवसेण-विधिवशेन, दौर्भाग्यवशात्। **विवरीअं भणिअं**—विपरीतं भणितम्। **अय्यउत्तेण;** आर्यपुत्रेण, कामेन। अनवहिताङ्गक्लीबमूर्खप्रायसैनिकत्वात् केन हेतुना विजयी भविष्यतीत्यर्थस्फुरणात्। यद्वा विजेष्यत इति कर्मणि प्रयोगेण वाक्ययोजना; केनचित्तु जेतुं शक्यत इत्यर्थः प्रतीयते। **होज्ज**-भूयात्। **महाराअस्स;** महाराजस्य, महामोहस्येत्यर्थः। **अयीति** सख्याः संबोधनम्। भो **मन्मथपत्नि मा भैषीः। मोहादिषु संस्थितेषु** सम्यक्

**रतिः**—(आत्मगतम् ) आः ! वसन्तभासिअं वि विवरीअं विअ दीसइ। (प्रकाशम् ) अय्यउत्त, किं विवेअस्स णत्थि विवेओ, अमच्चाणं वा तस्स समदमप्पमुहाणं ? पुरिसे खु पइदिं मोत्तूण गए अम्हाणं ताणं वि अविसेससुलहं ओसाणं ।

## प्रभाविलासः

इति स्मरणात् । **विरक्तितः**; वैराग्यात् । **विमुक्तिं** विमोचनं प्रतिपद्येत । वैराग्यं परित्यजतीत्यर्थः । व्यञ्जनार्थस्तु मोहादिषु संस्थितेषु परिसमाप्तेषु, नष्टेष्विति यावत् "अदक्षिणो यागः संस्थाप्यः" "प्रतिसंतिष्ठते" इत्यादिषु समाप्त्यर्थतावगमात् । प्रकृतिम् अपहतपाप्मत्वादिस्वभावं प्रपित्समानो विरक्तितो वैराग्याद्धेतोः विमुक्तिमपवर्गं प्रतिपद्येतेति च । अयं च शब्दार्थोभयशक्तिमूलो ध्वनिभेदः ॥ ५७ ॥

व्यञ्जितमर्थमभिसंधायाह—**आः वसन्तेति** । आः पीडार्थे ।

## प्रभावली

तिष्ठत्सु सत्सु **पुरुषो** जीवः **प्रकृतिं** मूलप्रकृतिं प्राप्तुमिच्छन् **विरक्तितः** विरक्तिसकाशात् **विमुक्तिं प्रपद्येत** । विरक्त्या त्यक्तो भवेदेवेत्यर्थः । यद्वा विरक्तितो हेतोः विमुक्तिं मोक्षं प्रपद्येत । ननु प्रतिपद्येतेति काका अर्थनिर्वाहः । विपरीतार्थस्तु संस्थितेषु मृतेषु पुरुषः प्रकृतिं स्वभावमपहतपाप्मत्वादिकं प्रपित्समानः विरक्तितः विरक्तिमाश्रित्य; ल्यब्लोपे पञ्चमी ; विमुक्तिं मोक्षं प्रतिपद्येतेति ॥ ५७ ॥

**आः** इति मनःपीडायाम् । **वसंतभासिअं वि**—वसन्तभाषितमपि । **विवरीअं विअ दीसइ**—विपरीतमिव दृश्यते । **विवेअस्स**—विवेकस्य । **णत्थि विवेओ**—नास्ति विवेकः । इति प्रश्नः । विवेकस्य पुंधर्मत्वात् तस्य विवेको धर्मो नास्ति स्वभावतः । **अमच्चाणं वा तस्स**-अमात्यानां वा तस्य । **तस्य** ; विवेकस्य । शमदमप्रमुखानां विवेकाभावमुपपादयति—**पुरिसे** इत्यादिना । **पुरिसे खु**—पुरुषे

(आर्यपुत्र, किं विवेकस्य नास्ति विवेकः, अमात्यानां वा तस्य शमदमप्रमुखानाम् ? पुरुषे खलु प्रकृतिं मुक्त्वा गतेऽस्माकं तेषामप्यविशेषसुलभमवसानम् ।)

**कामः**—एवमेतत् । अस्मदुन्मेषमसहमानाः पुनरेते पापाः प्रज्ञाचक्षुषि क्वचित्पुरुषे साक्षिणि कुलद्वयमूलकूलंकषासु कुहनासु [1]गहनमीहन्ते । सर्वथा मूढचेतसश्चैते मोघकर्माणो भविष्यन्ति । यतः,

**प्रसुप्तानपि युद्धेन सुग्रीवसुभटानिव ।**
**कर्मशक्तिरनुच्छेद्या [2]पुनरुद्बोधयिष्यति ॥ ५८ ॥**

प्रभाविलासः

**एते पापा इति**; अपापा इति च व्यज्यते । **प्रज्ञाचक्षुषि**; अन्धे । तस्यैव साक्षित्वमिति परिहासोक्तिः । ज्ञानलोचन इति व्यज्यते । **कुहनासु**; कपटेषु । **गाहनम्**; प्रवेशम् । अमूढचेतसः, अमोघकर्माण इति च ध्वनिः । **प्रसुप्तानिति** । "देवताभ्यो वरं प्राप्य समुत्थाप्य च वानरान्" इति

प्रभावली

खलु । **पइदिं मोत्तूण गए**—प्रकृतिं मुक्त्वा विमुच्य गते सति । **अम्हाणं ताणं वि**-अस्माकं तेषामपि । **अविसेससुलहं अवसाणं**-अविशेष-सुलभमवसानम् । अवसानं विनाशः । **उन्मेषम्**; अभिवृद्धिम । **पापाः**; विवे-कादयः । **प्रज्ञाचक्षुषि**; ज्ञानलोचने; अन्ध इत्यपि ध्वनिः । **क्वचित्**; कस्मिंश्चिज्जीवे । **साक्षिणि**; मध्यस्थे विषये । **कुलद्वयमूलकूलंकषासु**; कुल-द्वयस्य स्वकुलस्यास्मत्कुलस्य च यन्मूलं कन्दं तस्य कूलंकषासु विहतिकरीषु । **कुहनासु**-कुटिलकृत्येषु । **गहनम्**; अन्यैरज्ञातं यथा तथा । **ईहन्ते**; चेष्टन्ते । **मोघकर्माणः**; व्यर्थप्रयासाः । तत्र हेतुमाह—**यत** इत्यादि । **यतः**; यस्मा-

[1] गाहनमिति प्रभाविलाससंमतः पाठः. [2] उत्सेधयिष्यति—घ.

(नेपथ्ये)

कोऽसौ विपर्यस्तदृष्टिरनुग्रहैकनियतकौतुकानस्मानेव [1]पापान् प्रलपति। रे रे दुर्विनीत दुराचार, निष्पन्दनिगलितकूटस्थानां नृशंसवृत्तीनां[2] वः प्रतिक्षेपे पुरुषस्य निरस्तनिखिलदुःखनिरतिशयानन्दप्रापणे तदापि तद्बुद्ध्यनुप्रवेशेन स्वकुलसंजीवने च [3]दनुजमथनदयाधीनवृत्तयो वयं प्रवर्तामहे। अस्ति चौपनिषदोऽयमुद्घोषः—

प्रभाविलासः

प्रसिद्ध्या सुग्रीवसुभटानिवेत्युक्तिः। **कर्मशक्तिः**; कर्मवासना। **पुनरुद्बोधयिष्यति**; मोहादीनिति शेषः ॥ ५८ ॥

भरतागमोक्तमनुसंधिमाह—**नेपथ्य इति**। **वः प्रतिक्षेप** इति; वासनाविच्छेद इत्यर्थः। अनेन पुनरुद्बोधयिष्यतीत्येतत् प्रत्युक्तम्। पुत्रा एव पितुर्भोगं विनाशयन्तीति यदुक्तं तत्रोत्तरमाह—**पुरुषस्येति**। यच्चोक्तमस्माकं तेषामप्यविशेषसुलभमवसानमिति तत् प्रत्याह—**तद्बुद्ध्यनुप्रवेशेनेति**। यद्यपि मोहप्रमादनिद्रादीनामननुप्रवेशेऽपि कामक्रोधादीनामनुप्रवेशः, तथापि तेषां क्षुद्रपुरुषार्थविषयतया विषयपरित्यागेन विषयिपरि-

प्रभावली

स्कारणात्। युद्धेन मृतानपि सुग्रीवसुभटान् वानरानिव। **कर्मणः शक्तिः**; कार्यकरणसामर्थ्यम्। **अनुच्छेद्या**; अनिवारणीया। **पुनरप्युद्बोधयिष्यति**; जीवयिष्यति; महामोहादीनिति शेषः ॥ ५८ ॥

एवं पूर्वपक्षं कामादिपात्रैरुपन्यस्य, अथ विवेकादिपात्रैः सिद्धान्तं वक्तुमुपक्रमते—**नेपथ्य इत्यादि**। **विपर्यस्तदृष्टिः**; **विपरीतदृष्टिः**। अस्मत्तातेन

[1] पापारोपणेन—क. [2] नृशंसानां—क.
[3] मधुमथन—क.

**स्वाधीनसंसरणनाट्यनिरूढवृत्तेः**
**संतोषितः प्रणतिभूमिकयास्य पुंसः ।**

**प्रभाविलासः**

त्यागो वर्जनीय इति न विरुद्धम् । "परमं साम्यमुपैति" इति श्रुतिं मनसि कृत्वाह—**स्वाधीनेति । विभुः**; ईश्वरः । स्वशब्देन चेतनकर्मोच्यते । ईश्वरो वा । "उन्निनीषति, अधो निनीषति" इति श्रुतेः । **संसरणम्**; देवमनुष्यादिशरीरपरिग्रहः, तदेव नाट्यं, तत्र निरूढा वृत्तिः वर्तनं यस्य तस्य । अनेनानुरूपभूमिकापरिग्रहे तदभिनये च कौशलमुक्तम् । अनन्तजन्मसंताने वितथेऽपि कस्मिंश्चिदेव जन्मनि पुरुषार्थलाभ इत्याशयेनाह—**प्रणतेति** । तदुक्तम्—

**प्रभावली**

चानादिमुक्तायामित्यादिनोक्तस्य दूषणस्योत्तरमाह—**अनुग्रहेति** । पितुरनुग्रहे एकस्मिन्ननुकूलकरणे निरतान् । **दुर्विनीत**; विनीतोऽहमिति दुरभिमानिन् । स्वकृत्यमाह—**निष्पन्देत्यादिना** । निश्चेष्टं यथा तथा निगलेन बद्धः कूटस्थः प्रत्यगात्मा यैस्तेषाम् । नृशंसा क्रूरा वृत्तिर्येषां तेषां वो निरसने पुरुषस्य कूटस्थस्य निरस्तानि निखिलानि दुःखानि यस्मिंस्तस्य निरतिशयानन्दस्य मोक्षानन्दस्य प्रापणे च । जातिवादिन इवेत्याद्युक्तस्योत्तरमाह—**तदापीति । तदापि**; मोक्षदशायामपि । **तद्बुद्ध्यनुप्रवेशेन**; पुरुषबुद्ध्यनुप्रवेशेन । मुक्तिदशायामप्यप्राकृता विवेकादयः सन्तीति भावः । **अस्मत्कुलसंजीवने च**; त्रिष्वपि कृत्येषु । **दनुजेत्यादि** । ननु दनुजमथनदयाधीनवृत्तयो वयमित्युक्तम्; तथापि बीजाङ्कुरन्यायादनाद्यविद्ययानन्तजन्मार्जितकर्मणामनुच्छेद्यत्वात् केवलकृपया तन्निबर्हणे वैषम्यादिप्रसङ्गाच्च कथं मुक्तिरित्याशङ्क्य तत्र प्रमाणमाह—**अस्ति चेत्यादि** । "ब्रह्म वेद ब्रह्मैव भवति"; "निरञ्जनः परमं साम्यमुपैति" इत्याद्या उपनिषद एव मुक्तिप्राप्तिमुद्घोषयन्तीत्यर्थः । तदेवोपपत्त्या दर्शयति—**स्वाधीनेति । विभुः**; प्रभुः समर्थः भगवान् । **स्वाधीनं** स्वायत्तं

**स्थाने विधास्यति विभुः स्थिरचिह्नभेदं**
**क्रीडानटः स भगवान्कृपया[1] स्वसाम्यम् ॥ ५९ ॥**

**प्रभाविलासः**

" वृथैव भवतो याता निष्फला जन्मसंततिः ।
तस्यामन्यतमं जन्म संचिन्त्य शरणं व्रज ॥ "

इति । **भूमिकयेति** ; वेषपरिग्रहमात्रेणापि पुरुषार्थः सेत्स्यतीत्युक्तम् " मित्रभावेन संप्राप्तत् " इतिवत् । **संतोषित इति** ; ईश्वरप्रसादस्यैव मोक्षसाधनत्वमुक्तम् । **स्थिरचिह्नभेदम्** ; स्थिराणि शङ्खचक्रादीनि चिह्नानि भेदः संसारिभ्यो वैलक्षण्यं यस्य तत् । तदुक्तम् " मुक्तानां लक्षणं ह्येतच्छ्वेतद्वीपनिवासिनाम् " इति । यद्वा स्थिरचिह्नानां लक्ष्मीपतित्वजगद्व्यापारादीनां भेदो यथा तथेति । " जगद्व्यापारवर्जम् " इति सूत्रम् । " विना श्रीवत्सकौस्तुभौ " इति स्मृतिः । **स्वसाम्यम्** ; अपहतपाप्मत्वादिकम् । **स्थाने** ; परमपदाख्यलोके । युक्तमिति वा । यथा लोके सार्वभौमो राजा कस्यचिन्नटपरिबृढस्य विचित्रबहुभूमिकापरिग्रहे कयाचिद्भूमिकया तोषितः

**प्रभावली**

यथाकर्म फलप्रदानात् **संसरणमेव नाट्यं** तत्र **निरूढा** चिरपरिचयादतिचतुरा **वृत्तिर्यस्य । क्रीडानटस्य** ; भगवल्लीलार्थनटस्य । **अस्य पुंसः प्रणतभूमिकया** ; अनन्तजन्मभूमिकामध्ये दैवादुपनीतभागवतवेषपरिग्रहेण प्रणतवेषपरिग्रहमात्रेण । **संतोषितो भगवान्** ; भगवच्छब्देन स्वकृपैव ददाति । प्रणतभूमिकादि व्याजमात्रमिति द्योत्यते । **स्थिरचिह्नभेदम्** ; श्रीवत्सकौस्तुभादिस्वासाधारणाकारव्यतिरेकेण स्थिरः अपहतपाप्मत्वाद्यष्टगुणकत्वादिचिह्नभेदो यस्य तत् । **स्वसाम्यम्** ; साधर्म्यं विधास्यति । **स्थाने** ; परमपदे । यथा कश्चित् सम्राट्

[1] परमं—ङ.

ततश्च,

**रिपुमथनकृतं यशो महीयः पितृपरिरक्षणसंभृतश्च धर्मः ।**
**अभिमतघटनोद्भवश्च हर्षः सपदि विधास्यति संनिधिं स्वयं नः ॥६०॥**

**कामः**—(सभयावहित्थमवलोक्य) प्रिये, मोहपरिपन्थि-पक्षमूर्धाभिषिक्तः स्वयमसौ विवेकः सहधर्मचारिण्या सुमत्या

**प्रभाविलासः**

स्वकीयच्छत्रचामराद्यसाधारणचिह्नानि स्वस्थाने प्रयच्छति तद्वत् । अत्र वाक्यस्यासंबद्धार्थाभिधायकता मा प्रसाङ्क्षीदित्यप्राकरणिकप्राकरणिकयोरुप-मानोपमेयभावः कल्प्य इत्युपमालंकारो व्यङ्ग्यः । तल्लक्षणम्—

"प्रसिद्धेरनुरोधेन सादृश्यं यत्र धर्मतः ।
प्रतीतं कथितं वा स्यादर्थयोरुपमा हि सा ॥"

इति । अत एव न रूपकम् । कवितायाः कवितात्पर्यानुसारादर्थव्यक्तिर्नाम गुणः । "अध्याहारानपेक्षत्वमर्थव्यक्तिरुदाहृता" इति लक्षणात् ॥ ५९ ॥

**रिपुमथनेति । अभिमतघटना ;** स्वीकृतार्थनिर्वाहः ॥ ६० ॥

**प्रभावली**

नानाभूमिकामध्ये स्वाभीष्टजनभूमिकां साजात्येनाभिनयतो नटस्य सत्ताङ्गप्रदा-नादिना स्वसाम्यं विदधाति तद्वदिति भावः ॥ ५९ ॥

ईश्वर एव सर्वनिर्वाहकश्चेत् तव किमर्थोऽयं यत्न इत्याशङ्क्याह—**ततश्चेति । ततश्च ;** ईश्वररक्षणे व्याजानुष्ठानादित्यर्थः । **नः ;** अस्माकम् । अभिमतस्येष्टस्य घटनात् संजातो हर्षश्च । यशोधर्महर्षविशेषास्तत्क्षणं स्वयमेव संनिधिं विधा-स्यन्ति ॥ ६० ॥

**सभयावहित्थम् ;** भयाकारनिगूहनसहितं यथा तथा । विवेकमवलोक्य

सहाभ्यमित्रीय उपसर्पति । (मुहूर्तं निर्वर्ण्य) । अयं हि—

**मुकुलयति विवित्सां मोहविध्वंसमिच्छन्**
**विमृशति निगमान्तान् वीक्षते मोक्षधर्मान् ।**
**निशमयति च गीतां नित्यमेकान्तभक्त्या**
**गुणपरिषदवेक्षी गुप्तमन्त्रो विवेकः ॥ ६१ ॥**

प्रभाविलासः

**अभ्यमित्रीयः**; अमित्राभिमुखः । **मुकुलयतीति । विवित्साम्;** वित्तेच्छाम् । **मुकुलयति;** संकोचयति । **निगमान्तान्;** वेदान्तान् । **विमृशति;** विशेषतो विचारयति । अनधीतविप्रकीर्णशाखान्तरोपबृंहकस्मृतीतिहासपुराणैः सहालोचयतीत्यर्थः । **मोक्षधर्मान्;** मुक्तिधर्मान्; अनभिसंहितफलकर्माणीत्यर्थः । सपरिकरवेदान्तविमर्शनेनैव श्रीगीतार्थश्रवणे सिद्धेऽपि गीतामिति पुनरुपादानं प्रस्तुताङ्गस्य चरमोपायप्रधानत्वज्ञापनार्थम् । गीताशास्त्रं हि प्रधानतः प्रपदनतात्पर्यकम् । **नित्यमेकान्तभक्त्येति** शास्त्रार्थस्य याथात्म्यावबोधनेऽन्तरङ्गसामग्री दर्शिता "शुद्धभावं गतो भक्त्या शास्त्राद्वेद्मि जनार्दनम्" इति स्मरणात् । **गुणपरिषत्;** शमादिगुणसमूहः; ईशगुणा वा । **गुप्तमन्त्र इति;** "गुरुं प्रकाशयेद्धीमान् मन्त्रं यत्नेन गोपयेत्" इति स्मृत्यर्थोऽभिप्रेतः । अन्यत्र **विवित्साम्;** वित्ते रागम् ।

**प्रभावली**

रतिमाह—**प्रिये** इत्यादि । मोहस्य **परिपन्थिपक्षे** शत्रुपक्षे । **अभ्यमित्रीयः;** अमित्राभिमुखं गच्छन् । विवेकस्वरूपमाह—**अयं** हीत्यादि । **विवित्साम्;** वेत्तुं लब्धुमिच्छाम्, ख्यातिलाभपूजाविषयेच्छामित्यर्थः । यद्वा मोहादिविध्वंसनसाधनादिलाभेच्छाम् । **मुकुलयति**; उत्पादयति । **इच्छन्निति** "लक्षणहेत्वोः"

[1]अपिच,

**प्रत्यङ्मुखीं सुमतिदीप्तिमिह प्रचिन्वन्**
**प्राप्तोदयोऽप्यमितरागबलोपपन्नः ।**

प्रभाविलासः

**मुकुलयति ;** प्राप्तकाले व्ययसंकोचं न करोतीत्यर्थः । **मोहविध्वंसम् ;** अविवेकरिपुविनाशम् । **निगमान्तान् ;** प्रातिदेश्यकार्यनिश्चयान् "निगमो निश्चये पुर्यां पथिभेदे वणिक्पथे" इति निघण्टुः । **विमृशति ;** चारमुखेन जानाति । **मोक्षधर्मान् ;** कारागृहप्रवेशितस्वकीयप्रधानपुरुषादिमोचनोपायान् । **गीतामिति ;** तत्रोक्तो धर्मयुद्धादिरुच्यते "धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत् क्षत्रियस्य न विद्यते" इति ह्युक्तम् । **गुणपरिषत् ;** संधिविग्रहादिगुणसमूहः । **गुप्तमन्त्रः ;** अप्रकाशितराजरहस्यः । अत्र प्रस्तुतविवेकविशेषणतौल्येनाप्रस्तुतराजप्रतीतेः समासोक्त्यलंकारः ।

"विशेषणानां तौल्येन यत्र प्रस्तुतवर्तिना ।
अप्रस्तुतस्य गम्यत्वं सा समासोक्तिरिष्यते ॥"

इति लक्षणात् ॥ ६१ ॥

**प्रत्यङ्मुखीमिति** । **प्रत्यङ्मुखीम् ;** प्रत्यगात्मप्रवणाम्, प्रतीचीप्रवणां च । **सुमतिदीप्तिम् ;** सुबुद्धिवैशद्यम्, अन्यत्र प्रभाम् । **प्राप्तोदयः ;**

प्रभावली

इति शतृप्रत्ययः । **गीताम् ;** भगवद्गीताम् । **एकान्तभक्त्या ;** अनन्यभक्त्या । **गुणपरिषदवेक्षी ;** शमदमादिगुणसमूहावेक्षी, गुणग्राही वा । **गुप्तमन्त्रः ;** गुप्तविचारः । विवित्सामुकुलनादि विवेकस्वरूपमित्यर्थः ॥ ६१ ॥

**प्रत्यङ्मुखीमिति** । अत्र विवेकस्य उदेतुर्भास्वतश्च श्लेषो ध्वन्यते । **प्रत्यङ्मुखीम् ;** परावरतत्त्वाभिमुखीम् । अन्यत्र पश्चिमाभिमुखीम् । **सुमतिदीप्तिम् ;**

[1] अपिच omitted—क.

**क्षाम्यन्नहंकृतिमयीमयशो[1] हिमानीं**
**भास्वानसौ भजति विष्णुपदं विवेकः ॥ ६२ ॥**

**प्रभाविलासः**

प्राप्ताभ्युदयः, प्राप्ताविर्भावश्च । **रागः;** मुक्त्यभिलाषः, विषयाभिलाषो वा, आरुण्यं च । तस्य बलमतिशयः । **हिमानीम्;** हिमसंहतिम् । **क्षाम्यन्;** सहमानः । **भास्वान्;** तेजस्वी, अन्यत्र सूर्यः । **विष्णुपदम्;** हरिचरणम्, आकाशं च । अत्र विवेकस्याङ्कुरितावस्थोक्ता, रागमानादिसंहननात् । तेन चोत्तराङ्कनिरूपणीयबीजाख्यवस्तूपक्षिप्तम्, "स्तोकोद्दिष्टः कार्यहेतुः" इति लक्षणात् । इदमत्र ज्ञातव्यम्—सर्वत्र नाटके प्रतिपाद्यं वस्तु द्विविधम्; सूच्यमसूच्यं चेति । तत्र सूच्यं द्विविधम्-नीरसं सरसं चेति । असूच्यं द्विविधम्-दृश्यं श्रव्यं चेति । श्रव्यं च द्विविधम्-स्वगतं प्रकाशं चेति । तत्र प्रकाशं द्विविधम्-सर्वप्रकाशं नियतप्रकाशं चेति । नियतप्रकाशं च द्विविधम्-जनान्तिकम् अपवारितं चेति । तत्र द्विविधमपि सूच्यं विष्कम्भे निरूपितम्, शृङ्गाराद्यभिनयेन कथासंघटनेन च प्रकारद्वयसंभवात् । असूच्यभेदास्त्वङ्के निरूप्यन्ते । तदुक्तम्—

"वस्तु सूच्यासूच्यभेदाद् द्विधाद्यं सूचितं भवेत् ।
विष्कम्भचूलिकाङ्कास्यप्रवेशाङ्कावतारकैः ॥
सूच्यं द्वितीयं तु भवेद्रसभावाढ्यगुम्भनम् ।

**प्रभावली**

सुमत्याः कान्तिम् । इह; संसारे । **प्रचिन्वन्;** कुर्वन् । अन्यत्र दीप्तिं प्रभाम् । **प्राप्तोदयः;** अधिगताभ्युदयः, लब्धैश्वर्यः । अपिर्विरोधे । अन्यत्र लब्धोदयः पर्वतात् । **अमितरागबलोपपन्नः;** अमितोऽविद्यमान इति यावत् । रागोऽनु-

[1] अयशो—क, घ.

तन्न सांप्रतमस्माभिरप्राप्तसमयैरसहायैश्चारातिसंनिधावात्मानं प्रकाशयितुम् ।

(इति समित्रकलत्रो निष्क्रान्तः)

**इति मिश्रविष्कम्भः**

**प्रभाविलासः**

प्रपञ्चयेदसूच्यं तदङ्कैः पञ्चषपात्रकैः ॥

कथितं तद् द्विधा दृश्यं श्रव्यं चाद्यं तु दर्शयेत् ।

द्विधा द्वितीयं स्वगतं प्रकाशं चेति भेदतः ॥

स्वगतं स्वैकविज्ञेयं प्रकाशं तु द्विधा भवेत् ।

सर्वप्रकाशं नियतप्रकाशं चेति भेदतः ॥

सर्वप्रकाशं सर्वेषां स्थितानां श्रवणोचितम् ।

द्वितीयं तदनेकेष्वेकस्यैव श्रवणोचितम् ।

द्विधा विभिद्यते तच्च जनान्तमपवारितम् ॥"

इति ॥ ६२ ॥

**तन्नेति । न सांप्रतम्; न युक्तम् । इति मिश्रविष्कम्भ इति ।** मिश्रत्वं संस्कृतप्राकृतभाषासंमिश्रत्वम् । यदुक्तम् —

**प्रभावली**

रागः । तस्य बलेनोपपन्नः । ऐश्वर्यवतो रागो नास्तीति विरोधद्योतकोऽपि-शब्दः । अयं विवेकः प्राप्तोदयः लब्धात्मप्रकाशः । अमितरागबलोपपन्नः वैतृष्ण्येनामितमप्रमितं रागबलं तेनोपपन्न इति तात्त्विकार्थः । अन्यत्र उदयकालत्वात् बहुलरागयुक्तश्च । अहंकृतिमयीम्; अहंकारात्मिकाम् । अन्यत्र सूर्यप्रकाशोऽपि स्वेन निवारित इत्यभिमानात्मिकाम् । क्षाम्यन्; शमयन्, शमनायेति यावत् । "लक्षणहेत्वोः" इति शतृप्रत्ययः । अवशः; भक्तिपर-वशः । अन्यत्रेश्वराधीनवृत्तिः । भास्वान्; शोभमानः । अन्यत्र सूर्यः ।

**प्रभाविलासः**

"शुद्धो मिश्रश्च स द्वेधा मध्यपात्रप्रयोजितः ।
शुद्धो भवति मिश्रस्तु नीचपात्रप्रयोजितः ।
प्रधानादवरं मध्यं नायकादिरुदात्तवाक् ।
नीचं स्यादनुदात्तोक्ति नारीपरिजनादिकम् ॥"

इति । उदात्तानुदात्तशब्दौ संस्कृतप्राकृतवचनौ ॥

**इति मिश्रविष्कम्भः**



**प्रभावली**

विष्णुपदम् ; भगवत्पादारविन्दम् । अन्यत्र आकाशम् । **भजति** ; सेवते । अन्यत्र गच्छति ॥ ६२ ॥

उत्तरत्र विवेकपात्रप्रवेशसूचनायेह विवेकप्रस्तावः स्वनिर्गमनसूचनाय । **तत्र सांप्रतम्** ; न युक्तम् । **अप्राप्तसमयैः** ; अनागतकालैः । प्रकाशयितुं न सांप्रतमिति मत्वा । **मित्रम्** ; वसन्तः । **कलत्रम्** ; रतिः । **इति मिश्रविष्कम्भ इति** ; प्राकृतमिश्र उक्त इति शेषः ॥

**इति मिश्रविष्कम्भः**



(तत: प्रविशति राजा सुमतिश्च)

**राजा**—(सविमर्शम्) प्रिये, समाकर्णितस्त्वया अनवधिक-दुरितविषवन[1]मूलभूतस्यामन्ददर्पस्य कंदर्पवटोरयमाटोप: । यदसाव-शेषपापनिष्कृतौ प्रयतमानानस्मानेव पापान्[2] परिवदति[3] । अथवा ;

**पश्यति परेषु दोषानसतोऽपि जन: सतोऽपि नैव गुणान् ।**
**विपरीतमिदं स्वस्मिन् महिमा मोहाञ्जनस्यैष: ॥ ६३ ॥**

### प्रभाविलास:

एवं संक्षेपत: सूच्यं वस्तु सूचयित्वा असूच्यवस्तु निरूपयितुमुप-क्रमते—**तत इत्यादिना** । **परिवदति** ; दूषयति । **पश्यतीति** । परेषु असत: अविद्यमानान् दोषान् पश्यति । सतो विद्यमानान् गुणान् न पश्यतीत्यन्वय: । **इदं विपरीतम्** ; उक्तव्यत्यय: । अविद्यमानगुणदर्शनं विद्यमानदोषादर्शनं च स्वस्मिन्नित्यर्थ: । एवं दर्शने निमित्तमाह—**महि-मेति** ॥ ६३ ॥

### प्रभावली

अथ बीजारम्भसमन्वयात्मकं मुखसंधिं साङ्गं वक्तुं प्रथमाङ्कमवतार-यति—**तत: प्रविशतीति** । **राजा** ; विवेक: । **विमर्श:** ; विचार: । अत्र शिर:कम्पो विवक्षित: । **समाकर्णित:** ; सम्यगाकर्णित: । अनवधिकं यद् दुरितं, तदेव विषवनं विषवृक्षवनं तन्मूलभूतस्यामन्ददर्पस्यातिमात्रगर्वस्य । कन्दर्प एव वटु: बाल:, तस्य । **आटोप:** ; ससंभ्रमो जल्प: । **यत्** ; यस्मात् । यद्वा योऽसावशेषेत्यादि: पाठ: । समस्तपापानां **निष्कृतौ** प्रायश्चित्ते । **प्रयतमानान्** ; प्रयत्नं कुर्वाणान् । **पापारोपेण** ; अस्मास्वेव पापमारोप्य । **परिवदति** ; दूषयति । **अथवा** ; तत्र कोपो न कार्य: ; दुर्जनानामयं स्वभाव

[1] विषयवन—क. [2] पापारोपेण—क. [3] प्रलपति—ख. ग.

**सुमतिः**—अय्यउत्त, विरूपा खु जणा णिअमुहदोसं णिम्मलेसु वि[1]दप्पणेसु समप्पेंति ।

(आर्यपुत्र, विरूपाः खलु जना निजमुखदोषं निर्मलेष्वपि दर्पणेषु समर्पयन्ति ।)

**राजा**—देवि, सत्यमेतत् । यथार्थदर्शिनी यथार्थवादिनी च भवती । किंच ;

**निर्धूतनिखिलदोषा निरवधिपुरुषार्थलम्भनप्रवणा ।**
**सत्कविभणितिरिव त्वं सगुणालंकारभावरसजुष्टा ॥ ६४ ॥**

**प्रभाविलासः**

**निर्धूतेति ।** निखिलदोषपदेन प्रमाणप्रमेयप्रमातृदोषा उच्यन्ते । अन्यत्र,

**प्रभावली**

इत्याह—**पश्यतीति ।** **परेषु** ; स्वव्यतिरिक्तेषु । **असतोऽपि** ; अविद्यमानानपि । **दोषान् पश्यति** ; आरोपयति । **जनः** ; दुर्जनः । **सतः** ; विद्यमानानपि गुणान्न पश्यति, असत्करोति । **इदम्** ; पूर्वार्धोक्तं दर्शनमदर्शनं च । **स्वस्मिन्** ; स्वविषये । विपरीतं पश्यति । स्वस्मिन् विद्यमानानपि देषान्न पश्यति, अविद्यमानानपि गुणानारोपयति । एषः ; इदमित्यर्थः । **मोहाञ्जनस्य महिमा** ; मोहात्मकस्याञ्जनस्य महिमा माहात्म्यम् । महिमापेक्षया एष इति पुंलिङ्ग-त्वम ॥ ६३ ॥

**विरूपा इत्यादि ।** **विरूपा खु**—विरूपाः खलु । विरूपा दुष्टाङ्गाः । **जणा**-जनाः । **णिअमुहदोसं**-निजमुखदोषम् , मालिन्यादि । **णिम्मलेसु वि दप्पणेसु**—निर्मलेष्वपि दर्पणेषु । **समप्पेंति**-समर्पयन्ति । **यथार्थदर्शिनीत्यादि** ; यत्प्रकार-विशिष्टो योऽर्थोऽवभासते तमर्थं तत्प्रकारविशिष्टं पश्यतीत्यर्थः । **निर्धूतेति ।**

[1] णिम्मलेसु वि omitted—क.

**प्रभाविलासः**

" अपप्रयुक्तं दुःसंधि व्युत्क्रमं पुनरुक्तिमत् ।
दुरन्वयं च वाक्याङ्गसंकीर्णं वाक्यगर्भितम् ॥
द्वे भिन्नलिङ्गवचने द्वे च न्यूनाधिकोपमे ।
विकलं केवलं चेति दुष्टं काव्यमिहोच्यते ॥ "

इत्युक्तदोषाः । **निरवधिपुरुषार्थः**; मोक्षः । अन्यत्र " काव्यं यशसेऽर्थकृते " इत्याद्युक्तफलम् । **सगुणा**; आर्जवादिगुणयुक्ता । यद्वा,

" शुश्रूषा श्रवणं चैव ग्रहणं धारणं तथा ।
ऊहोऽपोहोऽर्थविज्ञानं तत्त्वज्ञानं च धीगुणाः ॥ "

इत्युक्तगुणयुक्ता । अन्यत्र,

" श्लेषः प्रसादः समता माधुरी सुकुमारता ।
अर्थव्यक्तिरुदारत्वमोजः कान्तिरुदात्तता ॥
प्रमा समाधिरौर्जित्यं दाक्ष्यं गाम्भीर्यविस्तरौ ।
संक्षेपः शब्दसंस्कारो भावित्वम् ॥ "

इत्याद्युक्तगुणयुक्ता । **अलंकारः**; परिष्कारः । अन्यत्र शब्दार्थोभयरूपालंकाराः । तदुक्तम्—

" एकदेशगताः सर्वे शरीरं कटकादिवत् ।

**प्रभावली**

एकत्र दोषः संशयविपर्ययादिः । अन्यत्र शब्दार्थगतदोषः । एकत्र निरवधिपुरुषार्थो मोक्षः; अन्यत्र यशआदिः, तस्य लम्भने प्रापणे प्रवणा तत्परा । **सगुणेति** । एकत्र गुणाः; सकृद्ग्रहणावधारणार्जवाद्याः, त एवालंकाराः हारादिभूषणानि, तैः सहिता । **भावः**; रसोपहितविषयानुरागः । अन्यत्र **गुणाः**;

(विचिन्त्य) प्रिये, हन्त[1] निर्विकारपुरुषपीडया क्रीडन्त एते कामक्रोधलोभादयः सुपन्थानमास्थिताः ; वयं पुनस्तमेव निःश्रेयसेन योजयितुं समस्तजनसांसिद्धिकसुहृदो भगवतस्तापत्रयाभि-

**प्रभाविलासः**

अलंकुर्वन्ति ये काव्यं तेऽलंकारतया मताः ।
त्रैविध्यं कथितं तेषां शब्दार्थोभयसंश्रयात् ॥ ''

इति । **भावः** ; अभिप्रायः । अन्यत्र व्यञ्जितसंचारिभावा रतिः । तदुक्तं काव्यप्रकाशे—'' रतिर्देवादिविषया व्यभिचारी तथाञ्जितः । भावः प्रोक्तः '' इति । **रसः** ; रागः । अन्यत्र शृङ्गारादिः । **सत्कवयः** ; वाल्मीकिप्रमुखाः ॥ ६४ ॥

**विचिन्त्येत्यादि** । **निर्विकारपुरुषः** ; जीवः । **सांसिद्धिकसुहृदः** ;

**प्रभावली**

ओजःप्रसादादयः । **अलंकाराः** ; उत्प्रेक्षोपमादयः । **भावाः** ; निर्वेदादयः । **रसाः** ; शृङ्गारादयः । तैर्जुष्टा भवसीति शेषः । सत्कविभणितिरिवेत्येकं पदम् । एतावता प्रबन्धेन वस्तूपक्षेपः कृतो भवति । '' उपक्षेपः परिकरः '' इत्यादीनि द्वादशाङ्गानि मुखसंधेः । परिकरादीन्यपि द्रष्टव्यानि । विस्तरभयान्न प्रदर्श्यन्ते ॥ ६४ ॥

**प्रिये हन्तेत्यादि** । **महानयमुन्मत्तप्रलाप** इत्यन्तं बीजम् , '' तद्बीजमादौ यद्वस्तु संक्षेपात्संविधीयते '' इत्युक्तेः । **महत्यारम्भ** इति श्लोक आरम्भरूपः, '' औत्सुक्यमात्रमारम्भः फललाभाय भूयसे '' इत्युक्तेः । **हन्तेति** खेदे । **निर्विकारो** यः पुरुषः जीवः बाल्ययौवनादिराहित्यात् ; तस्य **पीडया क्रीडन्तः** । **सुपन्थानं** शोभनमार्गम् ; '' न पूजनात् '' इति समासान्तप्रतिषेधः । **आस्थिताः** ; अङ्गीकृतवन्तः । प्रस्थिता इति काकुः । न तथेत्यर्थः । **तमेव** ; तं पीडितमेव । **निःश्रेयसेन** ; मोक्षेण । समस्तजनेषु स्वाभाविकसौहार्दवतः । **प्रवाहयन्तः** ;

[1] हन्त omitted—क.

हतसर्वजनसंजीवनीं दयावृष्टिं प्रवाहयन्तः कदध्वना प्रस्थिताः। अहो महानयमुन्मत्तप्रलापः[1]। पश्य मे त्वया सह निर्वर्तनीयं परानुग्रहव्रतम्—

## प्रभाविलासः

स्वाभाविकसुहृदः। **कदध्वना**; कुमार्गेण। **निर्वर्तनीयम्**; निष्पादनीयम्। पूर्वोक्तभेदमसूच्यं वस्तु बीजादिभेदात् पञ्चधा भिद्यते। तदुक्तम्—

"प्रकृत्याख्यं च तद्वस्तु पञ्चधा परिकीर्तितम्।
बीजं बिन्दुः पताका च प्रकरी कार्यमित्यपि।"

इति। नायकादिकृत्यमप्यवस्थाभेदात् पञ्चधा भिद्यते। तदुक्तम्—

"पञ्चावस्थाश्च कार्यस्य नायकादिक्रियावशात्।
आरम्भयत्नप्राप्त्याशानियताप्तिफलागमाः॥"

इति। यथाक्रमेणैतेषां संयोगान्मुखादिसंधयः पञ्च स्युः। तदुक्तम्—

"एकैकस्यास्त्ववस्थायाः प्रकृत्या चैकयैकया।
संयोगे संधयो ज्ञेयाश्चतुःषष्ट्यङ्गसंगताः॥"

इति। तत्र बीजारम्भसमन्वयरूपो मुखसंधिराद्याङ्के निरूप्यते। अत्रापवर्गरूपमुख्यप्रयोजनवशेनान्वितानां कथांशानां जायमानकटाक्षाचार्योपसत्तिप्रपदनाद्यवान्तरप्रयोजनेन संबन्धात् संधिरित्युच्यते। तदुक्तम्—

## प्रभावली

प्रवाहं कारयन्तः। **कदध्वना**; कुत्सितमार्गेण, प्रस्थिताः। अहो इति आश्चर्ये। **निर्वर्तनीयम्**; अनुष्ठेयम्। **परानुग्रहरूपं** परानुग्रहार्थं वा व्रतं नियमविशेषम्।

[1] उन्मत्तालापः—क.

**महत्यारम्भेऽस्मिन् मधुरिपुदयासंभृतधृति-**
**र्बहिष्कृत्यारातीन् सुमुखि बहिरन्तश्च भवतः ।**

### प्रभाविलासः

" मुख्यप्रयोजनवशात्कथांशानां समन्वये ।
अवान्तरार्थसंबन्धः संधिः संधानरूपतः ॥ "

इति । एवमवान्तरफलेष्वन्तरा स्फुरन् विवेकोत्साहो बीजम् । तल्लक्षणम्—

" स्तोकोद्दिष्टः कार्यहेतुर्बीजं विस्तार्यनेकधा ।
उप्तं बीजं तरोर्यद्वदङ्कुरादिविभेदतः ॥ "

इति । आरम्भस्तु " औत्सुक्यमात्रमारम्भ फललाभाय भूयसे " इति । तमिमं नायकोत्साहोचितव्यापारप्रदर्शनेनाह—**महतीति** । **आरम्भे ;** पुरुषमोचनौत्सुक्ये । **धृतिः ;** धैर्यम् , उत्साहो वा । बहिर्भवतः प्रतिवादिनः । अन्तर्भवतः कामादीनरातीन् शत्रून् । **बहिष्कृत्य ;** निरस्य । अत्र निराकृत्येति प्रयोगेनापेक्षितार्थे लब्धेऽपि बहिष्कृत्येत्युक्तिर्बाह्यरूपाणां शिष्टपरिषत्प्रवेशानर्हत्वं ध्वनयितुम् । इदं च व्यङ्ग्यं पदान्तरप्रयोगे न सिध्यति । अयमेव परिवृत्त्यसहत्वलक्षणशब्दप्राधान्यमूलः पदद्योत्योऽनुरणनात्मकध्वनिरित्युच्यते । तदुक्तं काव्यप्रकाशे—" वाक्ये द्व्युत्थः पदेऽप्यन्ते " इति ।

### प्रभावली

**महत्यारम्भ** इति । **आरम्भे ;** आत्मनिःश्रेयसप्रापणरूपे । **मधुरिपुदयासंपादितः** संतोषो धैर्यं वा यस्य सः । अयं प्रथमाङ्कार्थः । **बहिष्कृत्य ;** तिरस्कृत्य । बहिर्भवतोऽरातीन् , अन्तर्भवतश्चारातीन् । बहिर्भवन्तो बाह्यकुदृष्टयः ; तद्बहिष्करणं द्वितीयाङ्कार्थः । अन्तर्भवन्तः कामक्रोधादयः ; तद्बहिष्करणं तृतीय-

**समाधावाधाय क्षपितवृजिनं क्षेत्रिणमहं**

**परप्राप्त्या धन्यं परिणमयितुं प्राप्तनियमः ॥ ६५ ॥**

**सुमतिः**—अय्यउत्त, कहं सो णिच्चणिम्मलमहाणंदसंतसअंपआस[1]सव्वजणदंसणजोग्गसहावो पुरिसो महामोहेण माणमअ-

## प्रभाविलासः

**समाधावाधाय**; समाधिप्रवणं कृत्वेत्यर्थः । **क्षपितवृजिनम्**; नाशितपापम् । **परप्राप्त्या**; ब्रह्मप्राप्त्या । अत्र

"उपक्षेपः परिकरः परिन्यासो विलोभनम् ।
युक्तिः प्राप्तिः समाधानं विधानं परिभावना ॥"

इत्युक्तेषु मुखसंध्यङ्गेषूपक्षेपरूपमङ्गं **प्राप्तनियम** इत्यनेनोक्तम् । तल्लक्षणं तु "बीजन्यास उपक्षेपः" इति । अत्र श्लोके प्रतिवाक्यं वर्णावृत्तेर्भिन्नरूपत्वादव्यापकवर्णानुप्रासोऽलंकारः । तदुक्तम्—

"अनुप्रासस्तु वर्णानामावृत्तिरविदूरगा ।
अव्यापको व्यापकश्चेत्ययं द्वेधा समासतः ॥"

इति ॥ ६५ ॥

## प्रभावली

चतुर्थपञ्चमाष्टमाङ्कार्थाः । **समाधावाधाय**; उपासने मनः स्थापयित्वा । अयं **नवमाङ्कार्थः** । **क्षेत्रिणमिति** अत्र परत्र च संबध्यते । **क्षपितवृजिनम्**; नाशितपुण्यपापरूपकर्माणम् । **परप्राप्त्या धन्यं परिणमयितुम्**; भगवत्सायुज्यावाप्त्या धन्यत्वेन संपादयितुम् । **प्राप्तनियमः**; अस्मीति शेषः । **अयमुपक्षेपः** ॥ ६९ ॥

[1] सअंपअ-स्वयंप्रभ इति प्रभावलीसंमतः पाठः ।

मच्चरप्पमुहेहिं दुव्विणीदेहिं दुव्वारगव्वसंकुलदुरिअमहोम्मिसंघाअ-संघडण[1]भीसणे दुक्खसाअरम्मि णिक्खित्तो ?

(आर्यपुत्र, कथं स नित्यनिर्मलमहानन्दशान्तस्वयंप्रकाशसर्व-जनदर्शनयोग्यस्वभावः पुरुषो महामोहेन मानमदमत्सरप्रमुखैरपि दुर्विनीतैर्दुर्वारगर्वसंकुलदुरितमहोर्मिसंघातसंघटनभीषणे दुःखसागरे निक्षिप्तः ?)

**राजा**—प्रिये सूक्ष्मदर्शिनि,[2] किं दृष्टमपह्नोतव्यम् ? आग-मिकं वा किं न प्रत्येतव्यम् ? पश्यतु भवती—

**प्रभाविलासः**

**दृष्टम्**; जन्मकर्मजरामरणादिक्लेशविषयं प्रत्यक्षम् । **आगमिकम्**;

"आत्मा शुद्धोऽक्षरः शान्तो निर्गुणः प्रकृतेः परः ।
प्रवृद्ध्युपचयौ नास्य एकस्याखिलजन्तुषु ।"
"ज्ञानस्वरूपमत्यन्तनिर्मलं परमार्थतः ॥"

इत्यादिशास्त्रोक्तम् । प्रत्यक्षशास्त्रयोर्विरोधेऽन्यतरद्धेयमित्याशङ्क्याविरोधमेव

**प्रभावली**

**कहं सो** इत्यादि । **कहं सो**-कथं सः । **णिच्चणिम्मलमहाणंद**-नित्यनिर्मल-महानन्द । **संतसअंपह**-शान्तस्वयंप्रभ । **सव्वजणदंसणजोग्गसहावो**-सर्वजनदर्श-नयोग्यस्वभावः । स्वयंप्रकाशत्वादिना सर्वैरप्यभिलषणीयस्वभाव इत्यर्थः । **पुरिसो**-पुरुषः । **महामोहेण**; महामोहेन । **माणमअमच्चरप्पमुहेहिं**-मानमदमत्सरप्रमुखैः । **दुव्विणीएहिं**-दुर्विनीतैः । **दुव्वारगव्वसंकुल**-दुर्वारगर्वसंकुल । **दुरिअमहोम्मि-संघाअ**-दुरितमहोर्मिसंघात । **संघडणभीसणे**—संघटनभीषणे । **दुक्खसाअरम्मि णिक्खित्तो**-दुःखसागरे निक्षिप्तः । **सूक्ष्मदर्शिनीति** प्रियां श्लाघते । **दृष्टं किमप-**

[1] संकड—घ. [2] सूक्ष्मदर्शिनि omitted—क.

**स्वत. प्राप्तं रूपं यदिह किल भावेषु तदपि**
**त्यजन्तस्ते दृष्टा नियतिघटितोपाधिवशतः ।**
**प्रकृत्या तिष्ठन्ति ह्युपधिविगमे ते च तदसा-**
**वनादिः संसारः पुरुषमुपरुन्द्धे गलति च ॥ ६६ ॥**

**प्रभाविलासः**

सनिदर्शनमाह—**स्वत इति** । इह लोके **भावेषु** मण्यादिपदार्थेषु **स्वतः प्राप्तं यत्** प्रभावत्त्वादिकम्, अस्तीति शेषः; **तदपि नियतिघटितोपाधिवशतः** दैवात्प्राप्तमलाद्यभिभवेन **ते त्यजन्तो दृष्टाः** । **ते च** भावा **उपधिविगमे** मलाद्यपकर्षणे **प्रकृत्या** स्वतः प्राप्तरूपेण **तिष्ठन्ति** । उपपादितमर्थं दार्ष्टान्तिकेऽप्यतिदिशति—**तदसाविति** । **उपरुन्द्धे**; बध्नाति । **गलति**; मुञ्चति च । तदुक्तं वैष्णवे—

**प्रभावली**

**ह्नोतव्यम्**; प्रत्यक्षितमर्थजातं किमपह्नोतुं शक्यम् । न शक्यमित्यर्थः । प्रत्यक्षतोऽनुभूतं संसरणं मायिवदपह्नोतुमनुचितमिति भावः । **आगमिकं वा किं न प्रत्येतव्यम्**; वेदान्तसिद्धोऽर्थः कथं प्रत्येतुं श्रद्धातुमयोग्यम् । वेदान्तप्रतिपादितं मोक्षाद्यपि मृषेत्यपि वक्तुं न युक्तमित्यर्थः । न हि वयं वैशेषिकादिवद्युक्तिमात्रशरणाः । किंतु "आर्षं धर्मोपदेशं च" इत्युक्तरीत्या प्रत्यक्षानुमानागमानुगुण्येनार्थनिर्णेतारः । अनेन सुमतिशङ्कायाः किमुत्तरं दत्तमित्यत्राह—**स्वतः प्राप्तमिति** । **इह**; लोके । **भावेषु**; स्फटिकादिपदार्थेषु । **स्वतः प्राप्तं** स्वाभाविकं नैर्मल्यादिकं **यद्रूपमस्ति**, ते स्फटिकादयः **नियतिघटितोपाधिवशतः** अस्यायमुपाधिरिति प्रतिनियतजपाकुसुमादिप्रयोजकवशात् **तदपि** स्वाभाविकमपि **त्यजन्तो दृष्टाः** । **ते च**; त एव । **उपधिविगमे**; उपाधेरसंनिधाने । **प्रकृत्या**; स्वरूपेण, तिष्ठन्ति । **हि**; यस्मात् तस्मात् । **अनादिः**; आत्मस्वरूपसमकालवर्ती । **संसारः**; जीवं संसारयतीति संसारः, कर्माख्याविद्या । **पुरुषमुपरुन्द्धे**; आवृणोति । **गलति च**; अविद्यापाये अपयाति च । नित्यनिर्मलत्वमपि पुरुषस्य

**सुमतिः**—एव्वं एदं[1] । तह वि कहं एआवंतं कालं परम-कारुणिएण देव्वेण लच्छीवल्लहेण[2] दूसहदुक्खसअदूमिओ[3] पुरिसो उवेक्खिदो ?

(एवमेतत् । तथापि कथमेतावन्तं कालं परमकारुणिकेन देवेन लक्ष्मीवल्लभेन दुःसहदुःखशतधूमितः पुरुष उपेक्षितः ?)

**राजा**—किं न श्रूयते भवत्या—यदनादिनिजकर्मरूपावि-

### प्रभाविलासः

"एकस्वरूपभेदो हि बाह्यकर्मावृतिप्रजः ।
देवादिभेदेऽपध्वस्ते नास्त्येवावरणो हि सः ॥"

इति ॥ ६६ ॥

**किं न श्रूयते ;**

"एवं संसृतिचक्रस्थे भ्राम्यमाणे स्वकर्मभिः ।
जीवे दुःखाकुले विष्णोः कृपा काप्युपजायते ॥"

### प्रभावली

सत्यम् । कर्माख्यया अविद्यया तन्निरोधनमपि सत्यम् । परमपुरुषप्रसादेनाविद्यापाये संसारान्मोक्षोऽपि सत्यः । मायिसांख्यादिवत् संसारो मिथ्येति वक्तुमनुचितम् । संसार एव स्वाभाविकं रूपं, न मोक्षोऽस्तीत्यपि वक्तुमशक्यमिति भावः ॥ ६६ ॥

**एव्वं एदं**-एवमेतत् । **तह वि**-तथापि । **कहं**-कथम् ! **एआवंतं कालं**—एतावन्तं कालम् । **परमकारुणिएण**-परमकारुणिकेन । **देव्वेण**-देवेन । **लच्छी-वल्लहेण**-लक्ष्मीवल्लभेन श्रीमता नारायणेन । **दूसहदुक्खसअताविओ**-दुःसहदुः-

[1] एव्वं एदं omitted—क. [2] लच्छीवल्लहेण omitted—**ख**, ङ, च, **छ.**

[3] दुम्मिओ—क. ताविओ इति प्रभावलीपाठः

द्यापरोधेन[1] क्षेत्रज्ञोऽयमीश्वरेण क्षिप्तः संसरन्नवसरे तेनैव समुद्ध्रियत इति । यथा—

**मिथः कलहकल्पनाविषमवृत्तिलीलादया-**
**परिग्रहणकौतुकप्रथितपारवश्यः प्रभुः ।**
**स्वलक्षितसमुद्गमे सुकृतलक्षणे कुत्रचित्**
**घुणक्षतलिपिक्रमादुपनिपातिनः पाति नः ॥ ६७ ॥**

## प्रभाविलासः

इत्यादिष्विति भावः । **मिथ इति** । 'एनं संसारिणं करोमि' इति संकल्पो लीलाकार्यः । 'एनं मोचयामि' इति संकल्पो दयाकार्यः । एवं विरुद्धकार्यकरत्वं विषमवृत्तित्वम् । कलहस्यारोपितत्वं वक्तुं कल्पनेत्युक्तिः । वस्तुतस्तु तयोरन्योन्यानुकूल्यमेव, "आसृष्टि संततानाम्" इति दयायां "स्थेमभङ्गादिलीले" इति लीलायां चेतरेतरकार्यान्वयात् । **परिग्रहणकौतुकेति** दक्षिणनायकसमाधिः, "तुल्योऽनेकत्र दक्षिणः" इत्यालंकारिकोक्तेः । **प्रथितपारवश्य** इत्यवसरनिरीक्षणाभिनिवेश उक्तः । **प्रभुरिति** सत्यवसरे रक्षणस्य निष्प्रत्यूहतोक्ता । **स्वलक्षितसमुद्गमे;**

## प्रभावली

खशततापितः । **पुरिसो उवेक्खिओ**—पुरुष उपेक्षितः । **यदनादीति** । समुद्ध्रियत इति यत्तन्न श्रूयते किमित्यन्वयः । अनादि यन्निजकर्म, तदेवाविद्या, सैवापराधः, तेन हेतुना दुःखसागरे निक्षिप्तः संसरन् पुरुषः । **अवसरे;** यादृच्छिकसुकृतमूलाचार्यपरिग्रहरूपरक्षाकाले । **तेनैव;** येन पूर्वं निक्षिप्तः तेनैवेत्येवकाराभिप्रायः । "एष एव साधु कर्म कारयति तम्" इत्याद्युक्तरीत्या

[1] द्योपराधेन—ग, च.

## प्रभाविलासः

स्वनिरीक्षितोत्पत्तिके स्वानुमतोत्पत्तिके वा स्वविषयकोत्पत्तिके वा। **सुकृतलक्षणे** सुकृतस्वरूपे; यादृच्छिकादिक इति यावत्। तदपि स्वल्पमित्याह—**कुत्रचिदिति**। **घुणः**; कीटविशेषः। **क्रमः**; न्यायः। **उपनिपातिनः**; अन्वयिनः। **नः**; अस्मान्, पातीत्यन्वयः। अनेन बीजबहूकरणरूपं परिकरो नाम मुखसंधेरङ्गं निरूपितम्। अत्र श्लोके पूर्वार्धे दीर्घसमासत्वात् उत्तरार्धे नातिदीर्घसमासत्वाच्च पाञ्चाली रीतिः। तदुक्तम्—"पाञ्चालरीतिर्वैदर्भगौडरीत्युभयात्मिका" इति ॥ ६७ ॥

## प्रभावली

**समुद्ध्रियते** संसारादिति। एतदेव प्रकारान्तरेण प्रकटयति—**यथेत्यादिना**। **मिथः** परस्परं संसारणोत्तारणरूपकलहस्य कल्पना, अहं पुरुषं संसारयामीति लीला दयया सह कलहमाचरति। अहमुत्तारयामीति दया लीलया सह। इत्थं विषमवृत्तिन्यौ भिन्नवर्तने ये लीला च दया च, तयोः परिग्रहणे कौतुकेन कौतूहलेन, अङ्गीकाराभिलाषेणेत्यर्थः। प्रथितं प्रसिद्धं वेदान्तेषु पारवश्यं यस्य सः। **प्रभुः**; ईश्वरोऽपि। "यमधो निनीषति, यमूर्ध्वमुन्निनीषति" इति श्रुतिः। **स्वलक्षितसमुद्गमे**; स्वसंवेद्योदये। **सुकृतलक्षणे**; सुकृतात्मके **कुत्रचित्** कर्मणि यादृच्छिकप्रासङ्गिकादावित्यर्थः। यादृच्छिकं नाम—कश्चिद्धीवर उपरागकाले मत्स्यग्रहणकौतुकात् जले मज्जतीत्यादि। **घुणक्षतलिपिक्रमात्**; घुणो नाम दार्वाघाटः कीटविशेषः, तस्य क्षतेन अक्षरानक्षरविवेकाभावेन दारूणि आहन्यन्ते; परीक्षकस्तत्र कुत्रचिदक्षरत्वमापादयति; तन्न्यायेन। **उपनिपातिनः पाति नः**; पतितान् पतनशीलान्वा नोऽस्मान् पाति। भगवानपि सापराधानस्मानात्मनो लीलया शिक्षयन् कारुणिकतया कस्मिंश्चित्कर्मणि स्वयमेव सुकृतत्वमारोप्य रक्षति ॥ ६७ ॥

अत्र च[1] ;

**सुखदुःखवाहिनीनां व्यत्ययविनिमयनिवर्तनानर्हे ।**
**नियतक्रमे प्रवाहे निपतितमुत्क्षिप्य मोदते देवः ॥ ६८ ॥**

प्रभाविलासः

**सुखेति** । **वाहिन्यः** ; नद्यः । **व्यत्ययः** ; अबुद्धिपूर्वकपरिवृत्तिः । **विनिमयः** ; बुद्धिपूर्वकपरिवृत्तिः । **निवर्तनम्** ; भोगं विनैव निवारणम् । तेष्वनर्हे । "सुखस्यानन्तरं दुःखं दुःखस्यानन्तरं सुखम्" इति न्यायेन **नियतक्रम** इत्युक्तम् । **मोदते** ; हृष्टो भवति । अत्र उत्क्षिप्य मोदत इति

**प्रभावली**

ननु यादृच्छिकादीनां पुरुषबुद्धिपूर्वकत्वाभावेन कथं सुकृतत्वम ? ईश्वरबुद्धया सुकृतत्वे सुकृतत्वमारोप्य रक्षतस्तस्य वैषम्यादिकं प्रसज्येतेत्याशङ्कयाह— **सुखेति** । सुखदुःखरूपनदीनां नियतक्रमेप्रवाहे । कर्मणां तिस्रः शक्तयः सन्ति—सजातीयकर्मप्रवर्तकत्वं, विजातीयकर्मप्रवर्तकत्वं, तदनुगुणफलप्रदत्वं चेति । एवंरूपे **नियतक्रमे** नियतमर्यादे । यद्वा नद्यन्तराणां प्रवाहक्रमः अनियतः कादाचित्कः, वृष्ट्यधीनत्वात्तस्य । सुखादिप्रवाहक्रमस्तु नियतः अविच्छिन्नः, कर्मणामनन्तत्वात् । **व्यत्ययेति** । सुसदृशेन वस्तुना सदृशवस्तुस्वीकारो व्यत्ययः । न्यूनाधिकभावेन विपरिवृत्तिर्विनिमयः । निवर्तनं प्रतिक्षेपः । यद्वा व्यत्ययो विनाशः । विनिमयः कुल्यान्तरेण संचारणम् । निवर्तनं तु दृढसेतुबन्धेन प्रतीपगमनम् । एतत्त्रयानर्हे अनुभवविनाश्यत्वात् तदयोग्ये प्रवाहे पतितं पुरुषमुत्क्षिप्य यादृच्छिकादिमूलव्याजेनोद्धृत्य **मोदते** ; स्वप्रयोजनत्वेन प्रीणाति । यादृच्छिकादीनां पुरुषबुद्धिपूर्वकत्वाभावेऽपि सुकृतत्वं नापैति । यथा **मर्कटेन** स्वचेष्टया लोष्टादिवत् कमपि मणिमादाय स्वशिरसि निहिते अलंकरण-

[1] अथवा—घ.

**सुमतिः**—अय्यउत्त, अणाइम्मि गए काले अलद्धपुव्वो मोक्खो अणंते वि उवरिअणकालम्मि केण कहं लहिज्जइत्ति[1] संकाकलंककब्बुरिअं मे हिअअं।

(आर्यपुत्र, अनादौ गते काले अलब्धपूर्वो मोक्षः अनन्तेऽप्युपरितनकाले केन कथं लभ्यत इति शङ्काकलङ्ककर्बुरितं मे हृदयम्।)

**राजा**—देवि विवेकवल्लभे, अनधिगतप्रमाणतर्कसरणिरिव

### प्रभाविलासः

परिन्यासो नाम तृतीयमङ्गमुक्तम्। "तस्य दाढर्च्यं परिन्यासः" इति लक्षणात् ॥ ६८ ॥

**कर्बुरितम्**; कषायितम्। केनेति कारणप्रश्नस्योत्तरमाह—**देवीत्यादिना**। **अनधिगतेति**। प्रमाणम्,

"तावदार्तिस्तदा वाञ्छा तावन्मोहस्तदासुखम्।
यावन्न याति शरणं त्वामशेषाघनाशनम् ॥"

### प्रभावली

बुद्धिपूर्वत्वाभावेऽपि तस्य मणित्वमलंकारत्वं च नापैति; तद्वदीश्वरोऽपि न ह्यन्यदन्यत्वेन करोतीत्यर्थः ॥ ६८ ॥

**अणाइम्मीत्यादि**। **अणाइम्मि**-अनादौ। **गए काले**—गते काले। **अलद्धपुव्वो मोक्खो**—अलब्धपूर्वो मोक्षः। **अणंते वि**-अनन्तेऽपि। **उवरिअण-कालम्मि**-उपरितनकालेऽपि। **केण**—केन। **कहं**-कथम्। **लहिज्जइत्ति**-लभ्यत इति। **संकाकलंककब्बुरिअं**-शङ्काकलङ्ककर्बुरितम्। **मे**-मे। **हिअअं**-हृदयम्।

[1] लंभिज्जइत्ति—क.

कथमेवमाशङ्कसे ?

अथवा ;

**कालस्वभावनियतियदृच्छादिषु वस्तुषु ।**
**कारणं किमिवात्रेति तापसैरपि तर्कितम् ॥ ६९ ॥**

### प्रभाविलासः

"वृथैव भवतो याता" इत्यादि । **तर्कः** ; गते काले अलब्धपूर्वत्वं मोक्षस्य प्रपदनरूपसामग्र्यभावप्रयुक्तम् । तत्संभवे तूपरितने काले संभवत्येवेत्यादिका युक्तिः । विप्रतिपत्तिनिरासायार्थविशेषेण प्रश्नोपपत्तिरित्याशयेनाह — **अथवेति** । युगपत्सकलपुण्यपापपरिपाकोपलक्षितः कालविशेषो मुक्तिहेतुरिति केचित् । युगपत्कृत्स्नपरिपाकस्यासंभवाज्जीवः स्वभावेनैव कदाचिन्मुच्यत इत्यन्ये । स्वभावस्य प्रागप्यविशेषादीश्वर एव स्वतन्त्रेच्छतया कदाचिन्मोचयतीत्यपरे । स्वतन्त्रस्यापि निर्निबन्धनमोचनानुपपत्तेर्घुणक्षतन्यायेन कदाचिन्मुच्यत इत्येके । निर्निमित्तमोक्षानुपपत्तेः कर्मादिकमेकमङ्गीकार्यमितीतरे । तदुक्तं श्रीशुकेन—

"काल एव स्वभावश्च कर्म चेति जगुः परे ।"

इत्यादिना ॥ ६९ ॥

### प्रभावली

**विवेकवल्लभे** इत्यस्य विवेकवल्लभायास्ते इदमनुचितमिति भावः । **अनधिगतेति** ; अज्ञातप्रमाणतर्कमार्गेव । शङ्काया युक्तत्वमप्याह—**अथवेति** । **अत्र** ; संसारे । **कालः** ; प्रसिद्धस्वभावः । **नियतिः** ; विधिः, कर्मेत्यर्थः । **यदृच्छा** ; निर्हेतुकत्वम् । आदिशब्दादपूर्वेश्वरादयो ग्राह्याः । एषां मध्ये किं कारणमिति मुनिभिरपि शङ्कितं विचारितम् । तस्मात् तवापि शङ्कोचितेति भावः । अत्र "किं कारणं ब्रह्म" इत्यारभ्य "कालः स्वभावो नियतिर्यदृच्छा भूतानि योनिः पुरुष इति चिन्त्यम्" इत्यादिश्रुत्यर्थो विवक्षितः ॥ ६९ ॥

इदमत्र तावदवधातव्यम् —

**कर्माविद्यादिचक्रे प्रतिपुरुषमिहानादिचित्रप्रवाहे**
**तत्तत्काले विपक्तिर्भवति हि विविधा सर्वसिद्धान्तसिद्धा ।**
**तल्लब्धस्वावकाशप्रथमगुरुकृपागृह्यमाणः कदाचि-**
**न्मुक्तैश्वर्यान्तसंपन्निधिरपि भविता कश्चिदित्थं विपश्चित् ॥७०॥**

## प्रभाविलासः

**कर्माविद्येति** । आदिपदेन वासनारुचिप्रकृतिसंबन्धाः । **विपक्तिः**; विपाकः । **विविधा**; सिद्धान्तवैविध्यात् तत्तत्कर्मवैविध्याद्वा विपक्तेर्वैविध्यम् । **तत्**; तस्मात्; कर्मविपाकस्य सिद्धत्वादित्यर्थः । अनेन कर्मविपाकस्य याद‍ृच्छिकादिसुकृतहेतुत्वमुक्तम् । **लब्धस्वावकाश इति**; याद‍ृच्छिकादिसुकृते सति रक्षणावसर उक्तः । **प्रथमगुर्विति** "आचार्याणामसावसावित्या भगवत्तः" इति श्रुत्यर्थोऽभिप्रेतः । **कश्चिदिति** । "यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः" इति स्मृत्यर्थः स्मारितः । **मुक्तैश्वर्यम्** अन्तः समाप्तिर्यस्याः, सा चासौ संपच्च, तस्या निधिराश्रयः ।

## प्रभावली

पूर्वं व्याजाभावेनालब्धापि मुक्तिरुत्तरत्र व्याजलाभे लभ्यत एवेत्याह—**कर्माविद्यादिचक्रे प्रतिपुरुषमिति** । इह ; संसारे । **प्रतिपुरुषम्**; पुरुषं पुरुषं प्रति । अनादिर्विचित्रः प्रवाहः परिभ्रमसंततिः यस्य तस्मिन् । **कर्माविद्यादिचक्रे**; अविद्याकर्मवासनारुचिप्रकृतिसंबन्धरूपे चक्रे । **तत्तत्काले**; पूर्वोक्ततत्तत्कर्मादिपरिपाकदशावसरे कस्मिंश्चिदीश्वरसमधिगम्ये काले । **विविधा**; अनन्तप्रकारा, भोगमोक्षादिरूपा । **विपक्तिः**; विपाकः । **सर्वसिद्धान्तसिद्धा**; चार्वाकव्यतिरिक्तसर्वसिद्धान्तसंमता भवति । **तया** विपक्त्या लब्धस्वावकाशः प्राप्तस्वक्रियमाणरक्षणयोग्यं स्थानं यस्याः तया, **प्रथमगुरुः** प्रथमाचार्य ईश्वरः, तस्य **कृपया**

स च मोक्ष्यमाणो[1] मत्समक्षमादौ[2] तावत्;

दर्पोदग्रदशेन्द्रियाननमनोनक्तंचराधिष्ठिते

देहेऽस्मिन् भवसिन्धुना परिगते दीनां दशामास्थितः[3] ।

## प्रभाविलासः

अनेन

"शरीरारोग्यमैश्वर्यं भोगांश्चैवानुषङ्गिकान् ।
ददाति ध्यायिनां नित्यमपवर्गप्रदो हरिः ॥"

इति स्मृतिरनुसंहिता । यद्वा मुक्तैश्वर्यमेवान्ता रम्या संपत्, तस्या निधिः; "मृतावववसिते रम्ये समाप्तावन्त इष्यते" इति निघण्टुः ॥ ७० ॥

अथ शान्तरससंचारिभावरूपनिर्वेदमाह—**दर्पेत्यादिना** । तदुक्तं संगीतरत्नाकरे—

## प्रभावली

**गृह्यमाणः** मदीयोऽयमित्युपादीयमानः । **कश्चित्**; अनेन वर्णाश्रमनियमो नास्तीति गम्यते । **कदाचिदिति**; कालानादरः । **इत्थम्**; अज्ञातसुकृतमूलसदाचारसमाश्रयणादिद्वारेणेत्यर्थः । **विपश्चित्**; तत्त्वत्रयरहस्यज्ञानवान् । यद्वा सर्वज्ञो भूत्वा । **मुक्तेत्यादि** । मुक्तानामैश्वर्यं कैंकर्यसाम्राज्यमन्तोऽवधिर्यस्यास्तस्याः संपदः, **निधिः** अक्षायाधारोऽपि **भविता** भविष्यतीति । अपिशब्दात् किमुत स्वर्गाद्यनुभव इति भावः ॥ ७० ॥

अथ जायमानकालकटाक्षितस्य पुंसः संसारेऽवस्थानप्रकारमाह—**स चेत्यादि** । **दर्पेति** । इह चेतनस्य सीतासादृश्यमनन्यार्हशेषत्वाद्यभिप्रायेण । बद्धस्य लङ्कानिरुद्धसीतासादृश्यमुच्यते । दर्पेण उद्रिक्तानि दशेन्द्रियाण्येव दशाननानि यस्य, तेन **मनोनक्तंचरेण** मनोरूपरावणेनाधि**ष्ठिते** नियमिते **संसारसिन्धुना परिगते** आवेष्टिते अस्मिन् देहे लङ्कासदृशे, **दीनामवस्थां गतः**

[1] मोक्षिष्यमाणः—क. [2] मत्सकाशमादौ—क. [3] आश्रितः—ग, ङ. च.

**अद्यत्वे हनुमत्समेन गुरुणा प्रख्यापितार्थः पुमान्**
**लङ्कारुद्धविदेहराजतनयान्यायेन लालप्यते ॥ ७१ ॥**

अपिच,

**बहुलदुरितद्वारे ब्राह्मे[1] पुरे परसंमत[2]-**
**स्वमतिघटितस्वातन्त्र्यत्वादयन्त्रितचेष्टितः ।**

### प्रभाविलासः

"उन्मादः परमानन्दरसपानसमुद्भवः ।
हर्षो धृतिः समीचीनो विबोधश्च स्मृतिर्मतिः ।
निर्वेदस्तत्त्वबोधोत्थ इमे तु व्यभिचारिणः ॥"

इति । **दशेन्द्रियाण्याननानि** यस्य सः, मनसः सर्वोपलम्भसाधनत्वात् । अन्यत्र दशानन इत्यर्थः । **भवेति** पुत्रेषणादिशरीरानुबन्धिकथनम् । **अद्यत्वे ;** इदानीम् । **हनुमत्समेन ;** अतिहितात्यन्तरहस्योपदेशकुशलेन । अयं श्लोकः

"दशेन्द्रियाननं घोरं यो मनोरजनीचरम् ।
विवेकशरजालेन शमं नयति योगिनाम् ॥"

इति श्लोकं मनसिकृत्योक्तः ॥ ७१ ॥

**बहुलेति** । **दुरितद्वारे ;** पापहेतौ । अन्यत्र दोषवद्गोपुरवति । **ब्राह्मे ;**

### प्रभावली

सन् **अद्यत्वे** एतस्मिन् काले, **हनुमत्समेन** हनुमतेव, देशिकस्य हनुमत्समत्वं घटकत्वोत्तीर्णभवसागरत्वाद्यभिप्रायम् । प्रकाशितार्थपञ्चकज्ञानः पुमान् । **विदेह-**

[1] "अथ यदिदमस्मिन् ब्रह्मपुरे" इति श्रुत्यर्थोऽप्यत्र विवक्षितः । शरीरमपि न स्वकीयमिति भावः । [2] परसंमते:—ग.

**विषमसचिवैः स्वे स्वे कार्ये विगृह्य विकृष्यते**
**नरपतिरिव क्षीबो नानाविधैरयमिन्द्रियैः ॥ ७२ ॥**

**सुमतिः**—अय्यउत्त, एव्वं हुअवहवेडिअ[1]घरगअं विअ अप्पाणं अप्पमत्तबुद्धी किं ण णिज्जिगमिसाए रक्खइ पुरिसो?

## प्रभाविलासः

प्रकृतिकार्ये, "तस्मादेतद्ब्रह्म नाम रूपमन्नं च जायते" इति श्रुतेः। अन्यत्र चतुर्मुखसृष्टे। **पुरे**; शरीरे पत्तने च। **परस्य** ईश्वरस्य संमतं स्वमत्या घटितं च स्वातन्त्र्यं यस्य तस्य भावस्तत्त्वम्, तस्मात्; "आदावीश्वरदत्तयैव पुरुषः स्वातन्त्र्यशक्त्या स्वयम्" इति वात्स्यवरदाचार्योक्तेः। अन्यत्र परेषां सचिवानां संमता अधीना या स्वमतिः, तया घटितस्वातन्त्र्यः; परतन्त्र इत्यर्थः; तस्य भावस्तत्त्वम्, तस्मात्। **अयन्त्रितचेष्टितः**; अनियतव्यापारः। **अयम्**; चेतनः। **कार्ये**; गोचरे; कान्ताचन्दनवीणादावित्यर्थः। अन्यत्र कृत्ये ॥ ७२ ॥

## प्रभावली

**राजतनयान्यायेन**; वैदेहीवदित्यर्थः। **लालप्यते**; पुनः पुनः भृशं विलपति। "शङ्के मद्भाग्यसंक्षयात्" इति विलपनवचनं विवक्षितम् ॥ ७१ ॥

इन्द्रियैर्बाध्यमानत्वमप्याह—**बहुलेति**। **दुरितं** पूर्वकृतं, **द्वारं** कारणं यस्य। **ब्राह्मे**; ब्रह्म जीवः, तन्निवासभूते। यद्वा ब्रह्म प्रकृतिः, "मम योनिर्महद्ब्रह्म" इत्युक्तेः, तद्विकारे। **पुरे**; शरीरे। **परसंमतेत्यादि**; "आदावीश्वरदत्तया" इत्युक्तरीत्या परसंमतमीश्वरानुमतम्। **स्वमतिघटितम्**; 'अहं स्वतन्त्रः' इति स्वेच्छाकल्पितं **स्वातन्त्र्यं** यस्य तस्य भावः, तस्मात्। **अयन्त्रितं चेष्टितं** यथेष्टव्यापारो यस्य सोऽयम्। **विषमसचिवैः**; दुष्टामात्यैः। **क्षीबः**; मत्तः नरपतिरिवायं पुरुषः **नानाविधैः** नानाप्रकारैः कर्मज्ञानरूपेण रूपादिग्रहणव्यापारादिना चानेकप्रकारैः **इन्द्रियैश्च स्वे स्वे कार्ये** प्रयोजने च **विगृह्य** स्पर्धया बलात्कारेणेत्यर्थः, **आकृष्यते** ॥७२॥

[1] वेढिअ—छ.

(आर्यपुत्र, एवं हुतवहवेष्टितगृहगतमिवात्मानमप्रमत्तबुद्धिः किं न निर्जिगमिषया रक्षति पुरुषः ?)

**राजा—**प्रिये सर्ववेदिनि, अनादिः खल्वयमलङ्घनीयो रागजलधिः ।

**स्थिरत्रसविभक्तिमत् त्रिविधरागदृश्योदयं**
**सुमृष्टमणिभित्तिवत्स्वयमभिद्यमानः पुमान् ।**
**त्रियुग्मगुणशिल्पिना त्रिगुणतूलिकाधारिणा**
**विविच्य विनिवेशितं वहति चित्त्रमत्यद्भुतम् ॥ ७३ ॥**

**प्रभाविलासः**

**स्थिरेति** । स्थिरत्रसविभक्तिमत् ; कर्मवैचित्र्येण स्थावरजङ्गमभेदवत् ।

"वाचिकैः पक्षिमृगतां मानसैरन्त्यजातिताम् ।
शरीरजैः कर्मदोषैर्याति स्थावरतां नरः ॥"

इति स्मरणात् । अन्यत्र शैलवृक्षादिरचनावत् । **त्रिविधरागाः** ; पुत्रदारधनाभिलाषाः, नीलपीतरक्तरागाश्च ; तैर्दृश्य उदय उत्पत्तिर्यस्य तत् । **त्रिगुणा** सत्त्वाद्यात्मिका प्रकृतिरेव तूलिका लेखिनी । चित्रतूलिका

**प्रभावली**

**एवमित्यादि** । **हुअवहवेढिअघरगअं विअ**-हुतवहवेष्टितगृहगतमिव । **अप्पाणं**-आत्मानम् । **अप्पमत्तबुद्धी**-अप्रमत्तबुद्धिः । **किं ण**-किं न । **णिज्जिगमिसाए**-निर्जिगमिषया । **रक्खइ पुरिसो**-रक्षति पुरुषः । किं निमित्तं न रक्षति पुरुष इत्यर्थः । **सर्ववेदिनी**त्यनेन त्वया अज्ञातं नास्तीत्यर्थो गम्यते । **अवधातव्यम्** ; अवधानतः श्रोतव्यम् । अनादिदेहात्मभ्रान्त्या तत्तद्देहेषु रागं न

प्रभाविलासः

हि त्रिप्रकारा तन्तुरचिता च । **त्रियुग्मगुणः**; षड्गुण ईश्वरः । **सुमृष्टमणिभित्तिवत्**; सम्यक्सुधालिप्तरत्नभित्तिवत् । **अभिद्यमानः**; तिलतैलवत् दारुवह्निवत् दुर्विवेचः । अतिस्निग्धे कुड्ये चित्रं सम्यग्लगतीति सुमृष्टेत्युक्तिः । चितं जीवं त्रायत इति **चित्रं** शरीरम् । पुमान् वहतीत्यन्वयः । अत्र चित्रमिति पदेनोद्दीपनविभावोक्त्या श्रृङ्गाररसो व्यज्यते । तदुक्तं काव्यप्रकाशे—"वाक्ये द्व्युत्थः पदेऽप्यन्ये" इति ॥ ७२ ॥

प्रभावली

मुञ्चतीत्याह—**स्थिरेति** । **पुमान्**; जीवः । **सुमृष्टमणिभित्तिवत्**; सम्यगनुलिप्तरत्नभित्तिसदृशः । **स्वयमभिद्यमानः**; देवादिदेहभेदेऽपि ज्ञानाकारेण स्वयमभिद्यमानो भूत्वा । यद्वा विभज्य विनिवेशकेनेश्वरेणाप्यागत्य 'त्वं शरीराद्भिन्नः' इत्युपदिश्यमानोऽपि 'नाहं शरीराद्भिन्नः' इति ज्ञात्वेत्यर्थः । **त्रियुग्मगुणशिल्पिना**; त्रीणि युग्मानि द्वंद्वानि येषां ते त्रियुग्माः, ते गुणाः ज्ञानशक्त्यादयः यस्य स त्रियुग्मगुण ईश्वरः, स एव शिल्पी चित्रलेखकः, तेन । पुनः कीदृशेन ? **त्रिगुणतूलिकाधारिणा**; त्रिगुणं प्रकृतिः, तदेव तूलिका वर्तिका, तद्धारिणा । अन्यत्र **त्रिगुणा** त्रिरावृत्तगुणविशिष्टा; तादृशतूलिकाधारिणा । यद्वा लौहित्यादित्रिगुणविशिष्टतूलिकाधारिणा । **विविच्य**; तत्तत्कर्मानुगुण्येन विभज्य । अन्यत्र त्रिगुणासांकर्येण । **विनिवेशितम्**; स्थापितं लिखितं च । **स्थिरत्रसविभक्तिमत्**; स्थावरजङ्गमविभागवत् । **त्रिविधेत्यादि** । **त्रिविधैः**; "लोहितशुक्लकृष्णाम्" इत्युक्तरीत्या सत्त्वरजस्तमोरूपेण त्रिप्रकारैः रागैर्वर्णैः; अन्यत्र लौहित्यादिभिः रागैः दृश्य उदयो यस्य तत् । **चित्त्वम्**; चितं चेतनं चिता संविदा वा त्रायत इति चित्त्वम । निःश्रेयसपुरुषार्थोपयोगित्वेन शरीरस्य रक्षकत्वम् । अन्यत्रालेख्यम् । **वहति**; बिभर्ति । अत्र संसारनिःश्रेयसयोर्दोषगुणवर्णनेन विलोभनं नामाङ्गमुक्तम् । "गुणाख्यानाद्विलोभनम्" इति लक्षणात् ॥ ७२ ॥

**सुमतिः**—(सविषादम्) इअं णाम उम्मत्तदसं पुरिसं बुद्धी पिअअमा किं ण बोहेइ?

(इदं नामोन्मत्तदशं पुरुषं बुद्धिः प्रियतमा किं न बोधयति?)

**राजा**—प्रिये सूक्ष्मवादिनि,[1] सापि खल्विदानीं स्वयंप्रकाशापि[2] सुप्तप्राया वर्तते। यथा—

**पत्यौ दूरं गतवति रवौ पद्मिनीव प्रसुप्ता**
**म्लानाकारा सुमुखि निभृता वर्तते बुद्धिरम्बा।**
**मायायोगान्मलिनितरुचौ वल्लभे तुल्यशीला**
**राहुग्रस्ते तुहिनकिरणे निष्प्रभा यामिनीव॥ ७४॥**

प्रभाविलासः

**पत्याविति**। पत्यौ दूरं गतवति सतीत्यन्वयः। **प्रसुप्ता**; संकुचिता। **अम्बा**; बुद्धिः। **निभृता**; निश्चला, निर्विकारेत्यर्थः। **मायायोगात्**;

प्रभावली

जीवदुःखश्रवणात् **सविषादम्**। **इअं णामेत्यादि**। इअं णाम—इदं नाम, इत्येवंप्रकारेण। **उम्मत्तदसं**-उन्मत्तदशम्। **पुरिसं**-पुरुषम्। **बुद्धी पिअअमा**-बुद्धिः प्रियतमा। **किं ण बोहेइ**-किं न बोधयति। **सूक्ष्मवादिनि**; सूक्ष्मार्थं पृच्छसीति प्रशंसा। आत्मनोऽवस्थाद्वयमस्ति—स्थावरत्वं जङ्गमत्वं चेति। तत्र स्थावरत्वयोगे मतिरसत्कल्पेव भवति। जङ्गमत्वे स्वरूपतः प्रकाशमानापि निर्विकासा भवति। अतो बुद्धिः पत्युः प्रतिबोधने सर्वदा असमर्थैवेतीममर्थं दृष्टान्तद्वयेन दर्शयति—**सापीत्यादिना**। **स्वयंप्रबोधापि**; स्वयंप्रकाशापि। **सुप्तप्राया**; संकुचिता। **पत्याविति**। भो **सुमुखि**, **बुद्धिः** पुरुषे **मायायोगात्** प्रकृतिसंबन्धात् **दूरं गतवति**; पुरुषस्य दूरगतत्वं स्थावरत्वप्राप्तिः,

[1] दर्शिनि—क. [2] प्रबोधापि—क.

### प्रभाविलासः

प्रकृतिसंबन्धात्, "मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्" इति श्रुतेः। **मलिनितरुचौ ;** तिरोहितानन्दादिप्रकाशे। अनेन ज्ञानस्य संकोचविकासौ दर्शितौ। उक्तं च वैष्णवे पुराणे—

"सर्वभूतेषु भूपाल तारतम्येन वर्तते।
अप्राणिमत्सु स्वल्पा सा स्थावरेषु ततोऽधिका॥"

इत्यादिना। अत्र श्लोके सतीसमाधिः। तदुक्तम्—

"आर्तार्ते मुदिते हृष्टा प्रोषिते मलिना कृशा।
मृते म्रियेत वा पत्यौ सा स्त्री ज्ञेया पतिव्रता॥"

इति। अत्र बुद्धिसंकोचे स्वरूपनाशः पद्मिनीदृष्टान्तेन परिहृतः। प्रकाशवतस्तिरोधानोपपत्तौ तिरोधाने प्रसरमात्रव्यावृत्तौ च चन्द्रदृष्टान्तः। तेन स्वप्रकाशात्मस्वरूपमात्रस्याविद्यातिरोधानं वदन्तः परे स्वरूपनाशमप्यनुमन्वत इत्युक्तं भवति। उपमालंकारेण वाच्यभूतेन पतिव्रतासाम्यप्रतीतेरलंकारेणालंकारध्वनिः। म्लानादिपदैश्च विप्रलम्भशृङ्गारो व्यज्यत इत्युभयोः संसृष्टिः॥ ७४॥

### प्रभावली

मलिनितरुचित्वं जङ्गमत्वप्राप्तिः। दूरगतत्वे सूर्यो दृष्टान्तः। मलिनितरुचित्वे च चन्द्रः। स्वयमपि दूरं गता अभिभूतस्वरूपप्रकाशा। मलिनितरुचौ च सति तुल्यशीलत्वात् स्वयमपि मलिनितरुचिः। **अम्बा बुद्धिः म्लानाकारा ;** संकुचितस्वभावा। **निभृता ;** संकुचितस्वरूपा च वर्तते। **तुल्यशीला किमिव ? पत्यौ रवौ दूरं** गतवति पद्मिनीव, तुहिनकिरणे राहुग्रस्ते यामिनीव॥ ७४॥

**सुमतिः**—अय्यउत्त, अइकलुणा इमा बुद्धिसहिअस्स पुरिसस्स बंधदसा[1]। एअस्स विउलदुक्खजालविह्मलस्स वित्थरेण मोक्खाअमं पआसंतो विसंकं मं कुणसु।

(आर्यपुत्र, अतिकरुणैषा बुद्धिसहितस्य पुरुषस्य बन्धदशा। एतस्य विपुलदुःखजालविह्वलस्य विस्तेरण मोक्षागमं प्रकाशयन् विशङ्कां मां कुरुष्व।)

**राजा**—देवि अनवरतशोभनाशंसिनि, निदानमिह निपुणमुपपादयन् प्रतिपन्नामेव[2] भवतीं प्रत्यभिज्ञापयामि।

**दुरासेधस्थेम्ना दुरितपरिपाकेन भविनः**
**प्रमाथी संसारः प्रशमरहितोऽयं प्रभवति।**

प्रभाविलासः

**अतिकरुणा**; अत्यन्तशोच्या। **निदानम्**; आदिकारणम्। **दुरासेधेति**। **दुरासेधस्थेम्ना**; अनिवारणीयस्थैर्येण। **भविनः**; संसारिणः।

प्रभावली

अय्यउत्तेत्यादि। अय्यउत्त-आर्यपुत्र। अइकलुणा-अतिकरुणा। इमा-एषा। बुद्धिसहिअस्स-बुद्धिसहितस्य। पुरिसस्स-पुरुषस्य। बंधदसा-बन्धदशा। एअस्स-एतस्य। विउलदुक्खजालविह्मलस्स-विपुलदुःखजालविह्वलस्य। वित्थरेण-विस्तरेण। मोक्खाअमं-मोक्षागमम। पआसंतो-प्रकाशयन्। विसंकं-विशङ्काम्। मं-माम्। कुणसु—कुरुष्व। अनवरतशोभनाशंसिनीति प्रशंसा। इह; अस्मिन् विषये। निदानं मूलकारणं स्वतन्त्रेच्छाशक्तिरूपं निपुणं समर्थयन् प्रतिपन्नं ज्ञातमेव प्रत्यभिज्ञापयामि स्मारयामि। न त्वज्ञातज्ञापनं करोमीत्यर्थः।
दुरासेधेति। दुरासेधस्थेम्ना; दुर्निवारद्रढिम्ना। दुरितपरिपाकेन;

[1] बद्धदसा—क. ग. [2] प्रतिपन्नमेवेति प्रभावलीपाठः

**निरोधे तस्यैका निरुपधिककारुण्यघटित-[1]**
**स्वतन्त्रेच्छाशक्तिः स्वयमुपधिमाधाय[2] रमते ॥ ७५ ॥**

**सुमतिः**—जइ मए वि एसो[3] उवाही सुणिदव्वो[4] ता मं अय्यउत्तो आणवेदु ।

प्रभाविलासः

**प्रमाथी**; पीडकः । **तस्य**; संसारस्य । **निरोधे**; निवृत्तौ । निरुपधिक-कारुण्यघटितः; **निर्हेतुककृपावान्** । **उपधिम्**; व्याजमात्रम् । अनेन

"सर्वज्ञोऽपि हि विश्वेशः सदा कारुणिकोऽपि सन् ।
संसारतन्त्रवाहित्वाद्रक्षापेक्षां प्रतीक्षते ॥"

इति स्मारितम् ॥ ७५ ॥

**श्रोतव्यः**; श्रोतुं योग्यः । अथ प्रपत्तिमुपधितया निरूपयिष्यन्नादौ

**प्रभावली**

पापोद्रेकेण । **प्रमाथी**; विलोडनशीलः । **अयं संसारः भविनः** संसारिणः **प्रशमनरहितः** शान्त्यभावेन निरन्तर इत्यर्थः । **तस्य** संसारस्य **निरोधे** निवारणे निरुपधिकेन स्वाभाविकेन कारुण्येन घटिता संबद्धा; **स्वतन्त्रस्य** ईश्वरस्य **इच्छा-शक्तिरेकैव स्वयं** वैषम्यादिपरिहाराय कमप्युपधिं व्याजं संपाद्य **रमते** । स्वप्रयोज-नसिध्या प्रीणाति ॥ ७५ ॥

**जइ इत्यादि** । **जइ**-यदि । **मए**-मया । **वि**-अपि । **एसो**-एषः । **उवाही**-उपाधिः । **सुणिदव्वो**-श्रोतव्यः । **ता**-तदा । **मं**-माम् । **अय्यउत्तो**-आर्यपुत्रः ।

[1] घटिता—घ. [2] आस्थाय—ग. ङ. [3] सो—ङ.
[4] मुणिअव्वो—ग.

इदमत्र श्लोके भाव्यम्—नन्वियमीश्वरेच्छा संसारस्यापि हेतुभूतेति कथं तन्निरोधे प्रभवेदित्यत्रोक्तम्—कारुण्यघटितेति । तस्य कारुण्यं कथं स्यादित्यत्रोक्तम्—निरुप-धीति । तर्हि सर्वमुक्तिः स्यादित्यत्रोक्तम्—स्वयमुपधिमाधायेति । तदपि समाधानं समं स्यादित्यत्रोक्तम्—स्वतन्त्रेति ।

(यदि मयाप्येष उपाधिः श्रोतव्यस्तदा मामार्यपुत्र आज्ञाप्रयतु ।)

**राजा**—प्रिये विशुद्धभाषिणि, श्रूयतामयमिह सूक्ष्मार्थसंग्रहः—

**मदनमत्सरमानमयः पुमान् बहुपिशाचगृहीत इवार्भकः ।**
**निगमसिद्धनरेन्द्रनिरीक्षणा[1]न्निपुणपद्धतिमभ्यवपद्यते[2] ॥ ७६ ॥**

### प्रभाविलासः

जायमानकटाक्षमाह—**मदनेति** । तदुक्तम्—

"जायमानं हि पुरुषं यं पश्येन्मधुसूदनः ।
सात्त्विकः स तु विज्ञेयः स वै मोक्षार्थचिन्तकः ॥"

इति । **मदनः**; कामः । **निगमसिद्धः**; वेदवेद्यः, देशप्रसिद्धश्च । **नरेन्द्रः**; पुरुषोत्तमः, चिकित्सकश्च । **निपुणपद्धतिम्**; सन्मार्गम् ॥ ७६ ॥

### प्रभावली

**आणवेदु**-आज्ञापयतु । आचार्यसमाश्रयणं, शमदमादिसंभवः, ततः कर्मज्ञानाद्यनुष्ठानम्, ततो भक्तिः, तदशक्तस्य प्रपत्तिरिति त एवोपाधिरिति तत्र प्रथममाचार्योपसत्तिमाह—मदनेति । **मदनः**; कामः । **मत्सरः**; द्वेषः । **मानः**; गर्वः । **तन्मयः**; तत्प्रचुरः । प्राचुर्यार्थे मयट् । संसारदशायां बहुपिशाचाविष्टो बाल इव भवति । स तु **निगमे** वेदान्ते **सिद्धो** यो **नरेन्द्रः** आत्मेश्वरः सर्वेश्वरः, तस्य **निरीक्षया** जायमानकालकटाक्षेण । **निपुणानाम्**; सात्त्विकानाम् । **पद्धतिम्**; मोक्षार्थचिन्तनम् । **अभ्यवपद्यते**; प्राप्नोति । पिशाचगृहीतो बालो महामान्त्रिकनिरीक्षया निपुणानां पद्धतिं यथा प्राप्नोति तथा । यद्वा **निगमे** वेदे सिद्धः "आचार्यवान् पुरुषो वेद" "वेदमनूच्याचार्यः" इत्यादिषु प्रसिद्धः ।

[1] नीरीक्षया—ग.  [2] अभ्युपपद्यते—ङ.

ततश्च,

**अनघदेशिकदृष्टिसुधाप्लवे विधिवशादुपसेदुषि देहिनः ।**
**विमलबोधमुखा विविधा गुणाः परिणमन्त्यपवर्गदशाङ्कुराः[1] ॥७७॥**

**प्रभाविलासः**

"तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्" इति श्रुत्युक्ताचार्योपसत्तिमाह—**अनघेति** । अनघशब्द आचार्यगुणानामुपलक्षकः, "श्रोत्रियं ब्रह्मनिष्ठम्" इति श्रुतेः; "अभिजनविद्यासमुदेतं समाहितं संस्कर्तारमीप्सेत्" इत्यापस्तम्बोक्तेः;

"आचार्यो वेदसंपन्नो विष्णुभक्तो विमत्सरः ।
मन्त्रज्ञो मन्त्रभक्तश्च तथा मन्त्रार्थचिन्तकः ॥"

इति स्मृतेः; "सिद्धं सत्संप्रदाये" इत्याद्यभियुक्तवचनाच्चेति ज्ञेयम् । **दृष्टिः**; शास्त्रोपदेशः । **उपसेदुषि**; प्राप्ते सति । बोधपदेन श्रवणजन्यज्ञानमुच्यते । कुदृष्टिकल्पितज्ञानव्यावृत्तये विमलेत्युक्तिः । मुखपदेन कर्मज्ञानभक्तिप्रपत्तयः । तदितिकर्तव्यभूतशमदमाद्यवान्तरभेदमादाय विविधेत्युक्तिः । **अपवर्गदशान्तिमाः**; मोक्षावस्थापर्यन्ताः ॥ ७७ ॥

**प्रभावली**

**नरेन्द्रः**; नरश्रेष्ठ आचार्यः । यद्वा निगमसिद्धा या आचार्यनिरीक्षा प्रथमकटाक्षेण मदीयोऽमिति स्वीकारः, तया । **निपुणानां मुमुक्षूणां मार्गं प्रविष्टो भवति** ॥ ७६ ॥

जायमानकटाक्षमूलसदाचार्योपसत्तौ जातायां परंपरया अपवर्गसाधनभूतास्तत्त्वज्ञानशमदमादिगुणाः स्वयमुद्भवन्तीत्याह —**अनघेति** । **अनघदेशिकः**; सदाचार्यः । अनघेति दृष्टेर्विशेषणं वा । आप्लवः; अवगाहः । **विधिवशात्**; भाग्यवशात् प्राप्तवति सति **देहिनः** विमलो यो बोधः तत्त्वज्ञानं तन्मुखाः

[1] न्तिमाः—घ. ङ. च.

अपिच,

स्वाधीनेतरपातभीतिपरुषस्वर्वासदुर्वासना-
पाशाकर्षणयन्त्रणाभिरभितः क्षिप्तात्मनः क्षेत्रिणः ।
निष्प्रत्यूहविजृम्भमाणकरुणादुग्धार्णवे निर्भरा
भक्तिः सेत्स्यति भागधेयवशतः प्राप्ये परे ब्रह्मणि ॥ ७८ ॥

### प्रभाविलासः

अथ "परीक्ष्य लोकान् कर्मचितान्" इत्यादिपर्यालोचनया क्षुद्रसुखेषूत्पन्नवैराग्यस्य "स्थितोऽरविन्दे" इति न्यायान्महनीयवस्तुविषयं प्रीतिविशेषमाह—**स्वाधीनेति** । **स्वाधीनेतरात्** अस्वाधीनात् **पापात् भीत्या** परुषे स्वर्वासे दुर्वासनया पाशैर्यमपाशैराकर्षणेन यन्त्रणाभिर्बन्धनैश्चाभितः सर्वतः क्षिप्तात्मनः व्याक्षिप्तचित्तस्य **क्षेत्रिणः** संसारस्य; क्षयिष्णुत्वादि-दोषदर्शनेन परित्यक्तस्वर्गाभिलाषस्येत्यर्थः । पातभीतिपदेन "स्वर्गेऽपि पातभीतस्य क्षयिष्णोर्नास्ति निर्वृतिः" इति वचनं स्मारितम् ॥ ७८ ॥

### प्रभावली

**विविधा गुणाः** शमदमादयः मुक्तिसुखानामङ्कुरभूताः । देशिकदृष्टेः सुधाप्लव-नारोपाद्गुणानामङ्कुरत्वारोपणम् ॥ ७७ ॥

अथ ज्ञानानुष्ठानादिभिर्भगवति भक्तिः सेत्स्यतीत्याह—**स्वाधीनेति** । "स्वर्गेऽपि पातभीतस्य क्षयिष्णोर्नास्ति निर्वृतिः" इत्युक्तरीत्या **स्वाधीने-तरपातात्** स्वाधीनेतरः परतन्त्रः, तस्मात् पराधीनपातात् या भीतिः, तया परुषः, स्वर्वासः स्वर्गवासः; अथापि तद्विषया दुर्वासनैव पाशः, तत्कृता-कर्षप्रेरणाभिः **अभितः** सर्वतः व्याकुलितमनसः **क्षेत्रिणः** पुंसः । **निष्प्रत्यूहेति** । **निष्प्रत्यूहं** निर्विघ्नं **विजृम्भमाणायाः** वर्धमानायाः **करुणायाः** दुग्धार्णवे क्षीरसागरे । दयाया अपरिमितत्वेन सागरत्वरूपणम् । परमकारुणिके **प्राप्ये**, अत एव **परे ब्रह्मणि** श्रीनिवासे **निर्भरा** परिपूर्णा दृढेत्यर्थः; **भक्तिः सेत्स्यति** सिध्यति ॥७८॥

अत्र चान्तरा सर्वस्वदक्षिणोऽयमध्वरः प्रवर्तते । यत्र तु,

[1]त्वया जुष्टः पत्न्या विधिवदिह यष्टा स्वयमहं
विधत्ते चार्त्विज्यं शमदममुखोऽयं गुणगणः ।

### प्रभाविलासः

एवं भक्तौ जातायामनन्तरं परिशिष्यमाणमाह—**अत्रेति** । **सर्वस्वदक्षिणः**; आत्मात्मीयसमर्पणरूपः । "यावदस्य वित्तं सर्ववेदसेन यजेत" "सर्ववेदसं वा एतत्सत्रम्" इत्यादिश्रुतिप्रसिद्धप्रवृत्तिनिमित्तसाम्येनाध्वर इत्युक्तिः । उक्तमेवाध्वरसाम्यं विशिनष्टि—**त्वयेति**; सुमत्या आनुकूल्यकरणं प्रातिकूल्यवर्जनं च दर्शयितुं **पत्नीत्वव्यपदेशः** । **स्वयमहमिति** प्रमाणमिति तर्कनिर्धारितत्वेन विश्वासातिशयः सूचितः । ब्रह्मविद्याशेषतया शमाद्युपकारमाह—**विधत्त इति** । **अकस्मादिति**; प्रपत्तेः साधनत्वं निवारितम्, "प्रपत्तेर्व्याजमात्रत्वम्" इत्यभियुक्तोक्तेः । फलान्तराभिसंधिराहित्यं वा । **उद्देश्यो भवतीति**; गोप्तृत्ववरणं सूचितम् । **आत्महविष इति**; आज्यपुरोडाशादिभ्य आत्महविषः प्रियतमत्वमुक्तम्, "पुरुषाहुतिर्ह्यस्य प्रियतमा" इति श्रुतेः । अत्र हिशब्देन दध्याज्यादिभ्योऽन्तरङ्गतया देहस्य प्रियतमत्वं प्रसिद्धमिति द्योत्यते । उद्देश्यदेवतायाश्च यष्टृदेहहविः-

### प्रभावली

भक्तावशक्तस्य प्रपत्तिरपि संभवतीत्याह—**अत्र चान्तरेति**। **अत्र**; जीवे । **अन्तरा** मध्ये; भक्त्यशक्तस्य भक्तिस्थाने । **सर्वस्वदक्षिणः**; समर्पितसमस्तभरः । **अध्वरः**; प्रपत्तिरूपो यज्ञः । **यत्र तु**; यज्ञे । अध्वरसमाधि निरूपयति—**त्वयेत्यादिना** । भो • प्रिये, **इह**; यज्ञे । त्वया पत्न्या **जुष्टः** युक्तोऽहं स्वयमेव **विधिवत्** यथाशास्त्रं **यष्टा** यजमानो भवामि । **आर्त्विज्यं विधत्ते**; ऋत्विजां कर्म संपादयति । तत्रात्महविषः समर्पणीयस्य स्वात्मरूप-

[1] "तस्यैवम्" इति श्रुतौ आत्मा यजमानः, श्रद्धा पत्नीत्युक्तम् । अत्र तु विवेको यजमानः, सुमतिः पत्नी, आत्मा हविरिति विनिमयः कृत इति ज्ञेयम् ।

**अकस्मादुद्देश्यो भवति [1]भगवानात्महविषः**
**पशुर्बद्धो मुक्तिं भजति विगलत्कर्मनिगलः ॥ ७९ ॥**

**प्रभाविलासः**

प्रियतमत्वं यष्टुरदेयदानत्वेन। देहादयो यदनुबन्धितया प्रियाः स चात्मात्यन्तप्रियतया सुतरामदेयदानः । उद्देश्यदेवतायाश्चान्तर्यामितयात्यन्तप्रियतमत्वं यष्टुरात्मनः श्रूयत इत्यात्महविष इत्युक्तम् । अत्र "सर्वोपाधिविनिर्मुक्तं क्षेत्रज्ञं ब्रह्मणि न्यसेत्" इति स्मृतिरनुसंधेया। अनेनात्मनिक्षेपरूपोऽङ्गी अभिहितः। **पशुरिति**; कर्मादिष्वनधिकारेण कार्पण्योक्तिः । **बद्ध** इत्यार्तिः सूचिता । **विगलत्कर्मनिगल** इति पूर्वोत्तराघनिवृत्तिः । **मुक्तिं भजतीति** पुरुषार्थलाभः । एवं साङ्गप्रपदनं निरूपितम । तदुक्तं लक्ष्मीतन्त्रे—"श्रीरुवाच—

"आनुकूल्यमिति प्रोक्तं सर्वभूतानुकूलता ।
अन्तः स्थिताहं भूतानां सर्वेषामिति निश्चयात् ॥
मयीव सर्वभूतेषु ह्यानुकूल्यं समाचरेत् ।
तथैव प्रातिकूल्यं च भूतेषु परिवर्जयेत् ॥
त्यागो गर्वस्य कार्पण्यं श्रुतशीलादिजन्मनः ।
अङ्गसामग्र्यसंपत्तेरशक्तेश्चापि कर्मणाम् ॥

**प्रभावली**

हविषः **भगवान्** श्रियःपतिः **अकस्मात्** निर्हेतुकमनभिसंहितफलान्तरं यथा तथा **उद्देश्या** देवता भवति । पशुस्थानीयो बद्धात्मा । सः मुक्तिं मोक्षम्, अन्यत्र विमोचनं च भजति । कीदृग्भूतः? **विगलत्कर्मनिगलः**; विगलत् त्रुटत् कर्म पुण्यपापरूपं, तदेव निगलं पादशृङ्खला यस्य स सन् मुक्तिं भजति। यागविशेषे पशोर्बद्धस्य उत्सर्गोऽपि दृष्ट इति भावः । पशोर्यजमानस्यापि फलप्राप्त्यविशेषात् बद्धः पशुर्मुक्तिं भजतीत्युक्तम् । तदविनाभूतस्य स्वस्य यजमानस्य मुक्तिर्न पृथग्वाच्य इति भावः ॥ ७९ ॥

[1] "ब्रह्मणे त्वा महस ओम्" इत्यत्रत्यब्रह्मशब्दार्थं विवृणोति—भगवानितीति ज्ञेयम्।

इदमप्यत्र भवत्या भावनीयम्—

**स्वरक्षणभरार्पणक्षणिकसत्रिणः क्षेत्रिणः**
**प्रवर्त्य कृपया स्थितिं प्रभुरभूतपूर्वोदयाम् ।**

प्रभाविलासः

अधिकारस्य चासिद्धेर्देशकालगुणक्षयात् ।
उपाया नैव सिध्यन्ति ह्यपाया बहुलास्तथा ॥
इति या गर्वहानिस्तद्दैन्यं कार्पण्यमुच्यते ।
शक्तेः सूपसदत्वाच्च कृपायोगाच्च शाश्वतात् ॥
ईशेशितव्यसंबन्धादनिदंप्रथमादपि ।
रक्षिष्यत्यनुकूलान्न इति या सु दृढा मतिः ॥
स विश्वासो भवेच्छक्र सर्वदुष्कृतनाशनः ।
करुणावानपि व्यक्तं शक्तः स्वाम्यपि देहिनाम् ॥
अप्रार्थितो न गोपायेदिति तत्प्रार्थनामतिः ।
गोपायिता भवेत्येवं गोप्तृत्ववरणं स्मृतम् ॥
तेन संरक्ष्यमाणस्य फले स्वाम्यवियुक्तता ।
केशवार्पणपर्यन्ता ह्यात्मनिक्षेप उच्यते ॥"

इति । अस्मिन् श्लोके परिन्यासो नाम मुखसंधेरङ्गमुक्तम् "बीजनिष्पत्तिः परिन्यासः" इति लक्षणात् ॥ ७९ ॥

उक्तलक्षणस्याध्वरस्य कालपरिमाणं वदन् फलमाह—**स्वरक्षणेति ।**

**प्रभावली**

**भावनीयम्**; चिन्तनीयम् । ननु निरपायनिरन्तरोपायसिद्धौ सकलकर्मविरहेण कथमात्मनः संसारे पुनरवस्थानमित्याशङ्क्य, न हि वयमार्तप्रपन्नस्यापि स्थितिं ब्रूमः, किंतु दृप्तस्य । परोज्जिजीवयिषया भगवान् कृपयावस्थितिं करोतीत्याह—**स्वरक्षणेति । स्वरक्षणभरार्पणरूपं** क्षणिकं सकृदनुष्ठेयत्वेन क्षणनिर्वर्त्यं **सत्रम्**

जगद्विपरिवर्तनप्रथितनित्यशक्तिः स्वयं
क्षिपत्यपुनरङ्कुरं दुरितमस्य लक्ष्मीपतिः ॥ ८० ॥

**प्रभाविलासः**

स्वरक्षणभरार्पणमेव क्षणिकसत्रमस्यास्तीति तथोक्तः। "सकृदेव हि शास्त्रार्थः कृतोऽयं तारयेन्नरम्" "सकृदेव प्रपन्नाय" इत्यादिशास्त्रात् क्षणिकेत्युक्तिः। आत्मन्यासकर्तुः स्वध्वरसंज्ञायाः श्रुतिसिद्धत्वात् सत्रिण इत्युक्तम्। यथोक्तम्—

"समित्साधनकादीनां यज्ञानां न्यासमात्मनः।
नमसा योऽकरोद्देवे स स्वध्वर इतीरितः ॥"

इति। **अभूतपूर्वोदयाम्**; भूतपूर्वपदेनेष्टानिष्टसाधनकं कर्मोच्यते; तद्विलक्षणा स्थितिरभूतपूर्वेत्युच्यते। मध्यमा निष्ठेत्यर्थः। तदुक्तं लक्ष्मीतन्त्रे—

"त्रिविधां पश्य देवेश कर्मणो गहनां गतिम्।
निषेधविधिशास्त्रेभ्यस्तां विधां तु निबोध मे ॥
अनर्थसाधकं किंचित् किंचिच्चाप्यर्थसाधकम्।
अनर्थपरिहाराय किंचित्कर्मोपदिश्यते ॥
त्रैराश्यं कर्मणामेवं विज्ञेयं शास्त्रचक्षुषा।
उपायापायसंज्ञौ तु पूर्वराशी परित्यजेत् ॥

**प्रभावली**

अस्यास्तीति तथोक्तः। त्रिगुणसत्रिण इति पाठे स्वरक्षणभरार्पणेन विशिष्टः, त्रिगुणं प्रकृतिः, तन्निष्ठः प्रकृतिनिष्ठः प्रपन्नः। शाकपार्थिवत्वात्समासः। दृप्तप्रपन्न इत्यर्थः; तस्य। **जगद्विपरिवर्तनेत्यादि**; जगतो विपरिवर्तनं नाम करणाकरणान्यथाकरणादि, तत्र प्रथिता प्रसिद्धा नित्यशक्तिर्यस्य स प्रभुः स्वतन्त्रः अभूतपूर्वोदयां कर्मवैधुर्येऽपि प्रवृत्तिहेतुभूतामिति यावत्। **स्थितिं** शरीरावस्थानं

**सुमतिः**—अय्यउत्त, एव्वं णाम वण्णिज्जंती ओवग्गदसा पुरिसस्स कइआ होहिइ ?

**प्रभाविलासः**

तृतीयो द्विविधो राशिरनर्थपरिहारकः ।
प्रायश्चित्तात्मकः कश्चिदुत्पन्नानर्थनाशकः ।
तमंशं नैव कुर्वीत मनीषी पूर्वराशिवत् ॥
क्रियमाणं न कस्मैचिद्यदर्थाय प्रकल्पते ।
अक्रियावदनर्थाय तत्तु कर्म समाचरेत् ॥
एषा सा वैदिकी निष्ठा ह्युपायापायमध्यमा ।
अस्यां स्थितो जगन्नाथं प्रपद्येत जनार्दनम् ॥"

इति । विपरिवर्तनपदेनाघटितघटनं विवक्षितम् । **जगतो विपरिवर्तने** प्रथिता नित्यशक्तिर्यस्य । **अपुनरङ्कुरम्**; पुनरुत्पत्तिरहितं यथा तथा । अत्र श्लोके विलोभनं नाम मुखसंधेरङ्गं दर्शितम् । बीजगुणवर्णनं विलोभनम्" इति लक्षणात् ॥ ८० ॥

**प्रभावली**

**कृपया** केवलया **प्रवर्त्य** संपाद्य; अथ चास्य चेतनस्य दुरितं कर्म वासनामपि स्वयमेवापुनरङ्कुरम अपुनःप्ररोहं यथा तथा क्षिपति निरस्यति । यद्वा आत्मसमर्पणमात्रेणानन्तजन्मसंचितदुरितसंततिः कथं गलति ? निवृत्तिधर्मस्यापि कथंचिद्वैकल्यसंभवाच्च कथं मुक्तः स्यादित्यत आह—**इदमपीत्यादि** । स्वरक्षणेत्यादि पूर्ववदर्थः । **प्रभुः**; सर्वशक्तिः । भूतपूर्व उदयो यस्याः सा न भवतीति तां स्थितिं प्रवर्त्य । अपूर्वस्थितिप्रवर्तनौपयिकं सर्वशक्तित्वमुपपादयति—**जगद्विपरिवर्तनेति** । पूर्ववदेवार्थः । अपुनरङ्कुरं यथा तथास्य दुरितं नाशयतीति सर्वशक्तित्वात् लक्ष्मीपतित्वाच्च भगवत उक्तचोद्यानवकाश इत्यर्थः ॥ ८० ॥

**एव्वं णामेत्यादि** । **एव्वं णाम**-एवं नाम । **वण्णिज्जंती**-वर्ण्यमाना । **ओवग्गदसा**-अपवर्गदशा । **पुरिसस्स**-पुरुषस्य । **कइआ**-कदा । **होहिइ**-भविष्यति ।

(आर्यपुत्र, एवं नाम वर्ण्यमाना अपवर्गदशा पुरुषस्य कदा भविष्यति ?)

**राजा**—[1]देवि त्रैलोक्यवेदिनि, दुःसहानादिदुःखसागरनिमग्नस्य यथागमं यथान्यायं च केनचित्कारणेन समुत्तारः संभविष्यतीति संतोष्टव्यं तावत् । इह हि,

**निरपायदेशिकनिदर्शितामिमां**
**कमलासहायकरुणाधिरोहणीम् ।**

### प्रभाविलासः

**दुःसहेत्यादि** । "तस्य तावदेव चिरं यावन्न विमोक्ष्ये" "अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः" इत्यादिरागमः । "तत्सामान्यादितरेषु तथात्वम्" इति न्यायः । एवं युक्तिर्नाम मुखसंधेरङ्गमुक्तम्, "बीजानुकूलसंघटनप्रयोजनविचारो युक्तिः" इति लक्षणात् । **निरपायेति । निरपायः**; निर्दुष्टः । **अधिरोहिणी**; निश्रेणिः । "निश्रेणिस्त्वधिरोहणी"

### प्रभावली

भगवत्कृपयापि वास्य कियन्तं कालं शरीरमवतिष्ठत इति प्रश्नार्थः । पुरुषस्य दुःख्यतः संसारसमुत्तारः सर्वथा तावद्भविष्यतीति संतोष्टव्यं भवत्येवेत्याह—**दुःसहेत्यादि** । **यथागमम्**; "तावदेव चिरम" इत्यादिश्रुत्यनतिक्रमेण । **यथान्यायम्**; तत्तद्देवमनुष्याद्यायुःपरिमाणानतिक्रमेण च । केनचित्कारणेन संसारात् **समुत्तारः** समुत्तरणम । उत्तारकारणं प्रधानं शृङ्गग्राहिकया दर्शयति—**इह हीत्यादि** । **इह**; जगति, उत्तारे वा । निरपायं यथा तथा देशिकेन दृष्टान्तपूर्वमुपदिष्टाम् । कमलासहायस्य करुणैवाधिरोहणी निश्रेणिः, ताम् । कमलाशब्देन लक्ष्म्याः पुरुष-

[1] प्रिये—घ.

**क्रमशोऽधिरुह्य कृतिनः समिन्धते**
**परिशुद्धसत्त्वपरिकर्मिते पदे ॥ ८१ ॥**

### प्रभाविलासः

इत्यमरः । **क्रमशः;** पूर्वोक्तजायमानकटाक्षादिक्रमेण । **परिशुद्धसत्त्वपरिकर्मिते;** अप्राकृतद्रव्यरचिते, "क्षयन्तमस्य रजसः पराके" इति श्रुतेः । **समिन्धत इति** "तद्विप्रासो विपन्यवो जागृवांसः समिन्धते" इति श्रुतिरनुगृहीता भवति । एवं प्राप्तिर्नाम मुखसंधेरङ्गमुक्तम्, "बीजसुखागमः प्राप्तिः" इति लक्षणात् । कृतिनः समिन्धत इत्यनेकेषामिष्टार्थसिद्धिप्रतीतेः सिद्धिर्नाम नाट्यालंकारो दर्शितः । यदाहामृतानन्दः —

"सिद्धिः प्राप्तिर्विचारश्चानुनयस्तदनन्तरम् ।
उद्दिष्टमपि दाक्षिण्यं प्रसिद्धिर्गर्हणं तथा ॥
पश्चात्तापः स्पृहा क्षोभ आक्रन्दः परिहारकः ।
नीतिरुत्तेजनं शोभाभिमानः संशयस्तथा ॥
तुल्यतर्कोऽक्षमा चैव व्यवसायो विमर्शनम् ।
युक्तिः प्रोत्साहनं चैव साहाय्यं च निवेदनम् ॥
अभिज्ञानं च पृच्छा चातिशयो गुणकीर्तनम् ।
इति त्रिंशदलंकाराः प्रायो नाट्येषु संगताः ॥"

इति । तत्र "सिद्धिरिष्टार्थसंसिद्धिरनेकेषामुदाहृता" इत्युक्तम् ॥ ८१ ॥

### प्रभावली

कारत्वं तद्विशिष्टभगवत्कृपाया एव कारणत्वं च सूच्यते । **क्रमशः; क्रमेण ।** क्रमेणाधिरुह्य हि सौधप्राप्तिः । तद्वदिहापि सत्त्वादिगुणवैषम्यात् बुद्धिपरिपाकविशेषः । तेन यादृच्छिकसुकृतस्य समुद्भवः । तद्व्याजीकृत्य कृपया जायमान-

अपिच ;

**स्वयमुपशमयन्ती स्वामिनः[1] स्वैरलीलां**
**स्वमतमिह दुहाना स्वादु पथ्यं प्रजानाम् ।**
**नियतमियमिदानीमन्यदा वा भवित्री**
**निरवधिसुखसिद्ध्यै निष्प्रकम्पानुकम्पा ॥ ८२ ॥**

**प्रभाविलासः**

**स्वयमिति । स्वैरलीलाम् ;** स्वतन्त्रव्यापारम् । **इह ;** लोके । **प्रजानां स्वमतम् ;** तत्तदभिमतम् । **स्वादु ;** प्रियम् । **पथ्यम् ;** अनिष्टाननुबन्धि, पुत्रपश्वादिकमित्यर्थः । **दुहाना ;** प्रदात्री । इदं चानुषङ्गिकफलमिति ज्ञेयम् । **इदानीमन्यदा** वेत्यार्तदृप्तापेक्षयोक्तम् । **निरवधिसुखम् ;** ब्रह्मानुभवः । अनेन समाधानं नाम मुखसंधेरङ्गमुक्तम् । "बीजसंनिधानं समाधानम्" इति तल्लक्षणम् ॥ ८२ ॥

**प्रभावली**

कालकटाक्षेण सदाचार्यसमाश्रयणम् । ततश्च ज्ञानानुष्ठानादिसंभवः । तस्माद्भक्तिप्रपत्योरन्यतरस्वीकार इत्येवं क्रमेणाधिरुह्य । अत एव **कृतकृत्याः** परिशुद्धसत्त्वेन शुद्धसत्वाचिद्रूपगोपुरमण्टपादिनालंकृते **परमे पदे** समिन्धते ; "विपन्यवो जागृवांसः समिन्धते" इत्यादिश्रुत्युक्तप्रकारेण विराजन्तीत्यर्थः ॥ ८१ ॥

ननु भगवतः स्वच्छन्दलीलापारवश्यात् कृपा न स्वावकाशं लभत इत्यत आह—**स्वयमिति । स्वामिनः ;** सर्वेश्वरस्य । **स्वैरलीलाम् ;** स्वच्छन्दक्रीडाम् ; शमयन्ती ; स्वच्छन्दलीलापारवश्येऽपि भगवान् स्वामित्वेन स्वीयमात्मवस्तु नोपेक्षते । अतश्च करुणा स्वैरलीलामपि निरङ्कुशप्रवाहा तिरस्करोतीत्यर्थः । **इहैव प्रजानामाश्रितानां स्वादु** रस्यं **पथ्यं** हितं **स्वमतं** संसारविमोचनरूपं स्वयमेव **दुहाना ;** प्रयच्छन्ती । दुहानेत्यनेन करुणायाः स्वःकामधेनुत्वं व्यज्यते ।

[1] स्वामिनि—क.

इयं हि[1],

अविरलगुणच्छाया मायातपप्रतिरोधिनी
परिहृतरजःपङ्का तापैरसंघटिता त्रिभिः ।

प्रभाविलासः

**अविरलेति** । अत्र गुणशब्देन मुक्त्यवस्थायामाविर्भूताः प्रत्यगात्मगुणा उच्यन्ते । अन्यत्र शैत्यादयः । **माया**; संसारः । **रजः**; रजोगुणः धूलिश्च । **पङ्कः**; पापं कर्दमश्च । "पङ्कः कर्दमपापयोः" इति निघण्टुः । **त्रिभिस्तापैः**; आध्यात्मिकादिभिः, वाङ्मनःकायकृतैश्च । **कण्टकः**, क्षुद्रशत्रुः, सूच्यग्रं च; "सूच्यग्रे क्षुद्रशत्रौ च लोमहर्षे च कण्टकः" इति

प्रभावली

भगवतः किंचिदनुग्रहं प्राप्य साकल्येनाविलम्बं प्रयच्छन्ती । कर्मवद्भावेऽपि, "न दुहस्नुनमां" इति यक्प्रतिषेधः । अत एव **निष्प्रकम्पा**; अविचाल्या । **निरवधिसुखसिध्द्यै**; मोक्षसिद्ध्ये । **नियतम्**; नियमेन । **इदानीम्**; शरीरावसाने प्रपन्नस्य । **अन्यदा वा**; प्रारब्धकर्मावसाने भक्तिनिष्ठस्य । **भवित्री**; भविष्यति ॥ ८२ ॥

दयां वर्तनीत्वेन रूपयन्नाश्रितं सिद्धेर्न च्यावयतीत्याह—**इयं हीत्यादि** । **इयं** करुणा **अविरलानां** निबिडानां बहूनां **गुणानां** सौशील्यादीनां **छाया** यत्र । अविरला निबिडा गुणानां छाया अनातपः शोभा वा यत्र । अन्यत्र अविरलगुणाः बहुविधशैत्यादिगुणाः छाया यत्र । **माया** प्रकृतिः, सैवातपः, तत्प्रतिरोधिनी । अन्यत्र मोहजनकातपप्रतिरोधिनी । परिहृतं रजः रजोगुणः पङ्कं पापं च यया । अन्यत्र प्रसिद्धम् । **त्रिभिस्तापैरसंघटिता**; आश्रितानां तापत्रयविहतिकरीत्यर्थः । अन्यत्र कायिकादिरूपैस्त्रिभिस्तापैरसंघटिता । मधुरिपुदयात्मिका **दिव्या**; श्लाघ्या । अन्यत्र दिवि भवा । निराकृताः कण्टकाः मुक्त्यन्तरायाः

[1] इयं हि omitted—च.

मधुरिपुदयामूर्तिर्दिव्या निराकृतकण्टका
वहति निगमाद्वर्तन्येषा[1] पुरीमपराजिताम् ॥ ८३ ॥

**सुमतिः**—अय्यउत्त, अपरिमिअदुरिअभरिअस्स जंतुणो दुक्खसाअरादो उत्तारणवअणं बालअणसंतोसवअणं विअ[2] उवच्छंदणं ति पेक्खामि ।

प्रभाविलासः

निघण्टुः । **निगमात्**; वेदात् । ल्यब्लोपे पञ्चमी । वेदत्रयं विहायेत्यर्थः । अन्यत्र नगरान्तरात् । **अपराजितां पुरीम्**; अयोध्याम् । अन्यत्र अन्यैरपराजिताम् । **एषा वर्तनी**; अर्चिरादिः । अन्यत्र पन्थाः । **वहति**; प्रापयति; मुक्तं पथिकं चेति शेषः ॥ ८३ ॥

**उपच्छन्दनम्**; 'यवागूं पिब, शिखा ते वर्धिष्यते' इत्यादिवत रुच्युत्पादनम् । अनेन विभावनं नाम मुखसंधेरङ्गमुक्तम् । "बीजसुखदुःख-

प्रभावली

बृन्दारकादयो यया । अन्यत्र कण्टकाः प्रसिद्धाः । **एका वर्तनी**; एकपदी । **निगमात**; वेदात प्रमाणभूतात् वेदाद्धेतोः; "तमेवं विद्वानमृत इह भवति, नान्यः पन्था विद्यतेऽयनाय" इत्यादिरागमस्तत्र प्रमाणमित्यर्थः । अन्यत्र पत्तनादारभ्य । अपराजिताम्; "देवानां पूरयोध्या" "विभ्राजमानां हरिणीं विवेशापराजिता" इत्युक्तामयोध्यां पुरीम् । **वहति**; प्रापयति गच्छति । अन्यत्र परैर्दुष्प्रापां पुरीम् ॥८३॥

अपरिमितेत्यादि । **अपरिमिअदुरिअभरिअस्स**-अपरिमितदुरितैः भरितस्य पूर्णस्य । **जंतुणो**-जन्तोः । **दुक्खसाअरादो**-दुःखसागरात् । **उत्तारणवअणं**-उत्तारणवचनम् । **बालअणसंतोसवअणं विअ**-बालजनसंतोषवचनमिव । बालजनसंतोषवचनं तु; 'यवागूं पिब, शिखा ते वर्धिष्यते' इत्यादि ।

[1] एका—च, छ.   [2] विअ omitted—ङ, च.

(आर्यपुत्र, अपरिमितदुरितभरितस्य जन्तोः दुःखसागरा-
दुत्तारणवचनं बालजनसंतोषवचनमिवोपच्छन्दनमिति पश्यामि ।)

**राजा**—भद्रे अबाधितार्थग्राहिणि, मा स्म मिथ्यादृष्टिमुप-
तिष्ठ । सुमतिः खल्वसि । अपि दृष्टः क्वचिदाप्तागमस्य बाधः, ऐश्व-
रस्य वा भक्तजनसंरक्षणप्रतिज्ञानस्य ? इयं ते प्रत्यायना—

**शपे दैष्टिक्येन स्वयमिह भवत्या च सुमते**
**त्वयैव द्रष्टव्यः स्वपनविगमोन्मीलितधिया**[1] ।

प्रभाविलासः

हेतुर्विभावनम्" इति लक्षणात् । **मिथ्यादृष्टिम्**; नास्तिकताम् । **अपिः** प्रश्ने । "तमेवं विद्वानमृत इह भवति" "ब्रह्म वेद ब्रह्मैव भवति" इत्यादिरागमः । "मोक्षयिष्यामि मा शुचः" इत्यादि प्रतिज्ञानम् । **प्रत्यायना**; विश्वासोक्तिः । **शप** इति । **दिष्टं** दैवमस्तीति मतिमान् दैष्टिकः । तस्य भावो दैष्टिक्यम् । **स्वपनविगमः**; कर्माविद्यातिरोधान-निवृत्तिः । तेनोन्मीलिता व्याप्ता धीः विकासो यस्यास्तया । तथा च

प्रभावली

**उवच्छंदणं ति पेक्खामि**-उपच्छन्दनं प्रतारणमिति पश्यामि । **अबाधि-तार्थः**; यथार्थः । यथार्थग्राहिण्यास्तवेदं नोचितमिति भावः । **मिथ्या-दृष्टिः**; नास्तिकता, मायावादिमतनित्यर्थः । **उपतिष्ठ**; अङ्गीकुरु । मन्त्रक-रणाद्यभावादात्मनेपदाभावः । अनुपस्थाने हेतुमाह—**सुमतिरिति** । **अपि दृष्ट** इत्यादि । **अपिः** प्रश्ने । **आप्तागमस्य**; आप्तवाक्यस्य; आप्तश्चासावागमश्च; "तमेवं विद्वान्" इत्यादेः । कुत्रचिदपि बाधो दृष्टः किम्? न दृष्ट इत्यर्थः ।

[1] दृशा क. घ. च.

**अहंकारग्राहग्रहकदनसाक्रन्दतनुभृ-**

**न्मुमुक्षासंरम्भो[1] मुरमथनसंकल्पमहिमा ॥ ८४ ॥**

**प्रभाविलासः**

श्रुतिः—"सर्वं ह पश्यः पश्यति" इति । **अहंकार एव ग्राहो** जलग्राहः, तेन ग्रहेण ग्रहणेन जाते कदने बाधे साक्रन्दस्य तनुभृतो मुमुक्षायां संरम्भः संभ्रमो यस्य सः । "संरम्भः संभ्रमे क्रोधे" इति निघण्टुः । अनेन गजेन्द्ररक्षणं व्यञ्जितम् । साक्रन्दपदेन

"गोविन्देति यदाक्रन्दत् कृष्णा मां दूरवासिनम् ।
ऋणं प्रवृद्धमिव मे हृदयान्नापसर्पति ॥"

इति शरण्यवचनं स्मारितम् । तेन द्रौपदीरक्षणं साक्रन्दपदव्यङ्ग्यम् ॥८४॥

**प्रभावली**

बाधे सत्याप्तवाक्यत्वमेव हीयेतेति भावः । **ऐश्वरस्य**; ईश्वरसंबन्धिनः । **भक्तरक्षणप्रतिज्ञानस्य**; "सकृदेव प्रपन्नाय" "न त्यजेयं कथंचन" इत्यादिकस्यापि । किं दृष्टो बाध इत्यत्रानुषज्यते । **प्रत्यायना**; विश्वासप्रतिवचनम्; शपथ इत्यर्थः । तमेवाह—**शप** इति । दिष्टं विधिः; भगवत्कृपेति यावत् । देवादिशब्दा भगवद्दयावाचका इत्यस्मत्सिद्धान्तसंप्रदायः । दिष्टं प्रमाणत्वेनास्तीति वदन् दैष्टिकः । तद्भावो दैष्टिक्यम् । वैष्णवत्वमित्यर्थः । **तेन शपे । भवत्या च शपे** । मिथ्या चेत् प्रेयसीशपनं कर्तुमनुचितमिति भावः । **स्वपनविगमोन्मीलितधिया**; सम्यगवहितज्ञानया । **अहंकारेत्यादि**; अहंकारो देहात्माभिमानः । स एव ग्राहो नक्रः, तस्य ग्रहो ग्रहणम्; तज्जनितं कदनमुपद्रवः, तेन साक्रन्दः आर्तध्वनिसहितः, यस्तनुभृत् प्राणी, तस्य मुमुक्षया मोक्षेच्छया संरब्ध उद्युक्तो भवन् । **मुरमथनस्य संकल्पमहिमा**; विशिष्टः संकल्प इत्यर्थः ॥ ८४ ॥

[1] संरब्धः—क, ग.

अथवा साधारणः खल्वयं समाश्रितसंरक्षणसंरम्भः । तथाहि—

**दीनो दृप्यतु वापराध्यतु[1] परं व्यावर्ततां वा तत[2]-**
**स्त्रातव्यः शरणागतः शकनतः सद्भिस्तथा स्थाप्यते ।**

प्रभाविलासः

भगवतः संरक्षकत्वं कैमुतिकन्यायेन प्रथयति—**दीन इति । दीनः ;** आर्तः ; तच्च प्रारब्धदेहासहिष्णुत्वम्, "यस्तु प्रारब्धदेहेऽपि शोचत्यार्तः स उच्यते" इति स्मरणात् । **दृप्यतु वा ;** दृप्तो वा, अभ्युपगतप्रारब्धमात्रसह इत्यर्थः, "यस्य देहान्तरकृते शोको दृप्तः स उच्यते" इति स्मरणात् । एवंभूतः प्रपन्नः **अपराध्यतु** । ततोऽपराधात **व्यावर्ततां वा** । इदं च नालीजङ्घवानरवृत्तान्तस्मरणादुक्तम् । **त्रातव्यः** ; अनेन

"आर्तो वा यदि वा दृप्तः परेषां शरणं गतः ।
अरिः प्राणान् परित्यज्य रक्षितव्यः कृतात्मना ॥"

इति स्मारितम् । यद्वा विभीषणादिवदार्तो वा, परशुरामादिवत् दृप्यतु वा, काकासुरादिवदपराध्यतु वा, सुग्रीवादिवत व्यावर्ततां वा, उदासीनतया तिष्ठतु वेति । **शकनतः ;** शक्तितः । स्वप्राणावस्थितिपर्यन्तं जटाय्वादिवत रक्षणमावश्यकमित्युक्तम् । **सद्भिः ;** सर्वशरण्ययाथात्म्यविद्भिः, "अस्ति-

प्रभावली

समाश्रितसंरक्षणं तदेकदीक्षितस्य भगवतः कैमुतिकन्यायसिद्धमित्याह—**अथवेत्यादि** । किमाश्रितविशेषविषयवचनेन ? साधारणश्चायमित्यादि । तदेव दर्शयति—**दीन** इति । **दीनः** ; विभीषणादिवद्भग्नदर्पः । **दृप्यतु वा ;** भार्गवादिवत् उद्धतो भवतु वा। **परं विराध्यतु ;** केवलं काकादिवत् विरोधमाचरतु वा ।

[1] विराध्यतु इति प्रभावलीपाठः [2] पुनः—क.

विश्वामित्रकपोतराघवरघुव्योमाध्वगप्रेयसी-
नालीजङ्घबृहस्पतिप्रभृतिभिर्नन्वेष घण्टापथः ॥ ८५ ॥

## प्रभाविलासः

ब्रह्मेति चेद्वेद, सन्तमेनं ततो विदुरिति" इति श्रुतेः। यद्वा शरणागतरक्षण-धर्मरहस्यविद्भिः। "सूक्ष्मः परमदुर्ज्ञेयः सतां धर्मः प्लवंगम" इति हि शरण्यवचनम्। स्थाप्यते; स्वयमनुष्ठानेन स्मृतिप्रामाण्येन च स्थिरीक्रियते। सत एवोदाहरति—विश्वामित्रेत्यादिना। स्वब्राह्मण्यनिमित्तसुकृतापत्यादि-हानिमनुमत्यममेवान्तरङ्गधर्ममन्वतिष्ठद्विश्वामित्रः। तदुक्तं बालकाण्डे स्व-पुत्रान् प्रति विश्वामित्रवचनम्—

"यत्कृते पितरः पुत्रान् जनयन्ति शुभार्थिनः।
परलोकहितार्थाय तस्य कालोऽयमागतः॥
अयं मुनिसुतो बालो मत्तः शरणमिच्छति।
तस्य जीवनमात्रेण प्रियं कुरुत पुत्रकाः॥"

इति। मुनिसुतः शुनःशेफः। त्रिशङ्कुं प्रति—

"इक्ष्वाको स्वागतं वत्स जानामि त्वां सुधार्मिकम्।
शरणं ते भविष्यामि मा भैषीर्नृपपुङ्गव॥"

## प्रभावली

ततो विरोधाद्व्यावर्तताम्; विरोधाद्व्यावर्तनमुदासीनता। सुग्रीवादिवदुदा-सीनो भवतु। शरणागतेः पूर्वमिति सर्वत्र योज्यम्। शक्नतः; शक्तितः। शक्त्यनुसारेणेत्यर्थः। तथा; एवमेव। सद्भिः स्थाप्यते; अनुष्ठानेन स्थिरीक्रियते। शरणागतरक्षकान् सतो दर्शयति—विश्वामित्रेत्यादिना। विश्वामित्रः शुनःशे-

## प्रभाविलासः

इति। अस्य धर्मस्य रक्ष्यरक्षकयोर्जातिभेदमन्तरेण सार्वत्रिकत्वमाह। **कपोतेति;** स्वप्राणत्यागपर्यन्तं हि कपोतो रक्षितवान्।

> " श्रूयते हि कपोतेन शत्रुः शरणमागतः।
> अर्चितश्च यथान्यायं स्वैश्च मांसैर्निमन्त्रितः।
> स हि तं प्रतिजग्राह भार्याहर्तारमागतम् ॥"

इति श्रीरामोक्तेः। अनेनापराध्यतु वेति विवृतम्। आत्मानं प्रति शरणवचनानुक्तावपि शरणपदश्रवणमात्रेणापि सर्वथा रक्षणमिति दर्शितं च। लुब्धको हि वनस्पतिं प्रति शरणपदं प्रयुक्तवान्—"सोऽञ्जलिं शिरसा कृत्वा वाक्यमाह वनस्पतिम्। शरणं ते गतोऽस्म्यद्य" इति। यद्वा शरणपदप्रयोगाभावेऽपि गृहागमनमेव रक्षणनिमित्तमिति दर्शितम्। उक्तं हि कपोत्या—

> " शृणुष्वावहितः कान्त यत्ते वक्ष्याम्यहं हितम्।
> प्राणैरपि त्वया नित्यं संरक्ष्यः शरणागतः ॥
> एष शाकुनिकश्चेह तव वासं समाश्रितः।
> शीतार्तश्च क्षुधार्तश्च पूजामस्मै समाचर ॥
> यो हि कंचिद् द्विजं हन्यात् गां च लोकस्य मातरम्।
> शरणागतं च यो हन्यात्तुल्यं तेषां च पातकम् ॥"

## प्रभावली

फादिविषये। कपोतेन निषादो रक्षितः। राघवेण काकादिः। रघुणा अश्वमेधतुरङ्गरक्षणे, ब्राह्मणश्च। व्योमाध्वगाः देवाः, तेषां प्रेयस्यः देवपत्न्यः, ताभिस्त्वष्टा; "देवा वै त्वष्टारमजिघांसन्। स पत्नीः प्रापद्यत" इत्यादेः।

प्रभाविलासः

इति । ईश्वरस्य शरण्यत्वं स्वाभाविकमिति वक्तुं राघवश्रवणम् । राघवो हि विभीषणं रक्षितवान् । तदुक्तम्—

"विभीषणो वा सुग्रीव यदि वा रावणः स्वयम् ।
आनयैनं हरिश्रेष्ठ दत्तमस्याभयं मया ॥"

इति । शरणागतरक्षणस्यात्यन्ताभिमतत्वेनावताराय शरण्यवंश एवान्वेषित इति दर्शयितुं रघुश्रवणम् । तद्वंशस्य शरण्यत्वं श्रीविष्णुपुराणे प्रसिद्धम्—

"अन्येऽपि सन्त्येव नृपाः पृथिव्यां मान्धातरेषां तनयाः प्रसूताः ।
किंत्वर्थिनामर्थितदानदीक्षाकृतव्रतश्लाघ्यमिदं कुलं ते ॥"

इति । रघुः कंचन ब्राह्मणं रक्षसो ररक्ष । उक्तं हि रघुणा राक्षसं प्रति—

"शक्तोऽपि हि रणे लोभाद्भयाद्वा शरणागतम् ।
यस्त्यजेत्पुरुषं लोके ब्रह्महत्यां स विन्दति ॥
प्रायश्चित्तेन शुध्यन्ति महापातकिनोऽपि ये ।
शरणागतहन्तॄणां शुद्धिः क्वापि न विद्यते ॥
पूयन्ते हयमेधेन महापातकिनोऽपि ये ।
शरणागतहन्तारो न त्वेव रजनीचर ॥"

इति । व्योमाध्वगप्रेयस्यः देवतापत्न्यः । "देवा वै त्वष्टारमजिघांसन् । स पत्नीः प्रापद्यत । तं न प्रति प्रायच्छन् । तस्मादपि वध्यं प्रपन्नं न प्रति प्रयच्छन्ति" इति श्रौतप्रसिद्धेरुक्तम् । अनेन स्त्रीणामप्ययमेवा-

प्रभावली

नालीजङ्घो नाम बकः । स त्विन्द्रद्युम्नम् । बृहस्पतिरिन्द्रं देवांश्च । प्रभृति-शब्देन कृष्णशिबिप्रभृतयः । एतेषां चरित्राणि तत्र तत्रेतिहासेषु द्रष्टव्यानि ॥८९॥

सुमतिः—अय्यउत्त, होंति खु महंता पिआमहप्पमुहा वि मोक्खकामेहिं तेहिं तेहिं उवासिज्जंता। ता किं सिरीवई एव्व णिव्वाणस्स कालणं भणिज्जइ?

(आर्यपुत्र, भवन्ति खलु महान्तः पितामहप्रमुखा अपि मोक्षकामैस्तैस्तैरुपास्यमानाः। तत्किं श्रीपतिरेव निर्वाणस्य कारणं भण्यते?)

प्रभाविलासः

त्यन्तहिततमो धर्म इति लक्ष्म्याः कैमुतिकन्यायसिद्ध इति दर्शितम्। "कार्यं करुणमार्येण" इति हि तयोक्तम्। नालीजङ्घो नाम कश्चित् कंचन निषादकुटुम्बिनं हीनव्यापारं ब्राह्मणं शरणागतं दरिद्रं स्वप्रियसखात् विरूपाक्षसंज्ञकात् राक्षसराजन्यात् शताधिकसुवर्णप्रदानेन ररक्षेत्यानुशासनिके प्रसिद्धिः। बृहस्पतिः शचीं नहुषान्मानभङ्गभीतां शरणागतां ररक्षेत्यादिपर्वणि द्रष्टव्यम्। बृहस्पतिना गीतं च—

"न चास्य बीजं रोहति रोहकाले न चास्य वर्षं वर्षति वर्षकाले।
भीतं प्रपन्नं प्रददाति शत्रवे न सोऽन्तरं लभते त्राणमिच्छन्॥"

इति। प्रभृतिपदेन शिबिवानरादयः। शिबिर्हि श्येनात्कपोतमवति स्म। तदुक्तं शिबिं प्रति शक्रेण—

"आत्मप्राणैः परप्राणान् यो नरः परिरक्षति।
स याति परमं स्थानं यस्मान्नावर्तते पुनः।
प्राणैरपि त्वया राजन् रक्षितः कृपणो जनः।
स्वमांसान्यपि दत्तानि द्रव्येष्वन्येषु का कथा॥"

इति। वानरस्तु विप्रं राक्षसाद्ररक्षेत्यलं ग्रन्थगौरवेण॥ ८५॥

**राजा**—प्रिये अतिसूक्ष्मदर्शिनि, किं न मन्यसे। असाधारणं हि मधुमथनस्य माहात्म्यम्;

**पुरावेधःस्तम्बावधिपुरुषसृष्टेः स्थितिमति[1]**
**स्थिरा भक्तिः सूते विपदुपरतिं पुंसि परमे।**

प्रभाविलासः

"कारणं तु ध्येयः" "तरति शोकमात्मवित्" इत्यादिना यत्कारणं तदेव ध्येयम्। ध्येयमेव मोक्षप्रदमित्यभिप्रायेण नारायणस्य जगत्कारणत्वं तावदाह—**पुरेति**। **आवेधःस्तम्बावधि**; चतुर्मुखमारभ्य स्तम्बपर्यन्तायाः। **पुरुषसृष्टेः**; जीववर्गस्य। **स्थितिमति**; स्थितिं कुर्वति। अत्र स्थितिपदेन सृष्टिलयावपि विवक्षितौ। अत्र "यतो वा इमानि भूतानि जायन्ते। येन जातानि जीवन्ति। यत्प्रयन्त्यभिसंविशन्ति।" इति श्रुतिः.

"विष्णोः सकाशादुद्भूतं जगत्तत्रैव च स्थितम्।
स्थितिसंयमकर्तासौ जगतोऽस्य जगच्च सः॥"

इत्युपबृंहणं च द्रष्टव्यम्। यद्वा आवेधःस्तम्बावधिपुरुषसृष्टेः पुरा स्थितिमति "पूर्वमेवाहमिहासमिति, तत्पुरुषस्य पुरुषत्वम्" इत्यादिश्रुतेः। **परमे पुंसीति** "अग्निरवमो देवतानां विष्णुः परमः" इति श्रुतिरभिप्रेता।

प्रभावली

पूर्वं कमलासहायकरुणैव सर्वसंरक्षणीत्युक्तम्। तत्स्थूणानिखनन्यायेनाक्षिप्य समाधत्ते—**होंति खु** इत्यादिना। **होंति खु**-भवन्ति खलु। **महंता**-महान्तः। **पिआमहप्पमुहा**—पितामहप्रमुखाः। **वि**-अपि। **मोक्खकामेहिं**—मोक्षकामैः। **तेहिं तेहिं**—तैस्तैः। **उवासिज्जंता**-उपास्यमानाः। **ता किं**-तत्किम्। **सिरीवई एव्व**-श्रीपतिरेव। **णिव्वाणस्स**-निर्वाणस्य। **कालणं**—

[1] सृष्टिस्थितिमति—क.

तदन्यानभ्यर्चन्नभिलषितमुक्तिः[1] सुरगणा[2]-
नुदन्यां प्रालेयैरुपशमयितुं वाञ्छति जडः ॥ ८६ ॥

प्रभाविलासः

**पुरा सूते**; "यावत्पुरानिपातयोर्लट्" इति लट् । इदं प्रथमव्याख्यानानुगुणम् । एवं नारायणस्य मोक्षसाधनत्वमुक्तम् । "तमेवं विदित्वातिमृत्युमेति ।" "श्रेयांसि तत्र खलु सत्त्वतनो नृणां स्युः"

"मुमुक्षवो घोररूपान् हित्वा भूमिपतीनथ ।
नारायणकलाशान्ता भजन्ति ह्यनसूयवः ॥"

इति श्रुतिस्मृतिसिद्धत्वात । अथ "नान्यः पन्था अयनाय विद्यते" इति श्रुतिं मनसिकृत्वाह—**तदन्यानिति** । **उदन्याम्**; पिपासाम् । अत्र

"वासुदेवं परित्यज्य योऽन्यं देवमुपासते ।
तृषितो जाह्नवीतीरे कूपं खनति दुर्मतिः ॥"

इत्येतदनुसंधेयम् । **जड** इति राजसतामसप्रकृतित्वमुक्तम् ।

प्रभावली

कारणम् । **भणिज्जइ**-भण्यते । **अतिसूक्ष्मदर्शिनीति** प्रशंसा । **अथापि किं न मन्यसे** मोक्षप्रदानरूपं माहात्म्यम् ? असाधारणत्वं दर्शयति—**पुरेति** । **आवेधस्तम्बावधि**; ब्रह्माणमारभ्य स्तम्बपर्यन्तम् । **या पुरुषसृष्टिः**; पुरुषाणां करणकलेबरसंघटनम् । तस्याः प्रागेव **स्थितिमति**; प्रलयकालेऽपि तिष्ठतीत्यर्थः । यद्वा आवेधस्तम्बावधिपुरुषसृष्टेः सृष्टपुरुषाणां सर्वेषामित्यर्थः । **स्थितिमति**; स्थितिः रक्षणम्, तत्कुर्वन् तद्वान्, तस्मिन् । स्थितिकर्तृत्वं मुमुक्षूपास्यत्वं मोक्षप्रदत्वं च भगवत एवेत्युक्तं भवति । **परमे पुंसि**; पुरुषोत्तमे । **स्थिरा भक्तिः**; स्थिरत्वं परमत्वम् । **पुरा**; प्रार्थनायाः पूर्वमेव । **विपदः**; संसारस्य ।

[1] पूर्त्यै—घ.

[2] सुरगणानिति बहुवचनेन संभूयापि सुरगणाः सर्वे मोक्षदाने असमर्था इति व्यज्यते । अतएव प्रालेयैरिति दृष्टान्तेऽपि बहुवचनम् ।

न खलु सहस्रमप्यालेख्यदिवसकरा[1] अन्धकारं प्रतिक्षिपन्ति।

ततश्च ;

**आबध्नती विगतशान्तिमनादिनिद्रां**
**चेतस्विनस्त्रिगुणशक्तिमयी त्रियामा।**
**नाथस्य केवलमसौ नरकान्तकर्तुः[2]**
**संकल्पसूर्यविभवेन समापनीया ॥ ८७ ॥**

### प्रभाविलासः

" रजस्तमःप्रकृतयस्तमःशीलान् भजन्ति हि।
पितृभूतप्रजेशादीन् श्रियैश्वर्यप्रजेप्सवः ॥ "

इति भागवतोक्तेः ॥ ८६ ॥

**आलेख्यम्** ; चित्रपटः। आबध्नतीति। **चेतस्विनो विगतशान्तिमिति** ब्रह्मविद्याभावे। **अनादिनिद्राम्** ; " अनादिमायया सुप्तः " इति स्मृतेः। **नरकान्तकर्तुरिति** समापने हेतुः। तेन नरकनिवर्तनरूपोपमालंकारः पदव्यङ्ग्यः। अनेनानुभूयमानानवधिसंसारनिवर्तकत्वेन विस्म-

### प्रभावली

**उपरतिम्** ; निवृत्तिम्। सूते-उत्पादयति। न ब्रह्मादिविषया भक्तिरित्यर्थः। एतत् दृष्टान्तेनापि समर्थयते—तदन्यानिति। **तदन्यान्** ; भगवद्व्यतिरिक्तान् सुरान्। **अभ्यर्चन्** ; " आ धृषाद्वा " इति णिज्विकल्पः। **अभिलषितमुक्तिः** ; पुरुषः मोक्षकामः। जडः **उदन्याम्** ; उदकेच्छाम्, पिपासामित्यर्थः। प्रालेयैः पिपासोपशमनं यथा नोपलभ्यते तद्वदिति भावः ॥ ८६ ॥

तत्र दृष्टान्तान्तरं दर्शयति—**न खल्विति**। चित्रलिखितदिवाकरसहस्रमपीत्यर्थः। अन्धकारं प्रतिक्षेप्तुं न शक्नुवन्ति। पश्चिमदृष्टान्तेनायमर्थ उक्तो भवतीत्यर्थः। ततश्चेति। **चेतस्विनः** ; चेतनस्य। **विगतशान्तिम्** ; शान्तिरहितां, निरन्तरप्रवृत्ताम्। **अनादिनिद्राम्** ; अनादिमज्ञानरूपां निद्राम्।

[1] ननु न सहस्रमप्यालेख्यदिवाकराः—छ. [2] कस्य—च.

सुमतिः—अय्यउत्त, अज्ज खु देवाणं मुणीणं वि परावर-पुरिसविवेअणे डोलाअइ चिंता। तुए उण कहं एक्कंमि पुरिसोत्तमे णिट्ठा णिअमिज्जइ?

(आर्यपुत्र, अद्य खलु देवानां मुनीनामपि परावरपुरुषविवेचने डोलायते चिन्ता। त्वया पुनः कथमेकस्मिन् पुरुषोत्तमे निष्ठा नियम्यते?)

राजा—देवि, ननु सोपबृंहणनिपुणनिरूपिताभिरुपनिषद्भि-रेव। प्रसिद्धं खलु वेदविप्रकेशवानाम्[1] ऐकराश्यम्।

**मेयं विष्णुर्वेदवादाश्च मानं मातारश्च ब्राह्मणाः सत्त्वनिष्ठाः।**
**इत्थं तेषामैकराश्यं प्रतीमः कीटप्रायैर्दुर्विदग्धैः किमन्यैः॥ ८८॥**

प्रभाविलासः

यावद्दत्वात् परिभावना नाम मुखसंधेरङ्गमुक्तम्, "बीजविषयाश्चर्यावेशः परिभावना" इति लक्षणात्॥ ८७॥

उपबृंहणम्; स्मृतीतिहासपुराणादिभिर्वेदार्थविवेचनम्। **मेयमिति।** "अथाते विष्णो विदुषा चिदध्यः" "सुमज्जानये विष्णवे ददाशति" "बृहत्ते

प्रभावली

**आबध्नती;** आपादयन्ती। **त्रिगुणशक्तिमयी;** त्रिगुणा शक्तिः प्रकृतिः, तद्रूपा। निद्राहेतुत्वात् त्रियामेव त्रियामा रात्रिः; प्रकृतिशर्वरी। **असौ;** अनुभूयमाना। **नरकासुरस्यान्तकर्तुः;** नरकरिपोः श्रीकृष्णस्य। संकल्पाख्यसूर्यमहिम्ना केवलं समापनीया। केवलमित्यवधारणे। महिमव्यतिरिक्तेन नान्येन समापनीयेति गम्यते॥ ८७॥

अज्जखु इत्यादि। अज्जखु—अद्य खलु। देवाणं मुणीणं वि—देवानां मुनीनामपि। परावरपुरिसविवेअणे-परावरपुरुषविवेचने। डोलायते; डोलावच्च-

[1] नारायणानाम्—क.

## प्रभाविलासः

विष्णो सुमतिं भजामहे " " विष्णुः परमः " " यज्ञो वै विष्णुः " " विष्णुरेव प्रववृधे " " विष्णोः कर्माणि पश्यत यतो व्रतानि पस्पशे " " विष्णोर्नुकम् " " विष्णुमुखा वै देवाः " " इदं विष्णुर्विचक्रमे " " तद्विष्णोः परमं पदम् " " विष्णोः पदे परमे " " प्र ते विष्णो " " विष्णुरुपावह्रियमाणः " " विष्णुरुपांशु यष्टव्यः " इत्यादिषु प्रचुरप्रयोगानुसारेण **विष्णुर्मेयमिति** पदोपादानम् । " सर्वे वेदा यत्रैकं भवन्ति " " सर्वे वेदा यत्पदमामनन्ति " इति श्रुत्या **वेदवादाश्चे**त्युक्तम् । **ब्राह्मणाः**; ब्रह्मनिष्ठाः । " विष्णुं क्रान्तं वासुदेवं विजानन् विप्रो विप्रत्वं गच्छते " इतिवत । **अन्यैः**; ब्रह्मादिभिः । " सप्तवितस्तिकायः " इत्याद्यनुसारेण कीटप्रायैरित्युक्तिः ॥ ८८ ॥

## प्रभावली

श्चला वर्तते । **चिंता-**चिन्ता । **तुए** उण-त्वया पुनः । **कहं-**कथम् । **एक्कमि-**एकस्मिन् । **पुरिसोत्तमे**-पुरुषोत्तमे । **णिट्ठा** णिअमिज्जइ निष्ठा नियम्यते । **निष्ठा**; मुक्तिहेतुत्वम् । पूर्वं भगवतो मुक्तिहेतुत्वं कथमिति शङ्का जगत्कारणत्वादिति परिहृता । इदानीं भगवत एव जगत्कारणत्वनिश्चयः कथमित्याशङ्कयाह—**सोपबृंहणे**त्यादिना । **सोपबृंहणम्**; सेतिहासपुराणं यथा तथा । **निपुणम्**; सावधानम । **निरूपिताभिरुपनिषद्भिरेव**; " एको ह वै नारायण आसीत् " इत्यादिभिः । पुरुषोत्तम एकस्मिन्नेव निष्ठा नियम्यत इत्यनुषज्यते । " वेदा विप्राः केशवश्चैकराशिः " इत्यस्यार्थमाह—**प्रसिद्धमिति** । नन्वैकराश्यं नामैकजातीयवस्तुपुञ्जत्वम् । तत्कथमत्रोपपद्यत इत्याशङ्क्य तस्य वचनस्य तात्पर्यमाह—**मेयं विष्णुरिति** । विष्णुरेव मेयं प्रतिपाद्यम् । उपनिषद्वाक्यान्येव तत्र प्रधानं प्रमाणम् । ननु विष्णोर्मेयत्वं वेदान्तानां तद्विषयमानत्वं च दुर्वादिनां न संमतमित्यत्राह—**मातारश्चेति** । **सत्त्वनिष्ठाः**; सात्त्विका ब्राह्मणाः प्रमातारो यदि लभ्येरन्, तदा विष्णोरिव प्रतिपाद्यत्वं सिध्येत् । ततश्च विष्णोः सर्ववेदवेद्यत्वं येषां न संमतं तेषां ब्राह्मण्यमेव नास्तीत्यर्थः । " नारायण परं ब्रह्म "

अपिच,

शास्त्राण्यालोड्य सर्वाण्यशिथिलगतिभि[1]र्युक्तिवर्गैर्विचार्य

[2]स्वान्तर्निर्धार्य तत्त्वं स्वभुजमपि महत्युद्धरन् सूरिसंघे ।

प्रभाविलासः

**शास्त्राणीति** । अत्र पूर्वार्धेन

"आलोड्य सर्वशास्त्राणि विचार्य च पुनः पुनः ।

इदमेकं सुनिष्पन्नं ध्येयो नारायणः सदा ॥"

इति श्लोकार्थोऽभिप्रेतः । द्वितीयार्धेन,

**प्रभावली**

"नारायणपरा वेदाः" "वेदैश्च सर्वैरहमेव वेद्यः" इत्यादीन्यत्र पाठ्यानि । सत्त्वनिष्ठा इत्यनेन सुत्त्वगुणस्यैव यथार्थज्ञानजनकत्वं सूचितम् । तदाहुः— "सत्त्वात्संजायते ज्ञानम्" इति । यथार्थज्ञानशून्या अन्ये पुनरसात्त्विका इति भावः । **इत्थं तेषाम्**; वेदविप्रकेशवानां मेयमातृमानभावेनैकराश्यमेककोटित्वं प्रतीमः जानीमः । एवं वेदविप्रकेशवानामेवैकराश्यात् भगवद्व्यतिरिक्तानां ब्रह्मादीनां वेदप्रतिपाद्यत्वाभावान्मुमुक्ष्वनुपास्यत्वमाह—**कीटप्रायैरित्यादिना** । कीटः कृमि-विशेषः; तत्सदृशैः । स्वरक्षणाशक्तत्वं वेदापहारगुरुपातकदैत्यपीडादिषु द्रष्ट-व्यम । **दुर्विदग्धैः**; विष्णुदत्तस्वातन्त्र्यवत्त्वेऽपि स्वतः स्वातन्त्र्याभिमानात् दुर्विदग्धत्वम् । **अन्यैः**; भगवद्व्यतिरिक्तैः । **किं प्रयोजनम्**; न किमपीत्यर्थः । सर्वप्रयोजनानां विष्णावेव सिद्धेः, "सकलफलप्रदो हि विष्णुः" इत्यादेः । यद्वा कीटप्रायैरित्यस्यायमर्थः—अज्ञत्वाविशेषात् कीटप्रायत्वं पण्डितंमन्यत्वाद् दुर्विदग्धत्वम् ॥ ८८ ॥

अयमर्थः शारीरकसूत्रप्रणेतृश्रीवेदव्यासभगवताप्युद्घोषित इत्याह—**शास्त्रा-णीति** । **शास्त्राण्यालोड्य**; एककण्ठीकृत्य । अनेन "आलोड्य सर्वशास्त्राणि" इत्यस्यार्थ उक्तः । **अशिथिलगतिभिर्युक्तिवर्गैः**; उपपत्तिगणैः । **विचार्य**; मीमांस-यित्वा । **तत्त्वम्**; तत्र पर्यवसितमर्थम् । **स्वमनसि निर्धार्य**; एवमेव नान्यथेति सम्यङ्

[1] विहितैः—च. [2] स्वान्ते—ग.

**सत्यं सत्यं च सत्यं पुनरिति कथयन् सादरं वेदवादी**
**पाराशर्यः प्रमाणं यदि क इह परः केशवादाविरस्ति ॥ ८९ ॥**

"महाजनो येन गतः स पन्थाः" इति च महर्षिभाषितम् ।

दृश्यते चैतत्—

**तर्को न प्रतितिष्ठति प्रभवति त्रय्यापि वैयाकुली**
**क्षोभं यान्ति मिथः क्षता ऋषिगिरः क्षुद्रोक्तयः किं पुनः ।**

**प्रभाविलासः**

"सत्यं सत्यं पुनः सत्यमुद्धृत्य भुजमुच्यते ।
वेदाच्छास्त्रं परं नास्ति न दैवं केशवात्परम् ॥"

इति श्लोकार्थः स्मारितः । तद्वचनप्रामाण्ये को हेतुः? तत्राह—**पाराशर्य इति** । तस्याप्तत्वं "स होवाच व्यासः पाराशर्यः" इति श्रुतिरेव घोषयतीति भावः ॥ ८९ ॥

"धर्मज्ञसमयः प्रमाणं वेदाश्च" इत्यापस्तम्बोक्तिमभिसंधायाह—**महाजन इति** । **तर्क इति** । वेदास्त्रयः **त्रयी** । **वैयाकुली**; व्याकुलत्वम् ।

**प्रभावली**

निश्चित्य । अनेन "विचार्य च पुनः पुनः" इत्यस्यार्थ उक्तः । महति **सूरिसंघे**; महर्षिणां संनिधावित्यर्थः । **स्वभुजमुद्धृत्य**; उद्यम्य; ऊर्ध्वबाहुर्भूत्वेत्यर्थः । स्वसिद्धान्तकथन एव सर्वे भुजमुद्धरन्ति । भुजोद्यमो नाम शपथस्थानीयः । तमनिश्चिते न कुर्वन्ति । तमपि कृत्वेत्यपिशब्दार्थः । अनेन "उद्धृत्य भुजमुच्यते" इत्यस्यार्थ उक्तः । 'सत्यं सत्यं पुनरपि सत्यम्' इति सादरं यथा भवति तथा त्रिवारं वदन् **वेदवादी** ब्रह्मवादी वेदपारमार्थ्यवादी **पाराशर्यः**, "स होवाच व्यासः पाराशर्यः" इति प्रसिद्धो भगवान् वेदव्यासः यदि **प्रमाणम्**; अर्थतत्त्वव्यवस्थापक इति यदि मतं तदा **केशवात्** भगवतः श्रियः पत्युः **क इव पर आविरस्तु**; कोऽन्यः परतया प्रसिध्येत्; न कोऽपीत्यर्थः ॥ ८९ ॥

एवं स्वमतस्य विशिष्टपरिग्रहादादर्तव्यत्वमुक्तम्; तदेव महर्षिभाषितेनापि

इत्थं तत्त्वविनिश्चयो निधिरिव क्षिप्तो गुहाभ्यन्तरे
पन्थानं तु महाजनस्य निपुणः प्रत्यञ्चमञ्चयश्चति ॥ ९० ॥

प्रभाविलासः

**क्षताः**; विरुद्धाः । **क्षुद्रोक्तयः**; आधुनिकवचनानि । **प्रत्यञ्चम्**; प्राचीनम् । **अञ्चयश्चति**; पूजयति । अत्र

"तर्कोऽप्रतिष्ठः श्रुतयो विभिन्ना न चानृषेस्तत्त्वविनिर्णयोऽस्ति ।
धर्मस्य तत्त्वं निहितं गुहायां महाजनो येन गतः स पन्थाः ॥"

इति श्लोकोऽनुसंधेयः ॥ ९० ॥

प्रभावली

द्रढयति—**महाजन इत्यादिना** । महान्तो जनाः यं मार्गं परिगृह्णन्ति स एव घण्टापथ इति महर्षिवचनमस्तीति शेषः । अत्र हेतुत्वेन

"तर्कोऽप्रतिष्ठः श्रुतयो विभिन्ना न चानृषेर्दर्शनमस्ति किंचित् ।
धर्मस्य तत्त्वं निहितं गुहायां महाजनो येन गतः स पन्थाः ॥"

इति श्लोकस्य पूर्वपादत्रयार्थं दर्शयति—**दृश्यत इत्यादिना** । तन्महर्षिभाषितमेव **दृश्यते** । **तर्क इति**; तर्कशास्त्रस्य कुत्रचित्पर्यवसानं नास्ति, केनचिन्निश्चितस्यार्थस्यान्येन दूषितत्वात् । अनेन "तर्कोऽप्रतिष्ठः" इत्ययमंशो व्याख्यातः । तर्हि वेदेनार्थनिश्चयोऽस्त्वित्यत्राह—**प्रभवतीति** । **त्रय्या**; वेदत्रयेणापि; इदमुपनिषदामुपलक्षणम् । पुरुषस्येति शेषः । **वैयाकुली**; व्याकुलस्य भावः । व्याकुलत्वमेव सिध्यति । विप्रकीर्णत्वे तु नार्थप्रतिपादनमिति भावः । **ऋषिगिरः**; कणादकपिलाक्षपादाद्युक्तयः । **मिथः क्षताः**; अन्योन्यं विरुद्धत्वात् व्याहताः । **क्षोभं** कालुष्यं **यान्ति**; नार्थनिश्चये प्रभवन्ति । **क्षुद्रोक्तयः**; चार्वाकबौद्धाद्युक्तयः **किं पुनः**; मिथः क्षताः क्षोभं यान्तीति किमु वक्तव्यमित्यर्थः । **इत्थम्**; उक्तप्रकारेण । **तत्त्वार्थविनिश्चयस्तु गुहाभ्यन्तरे** विनिक्षिप्तः । गुहायां निक्षिप्तत्वात् **ज्ञातुमशक्यः** । किमिव? **निधिरिव** । गुहाभ्यन्तरे निहितो निधिः केनापि

महान्तश्च व्यासवाल्मीकिमनुबृहस्पतिशुकशौनकप्रभृतयः [1]प्रवदन्त्यस्माकमध्वानम्। तिष्ठन्त्वेते बहवः[2]। अयं पुनरेकोऽपि,

**अपजन्मजरादिकां समृद्धिं कृपया संमुखयन्नशेषपुंसाम्।**
**परदैवतपारमार्थ्यवेदी परिगृह्णातु[3] पराशरः स्वयं नः॥ ९१॥**

### प्रभाविलासः

"यद्वै किंच मनुरवदत्तद्भेषजम्" इति प्रसिद्ध्या मनुग्रहणम्। मनुर्हि "आपो नारा इति प्रोक्ताः" इत्युपक्रम्य "प्रशासितारं सर्वेषाम्" इत्यन्तेन तत्त्वनिर्णये प्रवृत्तः। **अपजन्मेति। समृद्धिम्;** मुक्तैश्वर्यम्। **संमुखयन्;** अभिमुखयन्। **अशेषपुंसामिति;** "प्रदिशतु भगवानशेषपुंसां हरिरपजन्मजरादिकां समृद्धिम्।" इति पराशरोक्तिः स्मारिता। तेन निरुपाधिककारुणिकत्वं व्यज्यते। **परदैवतपारमार्थ्यवेदीति;**

### प्रभावली

न ज्ञायते। तर्हि किं कर्तव्यमित्यत आह—**पन्थानमिति। निपुणः;** चतुरः। **महाजनस्य पन्थानं तु;** महतां नाथयतिवरादीनां मतमेव। कीदृशम्? **प्रत्यञ्चम्;** आत्मोन्मुखम्। **अध्यञ्चति;** अधिगच्छति। तत्त्वविनिश्चायकत्वेन परिगृह्णातीत्यर्थः॥ ९०॥

महान्तश्च क इत्यत आह—**महान्त इति।** प्रभृतिशब्देन नारदभीष्मदाल्भ्यादयो नाथादयश्च गृह्यन्ते। **अस्माकम्;** अस्मदीयम्। **अध्वानम्;** वेदमार्गम्। **तिष्ठन्त्वित्यादि।** एते; व्यासवाल्मीक्यादयः। अयं पुनरेकोऽप्यलम्; परतत्त्वनिर्णय इति शेषः। **अपजन्मेति;** अपगतानि जन्मजरामरणादीनि यस्यास्ताम्। **समृद्धिम्;** मोक्षसंपदम्। **स्वयमेव;** केवलकृपया। **अशेष-**

[1] प्रवर्तयन्त्य—क, ख, ङ. [2] महर्षयः—क. [3] परिगृह्णाति—च.

**सुमतिः**—[1]अय्यउत्त, अणुत्तरं एदं उत्तरं। अज्ज उण अणंतसाहणणिअमंतणिरूवणविलंबं असहंतस्स तूरंतहिअअस्स चेअणस्य सव्वाअमसारं संकलऊण दंसेदुं तुमं पत्थेमि।

## प्रभाविलासः

"पुराणसंहितावक्ता भवान् वत्स भविष्यति।
देवतापारमार्थ्यं च यथावद्वेत्स्यते भवान्॥"

इति पुलस्त्यवरदानं स्मारितम्। परान् वेददेवतानिन्दकान् आ समन्तात् शृणातीति पराशरः। शॄ हिंसायामिति धातुः; अराङ्कुशपरकालादिशब्दवत्। एवमुद्भेदो नाम मुखसंधेरङ्गं दर्शितम्। "गूढबीजप्रकाशनमुद्भेदः" इति लक्षणात्॥ ९१॥

**अय्यउत्तेत्यादि**। एवं संभेदो नाम मुखसंधेरङ्गमुक्तम्, "बीज-

## प्रभावली

**पुंसां संमुखयन्**; भगवतः प्रार्थयन् "अशेषपुंसां हरिरपजन्मजरादिकां समृद्धिम्" इति पुराणान्ते प्रार्थितवान्। **परदैवतेति**; **परस्य** सर्वस्मात् परस्य **दैवतस्य** विष्णोः **पारमार्थ्यं** जगत्कारणत्वमुमुक्षूपास्यत्वमोक्षप्रदत्वादिरूपं पारम्यस्वभावं वेत्तुं शीलमस्यास्तीति सः। "देवतापारमार्थ्यं च यथावद्वेत्स्यते भवान्" इति पुलस्त्यवसिष्ठवरप्रदानेन लब्धदेवतापारमार्थ्यज्ञानवानित्यर्थः। नः; तत्त्वनिर्णये संदिहानानस्मान्। **परिगृह्णातु**; स्वीकरोतु। "परः पराणां परः" इत्यादिना विष्णोः पारम्यं यतः प्रतिपादितवान्, अतः तत्स्वीकृता वयमित्यर्थः। परान् बाह्यकुदृष्टीन् प्रमाणशरैः आशृणाति हिनस्तीति पराशर इति निर्वचनात्। तत्स्वीकृतानामस्माकं तन्मतमेव प्रामाणिकमित्यर्थः॥ ९१॥

**अणुत्तरमित्यादि**। अणुत्तरं-अनुत्तरम्; उपरि वक्तव्यान्तररहितम्। एदं

[1] सानन्दं added before—च. छ.

(आर्यपुत्र, अनुत्तरमेतदुत्तरम्। अद्य पुनरनन्तसाधननिग-मान्तनिरूपणविलम्बमसहमानस्य त्वरमाणहृदयस्य चेतनस्य सर्वा-गमसारं संकलय्य दर्शयितुं त्वां प्रार्थयामि ।)

**राजा**—साधु विचिन्तितं भवत्या। तदिदं प्रदर्शयामि—

**स्वसंकल्पोपघ्नत्रिविधचिदचिद्वस्तुविततिः**
**पुमर्थानामेकः स्वयमिह चतुर्णां प्रसवभूः।**

प्रभाविलासः

गुणप्रोत्साहः संभेदः" इति लक्षणात्। **स्वसंकल्पेति**। स्वसंकल्पः उपघ्नः अन्तिकाश्रयो येषां, ते च ते त्रिविधचिदचितश्च बद्धमुक्तनित्याः प्रकृति-कालनित्यविभूतयश्च। तेषां वस्तूनां विततिर्यस्य सः। भेदस्य पारमार्थ्यं दर्शयितुं वस्तुग्रहणम्। स्वसंकल्पोपघ्नेति विततिविशेषणं वा। अत्र "एतस्य वा अक्षरस्य प्रशासने गार्गि द्यावापृथिव्यौ विधृते तिष्ठतः" इति श्रुतिरभिप्रेता। **पुमर्थानां प्रसवभूरिति**। "इष्टापूर्तं बहुधा जातं

प्रभावली

**उत्तरं**—एतदुत्तरम्। इदं प्रत्युत्तरवचनम्। अथ "अनन्तशास्त्रं बहु वेदि-तव्यम्" इत्युक्तप्रकारेण शास्त्रपाठे अलसानां सर्वागमसारं संगृह्य दर्शयि-तव्यमिति प्रार्थयते—**अज्ज उण इत्यादिना। अज्जउण**-अद्य पुनः। **अणंतसा-हणणिअमंतनिरूवणविलंबं**-अनन्तसाधननिगमान्तनिरूपणविलम्बम्। अनन्त-साधनानां बहुपरिकराणां निगमान्तानां निरूपणं विचारः, तद्रूपं विलम्बम्। **असहंतस्स**-असहमानस्य। **तूरंतहिअअस्स**-त्वरमाणहृदयस्य। **चेअणस्स**-चेतनस्य; चेतनार्थमित्यर्थः। **सव्वाअमसारं**-सर्वागमसारम्। **संकलऊण**-संकलय्य। **दंसेदुं**-दर्शयितुम्। **तुमं**—त्वाम्। **पत्थेमि**-प्रार्थयामि। **तदिदम्**; सर्वागमसारम्। **स्वसंकल्पेति**। अत्र "सर्वे वेदा यत्पदमामनन्ति" इत्याद्य-

शुभस्रोतोभाजां श्रुतिपरिषदां श्रीपतिरसा-
वनन्तः सिन्धूनामुदधिरिव विश्रान्तिविषयः ॥ ९२ ॥

## प्रभाविलासः

जायमानं विश्वं बिभर्ति भुवनस्य नाभिः" इति श्रुत्यर्थोऽभिप्रेतः । **शुभाश्च** ताः **स्रोतोभाजश्च** तासाम् । हितानुशासनत्वाच्छुभत्वम् । विस्तृतत्वात् स्रोतोभाक्त्वम् । **अनन्त** इति रूढ्या देवताविशेषनिश्चयः । "सत्यं ज्ञानमनन्तं ब्रह्म" इत्यत्रानन्तशब्दः पुंलिङ्गद्वितीयैकवचनान्त इति श्रुतप्रकाशिकोक्तत्वात् । योगवृत्त्या त्रिविधपरिच्छेदराहित्यमुक्तम् । देवताविशेषनिर्णये लिङ्गमाह—**श्रीपतिरिति ;** "ह्रीश्च ते लक्ष्मीश्च पत्न्यौ" इति श्रुतेः । **विश्रान्तिविषयः ;** तात्पर्यभूमिः । "नेव हि कामस्यान्तोऽस्ति-न समुद्रस्य" इति श्रुतिप्रसिध्या अब्धेरनन्तत्वोक्तिः । अत्र संक्षेपो नाम गुणः, "संक्षेपस्तु समासोक्तिरनल्पस्यापि वस्तुनः" इति लक्षणात् ॥ ९२ ॥

## प्रभावली

नुरोधेन श्रियः पतिरेव वेदान्तवेद्य इत्याह । स्वसंकल्प एव उपघ्न आश्रयो यस्याः सा त्रिविधानां चिदचिद्वस्तूनां विततिः संघातो यस्य सः । अनेन "स तपस्तप्त्वा । इदं सर्वमसृजत । यदिदं किं च । तत्सृष्ट्वा । तदेवानुप्राविशत् । तदनुप्रविश्य । सच्च त्यच्चाभवत्" इत्यादिश्रुत्यर्थ उक्तः । पुनः कीदृश इत्यत आह—**पुमर्थानामित्यादि** । इह ; जगति । **चतुर्णां पुमर्थानाम् ;** धर्मार्थकाममोक्षाणाम । **स्वयम् ;** स्वरूपेण, न देवतान्तरशरीरत्वेन । **एक एव प्रसवभूः ;** उत्पत्तिस्थानम् । अनेन "एको बहूनां यो विदधाति कामान्" इत्यादेरर्थ उक्तः । **अनन्तः ;** त्रिविधपरिच्छेदरहितः । एवंभूतः श्रीपतिरेव **शुभस्रोतोभाजां सिन्धूनामुदधिरिव** शुभस्रोतोभाजामुपनिषदाम्, शुभस्रोतांसि ब्रह्मोपासनानि प्रतिपाद्यानि यासां तासामुपनिषदाम्, **विश्रान्तिविषयः ;** पर्यवसानभूमिः । अनेन हिरण्यगर्भशिवेन्द्राग्न्यादिशब्दानामुपनिषद्गतानाम् "तदेवाग्निस्तद्वायुः" इति प्रक्रियया श्रीपतिरेव पर्यवसानस्थलमिति सूचितम् ॥ ९२ ॥

अपिच ;

**परः पद्माकान्तः प्रणिपतनमस्मिन् हिततमं**
**शुभस्तत्संकल्पश्चुलकयति संसारजलधिम् ।**
**झटित्येवं प्रज्ञामुपजनयता केनचिदसा-**
**ववविद्यावेतालीमतिपतति मन्त्रेण पुरुषः ॥ ९३ ॥**

### प्रभाविलासः

**पर इति । परः;** उत्कृष्टः । "ब्रह्मविदाप्नोति परम्" "तत्त्वं नारायणः परः" इति श्रुतेः । **अस्मिन्;** परे ब्रह्मणि । **तत्संकल्पः;** ब्रह्मणः संकल्पः । **चुलकयति;** प्रसृतिमात्रं करोति; नाशयतीति यावत् । **मन्त्रेण;** मन्त्ररत्नाख्येन । सकृदनुष्ठितस्यैव पुरुषार्थनिमित्ततया झटितीत्युक्तिः । अत एव विलम्बकारिमन्त्रान्तरवैलक्षण्यं केनचिदित्युक्तम् । **वेताली;** पिशाची । **अतिपतति;** अतिक्रामति ॥ ९३ ॥

### प्रभावली

एवं प्राप्यदेवताविशेषनिर्धारणं कृतम् । अथ तत्त्वहितपुरुषार्थान् संगृह्य दर्शयति—**अपिचेत्यादि** । पद्माकान्त एव परतत्त्वम् । **अतः अस्मिन्;** पद्माकान्ते । **प्रणिपतनम्;** भक्तिः प्रपदनं च । **हिततमम्;** अतिशयेन हितम् । मोक्षोपायभूतभगवत्प्रसादहेतुरित्यर्थः । प्रसन्नश्च भगवान् संसारसागरशोषणाय संकल्पयतीत्याह—**शुभ इति** । शुभः संकल्प इत्यनेन संसारहेतुः 'क्षिपामि' इति संकल्पो व्यावर्त्यते । स च "सर्वपापेभ्यो मोक्षयिष्यामि" इति संकल्पः । **चुलकयति;** चलकीकृत्य पिबति । भगवतः संसारविमोचने द्वारमाह— **झटितीति** । शीघ्रमेव मोक्षोपयुक्तं ज्ञानं जनयता **केनचिन्मन्त्रेण** सदाचार्योपदिष्टेन मूलमन्त्रादिना । **असौ पुरुषः;** मुमुक्षुः । **अविद्यावेतालीम्;** देहात्माभिमानरूपपिशाचिकाम् । **अतिपतति;** अतिक्रामति ॥ ९३ ॥

प्रिये, संमितमतीनामपि चित्तसमाधानहेतुः संग्रहो दर्शितः ।
किंतु ;

**धृतनिगमकवचगूढाः कष्टं संप्रति कुदृष्टयः केचित् ।**
**छलयन्ति सौगतादीन् स्यालोपालम्भतुल्यया वाचा ॥ ९४ ॥**

### प्रभाविलासः

**संमितमतीनाम् ;** अल्पबुद्धीनाम् । **धृतेति** । निगमाख्येन कवचेन गूढाः । **स्यालः ;** पत्नीसोदरः । **उपालम्भः ;** दूषणगर्भपरिहासः । **छलयन्ति ;** व्याजेनानुकुर्वन्ति । सौगतानां शंकरादीनां च मतैक्येऽपि ते परस्परं दूष्यदूषणभावं विडम्बयन्तीति भावः ॥ ९४ ॥

### प्रभावली

**संमितमतीनामपि ;** अबहुश्रुतानामपीत्यर्थः । ननु संग्रहेणैवालमित्याशङ्क्य बाह्यकुदृष्टिवचोभिर्मनसः क्षोभानुत्पादाय वेदान्तश्रवणं कर्तव्यमित्याह— **किंत्वित्यादिना** । यद्यपि संग्रहो दर्शितः ; अथापीत्यर्थः । अथ कुदृष्टीनां बाह्यमतानुसरणं दर्शयति—**धृतेति** । **धृतं** यन्निगमाख्यं कवचं तेन **निगूढाः** प्रच्छन्नाः । अवैदिकत्वप्रच्छादनाय वेदं परिगृह्णन्ति । अथापि तदुक्तं सर्वमपलपन्तीत्यर्थः । **संप्रति ;** कलियुगे । **केचित् कुदृष्टयः ;** शंकरादयः । **स्यालोपालम्भतुल्यया वाचा ;** स्यालः पत्नीसोदरः । तस्योपालम्भः दूषणं यथा सहृदयं न भवति, एवं कुदृष्टीनां बाह्यदूषणमपि ; अन्ततस्तन्मतस्वीकारात् । तद्दूषणरूपया वाचा स्वावैदिकत्वं परिहृत्य तान् सौगतादीन् बाह्यान् **छलयन्ति ;** छद्मना अन्यैरज्ञातं यथा तथा अनुसरन्ति ; तदुक्तजगन्मिथ्यात्वादिकमनुकुर्वन्ति । कष्टं तदिति शेषः । यथोक्तं यादवप्रकाशेन—

> “ वेदोऽनृतो बुद्धकृतागमोऽनृतः प्रामाण्यमेतस्य च तस्य चानृतम् ।
> भोक्तानृतो बुद्धिफले तथानृते यूयं च बौद्धाश्च समानसंविदः ॥ ”

इति । समानसंविदः समानज्ञाना इत्यर्थः ॥ ९४ ॥

अथ च विस्तरेण प्रतिविधिरस्य वेदान्तेषु विपुलमति-भिरनुसंधीयते । दृष्टमेव खलु विदुषां समासव्यासधारणम् ।

**सुमतिः**—सुट्ठु भणिअं अय्यउत्तेण । एवं वि तेहिं तेहिं महेसिमएहिं तक्केहिं वि तारिसेहिं पआरिज्जंता णिअमंता चोराकिट्ठगोधणसरिसा होंतित्ति संपण्णसद्धसा मह चिंता ।

(सुष्ठु भणितमार्यपुत्रेण । एवमपि तैस्तैर्महर्षिमतैस्तर्कैरपि तादृशैः प्रतार्यमाणा निगमान्ताश्चोराकृष्टगोधनसदृशा भवन्तीति संपन्नसाध्वसा मम चिन्ता ।)

### प्रभाविलासः

**प्रतिविधिः**; प्रतीकारः । **समासः**; संग्रहः । **व्यासः**; विस्तरः । अनेन "इष्टं हि विदुषां लोके समासव्यासधारणम्" इति स्मारितम् । **चोराकृष्टेति** । चोराहृतधनं स्वामिनं न प्राप्नोतीति तत्सादृश्यमुक्तम् ।

### प्रभावली

**अथ च**; अत एवेत्यर्थः । **विपुलमतिभिः**; शास्त्रक्षोदसहबुद्धिभिः । **अस्य**; कुदृष्टिमतस्य । **प्रतिविधिः**; प्रत्युत्तराणि, दूषणानीत्यर्थः । **विस्तरेणानुसंधीयते**; वेदान्तश्रवणं कुर्वन्तीत्यर्थः । अत्र प्रमाणं दर्शयति—**इष्टमेवेति** । अनेन "इष्टं हि विदुषां लोके समासव्यासधारणम्" इति महाभारतवचनं स्मारितं भवति । मन्दमतीनां संग्रहो विपुलमतीनामसंग्रहो वेदान्तपरिचयश्च कर्तव्य इत्युक्तं भवति । अतस्तन्मतानुगुण्येनानेकधार्थप्रतिपादनादित्थमिति श्रुत्यर्थो निर्णेतुमशक्य इति चोदयति—**सुट्ठु भणिअं इत्यादि** । **सुट्ठु भणिअं अय्यउत्तेण**—सुष्ठु भणितमार्यपुत्रेण । **एवं वि**—एवमपि । **तेहिं तेहिं**—तैस्तैः । **महेसिमएहिं**—महर्षिमतैः । **तक्केहिं वि तारिसेहिं**—तर्कैरपि तादृशैः । **पआरिज्जंता**—प्रतार्यमाणाः । **णिअमंता**—निगमान्ताः ।

**राजा**—अलमतिशङ्कया ;

**अविप्लुतपरिग्रहस्मृतिशतैककण्ठी श्रुतिः**
**स्वभक्तिविकलस्मृतीः**[1] **स्वपनतोऽपि न प्रेक्षते ।**
**स्वतः प्रमितिसाधनी सुदृढतर्कगुप्ता च सा**
**रुणद्धि पुनरप्रतिष्ठितकुतर्ककोलाहलम् ॥ ९५ ॥**

### प्रभाविलासः

**अविप्लुतेति** । अविप्लुतपरिग्रहाणाम् अविगीतमहाजनपरिग्रहाणां स्मृतीनां मन्वादिस्मृतीनां शतेन । तेन कपिलादिस्मृतीनां महाजनपरिग्रहाभावेन विगीतत्वमुक्तम्, "इतरेषां चानुपलब्धेः" इति सूत्रकारोक्तेः । एककण्ठी; ऐकार्थ्यं प्राप्ता श्रुतिः । **स्वभक्तिविकलस्मृतीः**; स्वविरुद्धार्थाभिधायिकापिलादिस्मृतीः । **स्वपनतः**; स्वप्नतोऽपि । **न प्रेक्षते**; ऐककण्ठ्यं न प्राप्नोति । ननु कापिलादिस्मृतिविरुद्धा श्रुतिरेवानादरणीयेत्यत आह—**स्वत इति** ।

### प्रभावली

**चोराकिट्ठगोधणसरिसा**—चोराकृष्टगोधनसदृशाः । **होंतित्ति**—भवन्तीति । **संपण्णसद्धसा**—संपन्नसाध्वसा । **मह चिंता**—मम चिन्ता । यथोक्तं मनुना—"बिभेत्यल्पश्रुताद्वेदो मामयं प्रतरिष्यति" इति । यथा तस्करापहृतं गोधनं स्वामिनं न प्राप्नोति, एवं तैस्तैर्वादिभिः स्वस्वमतानुगुणमपहृतार्था वेदान्ताः स्वभावसिद्धमर्थं न प्राप्नुवन्तीत्यर्थः । परिहरति-**अविप्लुतेति** । अविप्लुतः अनुपद्रुतः परिग्रहः विशिष्टपरिग्रहः यासां, ताश्च ताः स्मृतयश्च, तासां शतेनैककण्ठी एकार्थप्रतिपादिका; मन्वादिस्मृतिभिरुपबृंहितेत्यर्थः । **स्वभक्तिविकलाः**; स्वस्यां भक्तिहीनाः, स्वविरुद्धार्थाभिधायिनीरित्यर्थः । **स्मृतीः**; कापिलादिस्मृतीः । **स्वपनतः**; स्वप्नेऽपि नावलोकयति; तदनुगुणा न भवतीत्यर्थः । अथापि प्रतिपन्नार्थस्य तद्बाधितत्वेन श्रुतेः प्रामाण्याभावशङ्का स्यादित्यत आह—**स्वत इति** । बाधाबाधानपेक्षं श्रुतिः स्वत एव प्रमां साधयती-

[1] विकलां स्मृतिं—क.

(नेपथ्ये)

**मूलच्छेदभयोज्झितेन महता मोहेन दुर्मेधसा**
**कंसेन प्रभुरुग्रसेन इव नः कारागृहे स्थापितः ।**

**प्रभाविलासः**

स्मृतीनां श्रुतिमूलकतया प्रामाण्यम्; श्रुतेस्तु नान्याधीनमिति भावः। वैपरीत्यं किं न स्यादित्यत आह—**सुदृढेति**। श्रुतेः स्वतः प्रामाण्यमन्येषां तन्मूलकत्वेन प्रामाण्यं च प्रमाणलक्षण एव सोपपत्तिकमभियुक्तैर्निरूपितमिति भावः। अनेन कापिलादिस्मृतेरनुकूलतर्काभावः प्रतिकूलतर्कपराहतिश्चोक्ता। ननु तत्तन्मतस्थैस्तत्र तत्र तर्का निरूपिता इत्यत आह—**अप्रतिष्ठितेति**। ते तर्काभासा इत्यर्थः॥ ९५॥

**मूलच्छेदेति**। मूलच्छेदो भविष्यतीति भयेनोज्झितेन; तथाविधसामर्थ्याभावात् पुनरुद्बोधयिष्यतीत्याशया वा 'मरणे सति किं भयम्' इति न्यायाद्वेति भावः। उभयत्र तुल्यमेतत्। **प्रभुः**; पुरुषो राजा च। **कारागृहे**; संसार इत्यर्थः।

**प्रभावली**

त्यर्थः। ननु श्रुतिमूलतर्कसनाथकापिलादिस्मृतिविरोधात् श्रुतिरप्रमाणं भवत्वित्यत्राह—**स्वतः प्रमितिसाधनीति**। स्वत एव प्रमितिसाधनत्वात् श्रुतेः स्मृत्यविरोधानपेक्षत्वमित्यर्थः। नन्वेवं सति तर्केऽप्यपेक्षाभावात् मीमांसाद्वयस्यानारम्भणीयताप्रसङ्गः। मैवम्। मीमांसाया वेदेतिकर्तव्यतात्वात् तदनुग्रहापेक्षत्वेऽपि न स्वाङ्गं स्वव्यवधायकमिति न्यायेन तदपेक्षत्वस्य न स्वतः प्रामाण्यविरोधः। तदेतदाह—**सुदृढतर्कगुप्ता च सेति**। सुदृढस्तर्कः मीमांसा; तदपेक्षत्वस्य प्रतिमतभङ्गे विनीयोग इति भावः। एवं मीमांसोपबृंहिता सती **अप्रतिष्ठितम्** अनवस्थितं **कुतर्ककोलाहलं प्रतिरुणद्धि**; निवर्तयति॥ ९६॥

अथ विवेकस्याशरीरवचःश्रवणं वर्णयति—**मूलच्छेदेत्यादि**। मूलच्छेदो भविष्यतीति भयरहितेन, स्वविनाशमविगणयतेत्यर्थः। **दुर्मेधसा**; दुर्बुद्धिना

विख्यातेन विवेकभूमिपतिना विश्वोपकारार्थिना
कृष्णेनेव बलोत्तरेण घृणिना[1] मुक्तश्रियं[2] प्राप्स्यति ॥९६॥

**राजा**—(कर्णं दत्वा सानन्दम्) प्रिये, श्रूयते सेयमकृत्रिमसरस्वतीवावितथवादिन्यशरीरिणी भारती ।

**सुमतिः**—(सानन्दम्) अय्यउत्त, तिअसभासिअं खु एदं । ण खु कहं वि अलिअं होज्ज ।

### प्रभाविलासः

"तावद्रागादयः स्तेनास्तावत्कारागृहं गृहम् ।
तावन्मोहोऽङ्घ्रिनिगलो यावत्कृष्ण न ते जनाः ॥"

इति स्मरणात् । अन्यत्र

"शूरसेनं च पितरं यदुभोजान्धकाधिपम् ।
स्वयं निगृह्य बुभुजे शूरसेनान्महाबलः ॥"

इति स्मारितम् । **बलोत्तरेण;** बलिष्ठेन; अन्यत्र बलरामानुजेनेत्यर्थः । **मुक्तश्रियम्;** मुक्तैश्वर्यम् । कारागृहमोचनसंपदं च ॥ ९६ ॥

### प्रभावली

कंसेन उग्रसेन इव प्रभुः जीवात्मा कारागृहे संसारे स्थापितः । अन्यत्रार्थः स्पष्टः । **विख्यातेन;** वेदान्तप्रसिद्धेन । विश्वोपकारमर्थितुं शीलवता कृष्णेन वसुदेवसुतेनेव । **बलोत्तरेण;** बलवता; अन्यत्र बलः बलरामः उत्तरो ज्येष्ठो यस्य तेन । **घृणिना;** कृपालुना । मुक्तानां श्रियं मोक्षसंपदम् । अन्यत्र कारागृहान्मुक्तः श्रियं राज्यलक्ष्मीम् । अत्र पक्षे मुक्तः श्रियमिति पदद्वयम् ॥ ९६ ॥

**कर्णं दत्वेति ।** कर्णेन श्रुत्वेत्यर्थः । **अकृत्रिमसरस्वती;** वेदवागिव । **अवितथवादिनी;** सत्यवादिनी । श्रूयते किलेत्यन्वयः । **तिअसेत्यादि ।**

[1] महता—ग. [2] मुक्तिश्रियं—ङ च, छ.

(आर्यपुत्र, त्रिदशभाषितं खल्वेतत्। न खलु कथमप्यलीकं भवेत्।)

**राजा**—प्रिये, सर्वथा तावत् त्वत्सहायस्य मे हस्तगतैव विजयसिद्धिः। अपिच;

**रिपुगणविजिगीषाबिन्दुलेशोऽप्यसौ मे**
**मधुजिदनुजिघृक्षावाहिनीवर्धितात्मा।**
**सफलयितुमधीष्टे साधु संप्लावयिष्यन्**
**[1]यतिगणबहुमान्यं यत्नसंतानवृक्षम्॥ ९७॥**

### प्रभाविलासः

**रिपुगणेति**। **रिपवः** बाह्यशत्रवः, तेषां गणस्य विजिगीषैव बिन्दुलेशः कर्ता। **मधुजितः** भगवतः अनुजिघृक्षा अनुग्रहेच्छैव वाहिनी नदी, तया वर्धितात्मा सन्। यतेर्भाष्यकारस्य गणस्य शीर्षसंबन्धियामुनप्रभृतिसमूहस्य पादसंबन्धिचतुःसप्ततिमुख्यगणस्य च बहुमान्यं बहुमानार्हम्। **यत्नः** पुरुषमोचनोद्योगः, स एव संतानवृक्षः कल्पतरुः। तं **सफलयितुमधीष्टे;** समर्थो भवति। अस्मदिच्छालेशमात्रेणेश्वर एवाभिमतं सफलयतीत्यर्थः। अत्र रिपुगणविजिगीषारूपः "अवान्तरार्थ"इत्यादि वक्ष्यमाणलक्षणो बिन्दुर्भगवत्कृपैधितो भूत्वा "प्रयत्नस्तु" इत्याद्युक्तरूप-

### प्रभावली

**तिअसभासिअं खु**-त्रिदशभाषितं खलु। **एदं**-एतत। **णखु**; न खलु। **कहं वि**—कथमपि। **अलिअं होज्ज**; अलीकम अनृतं भवेत। **त्वत्सहायस्य**; सुमतिसहायस्य। अथोत्तराङ्ककृत्यं सूचयति—**रिपुगणेति**। रिपुगणानां बाह्यकुदृष्टिरूपाणां विजिगीषायाः मदीयायाः बिन्दुलेशोऽपि अत्यल्पविजिगीषापीत्यर्थः। **मधुजितः** अनुजिघृक्षैव नदी, तया वर्धितस्वरूपः; भगवत्कृपाबलसहितो भूत्वेत्यर्थः। **मुनिगणबहुमान्यम्**; मुनिगणानां बहुमतिविषयम्। **यत्नसंतान**-

[1] मुनिगणेति प्रभावलीपाठः

(पुनर्नेपथ्ये दुन्दुभिध्वनिः)

**उभौ**—(कर्णं दत्तः)

**सुमतिः**—(सविस्मयम्) अय्यउत्त,

**कुलवइमोक्खणूसवमिअंगकहा कहिआ**
**णवसमरूसुआ वि ण अ होइ गइंदघडा ।**
**तह वि जुअंतहोंतथणइण्णुणिहक्कणिओ**
**कह कह को वि हंत णिहिलं मुहलेइ णहं ॥ ९८ ॥**

(आर्यपुत्र,

कुलपतिमोक्षणोत्सवमृदङ्गकथा कदा
नवसमरोत्सुकापि न च भवति गजेन्द्रघटा ।

**प्रभाविलासः**

यत्नं सफलयितुं बिन्दुयत्नसमन्वयरूपे द्वितीयेऽङ्के प्रतिमुखसंधिना निर्वर्तयितुमधीष्ट इत्युत्तराङ्कनिधीयमानाङ्गप्रकारश्च निर्दिष्टो भवति । अत्र करणं नाम मुखसंधेरङ्गमपि प्रदर्शितम् । "बीजानुगुणप्रस्तुतकार्यारम्भः करणम्" इति लक्षणात् ॥ ९७ ॥

**घटा**; समूहः । "करिणां घटना घटा" इत्यमरः । **कदा**;

**प्रभावली**

**वृक्षम्**; परपक्षप्रतिक्षेपे यो यत्नः उद्योगः, स एव संतानवृक्षः कल्पतरुः, तम् । पूर्वाचार्यबहुमतिविषयमस्मदुद्योगमित्यर्थः । **संप्लावयिष्यन्**; आप्लावयिष्यन् सेचयिष्यन् । साधु **सफलयितुं** सफलीकर्तुं निर्वाहयितुमित्यर्थः । **अधीष्टे**; शक्नोति । यथा कश्चित् जलबिन्दुः वाहिनीसंवर्धितः संयमिजनाभिमतं कंचन वृक्षमाप्लावयन् सफलयति, तद्वत् ॥ ९७ ॥

**दुन्दुभिध्वनिः**; अभूदिति शेषः । **कर्णं दत्तः**; आकर्णयत इत्यर्थः । **कुलवइइत्यादिः** प्राकृतश्लोकः । कहिआ इति प्रथमपादान्तः । क्कणिओ इति तृतीय-

तथापि युगान्तभवत्स्तनयित्नुनिभक्वणितः

कथं कथं कोऽपि हन्त निखिलं मुखरयति नभः ॥ ९८ ॥)

**राजा—**प्रिये, अस्मद्विजयसंनाहसंधुक्षकैरमरपतिभिरय-

**प्रभाविलासः**

मोहविजयानन्तरभावित्वान्नेदानीं प्रस्तुतेत्यर्थः। अत्र निर्णयात्मक ऊहो नामालंकारः, "ऊहो वितर्कः स द्वेधा निर्णयानिर्णयात्मकः" इति लक्षणात ॥ ९८ ॥

**संधुक्षकैः**; उद्दीपकैः। निष्क्रान्तावित्यङ्काङ्गोक्तिः। तदुक्तम्—

"एकाहचरितैकार्थयुक्तमासन्ननायकम्।

पात्रैस्त्रिचतुरैरङ्कं तेषामन्तेऽस्य निर्गमः ॥"

**प्रभावली**

पादान्तः। **कुलवइमोक्खणूसव**—कुलपतिमोक्षणोत्सव। अत्र कुलपतिः पुरुषः, विवेकादिकुलत्रयस्य कूटस्थत्वात्, तस्य मोक्षणं संसारान्मोचनं, स एवोत्सवः। तत्र **मिअंगकहा कहिआ**-मृदङ्गकथा कदा; मृदङ्गवाद्यप्रसङ्गः, तद्ध्वनिरित्यर्थः। कदा भविष्यति; इदानीं सा योग्या न भवतीति भावः। **णवसमरूसुआ वि**; नवसमरोत्सुकापि। **ण अ होइ**; न च भवति। **गइंदघडा**; गजेन्द्रघटा, गजेन्द्राणां घटा बृन्दं न च भवति; गजेन्द्रघटाबृंहितं च न भवतीत्यर्थः, संप्रत्यस्माकं महामोहादिभिर्युद्धप्रसङ्गाभावात्। **तह वि**; तथापि; कुलपतिमोक्षणमहामोहसमराभावेऽपीत्यर्थः। **जुअंतहोंत**—युगान्तभवत्। **थणइण्णुणिअक्कणिओ**; स्तनयित्नुनिभक्वणितः। वलाहकध्वनिनैकप्रमाणो युगान्तमेघगर्जितसदृशप्रमाणः कोऽपि ध्वनिरिति शेषः। **कह कह**; कथं कथम्। हन्तेत्याश्चर्ये। **णिहिलं णहं**; निखिलं नभः। **मुहलेइ**; मुखरयति, ध्वनिविशिष्टं करोति ॥ ९८ ॥

**अस्मद्विजयसंनाहसंधुक्षकैः**; अस्माकं यो महामोहादिविजयः, तत्संनाहाभिवर्धकैरित्यर्थः। स्थापितः स्वपक्षः श्रीपतिरेव जगत्कारणं मुमुक्षूपास्यो मुक्ति-

मभिहन्यते दुन्दुभिः। तदिह स्थापितस्वपक्षैरस्माभिः परपक्ष-प्रतिक्षेपे प्रयतितव्यम्।

(इत्युभौ परिक्रम्य निष्क्रान्तौ)

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेंकटनाथस्य वेदान्ताचार्यस्य कृतिषु संकल्पसूर्योदये स्वपक्षप्रकाशो नाम प्रथमोऽङ्कः।

## प्रभाविलासः

इति। **प्रथमोऽङ्क इति**। अङ्कत्वं चास्य प्रत्यक्षविवेकचरितत्वात् पुरुष-मोचनोद्योगस्य पुनः पुनरनुसंधानान्नानासंविधानरसाश्रयत्वाच्च। तदुक्तम्—

"प्रत्यक्षनेतृचरितो बिन्दुव्यक्तिपुरस्कृतः।
अङ्को नानाप्रकारार्थसंविधानरसाश्रयः॥" इति।

**इति श्रीसंकल्पसूर्योदयव्याख्याने [1]अहोबिलाचार्यविरचिते प्रभाविलासाख्याने स्वपक्षस्थापनं नाम प्रथमोऽङ्कः।**

## प्रभावली

प्रदश्वेत्येवंरूपः यैः। **प्रतिपक्षप्रतिक्षेपे**; उत्तरत्र बाह्यकुदृष्टिनिरासे महामोहादि-विजये च। **प्रयतितव्यम्**; प्रयत्नः कर्तव्यः। इति निर्गच्छतः।

इत्थं बीजारम्भसमन्वयरूपेऽस्मिन्नङ्के साङ्गो मुखसंधिरुक्तः। अङ्गानि "उपक्षेपः परिकरः" इत्यादीनि। तेषां लक्षणादिकथनं मुमुक्षूणामत्यन्तान-पेक्षितत्वान्नोदाहृतम्। उत्तरत्रापि अङ्काङ्गलक्षणानि दशरूपकादौ द्रष्टव्यानीति नेह प्रतन्यन्ते।

**इति श्रीनृसिंहराजविरचितायां संकल्पसूर्योदयव्याख्यायां प्रभावल्यां स्वपक्षप्रकाशः प्रथमोऽङ्कः।**

---

[1] अहोबिलनाम्ना विदुषा विरचिते—A.

# द्वितीयोऽङ्कः

(ततः प्रविशति श्रद्धा विचारणा च)

**विचारणा**—[1]हला, समअलबिंदुणिअरणिब्भासिअणिडाल[2]-अला वच्चदंसणूसुआ वच्चलेव तूरंती वट्टसि ।

(हला, श्रमजलबिन्दुनिकरनिर्भासितललाटतला वत्सदर्शनोत्सुका वत्सलेव त्वरमाणा वर्तसे ।)

**मुहचंदसंदिअसुहासुहआ छविफुल्लमल्लिमअरंदणिहा ।**
**णवसोम्मजोव्वणलआकलिआसिरिमुव्वहंति तुह सेअकणा ॥ १ ॥**

**प्रभाविलासः**

वृत्तवर्तिष्यमाणकथासूचकं प्रवेशकमाह—ततः प्रविशतीत्यादिना । तदुक्तम्—

"वृत्तवर्तिष्यमाणानां कथांशानां निदर्शकः ।
प्रवेशकस्तु नाद्येऽङ्के नीचपात्रप्रयोजितः ॥"

इति । **वत्सला**; गौः ॥ १ ॥

**प्रभावली**

अथ वृत्तवर्तिष्यमाणकथांशसूचनाय तावत्प्रवेशकं प्रकाशयति—**ततः प्रविशतीत्यादि** । **श्रद्धा**; क्रियमाणेषु कर्मस्वादरः । **विचारणा**; चर्चा ।

[1] हला omitted—क. ख. ङ.  [2] णिडिल—क. घ.

(मुखचन्द्रस्यन्दितसुधासुभागाश्छविफुल्लमल्लिमकरन्दनिभाः ।
नवसौम्ययौवनलताकलिकाश्रियमुद्वहन्ति तव स्वेदकणाः ॥ )

**श्रद्धा**—पिअसहि, [1]दाणिं किल एक्कमुहप्पडिट्ठाविअसुइसिर-सिद्धंतस्स पडिपक्खपडिक्खेवभाविअपडिण्णस्स भत्तुणो विवेअस्स सहधम्मआरिणी[2] देवी सुमई पक्कंदणिव्वहणदोहलेण [3]पडिगहिअमंगलाआरा [4]पमआवणपारिसरअणसेलं आसिदा कमलावइचलण-कमलसमच्चणजोग्गाइ कंचणपदुमाइ उवहरिदुं आणविऊण[5] सोह-णेक्कताणहिअआ सुहं ठाइ[6] । ता झत्ति उवसप्पेमि पंकआसणव-अणपंकअराअहंसिं भारइं विअ पसण्णप्पवाहं भाईरइं ।

### प्रभावली

श्रद्धामाह—समअलेत्यादि । **समअलबिंदुणिअर**-श्रमजलबिन्दुनिकर । **णिब्भासिअणिडालअला**-निर्भासितललाटतला ; णिडालं ललाटम् ; प्रस्विन्नमुखेत्यर्थः । **वच्छदंसणूसुआ**-वत्सदर्शनोत्सुका । वत्सस्तर्णकः । **वच्छलेव्व**-वत्सलेव ; वत्सला धेनुरिव । **तूरंती वट्टसि**-त्वरमाणा वर्तसे ।

मुहचंदेत्यादि । **मुहचंदसंदिअ**-मुखचन्द्रस्यन्दित । **सुहासुहआ**-सुधासुभगाः । **छविफुल्लमल्लिमअरंदणिहा**-छविफुल्लमल्लिमकरन्दनिभाः । **णवसोम्मजोव्वण**-नवसौम्ययौवन । **लआकलिआसिरिं**-लताकलिकाश्रियम् । तुह—तव । **सेअकणा**-स्वेदकणाः । उव्वहति—उद्वहन्ति । प्राकृते आर्या वृत्तम् ॥ १ ॥

[1] एण्हि—क. ग. घ. च
[2] सहधम्मअरी—क. ग. घ.
[3] पडिग्गहिअ—क.
[4] पमअवण—क. च.
[5] आणविअ—ख.
[6] चिट्ठइ—ख.घ.च.

(प्रियसखि, इदानीं किलैकमुखप्रतिष्ठापितश्रुतिशिरःसिद्धान्त-स्य प्रतिपक्षप्रतिक्षेपभावितप्रतिज्ञस्य भर्तुर्विवेकस्य सहधर्मचारिणी देवी सुमतिः प्रक्रान्तनिर्वहणदोहलेन प्रतिगृहीतमङ्गलाचारा प्रमदावनपार्श्वरत्नशैलमाश्रिता कमलापतिचरणकमलसमर्चनयोग्यानि काञ्चनपद्मानि उपहर्तुमाज्ञाप्य शोभनैकतानहृदया सुखं तिष्ठति । तत् झटित्युपसर्पामि पङ्कजासनवदनराजहंसीं भारतीमिव प्रसन्नप्रवाहां भागीरथीम् ।)

(अध्वश्रममभिनीय)

**कच्छुत्तंसिअकप्परुक्खसिहरुब्भासंतवासंतिआ-**
**गंधुग्गारफुरंतसोम्मलहरीसोहंतरोहंतरा ।**
**अम्हो दूसहजम्मसंचरसमासिद्धाइ सुद्धाकिदी**
**दुक्खाइं कइआ णु काहिइ सअं मंदाइ मंदाइणी ॥ २ ॥**

प्रभाविलासः

**प्रियसखीति** विस्रम्भपात्रत्वोक्तिः, "सखी विस्रम्भपात्रं स्यादाली स्नेहस्य भूमिका" इत्यालंकारिकोक्तेः । **दोहलेन;** कुतूहलेन । **कच्छः;** जलप्रान्तप्रदेशः । **वासन्ती;** माधवी लता । **लहरी;** प्रवाहः । अत्र

**प्रभावली**

**पिअसहि** प्रियसखि । **एण्हि**-इदानीम् । **किल**-किल । **एक्कमुहप्पडिट्ठाविअ**-एकमुखप्रतिष्ठापित, एकमुखमेककण्ठं यथा तथा । **सुइसिरसिद्धंतस्स**-श्रुतिशिरःसिद्धान्तस्य । **पडिपक्खपडिक्खेवभाविअपडिण्णस्स**-प्रतिपक्षप्रतिक्षेपभावितप्रतिज्ञस्य ; कृतप्रतिज्ञस्येत्यर्थः । **भत्तुणो** भर्तुः । **विवेअस्स**-विवेकस्य । **सहधम्मआरिणी देवी सुमई**-सहधर्मचारिणी देवी सुमतिः । देवी पत्नीत्यर्थः । **पक्कंदणिव्वहणदोहलेण**-प्रक्रान्तनिर्वहणदोहलेन । प्रक्रान्त

(कच्छोत्तंसितकल्पवृक्षशिखरोद्भासमानवासन्तिका-
गन्धोद्गारस्फुरत्सौम्यलहरीशोभमानरोधोन्तरा ।
अम्हो दुःसहजन्मसंचरश्रमासिद्धानि शुद्धाकृति-
दुःखानि कदा नु करिष्यति स्वयं मन्दानि मन्दाकिनी ॥)

प्रभाविलासः

मन्दाकिनीस्तुत्या भावाख्या रतिर्व्यज्यते । तस्याश्च गुणभूतो निर्वेदः प्रतीयत इति प्रेयोऽलंकारः ॥ २ ॥

प्रभावली

उपक्रान्तः परपक्षप्रतिक्षेपः, तस्य यन्निर्वहणं समापनं तत्कौतूहलेनेत्यर्थः । **परिगहिअमंगलाआरा**-परिगृहीतमङ्गलाचारा । मङ्गलाचरणं कुर्वतीत्यर्थः । **पमअवणपासिरअणसेलं**-प्रमदवनपार्श्वरत्नशैलम् । आसिदा-आश्रिता । **कमलावइचलणकमलसमच्चणजोग्गाइ** - कमलापतिचरणकमलसमर्चनयोग्यानि । **कंचणपदुमाइ**-काञ्चनपद्मानि । **उवहरिउं**-उपहर्तुम् । **आणविऊग**-आज्ञाप्य । मामिति शेषः । **सोहणेक्कताणहिअआ**-शोभनैकतानहृदया । **सुहं**-सुखम् । **ठाइ**-तिष्ठति । **ता**-तस्मात् । **झत्ति**-झटिति । **उवसप्पेमि**-उपसर्पामि । **पंकआसणवअणपंकअराअहंसिं**-पङ्कजासनवदनपङ्कजराजहंसीम् । **भारइं विअ**-भारतीमिव । **पसण्णप्पवाहं**-प्रसन्नप्रवाहाम् । **भाईरइं**-भागीरथीम् । **अभिनीय**; अनुकृत्य । **कच्छुत्तंसिअ इत्यादि** । शार्दूलविक्रीडितं वृत्तमिदम् । **कच्छुत्तंसिअ**-कच्छोत्तंसित । **कच्छः**, जलप्रान्तस्थलम्, तेनोत्तंसितः अलंकारतया धृतः । **कप्परुक्ख**-कल्पवृक्षः, तस्य । **सिहरुब्भासंत**-शिखरोद्भासमान । **वासंतिआ**-वासन्तिका माधवी लता, तस्याः । **गंधुग्गारफुरंत**-गन्धोद्गारेण स्फुरत्; शोभमान इत्यर्थः । **सोम्मलहरी**-सौम्यलहरी; लहरी तरङ्गः । **सोहंतरोहंतरा**—शोभमानरोधोऽन्तरा । रोधः कूलम् । **अम्हो** इति खेदे । **दूसहजम्मसंचरसमासिद्धाइ**-दुःसहजन्मसंचरश्रमासिद्धानि; श्रमेण आसमन्तात् सिद्धानि, दुःसहजन्मसु संचरणश्रमेण सिद्धानि । यद्वा संचरः प्रचारस्थानम् । **सुद्धाकिदी**-शुद्धाकृतिः; श्वेताकारा । **दुक्खाइं**-दुःखानि । **कइआ**-कदा । मदीयानीति

**विचारणा**—(अग्रतो निर्दिश्य) एसा खु सा अम्हाणं आसण्णअरा। ता[1] इमस्सिं सज्जणहिअअसीअलमंदमारुअंदोलिअ-मंदारद्दुमकुसुममअरंदसोरहभरिअमहुमहणपअसरिआपुलिणमाह-वीलआघरे[2] खलवअणतिण्हुण्हअरकिरणसंदावं उवसमिऊण खणंतरे गमिस्ससि।

(एषा खलु सा अस्माकमासन्नतरा। तदेतस्मिन् सज्जनहृदय-शीतलमन्दमारुतान्दोलितमन्दारद्रुमकुसुममकरन्दसौरभभरितमधुमथ-नपदसरित्पुलिनमाधवीलतागृहे खलवचनतीक्ष्णोष्णकरकिरणसंतापमुप-शमय्य क्षणान्तरे गमिष्यसि।)

**प्रभाविलासः**

एषेत्यादि। अत्र सरित्पुलिनलतागृहपदैर्दिवा विहारदेशोक्तिः। तदुक्तं भावप्रकाशे—

**प्रभावली**

शेषः। **णु**-नु। **काहिइ**-करिष्यति। **सअं**-स्वयम्। **मंदाइ**-मन्दानि। **मंदाइणी**-मन्दाकिनी। उक्तप्रकारा मन्दाकिनी अस्मद्दुरितानि कदा स्वयं मन्दान्यल्पानि करिष्यतीति योजना॥ २॥

**निर्दिश्य**; अङ्गुल्येति शेषः। **एसा खु**-एषा खलु। **सा**-सा। **अम्हाणं आसण्णअरा**-अस्माकमासन्नतरा। **ता**-तस्मात्। **इमस्सिं**-एतस्मिन्। **सज्जणहि-अअसीअल**-सज्जनहृदयवच्छीतल। **मंदमारुअंदोलिअ**-मन्दमारुतान्दोलित। **मंदा-रद्दुम**-मन्दारद्रुम। **कुसुममअरंद**-कुसुममकरन्द। **सोरहभरिअ**-सौरभभरित। **महुमहणपअसरिआपुलिण**-मधुमथमपदसरित्पुलिन। पदसरिद्गङ्गा। **माहवीलआ**-माधवीलता। **घरे**-गृहे। **खलवअणतिण्हुण्हअरकिलणसंदावं**-खलवचनतीक्ष्णो-ष्णकरकिरणसंतापम्। **उवसमिऊण**-उपशमय्य। **खणंतरे**-क्षणान्तरे। **गमिस्ससि**-

[1] तदो—क. [2] घरम्मि—घ. च.

जत्थ अ[1]—

**एदे णिब्भरणिच्च[2]सोरहसुहापब्भारविब्भाइअं**

**माणुल्लुंछणमीणलंछणमहाधाणुक्कबाणुक्करं ।**

**छायालीणमहिंद्वारवणिआधम्मिल्लमल्लोइअं**

**साहग्गेहि मुअंति पुप्फणिअरं रुक्खा मरुक्खोहिआ ॥ ३ ॥**

(यत्र च—

एते निर्भरनित्यसौरभसुधाप्राग्भारविभ्राजितं

मानोल्लुञ्छनमीनलाञ्छनमहाधानुष्कबाणोत्करम् ।

छायालीनमहेन्द्रवारवनिताधम्मिल्लमाल्योचितं

शाखाग्रैर्मुञ्चन्ति पुष्पनिकरं वृक्षा मरुत्क्षोभिताः ॥)

प्रभाविलासः

"सरितः पुलिनं वेला कान्तारारामभूधराः ।

लतागृहाणि चित्राणि शय्या किसलयाचिता ।

दिवा विहारदेशाः स्युः ॥"

इति । प्राग्भारोऽतिशयः । **आलीनाः**; आश्रिताः ॥ ३ ॥

प्रभावली

गमिष्यसि । **जत्थ अ**-यत्र च । एदे इत्यादि । इदमपि शार्दूलविक्रीडितं वृत्तम् । **एदे णिब्भरणिज्ज**-एते निर्भरनिर्यत् । **सोरहसुहा**-सौरभसुधा । **पब्भारविब्भाइअं**-प्राग्भारविभ्राजितम् । प्राग्भारोऽतिशयः । सुधातिशयविराजितमित्यर्थः । **माणुल्लुंछण**-मानोल्लुञ्छन । अभिमानापहरणेत्यर्थः । **मीणलंछणमहाधाणुक्क**-मीनलाञ्छनमहाधानुष्क । मीनलाञ्छनो मकरध्वजः, स एव महाधानुष्कः

[1] एत्थअ—क. ग. ङ; अत्थ अ. ख. घ.

[2] णिस्स—क. ग. घ ; णिज्ज=निर्यत्, इति प्रभावलीपाठः.

**श्रद्धा**—जह रोअइ पिअसहीए ।

(यथा रोचते प्रियसख्यै)

(उभे [1]सललितमासाते)

**श्रद्धा**—हला विआरणे, तुमं उण किं णिमित्तं इमं पदेसं आअदा ?

(हला विचारणे, त्वं पुनः किं निमित्तमिमं प्रदेशमागता ?)

**प्रभाविलासः**

यथा रोचते प्रियसख्यै, तथा करोमीति शेषः । "रुच्यर्थानां प्रीयमाणः" इति चतुर्थी । हला इति सख्याह्वाने । **हालिकजम्बुक-**

**प्रभावली**

धन्विनामप्रयायी, तस्य । **बाणुक्करं**-बाणोत्करम् ; बाणाः पुष्पाणि, तेषां संदोहम् । **छाआलीण**, छायालीन, छायाश्रित । **महिंदवारवणिआ**-महेन्द्रवारवनिता ; अप्सरसः । **धम्मिल्लमल्लोइअं** धम्मिल्लमाल्योचितम् ; धम्मिल्लः केशबन्धः ; धम्मिल्लयोग्यं यन्माल्यं माला, तत्रोचितं योग्यम् । **साहग्गेहि**-शाखाग्रैः । **मुअंति**-मुञ्चन्ति । **पुप्फणिअरं**—पुष्पनिकरम् । **रुक्खा**-वृक्षाः । **मरुक्खोहिआ**—मरुत्क्षोभिताः । मारुतपरिघूर्णिता एते वृक्षा मरुत्क्षोभिताः सन्तः उक्तविशेषणविशिष्टं पुष्पनिकरं शाखाग्रैर्मुञ्चन्ति । अतोऽत्र विश्रम्य गच्छेति भावः ॥ ३ ॥

**जह रोअइ**-यथा रोचते । **पिअसहिए**-प्रियसख्यै । तथास्त्विति शेषः । **सललितम्**; सश्रृङ्गारम् । **हला विआरणे**-हला विचारणे । हलेति सख्याह्वाने वर्तते । **तुमं उण**-त्वं पुनः । **किं णिमित्तं**-किं निमित्तम् । **इमं पदेसं आअदा**-इमं प्रदेशमागता । भवसीति शेषः । **सुअउ**-इत्यादि । सुअउ—श्रूयताम् ।

[1] सलीलं—ख.

**विचारणा**—सुअउ पिअसहीए । अज्ज खु विवेअमहाराअस्स ववसाअसेणावइसहाअस्स संणाहं सुणिऊण[1] कुविएण रण्णा महामोहेण बुद्धजिणप्पमुहसिद्धंतठावणप्पवीणा कुहअवाइणो कुमइगणेहिं सह पुरिसोत्तमपअपदुमणिअमिअचित्तं पुरिसं हालिअजंबुअदंसण[2]ण्णाएण अत्थंतरप्पसंगेण पआरेदुं आदिट्ठा उपसप्पंतित्ति किंवअंतीं आअण्णअंतीए भट्टिणीए सुमईए विपक्ख[3]उत्तंतं एअंते सेणावइणो विण्णवेदुं आणत्ता महाराएण विवेएण[4] सह मंतणप्पउत्तं तं एव्व दट्ठुं उवट्ठिअम्हि ।

(श्रूयतां प्रियसख्या । अद्य खलु विवेकमहाराजस्य व्यवसायसेनापतिसहायस्य संनाहं श्रुत्वा कुपितेन राज्ञा महामोहेन बुद्धजिनप्रमुखसिद्धान्तस्थापनप्रवीणाः कुहकवादिनः कुमतिगणैः सह पुरुषोत्तमपदपद्मनियमितचित्तं पुरुषं हालिकजम्बुकदर्शन-

**प्रभाविलासः**

**दर्शनन्यायः**; हालिकानां कर्षकाणां जम्बुकदर्शनन्यायः । ते हि तद्दर्शने

**प्रभावली**

**पिअसहिए**-प्रियसख्या । **अज्ज खु**-अद्य खलु । **विवेअमहाराअस्स**-विवेकमहाराजस्य । **ववसाअसेणावइसहाअस्स**-व्यवसायसेनापतिसहायस्य । **संणाहं सुणिऊण**—संनाहं श्रुत्वा; शत्रुविजयोद्योगं श्रुत्वा । **कुविएण**-कुपितेन । **रण्णा**-राज्ञा । **महामोहेण**-महामोहेन । **बुद्धजिणप्पमुहसिद्धंतठावणप्पवीणा**-बुद्धजिनप्रमुखसिद्धान्तस्थापणप्रवीणाः । **कुहअवाइणो**-कुहकवादिनः । बाह्या दुर्वादिन

[1] सुणिअ—ख. घ.
[2] दंसण omitted—क.
[3] पडिपक्ख—ङ.
[4] विवेएण omitted—क. ख.

न्यायेनार्थान्तरप्रसङ्गेन प्रतारयितुमादिष्टा उपसर्पन्तीति किंवदन्तीमाकर्णयन्त्या भर्त्र्या सुमत्या विपक्षवृत्तान्तमेकान्ते सेनापतेर्विज्ञापयितुमाज्ञप्ता महाराजेन विवेकेन सह मन्त्रणप्रवृत्तं तमेव द्रष्टुमुपस्थितास्मि ।)

**श्रद्धा**—अज्ज उण पिसाअविवाहम्मि गद्दभगाणं संवुत्तं, जं महामोहसमीहिदे कज्जे दुव्वाइणं[1] संणाहो । होदु णाम । ईसक्करं एव्व[2] परसिद्धंतणिम्मूलणं महाराअस्स ।

(अद्य पुनः पिशाचविवाहे गर्दभगानं संवृत्तम्, यन्महामोहसमीहिते कार्ये दुर्वादिनां संनाहः । भवतु नाम । ईषत्करमेव परसिद्धान्तनिर्मूलनं महाराजस्य ।)

**प्रभाविलासः**

कृषिं विहाय धावन्तीति लौकिकी प्रथा । **अद्येति** । अत्र "पिशाचानां विवाहेषु गर्दभाः किल गायकाः" इति चाटुवचनं द्रष्टव्यम् ॥ ४ ॥

**प्रभावली**

इत्यर्थः । **कुमइगणेहिं**-कुमतिगणैः सह । **पुरिसोत्तमपादपदुमणिअमिअचित्तं**-पुरुषोत्तमपादपद्मनियमितचित्तम् । **पुरिसं**-पुरुषम् । **हालिअजंबुअदंसणण्णाएण**-हालिकजम्बुकदर्शनन्यायेन । हालिकः हलेन भूमिविलेखकः; तस्य जम्बूकदर्शनम् । जम्बूकदर्शने हालिको भूविलेखनं विहाय जम्बुकमनुधावतीति प्रसिद्धिः । **अत्थंतरप्पसंगेण**-अर्थान्तरप्रसङ्गेन । **पआरेदुं**-प्रतारयितुम्; वञ्चयितुम् । **उवसप्पंतित्ति**-उपसर्पन्तीति । **किंवअंतीं**-किंवदन्तीम्; जनश्रुतिम् । **आअण्णअंतीए**-आकर्णयन्त्या । **भट्टिणीए**-भट्टिन्या । **सुमईए**-सुमत्या । **विपक्खउत्तंतं**-विपक्षवृत्तान्तम् । **एकंते**-एकान्ते । **सेणावइणो**-सेनापतेः । **विण्णवेदुं**-विज्ञापयि-

[1] दुंमईणं—क. [2] खु—क.

**विचारणा**—हला, [1]बुअप्पइप्पमुहेहिं पडिट्ठाविआणं पबलाणं बहूणं पडिपक्खाणं एक्केण णिम्मूलणं तुए कहं आसंसिअं ?

(हला, बृहस्पतिप्रमुखैः प्रतिष्ठापितानां प्रबलानां बहूनां प्रतिपक्षाणामेकेन निर्मूलनं त्वया कथमाशंसितम् ?)

**श्रद्धा**—जं सच्चं तं एव्व णिच्चं होइ । जं उण[2] मिच्चा तं कालेण अलिअं होइत्ति जणवाअसंवाइणा बलवंतेण पमाणेण पेक्खिहिसि तुमं एव्व मह वअणसच्चत्तणं ।

प्रभावली

तुम । **आणत्ता**-आज्ञप्ता । **महाराएण**-महाराजेन । **विवेएण**-विवेकेन सह । **मंतणप्पउत्तं**-मन्त्रणप्रवृत्तम् । मन्त्रणं विचारः, तत्र प्रवृत्तम् । **तं एव्व**-तमेव । **दट्ठुं**-द्रष्टुम् । **उवट्ठिअह्मि** उपस्थितास्मि । **अज्ज उण**-अद्य पुनः । **पिसा-अविवाहम्मि**-पिशाचविवाहे । **गद्दभगाणं**-गर्दभगानम् । **संवुत्तं**-संवृत्तम् । अत्र "पिशाचानां विवाहे तु गर्दभाः किल गायकाः" इति गाथानुसंधेया । **जं**-यत् । **महामोहसमीहिदे**-महामोहसमीहिते । **कज्जे**-कार्ये । **दुव्वाइणं**-दुर्वादिनाम् । **संणाहो**-संनाहः इति यत् तत् गर्दभगानं संवृत्तमिति योजना । **होदु णाम**-भवतु नाम । **ईसक्करं एव्व**-ईषत्करमेव । **परसिद्धंतणिम्मूलणं**-परसिद्धान्तनिर्मूलनम् । **महाराअस्स** महाराजस्य; विवेकस्येत्यर्थः । **हलेत्यादि** । **बुअप्पइप्पमुहेहिं**—बृहस्पतिप्रमुखैः । **पडिट्ठाविआणं**-प्रतिष्ठापितानाम् । **पबलाणं**-प्रबलानाम् । **बहूणं**-बहूनाम । **पडिपक्खाणं**-प्रतिपक्षाणाम् । **एक्केण**-एकेन; प्रतिपक्षेणेति शेषः । **णिम्मूलणं**-निर्मूलनम् । मूलेन सहोत्पाटनम् । **तुए**-त्वया । **कहं आसंसिअं**-कथमाशंसितम् । **जं सच्चमित्यादि** । **जं**-यत् । **सच्चं**-सत्यम् । **तं एव्व**-तदेव । **णिच्चं होइ**-नित्यं भवति । **जं उण**-यत्पुनः । **मिच्चा**-मिथ्या । **तं**-तत् । **कालेण**-कालेन । **अलिअं**-अलीकम्; अनृतम् । **होइत्ति**-भवतीति । **जणवाअसंवाइणा**-जनवादसंवादिना । **बलवंतेण पमाणेण**—बलवता प्रमाणेन । **पेक्खिहिसि**-प्रेक्षिष्यसे । **तुमं एव्व**-त्वमेव । **मह**-मम । **वअणसच्चत्तणं**-

[1] बहप्पइ—क. ख; भअप्पदि—ग. घ. [2] उण omitted—क.

(यत्सत्यं तदेव नित्यं भवति । यत्पुनर्मिथ्या तत्कालेनालीकं भवतीति जनवादसंवादिना बलवता प्रमाणेन प्रेक्षिष्यसे त्वमेव मम वचनसत्यत्वम् ।)

**दीसंतो दिअसेसरोव्व बहलं अंधारपब्भारअं**
**दिप्पंतो अ दवाणलोव्व विउलं विंझाडवीमंडलं ।**
**तूरंतो अ पहंजणोव्व तुलिअं सेलेण तूलुक्करं**
**पेक्खंतो णिहिलं वि दुम्मइमअं भेत्तुं विवेओ पहू ॥ ४ ॥**

(दृश्यमानो दिवसेश्वर इव बहलमन्धकारप्राग्भारकं
दीप्यमानश्च दवानल इव विपुलं विन्ध्याटवीमण्डलम् ।
त्वरमाणश्च प्रभञ्जन इव तुलितं शैलेन तूलोत्करं
प्रेक्षमाणो निखिलमपि दुर्मतिमतं भेत्तुं विवेकः प्रभुः ॥)

ता विवेअविअअकामस्स महामोहस्स कुमइगण[1]संगहणं साअरलंघणूसुअस्स उवलसहाअण्णेसणं ।

### प्रभावली

वचनसत्यत्वम् । अस्मिन्नर्थे दृष्टान्तत्रयं दर्शयन् विवेको महामोहं जेतुं समर्थो भवतीत्याह—**दीसंतो** इत्यादि । इदमपि शार्दूलविक्रीडितं वृत्तम् । **दीसंतो दिअसेसरोव्व**-दृश्यमानो दिवसेश्वरः सूर्य इव । **बहलं अंधारपब्भारअं**-बहलमन्धकारप्राग्भारकम्, अन्धकारातिशयमित्यर्थः । प्राग्भार एव प्राग्भारकः, तं यथा नाशयति तद्वत् । **दिप्पंतो अ दवाणलोव्व**-दीप्यमानश्च दवानल इव । **विउलं**-विपुलम् । **विंझाडवीमंडलं**-विन्ध्याटवीमण्डलम् । **तूरंतो अ**-त्वरमाणश्च । **पभंजणोव्व**-प्रभञ्जनो वायुरिव । **तुलिअं**-तुलितम् । **सेलेण**-शैलेन । **तूलुक्करं**-तूलोत्करम् । **पेक्खंतो णिहिलं वि**-प्रेक्षमाणो निखिलमपि । **दुम्मइमअं**-दुर्मतेर्मतम् इष्टं महामोहम् । **भेत्तुं**-भेत्तुम् । **विवेओ**-विवेकः । **पहू**-प्रभुः ॥ ४ ॥

[1] गण omitted—क, ख.

(तस्माद्विवेकविजयकामस्य महामोहस्य कुमतिगणसंग्रहणं सागरलङ्घनोत्सुकस्य उपलसहायान्वेषणम् ।)

**विचारणा**—पच्चाइदम्हि पिअसहिवअणेण । संता मे विइइच्छा । अविलंबिअकिअप्पेसणं[1] भट्टिणिं पेक्खामि ।

(प्रत्यायितास्मि प्रियसखीवचनेन । शान्ता मे विचिकित्सा । अविलम्बितकृतप्रेषणां भर्त्रीं प्रेक्षे ।)

**श्रद्धा**—हला,[2] समाणचित्तउत्तित्तणं सहित्तणं तुए पआसिअं[3] । अहं अ[4] कमलाइं ओएदुं आरद्धा । तुमं वि राअघरं एव्व पविससु ।

(हला, समानचित्तवृत्तित्वं सखित्वं त्वया प्रकाशितम् । अहं च कमलान्यवचेतुमारब्धा । त्वमपि राजगृहं प्रविश ।)

(इति निष्क्रान्ते)

प्रवेशकः



**प्रभाविलासः**

प्रत्यायिता विश्वासं गमिता । विचिकित्सा संशयः ।

प्रवेशकः ।



**प्रभावली**

**ता**-तस्मात् । **विवेअविअअकामस्स**-विवेकविजयकामस्य । **महामोहस्स**—महामोहस्य । **कुमइसंगहणं**-कुमतिसंग्रहणम्; कुमतीनां दुर्मतीनां

[1] किअप्पेसणां—ङ.
[2] हला omitted—क.
[3] दंसिअम्—ख.
[4] वि—ग.

(ततः प्रविशति राजा व्यवसायश्च)

**राजा**—सेनापते, कठिनतरकर्मपाशकोटिनिबिडयन्त्रितमुधाव्यापारमोमुह्यमानपुरुषमोक्षणव्रत[1]दीक्षितस्य मम स एष समयः सत्त्वमार्गविषयकृताकृतप्रत्यवेक्षणेन कृत्यशेषनिर्धारणस्य ।

**प्रभाविलासः**

अथ बिन्दुप्रयत्नसमन्वयरूपं प्रतिमुखसंधिं साङ्गं निरूपयितुं पात्रप्रवेशमाह—**ततः प्रविशतीत्यादिना** । तत्र प्रतिमुखसंधिलक्षणम्—"लक्ष्या-

**प्रभावली**

संग्रहणम् । **साअरलंघणूसुअस्स**-सागरलङ्घनोत्सुकस्य, पुंस इति शेषः । **उवलसहाअण्णेसणं**-उपलसहायान्वेषणम् ; तत्सदृशमित्यर्थः । **पच्चाइदम्हि**-प्रत्यायितास्मि । **पिअसहीवअणेण**-प्रियसखीवचनेन । **भट्टिणिं पेक्खामि**-भट्टिनीं सुमतिं प्रेक्षे । **समाणचित्तउत्तित्तणं**-समानचित्तवृत्तित्वं सखित्वम् । **तुए**-त्वया । **पआसिअं**-प्रकाशितम् । **अहं अ**-अहं च । **कमलाइं**; कमलानि । **ओच्चेदुं**-अवचेतुम् ; उपाहर्तुमित्यर्थः । **आरद्धा**-आरब्धा । **तुमं वि**-त्वमपि । **राअघरं**-राजगृहम् । **पविससु**-प्रविश । उभे निर्गच्छतः ।

**प्रवेशकः**



**ततः प्रविशतीत्यादि** । **राजा** ; विवेकः । **व्यवसायः** ; सेनापतिः । इदमवश्यं मया कार्यमिति निश्चयो व्यवसायः । सत्कृत्येषु मम कार्यशेषनिर्धारणस्यायमेव काल इत्याह—**सेनापते** इत्यादि । **कठिनतरा** अच्छेद्याः कर्मरूपपाशाः ; तेषां कोटिभिः लक्षशतैः निबिडं यन्त्रितत्वात् मुधाव्यापारेण व्यर्थचेष्टया मोमुह्यमानस्य पुरुषस्य संसारान्मोक्षणस्य **व्रते** दीक्षाप्रविष्टस्य, ममेति शेषः । स एष

[1] व्रत omitted—क.

(मुहूर्तमिव स्थित्वा सविषादम् )

**जडमतिबहुले[1]ऽस्मिन्दैव[2]कोपाज्जनित्वा**
**जगति निरपराधे जातनिर्व्याजवैराः ।**

### प्रभाविलासः

लक्ष्यतयोद्भेदस्तस्य प्रतिमुखं भवेत्" इति, "लक्ष्यालक्ष्यस्य बीजस्य व्यक्तिः प्रतिमुखं भवेत्" इति च । ततश्च प्रथमाङ्कोपक्षिप्तस्य पुरुषमोचनरूपबीजस्य तदुपायतत्फलप्रददेवतापारम्यप्रदर्शनेन किंचिल्लक्ष्यस्य परपक्षनिरासापेक्षया किंचिदलक्ष्यस्योद्भेदनरूपत्वादयं प्रतिमुखसन्धिः । अथ बिन्दुमुपक्षिपति—**सेनापते इति** । स च पुरुषमोचनरूपवस्तुनः प्रतिमतभङ्गेन विच्छेदे पुनरविच्छेदहेतुः । तदुक्तम् —"अवान्तरार्थविच्छेदे बिन्दुरच्छेदकारणम्" इति । **कृताकृतप्रत्यवेक्षणेन**; स्वपक्षस्थापनं कृतम्; परपक्षभङ्गोऽकृत इति विमर्शनेन । **स एष समय इति** त्वराधिक्योक्त्या प्रयत्न उपक्षिप्तः । "प्रयत्नस्तु फलप्राप्तौ व्यापारोऽतित्वरान्वितः" इति लक्षणात् । **जडमतीति** । दैवकोपात्; भगवद्वैमुख्यात् । **अस्मिन्** लोके जनित्वा ।

### प्रभावली

समयः कालः प्रत्युपस्थितः । कस्येत्यत आह—**सत्त्वमार्गेति** । **सत्त्वमार्गः**; मोक्षमार्गः । तद्विषये **कृताकृतप्रत्यवेक्षणेन**; इदं कृतं स्वपक्षस्थापनम्; इदमकृतं परपक्षप्रतिक्षेपादीति प्रत्यवेक्षणं परामर्शः; तेन तत्पूर्वकमित्यर्थः । **कृत्यशेषनिर्धारणस्य**; कार्यशेषनिश्चयस्य । **मुहूर्तं स्थित्वा**; ध्यायन् स्थित्वेत्यर्थः । इवशब्दो वाक्यालंकारे । **सविषादम्**; सशोकमित्यर्थः । प्रतिपक्षसिद्धान्तबाहुल्यात् विषादः । **जडमतीत्यादि** । परव्यामोहनाय दुर्वादिभिः कल्पितान्

[1] विपुले—ग. घ.

[2] देव—क. घ.

**कति कति कलहार्थं क्लृप्तसिद्धान्तभेदाः**
**प्रलपनमुखभेदान पाठयन्ति प्रबन्धान्**[1] ॥ ५ ॥

**प्रभाविलासः**

**निरपराधे जगति**; सज्जनेष्वित्यर्थः । **जातनिर्व्याजवैराः**; उत्पन्ननिष्कारणद्वेषाः । **कति कति** प्रतिवादिनः । **क्लृप्तसिद्धान्तभेदाः**; कल्पितमोहशास्त्रभेदाः । तेषां प्रयोजनमाह—**कलहार्थमिति** । **प्रलपनमुखभेदान्**; परिभाषाभेदभिन्नान् प्रबन्धान् पाठयन्तीत्यन्वयः । अत्र दैवरोषादित्यादिना चतुर्मुखं प्रति भगवदुक्तिः स्मारिता—

"देवतान्तरसक्तानि शास्त्राणि विविधानि च ।
कल्पयित्वा ततस्तानि मन्मतच्छेदयुक्तिभिः ।
वर्धयस्व यथा तानि दृष्ट्वा संशयसंयुताः ।
संप्राप्य मोहं मुक्तीशं मामज्ञात्वा सुदुःखिताः ।
रौरवेषु च घोरेषु दुरितान्यनुभूय च ॥"

इति ॥ ५ ॥

**प्रभावली**

बहुविधसिद्धान्तभेदाननुसंधाय शोचति । **केचित्**; दुर्वादिनः । **जडमतिभिः**; अनभिज्ञैः । **विपुले**; विस्तृते, अज्ञबहुले । **अस्मिन् जगति** । **दैवस्य**; भगवतः । यद्वा दैवं स एव, तस्य । **कोपात्**; पूर्वकर्मानुरूप्येण 'क्षिपामि' इति यो निग्रहः, तस्मात् । दुर्वादितया जनित्वा । **निरपराधे**; तस्मिन्नेव जगति जने । **निर्व्याजवैरम्**; तत्रापराधाभावात् निर्व्याजं निर्हेतुकं वैरं विरोधो येषां ते । कलहैकप्रयोजनाय कल्पिताः सिद्धान्तानां चार्वाकबौद्धार्हतादीनां भेदा यैस्ते । प्रगल्भाभिमानाः **कति कति**; बहवः । प्रलपनं प्रलापः उन्मत्तप्रलापः, तस्य मुखभेदान् पर्यायभूतान् स्वग्रन्थान् पाठयन्ति । तान् शिष्यानपि ग्राहयन्ति । अहो एषां साहसिकत्वमिति भावः ॥ ५ ॥

[1] पाठयन्त्यप्रगल्भान्—क. पाठयन्ति प्रगल्भाः—ख, ग.

आः कष्टम् । व्यामोहजनकविविधसमयोपप्लुते जगति कथमियमध्यात्मविद्या प्रतिष्ठास्यति ?

(आकाशे)

भो भो महामोहापशद, त्रिभुवनसंमोहनेन भवता किं नाम लब्धं लप्स्यते वा ?

अपिच,

**सर्वतः करवीरादीन् सूते सागरमेखला ।**
**मृतसंजीवनी नित्यं[1] मृग्यमाणदशां गता ॥ ६ ॥**

प्रभाविलासः

**अपशदः;** निकृष्टः । **लप्स्यते;** प्राप्स्यते । **सर्वत इति । सागरमेखला;** भूमिः । मारकत्वं दर्शयितुं करवीरग्रहणम् । आदिपदेन विषतिन्दुकादिसंग्रहः । अत्र दुर्जनभूयस्त्वसुजनाल्पीयस्त्वव्यञ्जनस्य वाच्यायमानत्वेऽपि निर्वेदस्य प्रधानव्यङ्ग्यतया न गुणीभूतव्यङ्ग्यतादोषः ॥ ६ ॥

प्रभावली

आः पीडायाम् । **कष्टम्;** आपतितमिति शेषः । कष्टापातं दर्शयति—व्यामोहेति । **व्यामोहजनकैः विविधसमयैः** सिद्धान्तैः उपहते । **अध्यात्मविद्या;** वेदान्तविद्या । **आकाशे** । तत्राकाशे महामोहं पुरः स्थितं भावयित्वा संबोध्य च निन्दति—**भो भो** इत्यादि । **अपशदः;** तुच्छः । पूर्वं किं प्रयोजनं लब्धम्? इतः परमपि किं लप्स्यते? न किमपीति शेषः । तस्मान्निरर्थक एव भवतो जन्मलाभ इति भावः । दुर्विद्याबाहुल्यं सद्विद्याल्पत्वं च दृष्टान्तेन दर्शयन् विषीदति—**अपिचेति । सर्वतः करवीरः;** हयमारकः; मृतिसाधनानीत्यर्थः ।

[1] **यत्र—ख.;** तत्रेति प्रभावलीपाठः

तदहमीदृशोपप्लवोपशमनाय भगवन्तमेवाभिगच्छामि—

(स्मरणमभिनीय)

**स्वतः सिद्धं शुद्धस्फटिकमणिभूभृत्प्रतिभटं**
**सुधासध्रीचीभिर्द्युतिभिरवदातत्रिभुवनम्**[1] ।
**अनन्तैस्त्रय्यन्तैरनुविहितहेषाहलहलं**
**हताशेषावद्यं हयवदनमीडीमहि महः ॥ ७ ॥**

प्रभाविलासः

**स्वतः सिद्धमिति** । "न चास्य कश्चिज्जनिता न चाधिपः" इति श्रुत्या स्वतः सिद्धमित्युक्तम् । **प्रतिभटम्**; सदृशमित्यर्थः । **सुधासध्रीचीभिः**; सुधया सध्रीचीभिः पूर्णाभिः, सदृशाभिरिति वा । **ईडीमहि**; ईड स्तुताविति धातुः । अत्र स्वतः सिद्धमित्यविकारित्वमुक्तम् । शुद्धस्फटिकेत्यंशतो जडत्वादिरूपहेयव्यावृत्तिः । मणीति स्वप्रकाशस्वरूपत्वम् । भूभृदित्यपरिच्छिन्नत्वम् । प्रतिभटमित्युक्तगिरिव्यतिरेकश्च व्यज्यते । सुधासध्रीचीभिरित्यानन्दरूपत्वशीतलत्वाह्लादकत्वादिधर्माणां प्रतीत्यांशतो जडत्वव्या-

प्रभावली

**तत्र**; भूमौ । मृतान् संजीवयतीति मृतसंजीवनी ओषधिः । **नित्यमन्वेषणीयावस्थां** दुर्लभतामित्यर्थः ॥ ६ ॥

**उपप्लवः**; उपद्रवः । **अभिगच्छामि**; शरणं व्रजामि । **स्मरणम्**; ध्यानम् । भगवन्तमभिगच्छति—**स्वत इति** । **स्वतः सिद्धम्**; हेतुमन्तरेण सिद्धम्, "न चास्य कश्चिज्जनिता न चाधिपः" इति श्रुतेः । यद्वा **स्वतः सिद्धम्**; स्वभावत एव परिशुद्धम । अन्ये त्वेतत्प्रसादाधिगतशुद्धिमन्तः, "निरवद्यं निरञ्जनम्" इत्यादिश्रुतेः । शुद्धो यः स्फटिकमणिभूभृत्, तत्प्रतिभटं तत्सदृ-

[1] अपतापेति प्रभावलीपाठः

अपिच,

**समाहारः साम्नां प्रतिपदमृचां धाम यजुषां**
**लयः प्रत्यूहानां लहरिविततिर्बोधजलधेः ।**
**कथादर्पक्षुभ्यत्कथककुल[1]कोलाहलभवं**
**हरत्वन्तर्ध्वान्तं हयवदनहेषाहलहलः ॥ ८ ॥**

प्रभाविलासः

वृत्तिः । अतो वह्निज्वालाव्यतिरेकश्च व्यज्यते । द्युतिभिरित्यसंख्यातत्वेन सकलतेजोऽभिभवनं व्यज्यते । अवदातत्रिभुवनमिति तत्र स्थितकैलासादेरपह्नवो व्यङ्ग्यः । अनन्तैस्त्रय्यन्तैरनुविहितेति सौरतेजोवैलक्षण्यम्, "वेदैरशून्यस्त्रिभिरेति सूर्यः" इति तस्य परिमितत्वश्रवणात् । हताशेषावद्यमिति कलङ्कितत्तेजोव्यतिरेकः औष्ण्यगर्भितत्वकतिपयबोधकत्वासह्यशीतलत्वादिराहित्यं च व्यज्यते ॥ ७ ॥

**समाहार इति । साम्नामित्यादौ** बहुवचनोक्तिः शाखाभेदेन । **प्रतिपदम्;** प्रतिस्थानम् । **धाम;** आश्रयः । **लयः;** नाशकः । **लहरिविततिः;** तरङ्गसमूहः । कथायां दर्पेण क्षुभ्यतां प्रतिकथकानां कोलाहलेन भवतीति तथोक्तम् ॥ ८ ॥

प्रभावली

शमित्यर्थः । **अपतापम्** अपगततापं त्रिभुवनं येन । **अनुविहितः** अनुकृतः हेषायाः अश्वध्वनेः, हलहल इति शब्दानुकारः, हलहलशब्दः येन । **हताशेषावद्यम्;** अखिलहेयप्रत्यनीकम् । **हयवदनरूपं महः ईडीमहि;** स्तुवीमहि ॥ ७ ॥

हयवदनस्तिष्ठतु । हयवदनस्य हेषाहलहल एव ध्यायतामिष्टप्राप्त्यनिष्टनिवारणसाधनमिति दर्शयति—**अपिचेत्यादि । साम्नाम्;** सामवेदस्य । **समाहारः;** समुच्चयः । **ऋचां प्रतिपदम्;** पर्यायः । **यजुषां धाम;** स्थानम् । **बोध-**

[1] प्रतिकथक—छ.

**सेनापतिः**—महाराज, सर्वत्र सिद्धारम्भः खल्वसि। अमोघ एव[1] खल्वनरण्यशाप इवारण्यकवादो भवत्प्रभावेण[2] महामोहविध्वंसनवादी। अद्य च;

**त्वया त्र्यत्यन्तविज्ञानं पुरुषस्य विभावितम्।**
**श्रद्धावैकल्यमात्रं तु शमनीयमतः परम्॥ ९॥**

**प्रभाविलासः**

**अनरण्यः;** इक्ष्वाकुकुलीनः। स हि रावणं शशाप। तदुक्तम्—

"यदि दत्तं यदि हुतं यदि मे सुकृतं तपः।
यदि गुप्ताः प्रजाः सर्वा यथासत्यं वचोऽस्तु मे॥
उत्पत्स्यते कुले ह्यस्मिन्निक्ष्वाकूणां महात्मनाम्।
रामो दाशरथिर्नाम यस्ते प्राणान् हरिष्यति॥"

इति। **आरण्यकवादः;** वेदान्तवादः। अनेन वेदान्ताचार्यो लक्ष्यते। **त्वयेति**। वेदान्तानां ब्रह्मण्येव तात्पर्यं प्रथमाङ्के निरूपितम्। इतः परं

**प्रभावली**

**जलधेः;** ज्ञानसमुद्रस्य। **लहरिविततिः;** तरङ्गविस्तारः। एवंभूतो हयवदनस्य **हेषाया हलहलः;** कोलाहलः। **कथायां** वादे यो दर्पः, मम सदृशो नास्तीति गर्वः, तेन क्षुभ्यताम् अपथप्रवृत्तानां कथकानां कुलस्य कोलाहलः कलकलः, तेन संजातमन्तर्ध्वान्तम् अप्रतिभारूपमज्ञानं मदीयं हरतु॥ ८॥

सिद्धः कार्यसिद्धिं प्राप्तः आरम्भो यस्य सः। अनरण्यो नाम ऐक्ष्वाको राजा श्रीमदुत्तररामायणे प्रसिद्धः। स च रावणाय शापं दत्तवान्। शापेन रावणश्च हतोऽभूत्। **आरण्यकवादः;** उपनिषद्घोषः। यद्वा आरण्यका मुनयः, तद्वचनम्। आरण्यकवादस्वरूपं दर्शयति—**भवत्प्रभावेणेति**। विवेकबलेन महामोहस्य विध्वंसनवादी विवेकान्मोहोऽपगच्छतीत्येवंवादी। अथ निर्धारितांश-

[1] एव omitted—क; एष—घ. [2] भगवत्प्रसादेन—ङ. छ.

**राजा**—(सपरितोषम्) भद्र, साधु संबोधितोऽस्मि भव्यवृत्तेन भवता। [1]त्वत्सहायस्य मे कृत्यशेषमपि कृतप्रायमेव निश्चिनोमि।

**शमदममुखास्तिष्ठन्त्वन्ये[2] शतं शतमुत्थिता**
**निरुपधिमहामोहश्रद्धानिवारणलम्पटाः।**

**प्रभाविलासः**

विरोधनिरास एव कर्तव्य इति श्लोकार्थः। अत्र प्रतिमुखसंधेरङ्गानि त्रयोदश। तदुक्तं दशरूपके—

"विलासः परिसर्पश्च विधूतं शमनर्मणी।
नर्मद्युतिः प्रगमनं निरोधः पर्युपासनम्।
पुष्पं वज्रमुपन्यासो वर्णसंहार इत्यपि॥"

इति। तत्र **शमनीयमतः परमिति** प्रथमाङ्गम्, दृष्टार्थरूपबीजस्येहात्मतया वर्णनात्। तदुक्तम् "दृष्टार्थविषयामीहां विलासं परिचक्षते" इति॥ ९॥

**शमेति**। मुखपदेनोपरतितितिक्षादयः। "शान्तो दान्त उपरतस्तितिक्षुः समाहितः" इति श्रुतेः। **निरुपधौ** निरङ्कुशे महामोहे

**प्रभावली**

कथनपूर्वकं समयोचितं कृत्यशेषं निध्यायति—**अद्य चेत्यादि**। **त्रय्यन्तविज्ञानम्**। 'विष्णुरेव परतत्त्वं, स एवोपास्यः, स एव मोक्षप्रदः' इत्येवंरूपं पूर्वाङ्कान्ते **विभावितं** प्रकाशितम्। इतः परं परमतप्रतिक्षेपाभावे वेदान्ते श्रद्धावैकल्यं भवतीति तद्वैकल्याय परमतभङ्गः कार्य इत्याह—**श्रद्धावैकल्यमिति**॥ ९॥

**सपरितोषम्**; सेनापतिवचनश्रवणात। **भद्र**; कल्याणपुरुष। **संबोधितोऽस्मि**; ज्ञापितोऽस्मि। **भव्यं** कुशलं वृत्तमाचारो यस्य स भव्यवृत्तः। **कृतप्रायम्**; कृतकल्पम्। सेनापतिं प्रशंसति—**शमेति**। **शमः**; अन्तरिन्द्रियनिग्रहः। मुखशब्देन सत्यशौचादयो गृह्यन्ते। शतं शतं यथा

[1] अद्य added before—घ.
[2] न्त्वेते—ग.

**दनुजमथने विष्वक्सेनो हरेस्तदनन्यधीः**
**प्रतिमततमश्छेदे हेतुस्त्वमप्यनघो मम ॥ १० ॥**

**सेनापतिः**—देव, प्रहरणनयेन परेषु प्रयोक्तव्यतया परतन्त्र एवाहं भवतः ।

**निष्प्रत्यूहसमुत्थितैरधिगतस्थैर्यः प्रमाणादिभिः**
**स्वच्छन्दप्रथमानशौर्यविभवः स्वायत्तसिद्धिर्भवान् ।**

### प्रभाविलासः

श्रद्धाया निवारणे लम्पटाः । विष्वक्सेनो यथा भवतीति शेषः ॥ १० ॥

**निष्प्रत्यूहेति** । निष्प्रत्यूहमबाधं यथा तथा समुत्थितैः । प्रमाणपदेन त्रय्यन्तास्तदविरोधिप्रत्यक्षानुमानादयः । आदिपदेन शारीरकन्यायाः । तैरधिगतस्थैर्यः । अनेन शारीरकन्यायानुगृहीतवेदान्तशास्त्रजन्यं ज्ञानं विवेक इति लक्षणमुक्तम् । **स्वच्छन्देति** । स्वपरनिर्वाहकत्वरूपं स्वतः प्रामाण्यमुक्तम् । **स्वायत्तसिद्धिरिति** स्वप्रकाशकत्वमुक्तम् । राजसमाधिः

### प्रभावली

तथा उत्थिताः । किमर्थमित्यत्राह—**निरुपधीति** । निरुपाधिकः यो महामोहः, तस्य श्रद्धा विवेकादिविजयादरः, तस्या निवारणे लम्पटाः आसक्ताः । **अन्ये**; त्वत्तोऽन्ये सर्वे तिष्ठन्तु । त्वमेक एवालं महामोहविजय इति सदृष्टान्तमाह—**दनुजेति** । दनुजानां संहरणे हरेस्तदनन्यधीः विष्वक्सेनः वैकुण्ठसेनानीरिव तस्मिन् हरावेवानन्या धीः स्वामित्वबुद्धिर्यस्य सः । **अनघस्त्वमपि**; स्वामिद्रोहादिरहितत्वमनघत्वम् । मम **प्रतिमततमश्छेदे**; प्रतिमतः शत्रुः मोहः, स एव तमः, तन्निरसने । **हेतुः** अमोघसाधनम् ॥ १० ॥

**प्रहरणम्**; आयुधम्; तन्न्यायेन । परेषु त्वया प्रयोगे योग्यतया परतन्त्र एव; न स्वतन्त्रोऽस्मि । परतन्त्रत्वमेव समर्थयते—**निष्प्रत्यूहेति** । विवेकस्य स्वातन्त्र्यं

**इत्थं सत्यनुपप्लवं परिपतच्चिन्ताफलस्रोतसः**
**सत्तावस्थितिवृत्तिषु [1]ध्रुवमहं छायासमस्तस्य ते ॥ ११ ॥**

## प्रभाविलासः

स्पष्टः । **परिपतच्चिन्ताफलस्रोतसः**; परिपतन्ति परितः समागच्छन्ति चिन्ताफलानां स्रोतांसि यस्य तस्य । विवेके यानि फलकदम्बकानि पुरुष-मोक्षपर्यन्तानि सेत्स्यन्ति, तानि निरुपद्रवं लब्धवत इत्यर्थः । अथवा परिपतन्तीनां चिन्ताफलानां निरन्तरस्मृतीनां स्रोतसः प्रवाहभूतस्य । विशदस्मृतिसंततेरपि विवेकरूपतया अभेदोक्तिः । ते तव समस्तस्य कार्यजातस्य सत्तावस्थितिवृत्तिषु स्वरूपस्थितिप्रवृत्तिषु अहं छाया छायावत् परतन्त्र इत्यर्थः । सर्वत्र निश्चयरूपत्वात् ॥ ११ ॥

## प्रभावली

पूर्वार्धेनाह । निर्विघ्नं यथा तथा समुत्थितैरित्यर्थः । **प्रमाणादिभिः**; प्रमाणम् आगमः । आदिशब्देन तर्कोपबृंहणानि विवक्षितानि । **अधिगतस्थैर्यः**; **स्थैर्यं** प्रतिवादिदूषणैरविचाल्यता, तत्प्राप्तं येन सः । **स्वच्छन्देति** । शौर्यशब्देन स्वपक्षसाधनपरपक्षदूषणे उच्येते । स्वच्छन्दं यथा तथा प्रथमानं प्रसिद्धं शौर्य-मेव विभवो यस्य सः । अत एव **स्वायत्तसिद्धिः**; स्वाधीनार्थनिश्चयो भवान् । **इत्थं सति**; त्वयि एवंप्रकारविशिष्टे सति । अनुपद्रवं यथा तथा परिपतन्ति चिन्ताफलानां ज्ञानशक्तिप्राप्तिरूपाणां स्रोतांसि यस्य । **तस्य ते** । **सत्तावस्थिति-वृत्तिषु**; सत्ता उत्पत्तिः, अवस्थितिरवस्थानं नाश इति यावत् । वृत्तिर्वर्तनम् । उत्पत्तिस्थितिनाशेष्वित्यर्थः । अहं छायासमो ध्रुवम् । त्वत्सत्ताद्यनुविधानात् छायासाम्यम् । छाया छायिन उत्पत्तौ उत्पद्यते; स्थितौ तिष्ठति; नाशे नश्यति । छायावत्तवाहं परतन्त्र इति ध्रुवं सत्यम् । अत्र विवेकस्य भगवत्साम्यं व्यवसायसुमत्योः सीतालक्ष्मणसाम्यं च विवक्षितम् ॥ ११ ॥

[1] स्वयमिह च्छाया—ग.

तस्मादहं वा सुमतिर्वा जलोद्धृतमत्स्यन्यायेन भवन्तं विना मुहूर्तमपि न जीवावः ।

**राजा**—(विचिन्त्य) सेनापते, पश्य पश्य ;

**असुरादिमोहनविधौ विहिताः प्रमितावतीतसमयाः समयाः ।**
**तपनापनेयतिमिरक्रमतः प्रचरन्ति हन्त जगदन्तरतः ॥ १२ ॥**

**प्रभाविलासः**

**तस्मादिति** । **अहं वा सुमतिर्वेति** ; निश्चयत्वाबाधितत्वयोर्विवेकज्ञानानपायात् मुहूर्तमपि न जीवाव इत्युक्तम् । अनेन 'न जीवावः' इति द्विवचनेन लक्ष्मणवचनं व्यञ्जितमिति वचनव्यङ्ग्यध्वनिभेदः । वचनं तु—

"न च सीता त्वया हीना न चाहमपि राघव ।
मुहूर्तमपि जीवावो जलान्मत्स्याविवोद्धृतौ ॥"

इति । **असुरादीति** । अत्र

"त्वं च रुद्र महाबाहो मोहशास्त्राणि कारय ।
अनायासं दर्शयित्वा फलं शीघ्रं प्रदर्शय ॥"

इत्येतदनुसंधेयम् । **अतीतसमयाः** ; कालात्ययापदिष्टा इत्यर्थः । **तपनाप-**

**प्रभावली**

तदेव दर्शयति—**तस्मादित्यादि** । वाशब्दश्चार्थे । जलोद्धृतो मत्स्यः यावज्जलसंसर्गस्तावज्जीवति । न ततः परम् । तन्न्यायेन । सदसद्विवेकसंभवे सत्कृत्येषु व्यवसायः संसारदोषदृष्टिरूपा सुमतिश्च स्त इत्यर्थः ।

"न च सीता त्वया हीना न चाहमपि राघव ।
मुहूर्तमपि जीवावो जलान्मत्स्याविवोद्धृतौ ॥"

इति श्रीमद्रामायणवचनमत्रानुसंधेयम् । परमतभङ्गस्य पीठिकामारचयति—**असुरादीति** । **अत्र**

एते च[1] मधुमथनभुजबलपरिभ्रमितमन्दरमहीधर[2]मथ्यमान-महार्णवनिर्घोषनिर्विशेषनिरर्थकविविधवाचो वाचस्पतिमपि वनस्पती-कर्तुमुद्युञ्जते वशिका वावदूकाः। तदमी सावधानसंप्रयुक्तारम्भेण प्रकटप्रकाशितसाधनोपालम्भदंष्ट्राङ्कुरेण प्रतिपन्नखरतरतर्कपञ्चकनख-रेणारण्यकारण्यवर्तिना प्रमाणपराक्रमकण्ठीरवेण नियतमकुण्ठशक्तिना

### प्रभाविलासः

**नेयतिमिरक्रमतः**; सूर्यनिवर्त्यतिमिररीत्या ॥ १२ ॥

**वशिकाः**; तुच्छाः। **साधनम्**; स्वपक्षस्थापनम्। **उपालम्भः**; परपक्षदूषणम्। **खरतरम्**; तीक्ष्णतरम्। **तर्कपञ्चकम्**; आत्माश्रयान्योन्या-

### प्रभावली

"त्वं हि रुद्र महाबाहो मोहशास्त्राणि कारय।
दर्शयित्वाल्पमायासं फलं शीघ्रं प्रदर्शय ॥"

इति पाद्मपुराणवचनमनुसंधेयम्। **प्रमितौ**; प्रमितिविषये। **अतीतसमयाः**; कालात्ययापदिष्टाः, वेदान्तैः प्रमितौ सिद्धायां तद्विपरीतार्थप्रतिपादनात्। यथा स्पार्शनप्रत्यक्षेणाग्नेरुष्णत्वोपलम्भेऽनुष्णत्वप्रतिपादकानुमानम्, तद्वत्। **समयाः**; सिद्धान्ताः। तपनेनापनेयं निरसनीयं यत्तिमिरं तन्न्यायेन। यथा मिहिरोदये तिमिरमपैति तदस्तमये पुनरुदेति, एवं वैदिकवावदूकोदयान्वयव्यतिरेकानुविधायिन इत्यर्थः। हन्तेति खेदे ॥ १२ ॥

दुर्वादिनां निरर्थकाटोपं दर्शयति—**एते चेति**। निर्विशेषशब्दः सदृशपर्यायः। **वाचस्पतिमपि**; बृहस्पतिमपि। **वनस्पतीकर्तुम्**; महातरुवत् मूकीकर्तुम्। **उद्युञ्जते**; उद्योगं कुर्वते। **वशिकाः**; तुच्छाः, बाह्या इत्यर्थः। एवमाटोपं प्रदर्श्य, अमी सावधानतः प्रमाणैर्निरसनीया इत्याह—**तदमी** इत्यादि।

[1] च omitted—क. [2] महामहीधर—ख.

निरसनीयाः सत्पथविस्रम्भरम्भावनमथन[1]विहितसंरम्भाः प्रचण्डा[2] वैतण्डिकवेतण्डाः ।

**सेनापतिः**—देव, नियुक्तो हि त्वया वादेन सह वेदान्तसिद्धान्तः प्रतिमतनिर्मूलनाय । तदासीदत्यसाविह कथकसंग्रामसीमाम् ।

(ततः प्रविशतो गुरुशिष्यवेषधारिणौ सिद्धान्तवादौ)

**गुरुः**—आयुष्मन्, अवधारितपरमार्थेन प्रतिभटकथकलङ्काभटहनूमता भवता[3] स्थूणानिखननन्यायेन संचालितनिष्कम्पमध्यात्मतत्त्वमवगच्छामि ।

प्रभाविलासः

श्रयचक्रकाश्रयानवस्थातिप्रसङ्गरूपम् । **वेतण्डाः**; गजाः । **संचालित-**

**प्रभावली**

**तत्**; तस्मात्; आटोपस्य दर्शितत्वात् । **आरम्भः**; उपक्रमः, तद्वता । प्रकटं प्रकाशितौ स्वपक्षसाधनपरपक्षोपालम्भावेव दंष्ट्राङ्कुरौ यस्य तेन । **प्रतिपन्नः**; युक्तः । इदं तर्कविशेषणम् । तेन सत्तर्कत्वं व्यज्यते । **खरतरः**; दृढतरः, मूलशैथिल्यादिरहितः । **यत्तर्कपञ्चकम्**; आत्माश्रयान्योन्याश्रयचक्रकाश्रयानवस्थानिष्टप्रसङ्गादीनि; तान्येव पञ्च नखराणि यस्य । आरण्यका उपनिषदः, तत्र वर्तिना; अरण्यसमूहे वर्तिना[4] । प्रमाणमेव पराक्रमविशिष्टः कण्ठीरवः, तेन । नियमेनाप्रतिहतशक्तिना । **सत्पथः**; वेदान्तमार्गः, तत्र विस्रम्भो विश्वासः, स एव

[1] **प्रमथन—ख.** [2] उद्दण्डा इति प्रभावलीपाठः [3] **त्वया—क.**

[4] **मूले** आरण्यकवर्तिना इति प्रभावलीपाठः प्रतिभाति.

**शिष्यः**—(सप्रश्रयम्) भगवन्, दिव्येन यतीन्द्रवेषेण दत्तात्रेय इव संदृश्यसे[1]; योऽसौ महर्षिभिरनुस्मर्यते—

**काणादशाक्यपाषण्डैस्त्रयीधर्मो विलोपितः ।**
**त्रिदण्डधारिणा पूर्वं विष्णुना रक्षिता त्रयी ॥ १३ ॥**

इति ।

## प्रभाविलासः

**निष्कम्पमिति;** अनेन परिसर्पो नाम प्रतिमुखसंधेरङ्गमुक्तम् । "परिसर्प इति प्राहुर्दृष्टभ्रष्टानुसर्पणम्" इति लक्षणात् ॥ १३ ॥

## प्रभावली

रम्भावनं, तन्मथने विहितसंरम्भाः कृतोद्योगाः । उद्दण्डा ये **वैतण्डिकाः** शुष्कतर्कनिष्ठाः; त एव **वेतण्डाः** गजाः; रम्भावनमथनप्रियाः । **नियुक्तः**; अनुशिष्टः । **वादः**; कथाविशेषः । अत्र वादशब्देन स्वयं ग्रन्थकर्ता वेदान्ताचार्यः, वेदान्तसिद्धान्तशब्देन श्रीभाष्यकारश्च विवक्षित इति संप्रदायः । तत्; नियुक्तत्वात् । **आसीदति**; आगच्छति । **कथासंग्रामसीमा**; वादस्य परा काष्ठा ।

एवं पात्रान्तरं संसूच्य तत्प्रवेशमाह—**तत** इति । आयुष्मन्निति शिष्यसंबोधनम् । **प्रतिभटकथका** एव लङ्काभटाः, तेषां हनूमत्स्थानीयेन । स्थूणाया निखननं संचालनेन दृढीकरणं, तन्न्यायेन । **संचालितं** च तत् निष्कम्पं चाध्यात्मस्वरूपम् । **प्रश्रयः**; विनयः । **यतीन्द्रस्य** वेषेण दत्तात्रेय इव । योऽसौ दत्तात्रेयः स्मृतिषु पठ्यते । **काणादेति** । **काणादाः**; वैशेषिकाः । **शाक्याः**; बौद्धाः । **पाषण्डाः**; तत्त्ववृत्तोभयपाषण्डाः निरीश्वरमीमांसकादयः । यद्वा काणादशाक्यरूपैः पाषण्डैः पूर्वमादौ काले त्रयीधर्मो विलोपितोऽभूत् । तदा **त्रिदण्डधारिणा**; त्रिदण्डं धारयता । **विष्णुना**; विष्ण्वंशेन दत्तात्रेयेण । **त्रयी रक्षिता**; तान् वादेन सशिष्यो विजित्य त्रयीं रक्षितवानित्यर्थः ॥ १३ ॥

[1] संलक्ष्यसे—घ.

**गुरुः**—आयुष्मन् , असुराः खल्वेते बाह्याः कुदृष्टयश्च । तानहं विष्णुरूपमाश्रित्य विजिगीषे ।

**शिष्यः**—भगवन् , विष्णुरूपी सन् विष्णुभावेन नमस्यः खल्वसि । ततश्च,

**उपवीतिनमूर्ध्वपुण्ड्रवन्तं त्रिजगत्पुण्यफलं त्रिदण्डहस्तम् ।**
**शरणागतसार्थवाहकं त्वां शिखया शेखरशालिनं भजामि ॥१४॥**

(इति साष्टाङ्गं प्रणमति)

**प्रभाविलासः**

**उपवीतिनमिति** । अत्र प्राशस्त्ये मतुप् । **सार्थः**; समूहः । **साष्टाङ्गमिति**; मनोबुद्ध्यभिमानहस्तपादद्वयशीर्षसहितमित्यर्थः । तदुक्तम्—

"मनोबुद्ध्यभिमानेन सह न्यस्य धरातले ।
कूर्मवच्चतुरः पादान् शिरस्तत्रैव पञ्चमम् ॥"

इति । **प्रणमतीति**; नामगोत्रभोशब्दोच्चारणपूर्वकं नमस्करोतीत्यर्थः । यथाह मनुः—

"अभिवादपरो विप्रो ज्यायांसमभिवादयेत् ।
असौनामाहमस्मीति स्वं नाम परिकीर्तयेत् ॥

**प्रभावली**

**विष्णुरूपमाश्रित्य**; विष्णोर्विष्णवंशस्य दत्तात्रेयस्य रूपं त्रिदण्डसंन्यासित्वमाश्रित्य विजेतुमिच्छामि । **विष्णुरूपी सन्**; विष्णो रूपं त्रिदण्डधारित्वं, तद्वान् सन् । अयं साक्षाद्विष्णुरेवेति बुद्ध्या नमस्कारयोग्यः । **उपवीतिनमिति**; एकदण्डिभ्यो व्यावृत्तिरुच्यते । उपवीतं यज्ञसूत्रं तद्वान् । सच्छिद्रोर्ध्वपुण्ड्रवन्तम् । **त्रिजगतां** पुण्यस्य परिपाकरूपम् । त्रीणि दण्डानि त्रिदण्डं हस्ते

गुरुः—आयुष्मन्[1],

प्रतिष्ठापितवेदान्तः प्रतिक्षिप्तबहिर्मतः ।
भूयास्त्रैविद्यमान्यस्त्वं भूरिकल्याणभाजनम् ॥ १५ ॥

(इति दिव्यशक्तिमयं दर्भपवित्रं ददाति)

प्रभाविलासः

भोशब्दं कीर्तयेदन्ते स्वस्य नाम्नोऽभिवादने ।
नाम्नां स्वरूपभावे हि भोशब्द ऋषिभिः स्मृतः ॥ "

इति ॥ १४ ॥

**आयुष्मन्निति**; मतुप् प्रशंसायाम् । तत्त्वजिज्ञासाप्रवृत्तत्वेनायुः-साफल्यात् "तरवः किं न जीवन्ति" इति वितथायुषो वैलक्षण्यमुक्तम् । आयुष्मन्निति वर्णप्रयुक्ताशीर्वादोऽपि फलितः । "आयुष्मान् भव सौम्येति वाच्यो विप्रोऽभिवादने" इति मनुस्मरणात् । **प्रतिष्ठापितेति** । तिस्रो विद्या येषां ते त्रिविद्याः; त एव त्रैविद्याः; ब्रह्मनिष्ठा इत्यर्थः ॥ १५ ॥

प्रभावली

यस्य तम् । **शरणागतसार्थवाहकम्**; शरणागतानां सार्थः समूहः रक्षणभरो वा, तस्य निर्वाहकम् । शिखया हेतुना शिरोभूषणवन्तम् । शेखरं शिरोमाल्यं, तेन शालितुं शीलमस्य इति तच्छालिनम् ॥ १४ ॥

**प्रतिष्ठापितो** वेदान्तसिद्धान्तो येन । **प्रतिक्षिप्तो** निरस्तो बाह्यसिद्धान्तो येन । एवं त्वं त्रैविद्यानां वैदिकानां मान्यः बहुकल्याणभाजनं च भूया इत्याशीर्वादः ॥ १५ ॥

दिव्या शक्तिः, तद्रूपम्; दिव्यशक्तिप्रदमित्यर्थः । दर्भैर्विरचितं पवित्रग्रन्थिं ददाति ।

[1] आयुष्मन् omitted—क.

**शिष्यः**—(तदादाय शिरसि निधाय दक्षिणहस्ते धारयति)

**गुरुः**—

**अविश्रान्तश्रद्धाशतकलहकल्लोलविषमा-**
**स्तवाविर्भूयासुर्मनसि मुनिसिद्धादिसुलभाः ।**
**मधुक्षीरन्यायस्वगुणविभवासंजनकन-**
**न्महानन्दब्रह्मानुभवपरिवाहा बहुविधाः ॥ १६ ॥**

**प्रभाविलासः**

**अविश्रान्तेति** । अविश्रान्ताः संततः श्रद्धाः, तासां शतस्य कलहाः अहमहमिकया वर्तनानि. तेषां कल्लोलैस्तरङ्गैः विषमाः निम्नोन्नताः । **मधुक्षीरन्यायेन** माधुर्यविवेचनस्याशक्यतया स्वगुणानां सर्वज्ञत्वादीनां विभवस्य विभूतेरासंजनेन मेलनेन कनतो महानन्दस्य ब्रह्मणोऽनुभवपरिवाहाः स्वरूपविभूतिगुणविशिष्टपरब्रह्मगोचरवेदान्तश्रवणमनननिर्धारितबुद्धिवैशद्यकाष्ठाः तव मनस्याविर्भूयासुरित्यर्थः ॥ १६ ॥

**प्रभावली**

पुनरप्याशीर्विशेषं विदधाति—**अविश्रान्तेति** । **अविश्रान्ताः**; संततः । **श्रद्धाशतम्**; अनुभवपरीवाहविषयादरशतम् । शतशब्दो बाहुविध्यवाची । परीवाहानां बहुविधत्वात तदादरस्यापि बहुविधत्वम् । श्रद्धाशतान्येव **कलहकल्लोलाः** कलहयुक्ताः कल्लोलाः । मध्यमपदलोपी समासः । कलहोऽहमहमिकया प्रसरः; तैर्विषमाः दुरवगाहाः । **मुनिसिद्धादिसुलभाः**; मुनीनां सिद्धादीनामेव लभ्याः, नेतरेषाम् । **मध्विति**; मधुना संपृक्तं क्षीरमतिस्वादु भवति; तन्न्यायेन । **स्वगुणविभवेषु**; स्वं रूपं, गुणाः सत्यज्ञानादयः; विभवो विभूतिः, तेष्वासञ्जनेन । आसञ्जनमासत्तिः, तदनुसंधानमित्यर्थः, तेन; ब्रह्मस्वरूपगुणविभूत्यनुसंधानेन । यद्वा स्वशब्देन प्रत्यगात्मोच्यते । तस्य यो गुणविभवः अपहतपाप्मत्वादिगुणसंपत् तदासञ्जनेन तदनुध्यानेन । कनत् अतिशयितं

**शिष्यः**—(सप्रश्रयम्) अमोघाशिषो भगवतः प्रसादेन सिद्धमेव मे सर्वं समीहितम् । अथ [1]च भगवन्, यदहमिह किंचित् पृच्छामि तद्यदि श्रावयितुमर्हामि, श्रावयितव्योऽस्मि ।

**गुरुः**—[2]भद्र, सम्यगुपसन्नस्य सच्छिष्यस्य समये सति किं न श्रावयितव्यम् ?

**शिष्यः**—भगवन्, विगृह्य कथाकरणं महर्षिभिः प्रतिषिध्यते । वादेन ब्राह्मणं जित्वा हृष्टस्य पापिष्ठस्य पादपत्वप्राप्तिश्च प्रतिपाद्यते । तत् कथमिदानीं विजिगीष्यन्ते विपक्षवादिनः[3] ।

**गुरुः**—(सप्रसादम्) भद्र, साधुबुद्धिना त्वया सम्यगनुयुज्यते । किंतु वर्णाश्रमजातिगोत्रप्रवरकुलचरणदेशकालविषयादि-

### प्रभाविलासः

**वादेनेति** । अनेन

"वादेन ब्राह्मणं जित्वा हृष्टो भवति यो द्विजः ।
श्मशाने पादपः स स्यात् कङ्कगृध्रनिषेवितः ॥"

इति वचनं स्मारितम् । **वर्णः** ; ब्राह्मणत्वादिः । **जातिः** ; देवत्वादिः, विशिष्टमातापितृजन्यत्वं वा । **गोत्रम्** ; कूटस्थऋषिनामकीर्तनम् । **प्रवरः** ;

### प्रभावली

महानन्दं यद्ब्रह्म, तदनुभवस्य बहुविधाः परिवाहाः तव मनस्याविर्भूयासुरिति ; परब्रह्मानुभवजनितहर्षप्रकर्षस्तव मनसि जायतामिति भावः ॥ १६ ॥

**सर्वं समीहितम्** ; ऐहिकं परपक्षविजयादि, आमुष्मिकं च निःश्रेयसादि समीहितमभिलषितमित्यर्थः । **अथच** ; अथापि । **सम्यगुपसन्नस्य** ; शास्त्रोक्त

[1] अथवा—घ. [2] भद्र omitted—ग. [3] विपक्षपातिनः—घ.

भेदेन व्यवस्थितैव हि विधिनिषेधमर्यादा । तदहमिदानीं परिगृहीत-नियमानुगुणं स्वयं विपक्षनिरसनमकुर्वाणः कौशिक इव राघवं त्वां पुरस्कृत्य कुदृष्टीन् बाह्यांश्च निराचिकीर्षामि । तत्र च,

**दूरे भवतु ते वीर जल्पः सह वितण्डया ।**
**त्वमेव स्थिरवादात्मा निरुन्धि परिपन्थिनः ॥ १७ ॥**

### प्रभाविलासः

वंश्यऋषिगणनामकीर्तनम् । **कुलम्;** वंशः । **चरणम्;** बह्वृचत्वाद्यवान्तर-जातिः । **दूर इति** । स्वपक्षस्थापनपरपक्षदूषणवान् जल्पः । स्वपक्षस्थापनहीनपरपक्षदूषणमात्रपर्यवसाना वितण्डा । तत्त्वबुभुत्सोः प्रश्नप्रतिवचनरूपकथा वादः ॥ १७ ॥

### प्रभावली

क्रमेण गुरुमुपसन्नस्य सच्छिष्यस्य; "सद्बुद्धिः साधु सेवी" इत्यादिशिष्य-गुणयुक्तस्य शुश्रूषोः । **समये ;** योग्यकाले । सर्वं श्रावयितव्यमेव । **विगृह्य ;** विजिगीषुर्भूत्वा । अत्र प्रमाणं दर्शयति—**वादेनेति** ।

" वादेन ब्राह्मणं जित्वा हृष्टो भवति यो द्विजः ।
श्मशाने पादपः स स्याद् गृध्रकङ्कनिषेवितः ॥ "

इति स्मृतिवचनस्यार्थं संगृह्य दर्शयति—वादेन ब्राह्मणं जित्वेत्यादिना । **विजिगीष्यन्ते ;** विजेतुमिष्यन्ते विरुद्धपक्षवादिनः । **प्रसादः ;** अनुग्रहः । **अनुयुज्यते ;** प्रश्नः क्रियते । **किंतु ;** तत्र वक्तव्यमस्ति किंचिदित्यर्थः । "न विगृह्य कथां कुर्यात्" इत्यादि तूत्तमाश्रमिविषयं, न गृहस्थविषयमिति दर्शयितुं तावद्विधि-निषेधमर्यादाया व्यवस्थामाह । **विधिः ;** इदं कुर्यादित्येवंरूपः । **निषेधः ;** इदं न कुर्यादित्यादिरूपः । तयो**र्मर्यादा ;** नियमः । **व्यवस्थितैव ;** विषयभेदेन व्यवस्थापिता ; सद्भिरिति शेषः । केन प्रकारेणेत्यत्राह—**वर्णाश्रमादीति** । **वर्णः ;** ब्राह्मण्यादिः । **आश्रमः ;** ब्रह्मचर्यादिः । **जातिः ;** प्रसिद्धा । **गोत्रम् ;** प्रसिद्धम् । **प्रवरः ;** त्र्यार्षेयपञ्चार्षेयादि । **कुलम् ;** स्मार्तादि । **चरणम् ;** ऋग्यजुःसामादि ।

अथवा त्वया[1] मन्निदेशानुवर्तिना कौशिकनियमितेन राघवेणेव साधिकारेण[2] यथाविधि वीतरागकथानवसरे वेदेश्वरविदूषकाः सर्वे तत्त्वाध्यवसायसंरक्षणार्थमनुज्ञाताभ्यां[3] बलातिबलाभ्यामिव जल्पवितण्डाभ्यामपि जेतव्याः ।

**शिष्यः**—(साञ्जलिबन्धम्) शिरसा प्रतिगृहीतोऽयं भगवतः समादेशः । अथापि भगवता विश्वाचार्येण[4] कथमिह मितंपचे मयि कथकभार[5] आरोप्यते ?

**गुरुः**—अवधार्यतामेतत्—

**नित्यक्षिप्तपरस्परेषु समयग्रामेषु निष्णातिनः**
**शिष्याः केचन सन्ति नः क्षितितले शिक्षाधिकग्राहिणः ।**

प्रभाविलासः

**मितंपचे**; क्षुद्रे । **नित्येति** । **समयग्रामेषु**; सिद्धान्तसमूहेषु । **निष्णातिनः**; निष्ठावन्तः । **शिक्षाधिकग्राहिणः**; शिक्षितकक्ष्याया अविरोधे-

**प्रभावली**

**देशः**; द्रमिडकर्णाटादिः; **कालः**; अहोरात्रादिः । आदिशब्देनावस्थादि गृह्यते । अतोऽत्र निन्दार्थवादानुरोधेन ब्राह्मणजयनिषेधोऽपि न गृहस्थविषय इति भावः । ततः किमित्यत्राह—**तदहमिति** । **नियमः**; संन्यासनियमः । **निराचिकीर्षामि**; निराकर्तुमिच्छामि । **तत्र**; त्वया वादकरणेऽपि । **जल्पः**; विजिगीषुकथा । **वितण्डा**; स्वपक्षस्थापनहीना । **स्थिरो** यो वादः तत्त्वनिर्णयार्थं **प्रवृत्ता** कथा, तत्स्वरूपः **त्वमेव निरुन्द्धि**; निरस्य । **परिपन्थिनः**; शत्रून् ॥ १७ ॥

पक्षान्तरमाह—**अथवा त्वया त्विति** । **निदेशः**; आज्ञा मन्नियमनमेवा

[1] तु added after—क. घ. ङ. [2] लब्धाधिकारेण—ग.
[3] अनुगृहीताभ्यां—च. [4] भवता added after—ग. च. [5] कथाभारः—क.

तत्र त्वद्भुतनिर्भरप्रसरया बुद्ध्या परिष्कारिण-
स्त्वत्तः प्रत्ययितो न कश्चिदपरः प्रत्यर्थिभिः प्रार्थितः ॥१८॥

प्रभाविलासः

नोत्तरकक्ष्याविशेषकल्पनचतुराः । **तत्र**; तेषां मध्ये । **अद्भुतनिर्भरप्रसरया**; विस्मयनीयपरिपूर्णवैशद्ययुक्तया । **परिष्कारिण** इति पञ्चमी । **प्रत्ययितः**; विश्वस्तः । प्रयोजकान्तरमाह—**प्रत्यर्थिभिरिति** । अत्रोत्तरं नामालंकारः, "तदुत्तरमिहोत्कर्षो योऽर्थानामुत्तरोत्तरम्" इति लक्षणात् ॥ १८ ॥

प्रभावली

धिकारः, तद्वता । **वेदेश्वरविदूषकाः**; बाह्याः । **तत्त्वाध्यवसायसंरक्षणार्थमिति** गौतमसूत्रैकदेशः[1] । तत्र नास्तिकनिरासे जल्पवितण्डे अपि प्रयोक्तव्ये इत्यनुज्ञाते; ताभ्याम् । **बलातिबले** नाम विद्ये विश्वामित्रेण श्रीरामायोपदिष्टे; ताभ्याम् । यथा रामेण राक्षसा जिताः, एवं जल्पवितण्डाभ्यामपि त्वया जेतव्याः । **समादेशः**; उपदेशः, शासनमित्यर्थः । **भगवता**; सर्वज्ञेन । **मितंपचे**; क्षुद्रे । महावादिनां भारः तत्कृत्यनिर्वहणम् अशक्ते आरोप्यते वत्से महोक्षभर इवेति भावः । **अवधार्यताम्**, श्रूयताम् । **नित्येति** । नित्यं परस्परं प्रतिक्षिप्तेषु चार्वाकबौद्धादिसिद्धान्तगणेषु । **निष्णातिनः**; अतिपरिचयकुशलाः । निष्णातं कौशलं येषामस्तीति निष्णातिनः । **शिक्षाधिकग्राहिणः**; आचार्येण यच्छिक्ष्यते ततोऽप्यधिकग्राहिणः, अनुक्तमप्यूहितुं दक्षाः । **तत्र**; तेषां शिष्याणां मध्ये । तुरवधारणे । अद्भुतं यथा तथा निर्भरः पूर्णः प्रसरो ग्रहणशक्तिर्यस्याः सा; तया बुद्ध्या । **परिष्कारिणः**; अलंकारवतः । **त्वत्तो मे प्रत्ययितः**; मम संमतः । अयमेव वादिनो जये समर्थ इति मनसा सविश्वासं परिगृहीतः । **प्रत्यर्थिभिः**; परवादिभिः । **प्रार्थितश्च**; अनेन चेद्वादं कुर्मः, नान्येनासदृशेनेति प्रार्थितः । न कश्चिदस्ति । अतस्त्वय्यारोप्यत इति भावः ॥ १८ ॥

[1] *Vide*—न्यायसूत्रम्—४-२-४८.

**शिष्यः**—यदादिशति भगवान्। अत्र तु कंचित्[1] सिद्धान्तमनवलम्ब्य न कापि[2] कथा प्रवर्तते। अतः[3] स्वाभिमते कुत्रचिन्मामवस्थापयतु भवान्।

**गुरुः**—भद्र, इह किल सयूथ्यकलहे[4] समानतन्त्रे त्वया स्थातव्यम्। विपक्षविप्रतिपत्तौ तु वेदान्तसिद्धान्ते[5]। तत्रापि पराशरपाराशर्यशुकशौनकबोधायनप्रभृतिभिः परिचितं पन्थानमाश्रित्य परमार्थदर्शिदेशिकदत्तदृष्टिभिरस्माभिः परिमितविशदगम्भीराः पञ्चषाः प्रबन्धाः[6] प्राबन्धिषत; तेष्ववहितचेतसा त्वया[7] प्रतिसंहितपरमार्थेन[8] पारिषद्हृदयंगमाः प्रमाणतर्काः प्रयोक्तव्याः।

## प्रभाविलासः

**समानतन्त्रे**; साधारणशास्त्रे। **पञ्चषाः**; पञ्चषट्संख्याकाः। ते च

## प्रभावली

**यदादिशति भगवान्**; तर्हि तथा करोमीति शेषः। पुनरपि किंचित्पृच्छति—**अत्र त्विति**। **स्वाभिमते कुत्रचित्**; सिद्धान्ते। **अवस्थापयतु**; निवेशयेत्यर्थः। **इह**; सिद्धान्तावलम्बनविषये। **सयूथ्याः**; समानतन्त्राः, तैः सह कलहे। **समानतन्त्रे**; अभिन्नप्रस्थानैकशास्त्रे स्थातव्यम्। **विपक्षः**; सिद्धान्तान्तरावलम्बी, तस्य **विप्रतिपत्तौ**; तेन सह कलह इत्यर्थः। **वेदान्तसिद्धान्ते**; स्थातव्यमित्यनुवर्तते। **परिचितं पन्थानम्**; वेदान्तमार्गम्। **परिमिताः**; अल्पाः ग्रन्थाः सारदीपादयः। **विशदाः**; प्रसन्नाः। अथ च **गभीराः** दुर्ग्रहतात्पर्यत्वात्। **पञ्चषाः**; पञ्च वा षड्वा पञ्चषाः। **प्रबन्धाः**; श्रीभाष्यादयः। **प्राबन्धिषत**; प्रणीता

[1] कथंचित्—ख. [2] कदाचिदपि—क. ख.
[3] ततः—क. तत्र—घ. [4] स्वयूथ्यकलहे—ख.
[5] राद्धान्ते—क. [6] सार, संग्रह, दीप, भाष्य, गीताभाष्य, गद्यत्रयरूपाः।
[7] स्थातव्यम् added after—च. [8] पारमार्थ्येन—ख. ग.

**शिष्यः**—भगवति प्रसेदुषि न क्वचित्प्रमाद्यामि । यतः,

**गुरुप्रसदनस्फुरद्गुणगरिम्णि यन्मानसे**
**सकृत्स्फुरति वस्तु तन्न हि किमप्यपभ्रश्यति ।**
**ऋषिस्तदितरोऽपि वा यदि गृणाति गत्यन्तरं[1]**
**विकल्प्य[2] तदपि क्षणाद्विलयमभ्युपैति स्वयम् ॥ १९ ॥**

### प्रभाविलासः

संक्षिप्तमिति श्लोकेन वक्ष्यन्ते । **गुर्विति** । गुरोः प्रसदनं प्रसादः, तेन स्फुरन्तो गुणाः वैशद्याप्रमादाविस्मरणादयः, तैर्गरिमयुक्ते श्रेष्ठे । "गुरुस्तु गीष्पतौ श्रेष्ठे गुरौ पितरि दुर्भरे" इति निघण्टुः । **मानसे** यद्वस्तु सकृत् स्फुरति, तत् किमपि किंचिदपि नापभ्रश्यति । **तत्**; वस्तु । **ऋषिः तदितरः**; तथाविधबुद्धिशाली कश्चिदन्यः । **विकल्प्य**; विकल्पं प्राप्येत्यर्थः ॥ १९ ॥

### प्रभावली

इत्यर्थः । **अवहितचेतसा**; सावधानं निहितमनस्केन । **प्रतिसंहितः** अनुसंहितः परमार्थः येन; परमार्थप्रतिसंधानवता; सिद्धान्तमलङ्घयतेत्यर्थः । **पारिषदाः**; सभ्याः, तेषां मनोहराः प्रमाणानि तर्काश्च प्रयोक्तव्याः । **भगवतीति** । त्वत्प्रसादे सति न क्वचिन्मम प्रमादो भविष्यतीत्यर्थः । **यतः**; एवं सति । **गुर्विति** । गुरुप्रसादेन स्फुरतां गुणानां बाहुल्यवति मानसे शिष्यस्य मानसे यद्वस्तु, अर्थविशेष इत्यर्थः, **सकृत्** एकवारं स्फुरति, तत्किमपि किंचिदपि नापभ्रश्यति हि न विस्मृतं भवति । शिलालिखितमिव स्थिरं भवतीत्यर्थः । **ऋषिर्वा** मनुष्यो वा गुरुप्रसादात् स्फुरितेऽर्थे गत्यन्तरम अर्थान्तरं परिकल्प्य गृणाति दूषयति । **तदपि**; तद्दूषणमपि । **विकल्प्य** बहुधा विकल्पितं सत् क्षणाद्विलयं स्वयमेवाभ्युपैति, दूषितं भवति । शिष्येणेति शेषः । गुरुप्रसादस्फुरितस्य न कुतश्चित्प्रतिहतिर्भवतीति भावः ॥१९॥

[1] युक्त्यन्तरं—क. [2] विकल्प्येत्यत्र तच्छब्दार्थस्यैव कर्तृत्वविवक्षया समानकर्तृकत्वान् ल्यबुपपत्तिः । तदपि स्वयमेवात्मानं विकल्प्य लयमुपैतीत्यर्थः ।

**गुरुः**—भद्र, विश्वव्यामोहनविषमयुक्तिभयात् त्वां नित्य-मवधानेन योजयामि । इह हि—

**कुटिलमतिभिः क्लृप्ता बाह्यैः कुदृष्टिभिरप्यसौ**
**कथकपरिषद्धौरेयाणामपि क्षणकर्कशा ।**
**प्रलपनगुणीभूतालीकप्रकाशनपत्रला**
**युवतिहृदयक्रूरा युक्तिर्युनक्त्यमितं भयम् ॥ २० ॥**

प्रभाविलासः

**कुटिलेति । कुटिलमतिभिः;** कपटबुद्धिभिः । **बाह्यैः;** चार्वाकैः । **कुदृष्टिभिः;** मायिभिः । कथितेति शेषः । **कथकपरिषद्धौरेयाणाम्;** जल्प-वितण्डाभेदधुरंधराणामपि । **क्षणकर्कशा;** किमुत वादमात्रपारदर्शिनामिति भावः । **प्रलपनम्;** निरर्थकशब्दाडम्बरम्; तस्य गुणीभूतं **यदलीक-प्रकाशनम्;** अप्रामाणिकार्थकथनम्; तेन **पत्रला;** व्याप्ता । "किं क्रूरं स्त्रीहृदयम्" इत्यादिप्रसिद्ध्या **युवतिहृदयक्रूरे**त्युक्तम्; तेन स्वाभिमताभि-निवेशेन प्रमाणतर्कविसंवाद्यर्थस्यासहनं व्यञ्जितम् । अत्र शिष्यविषयः प्रणयो व्यज्यते ॥ २० ॥

प्रभावली

**विश्वेति । विश्वव्यामोहनाय** विषमयुक्तयः दुर्वादिनां कुयुक्तयः, तद्भयात् सावधानो भवेति पुनः पुनः कथयामि । **इह हि;** वादे । **कुटिलेति ।** वक्र-बुद्धिभिः **क्लृप्ता** कल्पिता **असौ युक्तिः** अनुमानादिरूपा वादगोष्ठीधुरंधरा-णामपि क्षणमात्रं कठिना अप्रकाशमाना । **प्रलपनं** जल्पः, तस्य गुणीभूता । अनृतार्थप्रकाशनैः **पत्रला** संनद्धपल्लवा; आपादचूडमनृतप्रकाशिनीत्यर्थः । यद्वा प्रलपनस्य गुणीभूतमुपसर्जनीभूतं यदलीकं तत्प्रकाशनपरा । युवतिः स्त्री, तद्धृदय-वत् कठिना । अमितं भयं जनयति यतः, अतः सावधानमिति पुनः पुन-रुच्यते ॥ २० ॥

**शिष्यः**[1]**—**भगवन्, मय्यतिस्नेहेन नूनमियमतिशङ्का तत्रभवताम्[2] ।

**त्वया दर्शितसर्वार्थे त्वन्निदेशव्यवस्थिते ।**
**कथं कथकमानी स्यात्कश्चिदन्यो मयि स्थिते ॥ २१ ॥**

**गुरुः—**भद्र, इदमपि पुनर्मन्वीथाः ।

**शिष्यः—**अनुगृह्णन्तु भगवन्तः[3] ।

**गुरुः—**

**संक्षिप्तं विस्तृतं वा सरलसमुचितं सावधानप्रियं वा**
**प्राधान्येन प्रणीतं परभणितिपरिष्कारवृत्त्या स्थितं वा ।**

**प्रभाविलासः**

**त्वयेति;** उपदेशप्रयुक्तनिर्विचिकित्सतोक्तिः । **त्वन्निदेशव्यवस्थिते इति;** सिद्धान्तातिक्रमे गर्वादिदोषराहित्यमुक्तम् । **मयि स्थित इति;** वादिदौर्बल्यं निवारितम् । **कश्चित्;** कश्चन; न कोऽपीत्यर्थः ॥ २१ ॥

**संक्षिप्तमिति** । **संक्षिप्त**मित्यनेन वेदान्तदीपः । **विस्तृत**मित्यनेन श्रीभाष्यम् । **सरलानाम्;** उदारमतीनां समुचितमिति वेदार्थसंग्रहः । **सावधानानां प्रियमिति** वेदान्तसारश्च व्यञ्जितः । **प्राधान्येन प्रणीतमिति** गद्यत्रयोक्तिः । **परभणितिपरिष्कारवृत्त्या;** श्रीभगवद्गीताभाष्यरूपेण-

**प्रभावली**

**अतिशङ्का;** शङ्काया अविषयेऽपि शङ्का । त्वच्छिष्ये मयि स्थिते को वान्यः कथकाभिमानी स्यादित्याह—**त्वयेति** । **मयि स्थिते;** मम पुरत इत्यर्थः । न कश्चिदपीति भावः ॥ २१ ॥

**मन्वीथाः;** मनसि कुर्वित्यर्थः । **संक्षिप्तम्;** दीपः । **विस्तृतम्;**

[1] इत आरभ्य 'गुरुः—भद्र इदमपि पुनर्मन्वीथाः' इति पर्यन्तं घपुस्तके नास्ति ।
[2] तत्रभवतां omitted—ख. ग.
[3] गुरवः—क.

शिक्षासौकर्यतुष्टिप्रचितगुरुजनानुग्रहेद्धं सुधीभिः
श्रद्धेयं [1]नाथजुष्टश्रुतियुवतिशिरोभूषणं भाषणं नः ॥ २२ ॥

## प्रभाविलासः

त्यर्थः । यद्वा श्रीभाष्यमेवोक्तसर्वलक्षणम् । तथाहि--लघुपूर्वपक्षसिद्धान्तादौ संक्षेपः । महापूर्वपक्षसिद्धान्तादौ विस्तरः । प्रसन्नत्वेन सरलत्वम् । गम्भीरतया सावधानप्रियत्वम् । क्वचिदुद्ग्रन्थवृत्त्या प्राधान्यम् । श्रुतिप्रक्रियादौ परभणितिपरिष्कार इति । **शिक्षासौकर्येण** सकृदुपदेशग्रहणधारणादिना जातया तुष्ट्या हर्षेण प्रचितेन प्रवर्धितेन गुरुजनस्यानुग्रहेणेद्धं प्रवर्धमानम् । **नाथजुष्टाया** ईश्वरतात्पर्यवत्याः श्रुतियुवतेः शिरोभूषणं वेदान्तहृदयंगममित्यर्थः ॥ २२ ॥

## प्रभावली

श्रीभाष्यम् । वाशब्दश्चार्थे । **सरलाः**, ऋजुबुद्धयः; तेषां **समुचितं** गद्यत्रम् । **सावधानानां प्रियम्**; सारः । **प्राधान्येन प्रणीतम्**; व्याख्येयत्वेन निर्मितं वेदार्थसंग्रहः । **परभणितिपरिष्कारवृत्त्या**; परस्य भगवतो भणितिः गीता, तस्या अलंकारतया । **स्थितम्**; व्याख्यानरूपतया स्थितम; व्याख्यानं हि व्याख्येयस्यालंकारः; गीताभाष्यम । संक्षिप्तं वा भवतु; विस्तृतं वा भवतु; ऋजुबुद्धिग्राह्यं वा भवतु; सावधानग्राह्यं वा भवतु; व्याख्यानरूपं वा भवतु । **शिक्षेति**; **प्रमेया**र्जवसूत्रस्वारस्यादिभिरत्र शिक्षा सुकरा भवति । शिक्षासौकर्येण जातया तुष्ट्या प्रचितस्य पूर्णस्य गुरुजनस्यानुग्रहेण **इद्धम्**; दीप्तम् । नाथेन भर्त्रा भगवता जुष्टायाः श्रुतियुवत्याः शिरोभूषणं वेदान्तपरिष्काररूपं नो भाषणं सुधीभिः श्रद्धेयम । अन्येषां पक्षे श्रुतिर्नाथजुष्टा न भवति, नाथस्य ब्रह्मणोऽन्यथाकरणादिति भावः ॥ २२ ॥

[1] नाथजुष्टं—घ.

**शिष्यः**—किमुच्यते ? उपनिषदुपघ्नभूतानि खलु भगवतो भाषितानि । तथाहि—

**अनुदिनमनपायस्नेहदत्तावसेकैः**
**सुमतिभिरनुभाव्यः शोभनायां दशायाम् ।**
**शरणमुपगतानां प्रीणनार्थं भवद्भि[1]-**
**र्भवकलुषनिशीथे भावितो भाष्यदीपः ॥ २३ ॥**

### प्रभाविलासः

**उपघ्नः;** अन्तिकाश्रयः । **अनुदिनमिति । स्नेहः;** अनुरागः, तैलं च । **सुमतिभिः;** ज्ञानिभिः, कुशलैश्च । **दशायाम्;** अवस्थायां, वर्त्यां च । **शरणम्;** रक्षकं, गृहं च; "उपाये गृहरक्षित्रोः शब्दः शरणमित्ययम्" इत्युक्तत्वात् ॥ २३ ॥

### प्रभावली

**किमुच्यते;** किं वक्तव्यमिदं भवतेत्यर्थः । **उपनिषदामुपघ्नभूतानि** आधारभूतानि दीपादीनि । उक्तमेव द्रढयति—**तथाहीत्यादिना । अनपायस्नेहः;** नित्यादरः, अन्यत्र तैलम् । तेन **दत्तः** संपूरितः **अवसेकः** परिशीलनं वर्त्यवसेको यैस्तैः । **सुमतिभिः;** विद्वद्भिः । **शोभनायां दशायाम्;** सत्त्वोद्रेकावस्थायाम्; अन्यत्र निर्मलवर्त्याम् । **अनुदिनमनुभाव्यः;** अनुसंधेयः । अन्यत्रानुभवितुं योग्यः । **शरणागतानाम्;** प्राप्तोपायानां कृतकृत्यानाम्; अन्यत्र गृहागतानां, प्रीत्यर्थम् । **भवकलुषनिशीथे;** भवकलुषमेव निशीथः; अन्यत्र कलुषोऽन्धकारः, तद्विशिष्टो निशीथः । तत्र **भवद्भिर्भावितः;** आरोपितः ॥ २३ ॥

[1] तत्त्वसंदर्शनार्थमिति पाठोऽपि सांप्रदायिकः ।

अपिच ;

असत्तामुच्छेत्तुं [1]प्रजनयितुमीशप्रसदनं
तमः क्षेप्तुं तत्त्वप्रमितिसुखमुच्छृङ्खलयितुम् ।
अमार्गादाहर्तुं पथि च पदमाधातुमिह न-
स्त्वदादिष्टं शास्त्रं प्रभवति सकृद्भावितमपि ॥ २४ ॥

तथापि [2]पारिप्लवमतिरहमिह किमप्यधिगतप्रमुषितं पृच्छामि ।

गुरुः—किं तत् ?

प्रभाविलासः

**असत्तामिति** । "असन्नेव स भवति । असद्ब्रह्मेति वेद चेत" इत्युक्तलक्षणामसत्प्रायताम् । **तमः**; अज्ञानम् । **पथि**; सन्मार्गे । **शास्त्रम्**; श्रीभाष्यम् । **सकृद्भावितम्**; सकृच्छ्रुतम् ॥ २४ ॥

**पारिप्लवमतिः**; चञ्चलमतिः । "पारिप्लवः परिप्लव इत्येतौ वाच्य-

प्रभावली

किंच त्वदुपदिष्टं शास्त्रं श्रीभाष्यादि सकृत् चिन्तितमप्यनिष्टनिरासायेष्टप्राप्त्यै च भवतीत्याह—**असत्तामिति** । **असत्तामुच्छेत्तुम्**; असद्भावं निरसितुम् । "**असन्नेव** स भवति" इति श्रुत्या पुरुषस्य सत्त्वासत्त्वयोः ब्रह्मज्ञानाज्ञानहेतुकत्वोक्त्या श्रीभाष्यस्य ब्रह्मज्ञानहेतुत्वात्तद्द्वारा असत्तामुच्छेत्तुं शक्नोतीत्यर्थः । **ईशस्य** भगवतः **प्रसादं प्रजनयितुम्**, तथा अज्ञानं निरसितुम्, तत्त्वज्ञानसंजातं सुखं वर्धयितुम् । **पथि**; मोक्षमार्गे । पदन्यासं कर्तुं च सकृच्छ्रुतं श्रीभाष्यादि शास्त्रमेवालमित्यर्थः ॥ २४ ॥

**पारिप्लवमतिः**; चञ्चलचित्तः । **किमपि**; रहस्यम् । **अधिगतं च** तत्प-

[1] प्रगुणयितुं—क.  [2] परिप्लवमतिः—ख.

शिष्यः—

**आदिश्य स्वयमन्यथा नियमयन्नाप्तः कथं कल्पितः?**

गुरुः—[1]अहो नु खलु सूक्ष्मार्था[2]नुयोगकुशलता।

शिष्यः—

**सामग्रीवशदुर्निवारवृजिने शिष्टा निवृत्तिः कथम्?**

गुरुः—तदपि[3] सूक्ष्मात्सूक्ष्मतरमनुयुज्यते।

प्रभाविलासः

वच्चलाकुलयोः" इति निघण्टुः। **आदिश्येति**। "श्रुतिस्मृती ममैवाज्ञा यस्तामुल्लङ्घ्य वर्तते" इत्यादिना विधिनिषेधशास्त्रस्य भगवदाज्ञारूपतया आदिश्येत्युक्तम्। "य आत्मानमन्तरो यमयति" "एष एवासाधु कर्म कारयति" इत्यादिश्रुत्या **अन्यथा नियमयन्नि**त्युक्तम्। "पापकारी पापो भवति" इत्युक्तरीत्या **सामग्रीवशे**त्युक्तम्। "न कलञ्जं भक्षयेत्। न सुरां पिबेत्" इत्यादिना **निवृत्तिः शिष्टे**त्युक्तम्। चेतनाचेतनव्यापारस्य

प्रभावली

मुषितं विस्मृतं च तत। **आदिश्येति**। **आदिश्य**; धर्ममार्गम्; धर्मं कुरु, अधर्मान्निवर्तस्वेति उपदिश्य। **स्वयमन्यथा नियमयन्**; स्वयमेव स्वोपदेशविरुद्धं पुरुषान्नियमयन् पापाचरणे विनियोजयन्। **कथमाप्त** इति कल्प्यते? अन्यथोपदिश्यान्यथा नियमयितुरनाप्तत्वात्। **अनुयोगकुशलता**; प्रश्नकौशलम्। सामग्रीवशान्निवारयितुमशक्ये पापविषये कथं निवृत्तिः शिष्टा? पापं मा कार्षीरिति निराकरणमीश्वरेण कथमनुशिष्यते? **अनुयुज्यते**; पृच्छ्यते। ईश्वरेच्छया भावितं

[1] साधुबुद्धिना त्वया सम्यगनुयुज्यते—क. [2] अर्थ omitted—ख.

[3] तदपि omitted—घ.

**शिष्य:—**

**स्वेच्छाभावितदुष्कृतस्य च कथं दण्ड: स्वयं पातित: ?**

**गुरु:—**

**त्रिष्वप्यत्र न काचिदस्ति विहति: कर्मोपधौ सावधौ ॥२५॥**

### प्रभाविलास:

सर्वस्यापीश्वरेच्छां विनानुत्पत्ते: **स्वेच्छाभावितेत्**युक्तम् । "यमधो निनीषति" इत्याद्यभिप्रायेण **स्वयं पातित** इत्युक्तम् । परिहरति—**त्रिष्विति** । **कर्मोपधाविति** प्रथमतृतीययो: परिहार: । अन्यथा नियमनस्य तत्तत्कर्माधीनतया स्वस्यानुमन्तृतामात्रत्वात नोक्तदोष इत्यर्थ: । अनेन "वैषम्यनैर्घृण्ये न सापेक्षत्वात" इति सूत्रार्थोऽभिप्रेत: । द्वितीयप्रश्नस्य **सावधावि**त्यनेन परिहार: । कर्मणां सावधित्वेन पूर्वाघादीनां प्रायश्चित्तभोगादिना

### प्रभावली

**कृतं** दुष्कृतं यस्य तस्य चेतनस्य स्वयमीश्वरेणैव दण्ड: शिक्षा कथं पातित: विहित: । प्रश्नत्रयस्योत्तरमाह—**त्रिष्वपीति** । त्रिष्वपि प्रश्नेषु न काचिद्विहतिरस्ति, विरोधो नास्ति । कुत: ? त्रयाणां कर्मोपाधिकत्वात्, कर्मण: सावधिकत्वाच्च । **अयमत्र** विवेक:—ईश्वर: करणकलेबरप्रदानसमये पुंस: कर्तृत्वशक्तिमपि प्रयच्छति । तद्दत्तया च तया पुरुषो ज्ञानचिकीर्षाप्रयतनादि कुर्वन् वर्तते । ईश्वरोऽपि तत्तत्कर्मानुगुणं दुष्कृतविषय उपेक्षाम्, सुकृतविषयेऽनुमन्तृत्वं च कुर्वन् निग्रहानुग्रहौ करोति । यथोक्तं श्रीवरदाचार्यै:—

"आदावीश्वरदत्तयैव पुरुष: स्वातन्त्र्यशक्त्या स्वयं
तत्तज्ज्ञानचिकीर्षणप्रयतनान्युत्पादयन्वर्तते ।
तत्रोपेक्ष्य तथानुमत्य विदधत्तन्निग्रहानुग्रहौ
तत्तत्कर्मफलं प्रयच्छति तत: सर्वस्य पुंसो हरि: ॥"

**शिष्यः**—(सहर्षम्) परिमितगहनगम्भीरमिदं पटुमति-निर्धारणीयं भाषितं भगवतः। इदमेव सभासदः श्रावयामि—

**इदंप्रथमसंभवत्कुमतिजालकूलंकषा**
**मृषामतविषानलज्वलितजीवजीवातवः।**

**प्रभाविलासः**

नाशे निवृत्तिशास्त्रानुसारेणोत्तराघानुत्पादे च सामग्र्या एवोच्छेदान्निवृत्ति-शास्त्रं सप्रयोजनमिति भावः। एवं शिष्यसंशये निर्णयोपदेशात् विचारो नाम नाट्यालंकारः। "विचारः स हि विज्ञेयः संशये निर्णयस्तु यः" इति लक्षणात् ॥ २५ ॥

**इदंप्रथमेति।** **इदं प्रथमं** नूतनं यथा भवति तथा संभवतां कुमतीनां जालस्य कूलंकषाः बाधकाः। **मृषामतेनैव** विषानलेन ज्वलितानां

**प्रभावली**

इति। तस्मादाप्तस्याप्युपदेष्टुरीश्वरस्य तत्तत्कर्मानुगुणमुपेक्षानुमन्तृत्वरूपं नियमन-मपि नानुपपन्नमिति प्रथमप्रश्नस्योत्तरम्। कर्मोपाधेरुत्तरावधिसहितत्वात् वृजिने निवृत्तिः शासितुं शक्येति द्वितीयप्रश्नस्योत्तरम्। न च शासनवैयर्थ्यम्, कर्माधीनत्वात् प्रवृत्तिनिवृत्त्योर्विधिनिषेधयोः पुण्यापुण्यफलत्वज्ञापनार्थत्वात्। तदुक्तम्—"श्रुतिस्मृतिर्ममैवाज्ञा" इति। पूर्वावधिरहितकर्मसहितेश्वरेच्छा दुष्कृतं भावयतीति तृतीयप्रश्नस्योत्तरम्, अन्यथा वैषम्यनैर्घृण्यप्रसङ्गादिति। स्वयमन्यथा नियमनं पूर्वकर्मोपाधिना। कर्मोपाधेरुत्तरावधिसहितत्वात् निवृत्तिरपि शासितुं शक्यते। ईश्वरेच्छायाः पूर्वकर्मोपाधिसहितत्वात् पुंसि दण्डपातनमपि युक्तमेवेति त्रयाणां प्रश्नानां समाधानमिति ॥ २६ ॥

**सहर्षमिति**; कृतप्रश्नानामुत्तरदानात्। परिमितत्वात् **गहनम्**, अल्पमति-भिर्दुरवगाहम्। **गम्भीरं च**; सूक्ष्मबुद्धिभिर्ज्ञेयार्थं च। **इदमेव**; भगवतो भाषित मेव। **सभासदः**; सभ्यान्। **इदमिति।** इदंशब्देनाद्यतनः काल उच्यते। स एव प्रथमदिवसो यस्मिन् कर्मणि तथा, संभवत् इदानींतनं यत् कुमतिजालं बाह्यकु-

क्षरन्त्यमृतमक्षरं यतिपुरंदरस्योक्तय-
श्चिरंतनसरस्वतीचिकुरबन्धसैरन्ध्रिकाः ॥ २६ ॥

अपिच,

चिन्ताशेषदुरर्थदन्तुरवचःकन्थाशतग्रन्थिलाः
सिद्धान्ता न समिन्धते यतिवरग्रन्थानुसंधायिनि ।

प्रभाविलासः

जीवानां जीवातवः जीवनौषधानि । "जीवातुर्जीवनौषधम्" इति निघण्टुः । **अमृतम्**; मोक्षम् । **चिरंतनसरस्वत्याः** त्रय्याः चिकुरबन्धसैरन्ध्रिकाः प्रसाधनकारिकाः । "सैरन्ध्री परवेश्मस्था स्ववशा शिल्पकारिका" इति निघण्टुः । अनेन तैस्तैः कुदृष्टिभिः स्वदर्शनानुसारेणार्थवैविध्यवर्णनेन व्याकुलितस्य वेदान्तजातस्य समीचीनार्थकथनेनाऽव्याकुलितत्वमुक्तम् । अत्र सरस्वतीति स्त्रीलिङ्गेनालम्बनविभावश्चिकुरबन्धेत्यालम्बनगुणश्चोक्त इति शृङ्गाररसो व्यङ्ग्यः ॥ २६ ॥

**चिन्ताशेषेति** । **चिन्तैव** शेषो येषां तानि; न तु तत्त्वार्थज्ञान-

प्रभावली

दृष्टीनां जालं, तस्य **कूलंकषाः** उन्मूलनं कुर्वन्तः; आधुनिककुमतिमतजालोत्पाटनसमर्था इत्यर्थः । **मृषामतम्**; मायावादः; स एव **विषानलः**, तेन ज्वलितानां जीवानां **जीवातवः** जीवनौषधानि । **चिरंतनसरस्वत्यः** वेदवाचः, तासां चिकुरबन्धः कुन्तलबन्धः; उपनिषद इत्यर्थः; तस्य **सैरन्ध्रिकाः**; अलंकर्त्र्यः । यतिश्रेष्ठस्योक्तयः श्रीभाष्यादयः । **अक्षयममृतं** मोक्षं **क्षरन्ति** स्रवन्ति; ददतीत्यर्थः । पीयूषपक्षे श्रोत्रयोरिति शेषः ॥ २६ ॥

गुरुग्रन्थान् पुनरपि प्रकारान्तरेण स्तौति—**अपिचेत्यादि** । चिन्तैव शिष्यते येषु तानि चिन्ताशेषाणि, न तत्त्वार्थज्ञानजनकानि । दुरर्थैः दुष्टार्थैः **दन्तुराणि** विषमाणि । तानि **वचःकन्थाशतानि**; ततस्तत आहृत्य प्रथिता

[1]मुक्ताशुक्तिविशुद्धसिद्धतटिनीचूडालचूडापदः
किं कुल्यां कलयेत खण्डपरशुर्मण्डूकमञ्जूषिकाम् ॥ २७ ॥

### प्रभाविलासः

जनकानीत्यर्थः । दुर्थानि च दन्तुराणि च वचांसि, तान्येव कन्थाशतानि, तैर्ग्रन्थिला ग्रन्थियुक्ताः । **मुक्ताशुक्तिव**द्विशुद्धया सिद्धतटिन्या आकाशगङ्गया चूडालमवतंसितं चूडापदं शिरो यस्य सः । **खण्डपरशुः**; शिवः । **मञ्जूषिकाम्**; पेटिकाम् । **कुल्या**; अल्पा कृत्रिमा सरित् । चिन्ताशेषेत्यधिकरणविषयवाक्यसंशयानां प्रायो वैरूप्यमुक्तम्, निष्फलत्वं वा । दुर्थेति पूर्वपक्षसिद्धान्तयोरप्रमाणमूलत्वमुक्तम् । दन्तुरेति तत्रापि कुटिलकुदृष्टिकल्पनोक्तिः । वचःकन्थेति व्याख्यानव्याख्येयापदेशेन चतुष्पञ्चग्रन्थशबलितत्वेन दुःशब्दत्वोक्तिः । तस्या व्यापित्वं वक्तुं शतेत्युक्तिः । तत्र च दुर्थातिसंकटरचनमभिप्रेत्य ग्रन्थिला इत्युक्तम् । विवरणवाचस्पत्यसुरेश्वरवार्तिकानामेककर्तृकमतव्याख्यानप्रवृत्तावपि परस्परविहतैकाविद्यानानाविद्यादिभेदेन प्रस्थानभेदात् सिद्धान्ता इत्युक्तिः । **अनुसंधायिनि**; अध्ययनपाटववति । **न समिन्धते**; न स्वाद्या भवन्तीत्यर्थः । अत्र सर्वत्र भाष्यकारशिष्यादिविषयकरतिः प्रतिश्लोकं प्रतीयत इति भावध्वनिभेदा द्रष्टव्याः ॥ २७ ॥

### प्रभावली

कन्था । वचांस्यपि ततस्ततोऽपहृत्य निवेशितानीति भावः । तैः **ग्रन्थिलाः** संजातग्रन्थयः । **सिद्धान्ताः**; इतरसिद्धान्ताः । **यतिवरग्रन्थानुसंधायिनि**; श्रीभाष्याद्यनुसंधानवति पुंसि । **न समिन्धते**; प्रबन्धतया न शोभन्त इत्यर्थः । दृष्टान्तमाह—**मुक्ताशुक्तिभिः** विशुद्धा या सिद्धतटिनी गङ्गा, तया चूडालं संजातचूडं, चूडापदं शिरो यस्य सः । **खण्डपरशुः**; रुद्रः । **मण्डूकमञ्जूषिकाम्**;

[1] मुक्ताशिल्प—च.

भगवन्, अपरिमितबहुमतावष्टब्धे जगति परिमितमेतद्भवन्मतमिति [1]पारिषदपार्श्ववर्तिनः केचित्प्रलपन्ति। प्रतिवदामि तावदेतान्। (परिवृत्यावलोक्य च) भो भो देवानांप्रियाः,

**कुमतिविहितग्रन्थग्रन्थिप्रभूतमतान्तर-**
**ग्रहिलमनसः [2]पश्यन्त्वल्पां यतीश्वरभारतीम्।**
**विकटमुरभिद्वक्षःपीठीपरिष्करणोचितः**
**कुलगिरितुलारोहे भावी कियानिव कौस्तुभः ॥ २८ ॥**

## प्रभाविलासः

**अपरिमितेत्यादि**। एतान् प्रतिवदामीत्यनेन विमाननं नाम प्रतिमुखसंधेरङ्गमुक्तम्, "अनिष्टवस्तुविक्षेपो विमाननमितीर्यते" इति लक्षणात्। **कुमतीति**। कुमतिभिः शंकरादिभिर्विहिता ग्रन्था एव ग्रन्थयः, ताभिः प्रभूतेषु प्रचुरेषु मतान्तरेषु ग्रहिलमनसः संलग्नमनसः। न च महत्त्वाल्पत्वयोर्गुणदोषप्रयोजकत्वमित्याह—**विकटेति**। **विकटायाः** विस्तृतायाः मुरभिद्वक्षःपीठ्याः परिष्करणे अलंकरणे उचितः। **कुलगिरिः**; मन्दराद्रिः; तेन तुलारोहे। ग्रहिलमनस इत्यल्पत्वदर्शने हेतुर्दोष उक्तः ॥ २८ ॥

## प्रभावली

भेकपेटिकाभूताम्। **कुल्याम्**; अल्पां कृत्रिमसरितम्। **कलयेत**; सिन्धुत्वेन गणयेत् किमित्यर्थः ॥ २७ ॥

बहुमतानि; बहूनि दुर्मतानि; तैः आक्रान्ते जगति। **भवन्मतमिति**; लक्ष्मणार्यमतमिति। **देवानांप्रियाः**; अजाः, अजसदृशाः। **कुमतीति**; कुमतिभिः विहिताः ग्रन्था एव ग्रन्थयः, तैः प्रभूतानि महत्तराणि, तेषु मतान्तरेषु ग्रहिल-

[1] पार्षद—ङ. च. छ. [2] पश्यन्त्वल्पां—ग. च. छ.

अपिच—

**स्थविरनिगमस्तोमस्थेयां यतीश्वरभारतीं**[1]
**कुमतिभणितिक्षोभक्षीबाः क्षिपन्तु भजन्तु वा ।**
**रसपरिमलश्लाघाघोषस्फुटत्पुटभेदनं**
**लवणवणिजः कर्पूरार्घं किमित्यभिमन्वते ॥ २९ ॥**

प्रभाविलासः

**स्थविरेति** । **स्थविरनिगमानां** वेदानां स्तोमेन स्थेयां स्थिराम् । यद्वा स्थविरनिगमस्तोमानां स्थेयां परस्परविरोधं परिहृत्यार्थनिर्णयं कुर्वतीं विवादपदनिर्णेत्रीम् , "विवादपदनिर्णेता स्थेयः" इति काशिकाकारोक्तेः । **क्षीबाः ;** मत्ताः । **रसपरिमलयोः** श्लाघाया घोषेण स्फुटत् भिद्यत् पुटभेदनं पत्तनं यस्य तम् । **कर्पूरार्घम् ;** कर्पूरमूल्यम् । "मूल्ये पूजाविधावर्घः" इत्यमरः ॥ २९ ॥

**प्रभावली**

मनसः बद्धहृदयाः । **अल्पां पश्यन्ति ;** अल्पत्वादसमीचीनमिदं मतमिति मन्यन्त इति भावः । महत्त्वाल्पत्वे सम्यक्त्वासम्यक्त्वयोर्न प्रयोजके, तथा अदर्शनादित्याह—**विकटेति** । परिष्करणोचितः कौस्तुभमणिः कुलगिरिणा समं तुलायामारोहणे कियानिव भावी ; न किंचिदपि । तदप्याकारतोऽतिसूक्ष्मत्वेऽपि कौस्तुभस्य श्लाघ्यता कुलगिरेः किमस्तीति भावः ॥ २८ ॥

ननु भगवन्मतपरिग्रहीतारो विरला इत्यत आह—**स्थविरेति** । **स्थविराः ;** पुराणा ये निगमाः । निगमशब्देन वेदान्ता विवक्षिताः । **तत्स्तोमस्य स्थेया ;** विवादपदनिर्णेत्री, तां यतीश्वरभारतीम् । **कुमतीनां** ग्रन्थैः यो मनःक्षोभः, तेन मत्ताः पुमांसः **क्षिपन्तु** धिक्कुर्वन्तु वा ; **भजन्तु वा** । भजने यथा गौरवं नास्ति, तथा क्षेपणेऽपि लाघवं नास्तीति भावः । उक्तमर्थं दृष्टान्तेन द्रढयति—**रसेति** ।

[1] पद्धतिम् —क. ङ.

(आकाशे कर्णं दत्वा) किं ब्रूथ ? नवीनमेतद्भगवतो मत-
मिति । (सहस्तास्फालनं विहस्य)

**किंचित्केनापि दृष्टं प्रतिहतविषयं तेन तत्ते च तैस्तै-**
**र्द्वे चोपादायिषातां द्वितयमपि[1] सदित्यप्रमत्तो न वक्ता ।**

प्रभाविलासः

**किंचिदिति । किंचिन्मतं** केनापि केनचिन्मतेन **प्रतिहतविषयं** बाधितप्रतिपाद्यं दृष्टम् । **तेन**; प्रतिहतेन मतेन । **तच्च**; प्रतिघातकं मतं प्रतिहतविषयम् । **ते च मते**; ते एव मते । **तैस्तैः**; मतैः । **द्वे च मते उपादायिषाताम्**; स्वीकृते भवतः । **अप्रमत्तः**; बुद्धिविपर्यासरहितः । **द्वितयमपि सदिति न वक्ता**; न वदिष्यति । **इत्थं सति**; साधुत्व-

प्रभावली

रसश्च परिमलश्च कर्पूरसंबन्धिनौ, तयोः श्लाघाघोषेण स्फुटद्विदीर्णं पुटभेदनं पत्तनं यस्य । पत्तनं भिन्नं यथा भवति तथोच्चैः श्लाघ्यमानरसपरिमलवदित्यर्थः । कर्पूरस्यार्घं मूल्यम् । **लवणवणिजः**; लवणक्रेतारः । इति; इत्थमिति । **किमभिमन्वते**; न जानन्तीत्यर्थः । रसपरिमलधर्मोऽर्घ उपचरितः । यथा लावणिकस्य कर्पूरश्लाघ्यत्वाज्ञानं कर्पूरस्य न दोषावहं, तथा अयमप्यपरिग्रहस्तेषामेव दोषाय, नास्मन्मतस्येति भावः ॥ २९ ॥

अत्र नवीनमेतत् भगवन्मतमिति कैश्चिदुपांशूक्तम् । तत्र कर्णं दत्वा; तच्छ्रुत्वा । शिष्य आह—**किं ब्रूथ**; नवीनमेतद्भगवतो मतमिति किमुच्यते ? सहस्तास्फालनं विहस्योच्चैराह—**किंचिदिति** । यत्किंचिज्ज्ञानं येन केनापि पुंसा यत्र कुत्रचिदुपाधौ दृष्टं, तज्ज्ञानं तेनैव पुंसा तत्रैव बाधितविषयं दृष्टम् । तैस्तैर्वादिभिस्ते **द्वे च** ज्ञाने **उपादायिषाताम्**; स्वीकृते भवतः । **द्वितयम्**; उभयमपि ज्ञानं **सत्** प्रामाणिकमिति **अप्रमत्तो** न वदति । **इत्थं सति**; उभयज्ञानसाधुत्वस्य

[1] द्वयमपि च—ख.

**इत्थं सत्येकभक्तैरितरपरिहृतौ न व्यवस्थानसिद्धिः**
**प्रत्येतव्यं तदर्थ्यं पटुतरमतिभिः प्राक्तनं नूतनं वा ॥ ३० ॥**

किंच ;

**तदात्वे नूतनं सर्वमायत्यां च पुरातनम् ।**
**न दोषायैतदुभयं न गुणाय च कल्पते ॥ ३१ ॥**

### प्रभाविलासः

स्योभयत्रापि वक्तुमशक्यत्वे सति । **एकभक्तैः ;** उभयोरेकतराभिनिवेशवद्भिः । **इतरपरिहृतौ न व्यवस्थानसिद्धिः ;** व्यवस्थानं न सिध्यतीत्यर्थः । **तत् ;** तस्मात्कारणात । **अर्थ्यम् ;** अर्थादनपेतम् । प्राक्तनं नूतनं वा **प्रत्येतव्यम् ;** प्रामाणिकैः स्वीकर्तव्यम् । तदुक्तम्—

"पुराणमित्येव न साधु सर्वं न चापि काव्यं नवमित्यवद्यम् ।
सन्तः परीक्ष्यान्यतरद्भजन्ते मूढः परप्रत्ययनेयबुद्धिः ॥"

इति ॥ ३० ॥

नूतनत्वपुरातनत्वयोः कालोपाधिकतया 'इदमेव नूतनम्' इति न व्यवस्थितमित्याह—**तदात्व इति । तदात्वे ;** तदानीम् । **आयत्याम् ;** उत्तरकाले ॥ ३१ ॥

### प्रभावली

वक्तुमशक्यत्वे सति । **एकभक्तैः ;** एकस्मिन् यत्रकुत्रचिद्भक्तिमद्भिः अङ्गीकारवद्भिः । इतरस्य यस्य कस्यापि परिहर्तव्यत्वे सति । **व्यवस्थानम् ;** नियमः । नियमो न सिध्यतीत्यर्थः । कदाचिद्बाधितं वा परिगृहीतं स्यात् , अबाधितं वा । अबाधितमेव परिग्राह्यमिति नियमो न स्यात् । **तत् ;** तस्मात् । **अर्थ्यम् ;** अर्थादनपेतम् । अबाधितार्थं यज्ज्ञानं तत् **प्राक्तनं** पुराणं **नूतनं** वा भवतु । तदेव **प्रत्येतव्यम् ;** विश्वसितव्यं परिग्रहे । **पटुतरमतिभिः ;** युक्तिचतुरैः ॥ ३० ॥

यद्यवश्यं पुराणस्यैव साधुत्वमङ्गीक्रियते, तर्हि पुराणस्यापि निर्माणकाले नूतनत्वादपरिग्राह्यतैव स्यादित्याशयेनाह—**तदात्व इति । तदात्वे ;** तस्मिन्

गुरुः—भद्र, किमेतैः किंपचानैः? अपरे पुनरर्थसंस्पर्शिदोषवादिनः प्रतिक्षिप्यन्ताम्।

शिष्यः—भगवन्, निरस्तनिखिलदोषगन्धे भगवन्मते कथमर्थसंस्पर्शिनो दोषाः स्वप्नेऽपि केनचिदुद्भाव्येरन्[1]? इह हि—

**श्रुतिश्रेणीचूडापदबहुमते तावकमते[2]**
**[3]स्वपक्षस्थान्दोषान्वितथमतिरारोपयति यः।**
**स्वहस्तेनोत्क्षिप्तैः स खलु निजगात्रेषु बहुलं**
**गलद्भिर्जम्बालैर्गगनतलमालिम्पति जडः॥ ३२॥**

प्रभाविलासः

**किंपचानैः**; क्षुद्रैः। **श्रुतीति**। **वितथमतिः**; मिथ्यादृष्टिः। स्वमते लग्नानि दूषणानि लक्ष्मणमते आरोपयितुमशक्यानीति धिया **निजगात्रेष्वि**त्युक्तम्। **जम्बालैः**; पङ्कैः॥ ३२॥

प्रभावली

काले, निर्माणकाल इत्यर्थः। **सर्वमपि** वस्तु नूतनं भवति। **आयत्याम्**; उत्तरकाले सर्वमपि पुरातनम्। अत एतदुभयं नूतनपुरातनत्वरूपं दोषहेतुरपि न, गुणहेतुरपि न॥ ३१॥

कुमतिविहितेत्यारभ्य चतुर्भिः श्लोकैः शास्त्रमात्रस्पर्शिदोषवादिनो निरस्ताः। इदानीं शास्त्रप्रतिपाद्यार्थस्पर्शिदोषवादिनो निरसनीया इत्याह—**किमेतैरिति**। **किंपचानाः**; क्षुद्राः। **अन्ये पुनः**; शास्त्रार्थविषयदोषवादिनः। **इह हि**; भवन्मते। **श्रुतिश्रेणीति**। श्रुतिश्रेण्याः चूडापदानि उपनिषदः; तत्र **बहुमते** पूजिते भवन्मते स्वपक्षे दृष्टान् दोषान् **वितथमतिः**; वेदान्तमतस्य दूषितत्वाभावात् व्यर्थमतिः। यः कश्चिद्वादी **आरोपयति**; आरोप्य दूषयितुमिच्छति।

[1] उद्भावनीयाः—क. ख. [2] लक्ष्मणमते—घ. [3] मृषारेषाद्दोषान्—क.

किंच, अभञ्जनीयः खल्वयमशेषैरपि भगवत्सिद्धान्तः । इह किल मोघप्रलापा एव मूढाः प्रतिवावदूकाः ।

**निमीलयतु लोचने न हि तिरस्कृतो भास्करः**
**श्रवः स्थगयतु स्थिरं[1] परभृतः किमु ध्वाङ्क्षति ।**
**स्वयं भ्रमतु बालिशो न खलु बम्भ्रमीति क्षितिः**
**कदर्थयतु मुष्टिभिः कथय किं नभः क्षुभ्यते ॥ ३३ ॥**

प्रभाविलासः

**निमीलयत्विति** । **निमीलयतु**; जगति तमः स्तादिति धियेति भावः । **न तिरस्कृतः**; तावता जगति न तम इति भावः । **श्रवः** श्रोत्रं **स्थिरं** स्थगयतु; दृढमाच्छादयतु । "स्थग आच्छादने" इति धातुः । कोकिलालापस्य श्रोतुमनर्हताबुद्धचेति भावः । **ध्वाङ्क्षति**; ध्वाङ्क्षवदाचरति; काको भवति किमु । **स्वयं भ्रमतु**; सर्वक्षितिभ्रमणभ्रान्त्येति भावः । **कदर्थयतु**; पीडयतु ॥ ३३ ॥

**प्रभावली**

स जडः स्वहस्तेनोत्क्षिप्तैः । **निजगात्रेषु**; निजपक्षेष्विति गम्यते । **बहुलमापतद्भिः जम्बालैः** पङ्कैः **गगनतलं** स्वतो निर्मलमालिम्पति खलु । आलेप्तुमिच्छति । न च तत्कार्यकरं भवति; किंतु स्वोपर्येव पततीत्यर्थः ॥ ३२ ॥

**मोघप्रलापाः**; व्यर्थदूषणरूपप्रलापाः, प्रतिवादिन इत्यर्थः । एतदेव दूषणैरभञ्जनीयत्वं दृष्टान्तैर्दृढीकरोति—**निमीलयत्विति** । भास्करतिरस्करणबुद्धया स्वलोचने निमीलयतु कश्चित् । भास्करस्तेन न तिरस्कृतो भवति । कोकिले काकबुद्धया स्वश्रोत्रे कराभ्यां स्थिरं स्थगयतु आच्छादयतु । तेन परभृतः कोकिलः ध्वाङ्क्षति किम्? काकवद्भवति किम्? बालिशः मूर्खः

[1] स्वयं—क. ख.

**गुरुः**—सूनृतमेव सौम्य, भाषसे। अद्य खलु सर्वप्रति-[1]कथकसमापनप्रवृत्तस्य ते सभापतिं सभ्यं च विमृशामि।

(इति ध्यानमभिनयति)

**राजा**—सेनापते, अयमिहास्मदुपसर्पणावसरः।

**सेनापतिः**—मह्यमपि रोचते महाराजस्य मनीषितम्।

([2]उभावुपसर्पतः)

**शिष्यः**—संनिहितः खलु भगवन्, सभापतिः सेनापति-द्वितीयः[3]।

**गुरुः**—(परिवृत्यावलोक्य सहर्षबहुमानम्)

**उदितः सहसा स एष काले व्यवसायातपसेवितो विवेकः।**
**विनिवर्तयति स्वयं प्रजानां विचिकित्सारजनीं विलुप्तबोधाम्॥३४॥**

**प्रभाविलासः**

**सूनृतम्**; सत्यं प्रियं च। **उदित इति**। **स एषः**; स एवायं सूर्यः। **विलुप्तबोधाम्**; प्रतिबद्धवस्तुनिश्चयाम्। अत्र विचिकित्सोपशम-

**प्रभावली**

कश्चित् भूभ्रमणबुद्ध्या स्वयमेव भ्रमतु। तेन क्षितिर्न खलु भृशं भ्राम्यति। कश्चिन्नभश्चूर्णीकरणबुद्ध्या नभो मुष्टिभिः पीडयतु। तेन किं नभः क्षुभ्यते॥ ३३॥

**सूनृतम्**; सत्यं प्रियं च। **समापनम्**; निरासः। **सभापतिः**; राजा। **सभ्यः**; जयापजययोः संभावनादण्डविधायकः। **उभौ**; सभ्यसभापती उपसर्पतः। **संनिहितः खल्वित्यादि** वदति शिष्यः। **परिवृत्य**; समन्ततः इत्यर्थः। स्वयमुपसर्पणात् हर्षः; राजनि बहुमानश्च। **उदितः**; दर्शनं प्राप्तः। **सहसा**;

[1] कलह added after—क.
[2] उभावुपसर्पतः omitted—क. ख. ग.
[3] उभौ—क. ख. ग.
[4] इत्युपसर्पतः added after—क. ख. ग.

अयं च—

**विवेकस्य[1] गुणश्रेयान् व्यवसायश्चमूपतिः ।**
**स्वपक्षे तिष्ठमानेभ्यः स्वयमागत्य[2] तिष्ठते ॥ ३५ ॥**

**राजा**—(सविनयम्) [3]उचितमुपचरति विवेक इह ससेनापतिर्भगवन्तम् ।

**गुरुः**—महाराज, सर्वत्र कुशली भूयाः । अपिच —

**शाक्यौलूक्याक्षपादक्षपणककपिलामर्त्यवन्द्यप्रधानै-**
**रन्यैराम्नायचर्चाकवचधृतिकनद्दोमुखद्वीपिभिश्च ।**

### प्रभाविलासः

कथनेन प्रतिमुखसंधेः शमो नामाङ्गं निरूपितम्, "अरत्युपशमः शमः" इति लक्षणात् ॥ ३४ ॥

**विवेकस्येति** । **तिष्ठमानाः**; विवादनिर्णयायात्मानं प्रकाशयन्तस्तिष्ठन्तः, तेभ्यः । **तिष्ठते**; आत्मानं प्रकाशयंस्तिष्ठति ॥ ३५ ॥

**शाक्येति** । **शाक्याः**; बौद्धाः । **औलूक्याः**; काणादाः । **आक्षपादाः**; नैयायिकाः । **क्षपणकः**; जिनः । **अमर्त्यवन्द्यः**; बृहस्पतिः ।

### प्रभावली

अतर्कितम् । **व्यवसाय** एवातपः । **विचिकित्सा** संदेह एव रात्रिः, ताम् । कीदृशीम्? विलुप्तनिश्चयज्ञानाम् ॥ ३४ ॥

**अयं च**; व्यवसायश्च । **गुणैः श्रेष्ठः विवेकस्य सेनापतिः, स्वपक्षे तिष्ठमानेभ्यः**; तिष्ठतेरात्मनेपदम् ॥ ३५ ॥

**उचितं**; योग्यम् । **ससेनापतिर्विवेको**ऽयं राजा । **सर्वत्र**; इहामुत्र च । **शाक्येति** । शाक्याः बौद्धाः । **औलूक्याः**; काणादाः; पशुपतिरुलूको भूत्वा

[1] विवेकश्च—ख. [2] सूरिभिः सह—ख. [3] उचितं omitted—ख.

**बंहीयः[1] क्षोभितापि श्रुतिरिह बहुधा जायमानेन गोप्त्रा**
**काले कालेऽभिगुप्ता कलहमतितरन्त्यक्षता[2] रक्षतात्त्वाम् ॥३६॥**

### प्रभाविलासः

स हि लोकायतमतं प्रवर्तयामास । **अन्यैः**; भट्टगुरुमुरारिप्रभृतिभिः । **आम्नायः**; वेदः । "स्यादाम्नायः संप्रदाये कुलेऽध्ययनवेदयोः" इति निघण्टुः । **द्वीपिनः**; व्याघ्राः । **बह्वी(बंही)यः**; बहु(ल)तरम् । **बहुधा जायमानेन**; मत्स्यहयग्रीवादिरूपेण प्राप्तावतारेण । **गोप्त्रा**; रक्षकेण विष्णुना,

"लक्ष्म्या सह हृषीकेशो देव्या कारुण्यरूपया ।
रक्षकः सर्वसिद्धान्ते वेदान्तेऽपि च गीयते ॥"

इति स्मरणात् । **अक्षता**; कुत्रचिदपि क्षतिमप्राप्ता । श्रुतिस्त्वां **रक्षतात्**; रक्षतु । अत्र, "परित्राणाय साधूनाम्" इत्याद्युक्तप्रयोजनत्रयं द्रष्टव्यम् ।

### प्रभावली

कणादाय वैशेषिकमतमुपदिदेशेति प्रसिद्धिः । **आक्षपादाः**; नैयायिकाः । **क्षपणकाः**; जैनाः । **कापिलाः**; सांख्याः । **अमर्त्यवन्द्यः**; बृहस्पतिः; तन्मतनिष्ठा उच्यन्ते । एते प्रधाना येषां तैः, हिरण्यगर्भादिभिः । उक्ता एते बाह्याः । अथ कुदृष्टीनाह—**अन्यैरित्यादि** । **आम्नायचर्चा** मीमांसैव **कवचं**, तस्य **धृत्या** धारणेन, **कनन्तः** प्रकाशमानाः **गोमुखद्वीपिनः**; गोमुखमिव मुखं येषां ते च **द्वीपिनः** गोमुखव्याघ्राः । तेषां गोमुखत्वात् गावो विश्वस्य तत्समीपमायान्ति; ता हिंसन्ति व्याघ्रत्वात् । वैदिकभ्रान्त्या समाश्रितानेतेऽपि हिंसन्ति । ते च भट्टप्रभाकरमतानुवर्तिनः प्रच्छन्नबौद्धाः । उक्तैरेतैः **बह्वी(बंहि)यः** बहु(ल)तरं क्षोभं प्राप्तापि श्रुतिः **इह** जगति **बहुधा जायमानेन** अनेकधावतरता त्वां चिदचिदीश्वरतत्त्वविवेकम् **अक्षतं** यथा तथा **रक्षता** तद्द्वारा वेदस्य रक्षकेण, तत्काले बादरायणदत्तात्रेयादिरूपेण, गुप्ता श्रुतिः **कलहं** दुष्टसिद्धान्तैः सह कलहम-

[1] बह्वीयः—All MSS.

[2] अक्षतं—ग ; 'अतितरत्यक्षतं रक्षता' इति प्रभावलीसंमतः पाठः ।

**राजा**—भगवन्, अद्य खलु भगवदवलोकनादेव संमुखी-कृतसकलमङ्गलानामस्माकमधिकोऽयमाशीर्वादः ।

**गुरुः**—राजन्, विमर्शकाले[1] सुचरितवशात्[2] सेनापति-सेवितः संनिहितोऽसि। तदादिश्यतामयमन्तेवासी समीहितसमर्थनाय सदसस्पतिना महाराजेन ।

### प्रभाविलासः

अत्र श्लोके बहुधा जायमानेनेत्यादिना भगवत्प्रभावख्यापनेन तत्रत्य श्रुतिविषयकरतिप्रतीतेः प्रेयोऽलंकारः, "प्रेयः प्रियतराख्यानम्" इति लक्षणात्* ॥ ३६ ॥

### प्रभावली

**तिक्रामति** । अत्र "अजायमानो बहुधा विजायते" "परित्राणाय साधूनाम्" "काणादशाक्यपाषण्डैः" इत्यादिकमनुसंधेयम् ॥ ३६ ॥

**संमुखीकृतम्**; अभिमुखीकृतम् । **अयमाशीर्वादः**; सर्वत्र कुशली भूयाः इत्युक्त इत्यर्थः । **अधिकः**; अतिरिक्तः; भवदवलोकनेनैव सर्वमङ्गलस्य प्राप्तत्वात् । **विमर्शकाले**; स्मरणकाले । **सुचरितम्**; सुकृतम् । **आदिश्यताम्**; आज्ञाप्यताम् । **अन्तेवासी**; शिष्यः । अभिलषितकार्यस्य संपादनाय । **सदसस्प-**

[1] विमर्शसमये—ख. [2] विधिवशात्—क.

* अस्य श्लोकस्योत्तरार्धे मूलपाठः सर्वेष्वपि कोशेषु 'बह्रीयः' इत्येव दृश्यते । व्याख्यातारश्च तमेव पाठमवलम्ब्य 'बहुतरम्' इति व्याचक्षते । तथापि 'बह्रीयः' इति पाठः लेखकप्रमादापतित इति निश्चित्य मूले 'बंहीयः' इति पाठोऽस्माभिर्निवेशितः । बहुशब्दादीयसुन्प्रत्यये "बहोर्लोपो भू च बहोः" इति पाणिन्यनुशासनेन 'भूयः' इति भाव्यम् । 'बंहीयः' इति तु बहुलशब्दादीयसुन्प्रत्यये "प्रस्थस्फवर्बंहि" इत्याद्यनुशासनेन सिध्यति । यद्यपि मुग्धबोधे बहुशब्दस्यैवेयसुनि 'बंहीयः' इति रूपमुक्तम् तथापि बह्रीय इत्यस्य नैवोपपत्तिः ।

**राजा**—अत्र भवदभिप्रेतमादिशामि । (शिष्यमवलोक्य) सौम्य[1] ब्रह्मन्, सम्यगुपसन्नोऽसि सर्वविदं भगवन्तम् । इह च—

स्वयं त्रय्यन्तसिद्धान्तो विभाति गुरुरेष ते ।
प्रभुः प्रवदतां योऽभूत्स वादस्त्वं मतो[2] मम ॥ ३७ ॥

इदं त्विह भवता प्रथममवधातव्यम्—

**शिष्यः**—आज्ञापयतु महाराजः ।

**राजा**—

[3]सत्त्वस्थान्निभृतः प्रसादय सतां वृत्तिं व्यवस्थापय
त्रस्य ब्रह्मविदागसस्तृणमिव त्रैवर्गिकान्भावय ।

### प्रभाविलासः

**सदसस्पतिना**; सभापतिना । **सत्त्वस्थानिति** । **सत्त्वस्थान्**; सात्त्विकान् । **निभृतः**; निश्चलः । ज्ञेयार्थे संशयादिरहित इत्यर्थः ।

### प्रभावली

**तिना**; सभापतिना । **अत्र** अस्मिन्नवसरे भवतो यदभिप्रेत तदाज्ञापयामि । **सौम्येति** संबोधने । सर्वज्ञमिमं भगवन्तं गुरुं यथाशास्त्रमुपसन्नोऽसि । **इह च**; युवयोर्मध्ये । एष ते गुरुः साक्षाद्वेदान्तसिद्धान्त एव विभाति । **प्रवदतां** प्रकर्षेण वादं कुर्वतां यः प्रभुरभूत् सुवादित्वनिर्वाहकोऽभूत स वादः त्वमिति मम मतम् । वादस्य सुवादित्वनिर्वाहकत्वादेव गीतायां "वादः प्रवदतामहम्" इति गीतम् ॥ ३७ ॥

अथ 'भगवदभिप्रेतमादिशामि' इत्युक्तमादिशति राजा—**इदं त्विति** । **इदम्**; वक्ष्यमाणम । **सत्त्वस्थानिति** । सात्त्विकान् **निभृतः** विनयवान् भजस्व;

[1] सौम्य omitted—ख. [2] संमतो मम—घ. [3] यदुत added before—क.

**नित्ये शेषिणि निक्षिपन्निजभरं सर्वंसहे श्रीसखे**
**धर्मं धारय चातकस्य कुशलिन्[1] धाराधरैकान्तिनः ॥ ३८ ॥**

**प्रभाविलासः**

अत्र "साधवस्त्वभिगन्तव्याः सन्तः सङ्गस्य भेषजम्" इत्यादिकं द्रष्टव्यम्। **सतां वृत्तिम्;** यथा सन्त आचरन्ति तमाचारम्, "अथ यदि ते कर्मविचिकित्सा वा वृत्तविचिकित्सा वा स्यात्। ये तत्र ब्राह्मणाः संमर्शिनः। युक्ता आयुक्ताः। अलूक्षा धर्मकामाः स्युः। यथा ते तत्र वर्तेरन्। तथा तत्र वर्तेथाः।" इति श्रुतेः। **व्यवस्थापय;** स्वयं विहितानुष्ठाननिषिद्धवर्जनाभ्यां स्थिरीकुरु। "स्वयमाचरते यस्मादाचारे स्थापयत्यपि" इति ह्युक्तम्। **ब्रह्मविदागसः;** ब्रह्मविदपचारात्। **त्रस्य;** त्रस्तो भव;

"वैनतेयस्य वृत्तान्तं स्मारं स्मारमहर्निशम्।
भवभीतश्च वर्तेत तदीयेष्वपचारतः॥
आयुः श्रियं यशो धर्मं लोकानाशिष एव च।
हन्ति श्रेयांसि सर्वाणि पुंसो महदतिक्रमः॥"

इति स्मरणात्। **तृणमिव त्रैवर्गिकानिति;** मुमुक्षाभञ्जकत्वात् तृणमिव भावयेत्युक्तम्, "संसर्गं तैश्च वर्जयेत्" इत्युक्तत्वात्। त्रैवर्गिकत्यागः कथं सेत्स्यतीत्याशङ्क्य ततोऽधिकपुरुषार्थलाभादित्याह—**नित्य इति**। नित्यनिर-

**प्रभावली**

प्रसन्नान कुरु। सदाचारेणानुष्ठानेन सतां वृत्तिं **व्यवस्थापय;** परिपालय। व्यवस्थापयेत्यनेन श्रेष्ठाचारेण सदाचारो व्यवस्थितो भवति। तदुक्तम्; "यद्यदाचरति श्रेष्ठः" इति। ब्रह्मविदामपराधेभ्यः **त्रस्य;** भीतिं कुरु। ब्रह्मविदपचारं मा

[1] कुशली—घ.

**सेनापतिः**—ब्रह्मन्, अवधारितं हि भवता महाराजस्य[1] वचनम्।

प्रभाविलासः

तिशयानन्दब्रह्मण एव पुरुषार्थभूतत्वादित्यर्थः। "तत्तु समन्वयात्" इति ह्युक्तम्। तादृशपुरुषार्थलाभे को हेतुः? अत आह—**शेषिणीति**। शेषित्वनिर्वाहार्थं शेषरक्षणमुचितमिति भावः। शेषित्वेऽप्यपराधभूयस्त्वेन शेषरक्षणं कथं सेत्स्यतीत्यत आह—**सर्वसह इति**। उक्तहेतोरेव सर्वसहनमपि संभवतीति भावः। सर्वसहने हेत्वन्तरमाह—**श्रीसख इति**। "न कश्चिन्नापराध्यति" इति श्रियोऽप्यपराधसहनस्याभिमतत्वादिति भावः। **चातकस्येत्याकारत्रयसंपत्तिरुक्ता**। तेन

"प्रपन्नश्चातको यद्वत्प्रपत्तव्यः कपोतवत्।
रक्ष्यरक्षकयोरेतल्लक्ष्यं लक्षणमेतयोः॥"

इति प्रमाणं स्मारितम्। परिकरो नामालंकारः;

"यत्राभिप्रायगर्भा स्याद्विशेषणपरंपरा।
तत्राभिप्रायविदुषामयं परिकरो मतः॥"

इति लक्षणात्॥ ३८॥

**प्रभावली**

कार्षीरित्यर्थः। **त्रैवर्गिकान्**; त्रिवर्गनिष्ठान् तृणमिव भावय। तद्विषये उदासीनो भव। **नित्ये शेषिणि**; निरुपाधिकशेषिणि। **सर्वसहे**; सर्वापराधसहनसमर्थे। तत्र हेतुमाह—**श्रीसख** इति। **निजं भरम्**; आत्मरक्षाभरम्। **कृतकृत्यतां** दृष्टान्तपूर्वमाह—**धर्ममिति**। यथा चातकः स्वाभिलषितप्राप्तौ स्वप्रवृत्तिं विहाय जलदैकगतिर्वर्तते, तथा स्वाभिलषिते भगवत्कृपावलोकनेनेत्यर्थः। **धाराधरैकान्ती**; जलदैकगतिः॥ ३८॥

[1] अवधारय भूयस्तरां महाराजस्य—क. छ.

**शिष्यः**— किमन्यदवधातव्यम्[1] ?

[2]**राजा**—

**परिचिनु निगमान्तभारतीं परिहर बाह्यजनेन संगमम् ।**
**परिचर नियमेन सज्जनान् परिभव [3]मोहमुखान्विरोधिनः ॥३९॥**

**गुरुः**—आयुष्मन्, अवहितमनाः शृणु ।

**शिष्यः**— महानयं प्रसादः ।

**राजा—**ब्रह्मन्,

**प्रमाणपथ[4]विभ्रष्टप्रधानार्थविमर्दनैः ।**
**स्थालीपुलाकनीत्यैव निवर्त्याः प्रतिवादिनः ॥ ४० ॥**

प्रभाविलासः

**परिचिन्विति । बाह्यजनेनेति ;** "वाङ्मात्रेणापि संसर्गं तैः सतां तु निषेधति" इत्युक्तत्वात् ॥ ३९ ॥

**प्रमाणेति ।** मायिनां जगन्मिथ्यात्वं, सांख्यानां स्वतन्त्रप्रकृतित्वं, कुमारिलगुरूणां निरीश्वरत्वं, नैयायिककाणादानामसत्कार्यपरमाण्वादिकल्पनमित्याद्याः प्रधानार्थाः । एकस्मिन् पुलाके पक्के सर्वमन्नं पक्वमिति स्थाली-

प्रभावली

**किमन्यदवधार्यम् ;** इदमवधृतमिति भावः । **परिचिन्विति ।** सेनापतिवाक्यमेतत् । **परिचिनु ;** परिशीलय । **बाह्यजनेन ;** वेदान्तसिद्धान्तबहिर्भूतजनेन । **सज्जनाः ;** भागवताः । **परिभव ;** जहीत्यर्थः ॥ ३९ ॥

**अवहितं** सावधानं मनो यस्य सः । दुर्वादप्रपञ्चो न कर्तव्यः ; तन्मतप्रधानार्थ एव निरसितव्य इत्याह—**प्रमाणेति ।** **प्रमाणपदात्** विभ्रष्टं यत्तेषां

[1] अवधार्यम् —क.
[2] प्रभावलीमते सेनापतिवाक्यमेतत्.
[3] बाह्यमुखान् —क.
[4] पद—घ. ङ. च. छ.

न खल्वखिलमपि निघृष्यते सुवर्णखण्डो वर्णनिष्कर्षाय ।

**शिष्यः**—यदादिशति महाराजः । तदहं[1] संधुक्षयामि कथासमरसंनाहाय कौतस्कुतान् । किंचिदुच्चैः—

**जयति सकलविद्यावाहिनीजन्मशैलो**
**जनिपथपरिवृत्तिश्रान्त[2]विश्रान्तिशाखी ।**
**निखिलकुमतिमायाशर्वरीबालसूर्यो**
**निगमजलधिवेलापूर्णचन्द्रो यतीन्द्रः ॥ ४१ ॥**

**प्रभाविलासः**

पुलाकन्यायः । अत्रैकदेशज्ञानेन समुदायज्ञानात् प्राप्तिर्नाम नाट्यालंकारः "प्राप्तिः सा समुदायस्य ज्ञानं यच्चैकदेशतः" इति लक्षणात् ॥ ४० ॥

**संधुक्षयामि;** क्षोभयामि । **कौतस्कुताः;** कुतः कुत इति पृच्छन्तो वादिनः । **जयतीति** । **जनिपथे;** संसारमार्गे । **परिवृत्त्या;** संचारेण ।

**प्रभावली**

प्रधानप्रमेयं तन्निरसनैः । **स्थालीपुलाकन्यायेन** प्रधानार्थनिरसनैः **निवर्त्याः;** निरस्याः ॥ ४० ॥

अस्मिन्नर्थे निदर्शनान्तरमप्याह—**न खल्विति** । **निघृष्यते;** लिख्यते । **वर्णनिष्कर्षाय;** स्वर्णशलाकावर्णपरीक्षणाय । अथ वादाय दुर्वादिन आह्वयामीत्याह—**तदहमिति** । **संधुक्षयामि;** प्रवर्तयामीत्यर्थः । **संनाहाय;** उद्योगाय । **कौतुस्कुताः;** कुतः कुत इति वादिनः । **जयतीति** । **सकलविद्याः;** शब्दतर्कमीमांसावेदान्तादयः । ता एव **वाहिन्यो** नद्यः, तासां **जन्मशैलः;** तासामुत्पत्तिस्थलमित्यर्थः; यथा गङ्गाया हिमवान् । जनेः पन्थाः संसरणमार्गः, तत्र **परिवृत्तिभिः** यातायातैः **श्रान्तानां विश्रान्तिशाखी** विश्रमतरुः । **निखिलानां कुम-**

[1] तदिह—क ; राजा—तदहं—घ. [2] भ्रान्ति—छ.

(नेपथ्ये)

तर्कव्याकृतितन्त्रशिक्षितधियः पक्षेषु बाह्येष्वपि
प्रत्यक्षीकृतपौरुषा वयममी मध्येसभं ब्रूमहे ।
वादाटोपमुपेयुषः प्रतिभटानासेतुहेमाचलं
तूलायापि तृणाय वा न च तुषच्छेदाय मन्यामहे ॥ ४२ ॥

**सेनापतिः**—आर्य, श्रूयते किल प्रतिभटवादिनां प्रगल्भवादः ।

**शिष्यः**—(सक्रोधम्) अलमलमतिगर्वेण ।

## प्रभाविलासः

**श्रान्तानां विश्रान्तेः**; विश्रमस्य । **शाखी**; वृक्षः । **वेला**; जलस्योच्छ्वासः ॥ ४१ ॥

**तर्केति** । **व्याकृतिः**; व्याकरणम् । **तन्त्रम्**; पूर्वमीमांसा । **आटोपः**; संभ्रमः ॥ ४२ ॥

## प्रभावली

तीनां या माया सैव शर्वरी, तस्या निवर्तने बालसूर्यः । निगमा एव जलधयः, तेषां वेला संतोषत उत्सर्पणम , तत्र पूर्णचन्द्रः । चन्द्रोदयेऽम्बुधय उत्सर्पन्तीति प्रसिद्धिः । **जयति**; सर्वोत्कर्षेण वर्तते ॥ ४१ ॥

**तर्केति** । **तर्क**तन्त्रं न्यायशास्त्रम ; **व्याकृतितन्त्रं** व्याकरणशास्त्रं शब्दशास्त्रम्; तत्र **शिक्षितधियः** । **बाह्येष्वपि**; ततो व्यतिरिक्तेषु । **पक्षेषु**; चार्वाकबौद्धजैनसांख्ययोगमीमांसादिदुःशास्त्रेषु सर्वैः प्रत्यक्षतोऽनुभूतसामर्थ्याः **अमी वयम्** इह **मध्येसभं** सभामध्ये वदामः । किमित्यत्राह—वादसंभ्रमं प्राप्तान् वादेषु मत्सदृशो नास्तीति गर्वं प्राप्तान् **प्रतिभटान्** प्रतिवादिनः सेतुमारभ्य हेमाचलपर्यन्तदेशेषु तूलायापि न मन्यामहे । **तुषच्छेदः**; तुषकणिका ॥ ४२ ॥

यतीश्वरसरस्वतीसुरभिताशयानां सतां
वहामि चरणाम्बुजं प्रणतिशालिना मौलिना ।
तदन्यमतदुर्मदज्वलितचेतसां वादिनां
शिरःसु निहितं मया पदमदक्षिणं लक्ष्यताम् ॥ ४३ ॥

राजा—भगवन्, अभङ्गुरस्वामिभक्तेरवसरोपपन्नं हनूमत इवेदमार्यस्य विकत्थनम् ।

प्रभाविलासः

**यतीश्वरेति** । **आशयः**; अभिप्रायः । **तदन्यमतेषु**; श्रीभाष्यविरुद्धमतेषु दुर्मदेन ज्वलितचेतसाम् । लक्ष्यतामिति प्रतिवादिसांनिध्यमुक्तम् ॥ ४३ ॥

**हनूमत इति** । अनेन,

"दासोऽहं कोसलेन्द्रस्य रामस्याक्लिष्टकर्मणः ।
हनूमान् शत्रुसैन्यानां निहन्ता मारुतात्मजः ।
न रावणसहस्रं मे युद्धे प्रतिबलं भवेत् ।
शिलाभिस्तु प्रहरतः पादपैश्च सहस्रशः ॥"

प्रभावली

आर्येति शिष्यसंबोधनम् । **प्रगल्भः**; उद्धतः । **यतीश्वरेति** । **यतीश्वरसरस्वत्या** श्रीभाष्यादिरूपया **सुरभितं** तत्त्वरहस्येषु संशयविपर्ययरहितं, तादृशं मनो येषां सताम्; त एव सन्त इति भावः । तदन्यमतानि श्रीभाष्यकारमतादन्यानि, तेषु **दुर्मदः** दुरभिमानः, तेनाग्निना **ज्वलितं** दग्धं चेतो येषां, दुर्वादिनां **शिरःसु अदक्षिणं पदं** वामपादं मया **निहितं** लक्ष्यताम्; वीक्ष्यतामिति ॥ ४३ ॥

**अवसरोपपन्नम्**; कालोचितम् । हनूमत इव; "**न रावणसहस्रं मे युद्धे**

**गुरुः**—(स्वगतम्) क इवाभिप्राय इह विकत्थनमुद्धाटयतो विवेकस्य? (प्रकाशम्) महाराज,

**श्रुतिसिद्धान्तशूरस्य तद्विरुद्धान्निरुन्धतः[1]।**
**वल्गितं वावदूकस्य कृतिनः किं न शोभते ॥ ४४ ॥**

**शिष्यः**—(सविनयभयं[2] स्वगतम्) अतर्कितोपनत[3]मात्मश्लाघनदोषमपमार्ष्टुमभिष्टवानि देशिकान् तद्दर्शनं च। (प्रकाशम्)

### प्रभाविलासः

इत्यादि स्मारितम्। **श्रुतीति**। **वल्गितम्**; विकत्थनम्। युक्तमिति शेषः। अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः;

"ज्ञेयः सोऽर्थान्तरन्यासो वस्तु प्रस्तुत्य किंचन।
तत्साधनसमर्थस्य न्यासो योऽन्यस्य वस्तुनः ॥"

इति लक्षणात् ॥ ४४ ॥

### प्रभावली

प्रतिभटं भवेत्" इति वदतः। **विकत्थनम्**, आत्मश्लाघनम्। **क इवाभिप्रायः**। **इह**; शिष्ये विकत्थनं सूचयतः। **श्रुतीति**। **वेदान्तसिद्धान्ते शूरस्य**। **तद्विरुद्धान्** सिद्धान्तान् निरस्यतः। **कृतिनः**; समर्थस्य। **वल्गितम्**; उद्गमनम्, आत्मश्लाघेति यावत्। वल्गितशब्देन धानुष्कस्येवेति दृष्टान्तः सूच्यते। **किं न शोभते**; शोभत एवेत्यर्थः। ॥ ४४ ॥

गुरुसंनिधेर्विनयः। स्ववल्गितस्य परबोधनाद्भयम्। **आत्मश्लाघनदोषम् अपमार्ष्टुम्**; अपनेतुम्। **अभिष्टवानि**; अभिष्टुतिं करवाणि। **तद्दर्शनम्**;

[1] निरस्यतः इति प्रभावलीसंमतः पाठः [2] सभयम् —क.
[3] तोपस्थितमात्म—ग.

हृद्या हृत्पद्मसिंहासनरसिकहयग्रीवहेषोर्मिघोष-
क्षिप्तप्रत्यर्थिदृप्तिर्जयति बहुगुणा पङ्क्तिरस्मद्गुरूणाम् ।
दिक्सौधाबद्धजैत्रध्वजपटपवनस्फातिनिर्धूततत्त-
त्सिद्धान्तस्तोमतूलस्तबकविगमनव्यक्तसद्वर्तनीका ॥ ४५ ॥

प्रभाविलासः

**हृद्येति** । **हृद्या;** मनोहरा, हृदि ध्येया च; "ध्यायेज्जपेन्नमेद्भक्त्या" इति स्मरणात् । अन्यत्र कण्ठधार्या । **हृत्पद्मसिंहासने** रसिकस्य स्थितस्य हयग्रीवस्य हेषाणामूर्मयः तरङ्गाः, तेषां घोषेण क्षिप्ता प्रत्यर्थिनां दृप्तिर्दर्पो यया सा, तथोक्ता । अन्यत्र विरोधिनिवर्तिका । **बहुगुणा;** शमाद्यनेकगुणा, बहुतन्तुस्यूता च । **गुरूणाम्;** आचार्याणाम्, अन्यत्र श्रेष्ठमणीनाम् । **पङ्क्तिः;** परंपरा हारश्च ।

"गुणस्त्वावृत्तिशब्दादिज्येन्द्रियामुख्यतन्तुषु ।"
"गुरुस्तु गीष्पतौ श्रेष्ठे गुरौ पितरि दुर्जरे ॥"

इति च निघण्टुः । **दिश एव सौधाः**, तेष्वाबद्धानां जैत्राणां जयज्ञापकानां ध्वजपटानां पवनस्य स्फात्या वृद्ध्या निर्धूतानां तत्तत्सिद्धान्तानां स्तोमाः समूहाः, त एव तूलस्तबकाः निर्बीजकार्पासराशयः, तेषां विगमनेन निरासेन व्यक्ता सद्वर्तनी सतां मार्गो यस्याः सा, तथोक्ता । "स्फाति-

प्रभावली

तज्ज्ञानं च । **हृद्येति** । हृदा अनुसंधातुं योग्या हृद्या । **हृत्पद्ममेव सिंहासनं**, तत्र **रसिको** यो **हयग्रीवः**, तस्य **हेषा** शब्दः, तदूर्मिघोषेण **क्षिप्ता** निरस्ता प्रतिवादिनां **दृप्तिः** गर्वो यया सा । **बहुगुणा;** शमदमादिसद्गुणवती । **दिक्सौधेत्यादि** । अष्ट दिश एव **सौधाः**, तत्र **बद्धाः** ये जयसूचकाः **ध्वजाः**, तेषां **पटपवनस्य स्फात्या** बाहुल्येन **निर्धूताः** निरस्ताः, **तत्तत्सिद्धान्तस्तोमा**

किंच ;

नाथाश्लेषस[1]नाथनाच्छ्रुतिवधूवैधव्यखेदच्छिदं
प्राचीनां नयपद्धतिं यतिपतिः [2]प्राचीकशन्नैष चेत् ।

प्रभाविलासः

वृद्धौ प्रथा ख्यातौ" इत्यमरः । अत्र जैत्रध्वजादिपदैर्वीररसाभिव्यक्ते-र्भावितं नाम गुणः । "हर्षादिभारवशतो वाग्वृत्तिर्भावितं मतम्" इति लक्षणात् ॥ ४५ ॥

**नाथेति** । **नाथ** ईश्वरः, तेनाश्लेषः संबन्धः, तस्य सनाथनात् संपादनादित्यर्थः । **श्रुतिवधूवैधव्यखेदच्छिदम् ;** निरीश्वरमीमांसकैरीश्वरो नास्तीति कथनेन श्रुतेर्यः खेदः, तस्य छिदम् । एतेन "बिभेत्यल्प-श्रुताद्वेदो मामयं प्रतरेदिति" इति वचनं स्मारितम् । दूरयात्रादिना प्रोषिते भर्तरि केनचिद्वञ्चकेन "तव भर्ता नास्ति" इति ख्यापिते वध्वा वैधव्यशङ्कया खेदो जायते । पुनश्चाप्तया कयाचित् पतिमानाय्य प्रदर्शिते स खेदो निवर्तते, तद्वत् । **प्राचीनाम् ;** व्यासकाशकृत्स्नटङ्कद्रमिडगुहदेव-नाथयामुनप्रभृतिभिः प्रवर्तिताम् । **नयपद्धतिम् ;** न्यायसरणिम् । **न प्राची-**

प्रभावली

एव तूलस्तबकाः तूलपुञ्जाः, तेषां विगमनेन व्यक्ता स्पष्टदृष्टा सद्वर्तनी सन्मार्गो यस्याः सा । अस्मद्गुरूणां पङ्क्तिः जयति । अयं देशिकाभिष्टवः ॥ ४९ ॥

अथ तद्दर्शनमभिष्टौति—नाथेति । **नाथः** कान्तः; श्रुतिसीमन्तिन्याः कान्तो विष्णुः । दुर्वादिभिः श्रुतिः नाथेन विरहिता कृता । तथाहि—ब्रह्मैव नास्ति, ब्रह्म निर्गुणमित्यादिप्रतिपादनात् । श्रीरामानुजमते तु—श्रुतिवध्वाः नाथा-श्लेषेण विष्णुसंबन्धप्रतिपादनेन सनाथनात् सनाथीकरणात् श्रुतिवध्वाः वैधव्यखेदं

[1] सनातनश्रुति—ग. [2] कशेः काशेर्वा अनुदितो णिजन्तस्येदं रूपम् ।

व्यासो हासरसोचितो [1]विगलितः प्राचेतसश्चेतसः
क्लृप्तः केलिशुकः शुकः स च [2]परं बाधाय बोधायनः ॥४६॥

प्रभाविलासः

**कश्चेत्**; न प्रकाशयामास चेत्। **व्यासः**; सूत्रकारः। **हासरसोचितः**; शारीरकसूत्राणां तत्तद्वादिभिस्तात्पर्यापरिज्ञानेनेतस्ततोऽर्थवर्णनेन विरुद्धार्थबोधकतया भ्रान्तप्रलपनपरः स्यात्। **प्राचेतसः**;

"बहवो नृप कल्याणा गुणाः पुत्रस्य सन्ति ते।"
"अक्षय्यं मधुहन्तारं जानामि त्वां सुरोत्तमम्।"
"शक्तः स पुरुषव्याघ्र स्रष्टुं पुनरपि प्रजाः।"
"अङ्गुल्यग्रेण तान् हन्यामिच्छन् हरिगणेश्वर।"
"श्रीवत्सवक्षा नित्यश्रीरजय्यः शाश्वतो ध्रुवः॥"

इत्यादिनोभयलिङ्गविभूतिविशिष्टं नारायणाख्यं परं ब्रह्मेति कान्तासंमिततया तत्त्वनिर्णयप्रवृत्तो वाल्मीकिरपि चेतसः परिहृतः स्यात्। **शुकः केलिशुकः**; श्रीभागवतस्यापाततोऽर्थान्तरभ्रमजनकत्वेन तत्त्वार्थानिर्णायकतया कथामात्रकथनोपयोगेन लीलानिमित्तं स्यात्। **बोधायनः** सूत्रवृत्तिकारतया प्रसिद्धोऽप्यतिविस्तीर्णप्रणयनेन प्रयासमात्रशेषः स्यात्।

प्रभावली

छिनत्तीति श्रुतिवधूवैधव्यखेदच्छिदम्। **प्राचीनाम्**; अनादिसिद्धाम्। **नयपद्धतिम्**-नयैरुपपत्तिभिः विशिष्टां वेदान्तसिद्धान्तपद्धतिम्। **एष यतिपतिः न प्राचीकश्चेत्**; न प्रकाशितवान् यदि। शरीरशरीरिभावं जगद्ब्रह्मणोः प्रतिपादयन्ति श्रुतयः; व्यासस्तु तद्विरुद्धं किमपि प्रतिपादयतीत्यतो बालिश इव परिहासपदं भवति। **प्राचेतसस्तु चेतसः परिहृतः**; विगलितचेता भवति। श्रीशुकः

[1] परिहृतः—ग. [2] मुधा—क.

राजा—(सप्रसादम्) अभङ्गुरगुरुभक्तेरार्यस्य क इव न जेतव्यः ? तथाहि—

अशिथिलगुरुभक्तिस्तत्प्रशंसादिशीलः
प्रचुरबहुमतिस्तद्वस्तुवास्त्वादिकेऽपि ।
गुणवति विनियोक्तुं गोपयन्संप्रदायं
कृतविदनघवृत्तिः किं न विन्देन्निधानम् ॥ ४७ ॥

## प्रभाविलासः

अत्र नाथाश्लेषादिपदेन वध्वादिपदेन च शृङ्गाररसो व्यज्यते । तदुक्तं काव्यप्रकाशे—"पदैकदेशरचनावर्णेष्वपि रसादयः" इति । अत्र ह्रस्वाक्षराणां संयुक्ताद्यतया गुरुत्वेनातिगाढत्वादौर्जित्यं नाम गुणः, "यद्बन्धस्यातिगाढत्वमौर्जित्यं तदुदाहृतम्" इति लक्षणात् ॥ ४६ ॥

**अशिथिलेति** । आदिपदेन नमस्कारादयः । वस्तुपदेन पुत्रदारादिसंग्रहः । आह च मनुः—"गुरुदारे सपिण्डे वा गुरुवद्वृत्तिमाचरेत्" इति । आपस्तम्बश्च—"आचार्यवदाचार्यपुत्रे वृत्तिः" इति; "गुरुदारसुतादौ तु गुरुवद्वृत्तिमाचरेत्" इति च । **वास्तु**; गृहम् । आदिशब्देन

## प्रभावली

क्रीडार्थशुकवत् प्रक्षिप्यते । एवं **बोधायनोऽपि** परं केवलं श्रुतिबाधायैव भवति । भाष्यकारैरैक्यश्रुतेः शरीरशरीरिभावद्वारा ऐक्यतात्पर्यस्य दर्शितत्वात् सर्वग्रन्थसामञ्जस्यमिति भावः ॥ ४६ ॥

**आर्यस्यास्य** क इव न जेतव्यः? सर्वोऽपि जेतुं शक्या इत्यर्थः । तदेव प्रतिपादयति—**तथाहीति** । **अशिथिला** दृढा गुरौ भक्तिर्यस्य । गुरोः प्रशंसाप्रणामशुश्रूषादिस्वभावः । तस्य गुरोर्वस्तुषु; आदिशब्देन श्रीकोशादिग्रहणम् ।

## प्रभाविलासः

स्थानादि । "तेषु त्वविद्यमानेषु स्थानासनविहारवान्" इति मनुस्मरणात् । **गुणवति**; आस्तिक्यादिगुणयुक्ते ।

"आस्तिको गुणशीलश्च शीलवान् वैष्णवार्चकः ।
गम्भीरश्चतुरो धीरः शिष्य इत्यभिधीयते ॥"

इति भरद्वाजः ।

"आचार्यपुत्रः शुश्रूषुर्ज्ञानदो धार्मिकः शुचिः ।
आप्तः शक्तोऽर्थदः साधुः स्वोऽध्याप्या दश धर्मतः ॥"

इति मनुः ।

"कृतज्ञाद्रोहिमेधाविशुचिकल्यानसूयकाः ।
अध्याप्याः साधु शक्ताप्तस्वार्थदा धर्मदस्तथा ॥"

इति याज्ञवल्क्यः । **कृतवित्**; आचार्यैर्निष्प्रत्युपकारमुपकृतमिति ज्ञानवान् ।

"ब्रह्मविद्याप्रदानस्य देवैरपि न शक्यते ।
प्रतिप्रदानमपि वा दद्याच्छक्तित आदरात ॥"

इति स्मरणात् । **अनघवृत्तिः**; शुश्रूषादिषु कौटिल्याहंकारादिरहितः । **निधानम्**; निरतिशयपुरुषार्थभूतब्रह्मस्वरूपम्, "यथा हिरण्यनिधिं निहितम्" इत्यादिश्रुतेः ॥ ४७ ॥

## प्रभावली

तेषु प्रचुरो बहुमानो यस्य । किंच **गुणवति**; "सद्बुद्धिः" इति श्लोकोक्तगुणपौष्कल्यवति शिष्ये लब्धे । **विनियोक्तुम्**; उपदेष्टुम् । **संप्रदायम्**; गुरुपरंपरायातदर्शनीयरहस्यजातम् । **गोपयन्**; अपात्रेष्वनुपदिशन् । आचार्येण स्वस्मिन् कृतमुपकारं विदन् कृतज्ञः । **अनघवृत्तिः**; निरपराधोत्तरकृत्यः । कश्चित् **निधानं किं न बिन्देत**; मनीषितं प्राप्नोत्येवेत्यर्थः ॥ ४७ ॥

**शिष्यः**—देव, सिद्धान्तबलादेव विजिगीषे[1]। तदत्र संपश्यतां महाराजः।

**निराबाधा बोधायनभणितिनिष्यन्दसुभगा**
**विशुद्धोपन्यासव्यतिभिदुरशारीरकनयाः।**
**अकुण्ठैः कल्पन्ते यतिपतिनिबन्धा निजमुखै-**
**रनिद्राणप्रज्ञारसधमनिवेधाय सुधियाम् ॥ ४८ ॥**

प्रभाविलासः

**निराबाधा इति।** **निराबाधाः**; ईषदपि बाधरहिताः "ईषदर्थे क्रियायोगे" इति वचनात्। **बोधायनभणितिः**; वृत्तिग्रन्थः, तस्या निष्यन्दवत् सुभगाः; निष्यन्देन सुभगा वा। तदनुसारिण इति यावत्। "तन्मतानुसारेण" इति ह्यभाषि। अनेन शंकरभाष्यस्य बोधायन-वृत्तिविरोधः सूचितः। **विशुद्धोपन्यासेन** व्यतिभिदुरा मिश्रिताः शारीर-कनया व्याससूत्राणि येषु ते। अनेन शांकरीयभाष्यस्य सूत्रविरोधः सूचितः। उक्तं च तैरेव—

"शंकरः शंकरः साक्षाद् व्यासो नारायणः स्वयम्।
तयोर्विरोधे संप्राप्ते शंकरः किं करिष्यति ॥"

प्रभावली

सिद्धान्तदार्ढ्यादेव मे विजिगीषा, न बुद्धिबलादित्याह—**सिद्धान्तेति**। **विजिगीषे**; **विजेतुमिच्छामि**। सिद्धान्तबलं दर्शयति—**निराबाधेति**। आबाधः ईषद्बाधः, तेनापि रहिताः। बोधायनभणितिः वृत्तिग्रन्थः, तस्य निष्यन्दः प्रसरः, तद्रूपत्वात् सुभगाः। **विशुद्धेन** दोषरहितेनोपन्यासेन व्यतिभिदुराः संपृक्ताः, प्रकाशमाना इत्यर्थः, शारीरकसूत्रस्य नयाः न्यायाः यत्र ते। **यतिपति-**

[1] जेतव्यान् added after—क.

किंच[1] ;

दृष्टेऽपह्नुत्यभावादनुमितिविषये लाघवस्यानुसारा-
च्छास्त्रेणैवावसेये विहतिविरहिते नास्तिकत्वप्रहाणात् ।

प्रभाविलासः

इति । **निजमुखैः** ; शास्त्रमुखैः, ग्रन्थैकदेशैर्वा । निजमुखैश्छात्रैः पठ्यमाना इति शेषो वा । **अनिद्राणप्रज्ञारसधमनिवेधाय** ; असंकुचितज्ञानप्रसराय । धमनिवेधे हि रसः सर्वतः प्रसरतीति प्रसिद्धिः । अत्र पादचतुष्टये घोषवदक्षरप्रायत्वात् स्फुटवर्णनिर्वाहो नाम समतागुणः । तदुक्तम् —

"मृदुस्फुटविमिश्राणां वर्णानां बन्धवल्लिषु ।
आपादचूडं निर्वाहः समता धीमतां मता ॥"

इति ॥ ४८ ॥

**दृष्ट इति** । **दृष्टे** ; प्रत्यक्षे । **अपह्नुत्यभावात्** ; 'अयं पट एतत्तन्तु-

प्रभावली

**निबन्धाः** ; श्रीभाष्यादयः । **अकुण्ठैः** ; केनचिद्बाधाभावात् तीक्ष्णैः । **निजैर्मुखैः** ; मुखशब्देन लक्षणया प्रधानप्रतिपाद्यार्था उच्यन्ते ; तैः साधनैः । सुधियाम् अनिद्राणप्रज्ञा सैव रसः, तत्सिद्ध्यर्थं धमनिवेधाय सिरावेधाय **कल्पन्ते** ; समर्था भवन्ति । यथा तदभिज्ञैः सिरावेधे कृते रुधिररूपो रसः प्रसरति, एवं निजार्थश्रवणमात्रेण प्रज्ञातिशयं जनयन्तीत्यर्थः ॥ ४८ ॥

यतिपतिनिबन्धानां कैर्हेतुभिर्मतान्तरेभ्य आधिक्यम् ? केन वा हेतुना

[1] आपादचूडमनपायिनि दर्शनेऽस्मिन्नाशासनीयमपरं* न विपक्षहेतोः ।
आपातशान्तिमधुरान् पुनरस्मदीयानन्योन्यवैरजननी विजहात्वसूया ॥
राजा—ब्रह्मन्, उत्सर्यते पुनरियमीदृशेन भवद्वचनेन । शिष्यः—जितं तर्हि विपश्चित्तया । राजा—किमुच्यते । शिष्यः† added after किंच—क, ख.

* आशंसनीयमपरं—ख. † शिष्यः omitted—ख.

नाथोपज्ञं प्रवृत्तं बहुभिरुपचितं यामुनेयप्रबन्धै-
स्त्रातं साम्यग्यतीन्द्रैरिदमखिलतमःकर्शनं दर्शनं नः ॥ ४९ ॥

प्रभाविलासः

निष्ठात्यन्ताभावप्रतियोगी' इति मतान्तरवत् प्रत्यक्षापलापाभावात् । नन्वलातचक्रादिप्रत्यक्षापह्नवस्तवापि संमत इत्यत आह—**विहृतीति** । अन्यथाख्यातौ बाधसंभवात् तदपलापो युक्त इत्यर्थः । **अनुमितिविषये**; परमाण्वादिसाधकानुमानस्थले । **लाघवस्यानुसारात्**; त्रसरेणोरेवाणुपरिमाणतारतम्यविश्रान्तिविषयत्वेन तदतिरिक्ताप्रामाणिकगौरवस्यानङ्गीकारादित्यर्थः । यद्वा "विवादगोचरापन्नं प्रमाणज्ञानं स्वप्रागभावव्यतिरिक्त—" इत्यादिविशेषसाध्यकानुमानादिस्थले[1] सर्वसंप्रतिपन्नज्ञानाभावादिना सकलव्यवहारसिद्धौ[2] अप्रामाणिकगुरुभूतभावरूपाज्ञानकल्पनाननुसारादित्यर्थः । **शास्त्रेणैवावसेये**; ईश्वरे । **विहृतिविरहिते**; तदङ्गीकारे कर्मानुष्ठानादेरविरोध इत्यर्थः । उक्तं च सूत्रकारैः—"विरोधः कर्मणीति चेन्नानेक-

प्रभावली

ज्ञानातिशयहेतुत्वमिति शङ्कायामाह—**दृष्टेति** । **दृष्टे**; प्रत्यक्षगम्ये वस्तुनि । **अपह्नुतिः**; अपलापः, तदभावात् । अनेन बौद्धादिमतात् प्रच्छन्नबौद्धमताच्च व्यावृत्तिरुक्ता । ते तु प्रत्यक्षसिद्धं जगदपलपन्ति । **अनुमितिविषये**; अनुमेये वस्तुनि । लाघवस्याङ्गीकारात् । **अनेन** न्यायवैशेषिकमतव्यावृत्तिः, तयोर्मते परिमाणतारतम्यावधित्वेन परमाण्वभ्युपगमनगौरवात् । अत्र तु त्रसरेणोरेव परिमाणतारतम्यावधित्वसंभवे परमाणुरूपधर्मिकल्पनस्याधिकस्यानङ्गीकारात् लाघवस्यानुसारः । **शास्त्रेणैवावसेये**; आगमगम्ये । **विहृतिविरहिते**; प्रमाणा-

[1] 'विवादगोचरापन्नं प्रमाणज्ञानं स्वप्रागभावव्यतिरिक्तस्वविषयावरणस्वनिवर्त्यस्वदेशगतवस्त्वन्तरपूर्वकं भवितुमर्हति, अप्रकाशितार्थप्रकाशकत्वात् अन्धकारे प्रथमोत्पन्नप्रदीपप्रभावत्' इत्यनुमानशरीरं पञ्चपादिकाविवरणकारोक्तमवगन्तव्यम् ।

[2] एतत्प्रकारश्च श्रीभाष्यश्रुतप्रकाशिकादौ स्पष्टः ।

### प्रभाविलासः

प्रतिपत्तेर्दर्शनात्" इत्यादिना। **नास्तिकत्वप्रहाणात्;** श्रुतित्वाविशेषेऽपि "निःसारा वेदान्ताः" इत्यादिनास्तिकत्वनिरासात्। यद्वा "यः सर्वज्ञः सर्ववित्" "स्वाभाविकी ज्ञानबलक्रिया च" इति शास्त्रबोध्ये सगुणे ब्रह्मणि "एकमेवाद्वितीयम्" "तत्त्वमसि" "नेह नानास्ति किंचन" "अयमात्मा ब्रह्म" इत्यादिवाक्यानाम् "यो विज्ञानमन्तरो यमयति" "य आत्मानमन्तरो यमयति" इत्यादिघटकश्रुत्यनुसारेण शरीरशरीरिभावादिविशिष्टैक्यपरत्वेन विहतिविरहिते सत्येव मुख्यार्थपरित्यागरूपनास्तिकत्वपरित्यागादित्यर्थः। **नाथः;** ईश्वरः। स एवोपज्ञा आद्यज्ञानं यथा तथा "उपज्ञा ज्ञानमाद्यं स्यात्" इति निघण्टुः। श्रीपाञ्चरात्रश्रीगीतादिना विशिष्टाद्वैतस्य प्रवर्तितत्वात् तदुक्तिः। यद्वा **नाथः;** नाथमुनिः। भीमादिपदवन्नामैकदेशेन नामग्रहणम्। नाथमुनेः पूर्वमपि संप्रदायस्याविच्छेदेऽप्युपज्ञेति स्पष्टत्वाभिप्रायम्। **यामुनेयप्रबन्धैः;** सिद्धित्रयागमप्रामाण्यस्तोत्ररत्नगीतार्थसंग्रहप्रभृतिभिः। शारीरकसूत्रगीताभाष्यादिप्रणयनेन दर्शनस्थापनेन च यतीन्द्रैः सम्यक् त्रातमित्युक्तम्। अत्रोक्तविशेषणानां दर्शनातिशयप्रतिपादकत्वादुदारता नाम गुणः, "श्लाघ्यैर्विशेषणैर्योग्यबन्धां विदुरुदारताम्" इति लक्षणात्॥ ४९॥

### प्रभावली

न्तरबाधरहिते; ईश्वर इति शेषः। **नास्तिकत्वस्य** त्यागात्। अनेन परिगृहीतनास्तिक्ययोर्भट्टगुरुमतयोर्व्यावृत्तिः। संप्रदायागतत्वादप्यस्य दर्शनस्य ज्ञानाधिक्यजनकत्वमाह—**नाथोपज्ञमित्यादि**। नाथस्य नाथमुनेः उपज्ञा आद्यज्ञानं यथा भवति तथा प्रवृत्तमित्यर्थः। **बहुभिः यामुनेयस्य** आलवन्दारित्यपरनामधेयस्य **प्रबन्धैः** सिद्धित्रयागमप्रामाण्यादिभिः संवर्धितम्। **यतीन्द्रैः;** श्रीभाष्यकारैः। **सम्यक् त्रातम्;** भाष्यादिप्रणयनेन प्रतिमतभङ्गपूर्वकं रक्षितम्। **नोऽस्माकमिदं दर्शनम्;** **अखिलतमःकर्शनम्;** यथार्थज्ञानहेतुत्वादखिलाज्ञानापनोदनमित्यर्थः॥ ४९॥

**राजा**—किमुच्यते[1] ?

(नेपथ्ये 'तर्कव्याकृति' इत्यादि पुनः पठित्वा सप्रतिज्ञं महान् कलकलः । सर्वे समाकर्णयन्ति)

**शिष्यः**—('यतीश्वर' इत्यादि पुनः पठन्नर्धोक्ते विरम्य राजानमवलोकयति)

**राजा**—पठ्यतां पठ्यताम् ।

**शिष्यः**—(शेषं पठति)

**राजा**—आर्य, सर्वज्ञाद्भगवतः समासादितसर्वविद्यानिधेरत्रभवतः[2] संप्रति विपश्चितामपश्चिमैरेतैरापतद्भिः संव्यवहारेण संशयप्रशमनमिच्छामि ।

**शिष्यः**—(सगर्वहासम्[3]) निशामयतु निपुणमेतन्महाराजः—

**पर्याप्तं पर्यचैषं कणचरणकथामाक्षपादं शिशिक्षे**
**मीमांसामांसलात्मा समजनिपि मुहुः सांख्ययोगौ समाख्यम् ।**

### प्रभाविलासः

**अपश्चिमैः**; प्रथमैः । **पर्याप्तमिति** । कणचरणः कणभक्षः । "चर गतिभक्षणयोः" इति धातुः । **पर्यचैषम्**; परिचयं कृतवानस्मि । **शिशिक्षे**;

### प्रभावली

किमुच्यते ; किं वक्तव्यमिदमित्यर्थः । "तर्कव्याकृतितन्त्रशिक्षितधियः" इति श्लोकं पुनरपि पठित्वा सप्रतिज्ञम्; प्रतिज्ञापूर्वकमभवदिति शेषः । "यतीश्वरसरस्वतीसुरभिताशयानाम्" इति पुनः पठन्नात्मश्लाघाभीत्या विरम्य

[1] राजा—किमुच्यते omitted—क.

[2] रपि भवतः—ङ. च. छ.

[3] सगर्वम्—क.

**इत्थं तैस्तैर्यतीन्द्रत्रुटितबहुमृषातन्त्रकान्तारपान्थै-**
**रन्तर्मोहक्षपान्धैरहह किमिह नश्चिन्तनीयं तनीयः ॥ ५० ॥**

किंच ;

**यद्येकं[1] यतिसार्वभौमकथितं[2] विद्यादविद्यातमः-**
**प्रत्यूषं प्रतितन्त्रमन्तिमयुगे कश्चिद्विपश्चित्तमः ।**

प्रभाविलासः

शिक्षितोऽस्मि । **समजनिषि ;** जातोऽस्मि । **समाख्यम् ;** सम्यक् व्याख्यातवानस्मि । **यतीन्द्रत्रुटितं** बहु मृषातन्त्रमेव कान्तारं दुर्गमं वर्त्म, तत्र पान्थैः । अन्तर्मोहेनैव क्षपया रात्र्या अन्धैः । **तनीयः ;** स्वल्पम् । अह हेत्यद्भुते ॥ ५० ॥

**यद्येकमिति । प्रतितन्त्रम् ;** स्वशास्त्रसिद्धान्तम् ।

**प्रभावली**

राजानमवलोकयति । यद्यपि सर्वज्ञाद् गुरोः प्राप्तसर्वविद्यस्य तव वाक्यमेव मम संशयप्रशमायालम्, तथापि संप्रति विद्वदग्रगण्यैरेतैः समं व्यवहारेण वादमुखेनात्मनः संशयप्रशमनमिच्छामि । गर्वस्तु तेषां तुच्छत्वात् । हासस्तदज्ञत्वात् । निशमयतु ; शृणोतु । **पर्याप्तमिति । कणचरणकथाम् ;** वैशेषिकशास्त्रम् । पर्याप्तम् ; यथेष्टम् । **पर्यचैषम् ;** परिचितवानस्मि । **आक्षपादम् ;** न्यायशास्त्रम् । **शिशिक्षे ;** शिष्यान् शिक्षितवानस्मि । **मीमांसया** पूर्वोत्तरया उपचितदेहः समजनिषि । सांख्यशास्त्रं योगशास्त्रं च समाख्यं प्रकाशितवानस्मि । इत्थं वैशेषिकादिशास्त्रपरिचये सति **यतीन्द्रेण त्रुटितानि** छिन्नानि बहूनि मृषातन्त्राण्येव कान्तारं दुर्गमं तत्र पान्थैः प्रविष्टमात्रैः । **अन्तर्मोहः** अज्ञानम्, तदेव क्षपा रात्रिः, तया **अन्धैः ;** स्वपरमात्मदर्शनासमर्थैरित्यर्थः । तैस्तैर्वादिभिः सह इह नः तनीयः अत्यल्पमपि चिन्तनीयं परामर्शनीयं किमस्ति ? अहहेति खेदे ; आश्चर्ये वा ॥५०॥

अन्यदप्यस्तीत्याह—**किंचेत्यादि** । यतीन्द्रमते एकग्रन्थपरिशीलनवतो-

[1] यद्येतं—ख. [2] गदितं—ङ. छ.

**तत्रैकत्र झटित्युपैति विलयं तत्तन्मतस्थापना-**

**हेवाकप्रथमानहैतुककथाकल्लोलकोलाहलः ॥ ५१ ॥**

**गुरुः**—महाराज, एते मोघप्रलापमुखरमुखदुन्दुभयः कल-
हकोलाहलकुतूहलिनः कथकाः ;

**श्वावराहकलहक्रमादमी संपतन्ति निगमान्तरोधकाः ।**

**तानिमान्युगलवादसिद्धये वारयत्वयमसौ चमूपतिः ॥ ५२ ॥**

### प्रभाविलासः

"स्वतन्त्र एव सिद्धोऽर्थः परतन्त्रैर्निराकृतः ।
प्रतितन्त्रो यथा न्याये सर्वज्ञस्य प्रमाणता ॥"

इति लक्षणात् । तत्तन्मतस्थापनायां हेवाकेनाभिलाषेण प्रथमानानां हैतु-
कानां कथाकल्लोलानां कोलाहलः ॥ ५१ ॥

**श्वावराहेति** । एकस्मिन् वराहे बहुश्वसंनिपातः श्वावराहकलहक्रमः ।
**युगलवादः** ; द्वन्द्ववादः । अनेन नर्माख्यं प्रतिमुखसंधेरङ्गं निरूपितम् ।

### प्रभावली

ऽपि पुरतः प्रतिवादिनो वादाहवे न स्थातुं क्षमा इत्याह—**यदीति** । यतिसार्व-
भौमेन प्रकाशितम्, अज्ञानान्धकारस्य प्राक्संध्यायमानम् एकं प्रतितन्त्रसिद्धान्तं
विशिष्टाद्वैतरूपं कलियुगे कश्चिद्विद्वदग्रेसरः विद्यात्, **तस्मिन्नेकस्मिन्** ; एक-
स्मिन्नेव पुंसि । **तत्तदित्यादि** । तानि तानि मतानि तत्तन्मतानि, तत्स्थाप-
नायां प्रतिष्ठापनायां **हेवाकेन** अभिलाषेण **प्रथमाना** ये **हैतुकाः** तेषां वादकल्लोल-
कोलाहलः झडिति विलयं शान्तिमुपैति । तान् सर्वानयमेक एव जेतुं
शक्नोतीत्यर्थः ॥ ५१ ॥

**मोघेन** प्रलापेन मुखरं शब्दायमानं मुखं, तदेव दुन्दुभयो येषां ते ।
दुन्दुभिवदव्यक्तं घोषयन्त इत्यर्थः । वादकोलाहले कुतूहलिनः संपतन्तीत्युत्तरत्र
संबन्धः । **श्वेति** । वेदान्तसिद्धान्तदूषकाः सन्तः **श्वावराहकलहक्रमात्** ;

**शिष्यः**—(सान्तर्हासम्)

**अध्यक्षं यच्छ्रुतं वा लघु तदिति भवत्यादिमो वादिमोह-**
**स्तत्त्वोदर्का न तर्कास्तदिह[1] जगति किं मेधया साधयामः ।**

**प्रभाविलासः**

"परिहासवचो नर्म" इति लक्षणात् ॥ ५२ ॥

किंचित्प्रमाणावलम्बनेन वादः प्रवर्तते । तदवलम्बने कथं स इत्याशयवानाह—**अध्यक्षमिति** । अध्यक्षश्रुतशब्दाभ्यामनुमानं च संगृहीतम् । प्रमाणजातं तुच्छमिति प्रथमतो वदन्तीत्यर्थः । तत्त्वाध्यवसायहेतुं तर्कमपि न सहन्त इत्याह—**तत्त्वेति** । **उदर्कः**; उत्तरफलम् । न केवलं प्रमाणादि-

**प्रभावली**

अनेके श्वानः एकं वराहं परिवृत्य कलहायन्ते, तन्न्यायात् । इमं कलहयितुं युगपत्संपतन्ति । तानेतान् **युगलवादसिद्धये** द्वन्द्वकथासिद्ध्यर्थम् **अयं चमूपतिः वारयतु**; नियमयत्वित्यर्थः ॥ ९२ ॥

**सान्तरिति** । अन्तर्मनसि हसन्नित्यर्थः । **अध्यक्षमिति** । भेदवादिनो यत् वस्तु, तदध्यक्षं वा प्रत्यक्षगम्यं वा ; श्रुतं वा, "द्वा सुपर्णौ" इत्यादिश्रुतिगम्यं वा । नाद्यः, प्रत्यक्षस्य युक्तिबाधितत्वात् । न द्वितीयः, अद्वितीयश्रुत्यादिबाधितत्वात् । तदेतदाह—**लघ्विति** । युक्त्यादिबाधितत्वात् तुच्छत्वमित्यर्थः । इदमभेदवादिदूषणं भेदवादी परिहरति—**इत्यादिमो वादिमोह** इति । इदं दूषणं वाद्यज्ञानकृतमित्यर्थः । तर्हि तर्केण भेदादिवस्तुसिद्धिरिति वदन्तं भेदवादिनं दूषयत्यभेदवादी **तर्कास्तत्त्वोदर्का न भवन्ति** । तर्कस्य कस्मिंश्चिदप्यर्थेऽप्रतिष्ठानादिति । इदमभेदवादिदूषणं भेदवादी परिहरति—**तदिहेति** । यस्मात् तर्कस्य वैयर्थ्यं त्वयोक्तं, तत्तस्मात्सर्वेषां मेधासाध्यं किमपि न स्यादि-

[1] तदिति—ग.

**तिष्ठन्त्वेते[1] लघिष्ठाः कतिचन दधतो मानसे मानसेतुं**
**हंहो[2] सभ्यानसभ्य[3] स्थपुटमुखपुटा दुर्जना निर्जयन्ति ॥ ५३ ॥**

निशम्यतां चेतत्[4] सभापतिसेनापतिभ्याम्—

**बाधादिभिः स्वमतहेतुगणे निरस्ते**
**नित्यागमप्रतिहतेषु निजागमेषु ।**

### प्रभाविलासः

लघूकरणं, प्रामाणिकानपि लघयन्तीत्याह—**तिष्ठन्त्वेत इति । मानसेतुम्,** गर्वोन्नतिम् । **असभ्यैः;** असंबद्धप्रलापैः स्थपुटानि विषमाणि मुखपुटानि येषां ते तथोक्ताः । हंहो इत्याश्चर्ये ॥ ५३ ॥

**बाधेति** । आदिपदेन व्याघातादिकमुच्यते । **नित्यागमः;**

### प्रभावली

त्यर्थः । इत्येवं संभूय प्रवदतां मध्ये ये प्रलपन्ति, ते तिष्ठन्तु । एते कथंचित् सोढुं शक्याः, युक्त्याभाससहितत्वात् । ये तु केचन तुच्छाः केवलवाचाटत्वमात्रमवलम्ब्य प्रामाणिकान्निर्जयन्ति, तेषां प्रलपनमेवातिदुःसहमित्याशयेनाह—**लघिष्ठाः कतिचनेत्यादि** । अतिक्षुण्ठाः केचनाहंकारग्रस्तमनसः, असभ्यस्थपुटमुखपुटाः सभानर्हैः वाग्जालैः स्थपुटं विषमितं मुखपुटं येषां ते भूत्वा सभ्यान् सभार्हान् प्रामाणिकान् केवलतर्कबलेन निर्जयन्ति । हंहो इत्यव्ययमतिदुःसहार्थे वर्तते ॥ ५३ ॥

एते दुर्वादिनः संभूय वादकरणेऽपि न मे पर्याप्ता इत्याह—**बाधादिभिरिति** । एषां धाष्ट्र्यमात्रशरणत्वमुपपादयति—**बाधादिभिरिति** । स्वमते यो युक्तिगणः प्रत्यक्षानुमानरूपः, तस्मिन् बाधासिद्ध्यादिभिर्निरस्ते सति । **निजा-**

[1] तिष्ठत्वेतत्—ङ. [2] हाहा—ङ.
[3] सभ्याः—च. [4] चेदं—ख. ग. घ.

**प्रागल्भ्यमात्रशरणाः प्रतिवादवूकाः**
**संभूय वादकरणेऽपि न मे प्रभूताः ॥ ५४ ॥**

(विहस्य [1]सहस्तास्फालनम्)

अहो नु खल्वन्धैरन्धस्य यष्टिः प्रदीयते । पङ्गोर्वा पङ्गुभिरतिवहनम् । यदेते कर्मान्धकारप्रतिहतमतयः कुमतयो महामोहस्य साचिव्यमाचरन्ति ।

किंच ;

**वशिकतटिनीवर्षारम्भप्रवाहविडम्बकै-**
**रलघुभिरपभ्रश्यद्गुम्भोपलम्भितडम्बरैः ।**

**प्रभाविलासः**

वेदः ॥ ५४ ॥

**वशिकेति । वशिकतटिनीनाम् ;** क्षुद्रनदीनां वर्षारम्भप्रवाहं विडम्बयन्तीति तथोक्तैः । **अपभ्रश्यद्भिः ;** प्रस्खलद्भिः । **गुम्भैः** ; बहु-

**प्रभावली**

**गमेषु ;** तैः प्रमाणतया परिगृहीतेषु आगमेषु **नित्यागमैः** वेदवाक्यैः प्रतिहतेषु सत्सु । स्वमते प्रत्यक्षानुमानागमरूपप्रमाणासंभवात् प्रागल्भ्यं वाचाटत्वरूपं तदेव शरणं गतिः येषां ते, एते प्रतिवादिनः सर्वे मिलित्वापि मे वादकरणे न पर्याप्ताः ॥ ५४ ॥

दुर्वादिभिः क्रियमाणं महामोहसाचिव्यं परिहसति---**अहो नु** इत्यादि । **अन्धैः** ; जात्यन्धैः । **पङ्गुः** ; पादहीनः । **अतिवाहनम्** ; देशान्तरप्रापणम् । कर्म पुण्यपापरूपम्, तदेवान्धकारः, तेन प्रतिहतबुद्धयः । **कुमतयः** ; कुदृष्टयः ।

[1] सहस्तास्फालनम् omitted—ख,

उपकरणयन्त्येते बालानुदग्रकुतूहला-
नुपलनिकरग्रासप्रायैरुपन्यसनक्रमैः ॥ ५५ ॥

अहह अमीषां प्रतिवावदूकानां प्रवादमनुमोदमाना महामोह-पक्षपतिनो गर्दभगाने[1] सृगालविस्मयमनुस्मारयन्ति[2] ।

**राजा**—सेनापते, नियम्यन्तामेते निर्भरनिगमान्तवैरविप्लुत-प्रतिपत्तयः प्रत्येककथाप्रवर्तनाय ।

**प्रभाविलासः**

प्रलापैः । **उपलम्भितं** प्रापितं डम्बरं येषां तैस्तथोक्तैः । **उपलेति** कर्कश-शब्दग्रन्थिलत्वमुच्यते ॥ ५५ ॥

**प्रभावली**

**साचिव्यम्**; सचिवताम् । नन्वेतेषां वाग्वैखरी सर्वानपि वशीकर्तुं प्रभवती-त्यत्राह—**वशिकेति** । **वशिकतटिनी**; क्षुद्रनदी, तस्याः वर्षारम्भे वृष्ट्युपक्रम-काले यः प्रवाहः, तद्विडम्बकैः प्रवाहानुकारिभिः । क्षुद्रनदीप्रवाहो वृष्टिसमय एव बहुलं प्रसर्पति, उत्तरक्षण एव क्षीयते; तादृशैरित्यर्थः । **अलघुभिः** बहुभिः अपभ्रश्यद्भिः गुम्भैः अपशब्दभरितनिरर्थकोपन्याससंदर्भैः उपलम्भितो ज्ञापितो डम्बरः शुष्कसंभ्रमः येषां तैः । **उपलनिकरग्रासप्रायैः**; पाषाणग्राससदृशैः **उपन्यसनक्रमैः** उपन्यासपरिपाटिभिः । **उदग्रकुतूहलान्** संभ्रममात्रकुतूहलयुक्तान्, नत्वर्थविशेषे । **बालान्**; अज्ञान् । **उपकरणयन्ति**; स्वोपकरणभूतान् कुर्वन्ति । न प्राज्ञानिति भावः ॥ ५५ ॥

दुर्वादिसंभ्रमानुमोदिनो महामोहपक्षीयान् परिहसति—**अहहेत्यादिना** । **प्रवादम्**; वाक्कोलाहलम् । **अनुमोदमाना** महामोहपक्षीयाः कामक्रोधादयोऽज्ञाश्च । गर्दभानां गानविषये, सृगालाः जम्बुकाः, तेषां विस्मयम् अद्भुतं ज्ञापयन्तीत्यर्थः । **निर्भराः**, महार्थपरिपूर्णाः तेषु वेदान्तेषु, वैरं वैमुख्यम्, तेन **विप्लुतप्रतिपत्तयः**

[1] गानेषु—ग. घ. ङ.   [2] अनुसरन्ति—क.

**सेनापतिः**—नियच्छामि [1]तानेतान्निरर्थकादाटोपात्[2] (परिवृत्यावलोक्य) भो भोस्त्रयीबाह्याः कुदृष्टयश्च,

अलमिह मिथःश्लाघामाद्यन्मितंपचसंमतै-
रनघपरिषत्प्रत्यादिष्टैरलीकविकत्थनैः ।
अवितथकथाधौरेयाणामनुप्रसृतौ सतां
ध्रुवमिह भवद्वृत्तेराविर्भविष्यति पङ्गुता ॥ ५६ ॥

**शिष्यः**—भगवन्, इतः प्रसार्यतां दृष्टिः ।

[3]माहाराष्ट्रीं मागधीं शौरसेनीं लाटीं गौडीमित्थमन्यादृशीं च ।
अङ्गीकुर्वन्त्यागमीकृत्य दत्तां हास्यां भाषां हन्त बुद्धार्हताद्यैः ॥५७॥

प्रभाविलासः

**सेनापते नियम्यन्तामिति** वेदवादविषयप्रीतिसूचनान्नर्मद्युत्याख्यं प्रतिमुखसंधेरङ्गं निरूपितम्, "अनुरागोद्घाटनार्था प्रीतिर्नर्मद्युतिर्भवेत्" इति लक्षणात्। **अलमिति**। **मितंपचाः**; क्षुद्राः। **अनुप्रसृतौ**; अनुसरणे ॥५६॥

**माहाराष्ट्रीमिति**। माहाराष्ट्रीप्रभृतयः प्राकृतभाषाविशेषाः ॥ ५७ ॥

**प्रभावली**

नष्टबुद्धयः। **निरर्थकादाटोपात्**; निष्प्रयोजनात् संभ्रमात। **वेदबाह्याः**; चार्वाकादयः। **कुदृष्टयः**; शंकरादिमतानुवर्तिनः। विदुषां पुरतोऽनृतप्रलापैरलम्। तेषां पुरतोऽलीकविकत्थनेन भवतामज्ञत्वं प्रत्यक्षितं स्यादित्याह—**अलमिति**। अन्योन्यप्रशंसया गर्वयुता ये क्षुद्राः तत्संमतैः, विद्वद्गोष्ठीभिः प्रत्याख्यातैः अनृतजल्पैरिहालम्। यथार्थवादधुरंधराणां सतामनुसरणे, तत्संनिधावित्यर्थः। **भवद्वृत्तेः**; भवतां वर्तनस्य, वैदुष्यस्येत्यर्थः। **पङ्गुता**; विकलता। **ध्रुवं** नियतमाविर्भविष्यति। अतो महतां पुरतस्तैरलमिति ॥ ५६ ॥

**भगवन्निति** गुरोरामन्त्रणम्। **इतः**; अत्र। **माहाराष्ट्रीमिति**। माहाराष्ट्री

[1] तानिमान्—ग. च. [2] वादाटोपान्—घ. ङ; निरर्थकाटोपान्—च. छ.
[3] महाराष्ट्रीं—क, ख, च.

अहं त्वशेषभाषावेदी तत्तदभ्यस्तभाषयापि तार्किकानेतान्[1] [2]प्रतिक्षेप्स्यामि। वदन्ति हि पिशाचानां पिशाचभाषयैवोत्तरं देयमिति।

**गुरुः**—भद्र, यथारुचि दैवीमदैवीं वा[3] भाषां[4] पुरस्कुर्याः। अपि तु[5] दैव्यैव विश्वहृदयंगमा। महाराजोऽपि प्रायशस्तस्यामेव दत्तदृष्टिः।

**राजा**—भगवन्, अतिधृष्टोऽयं भवत्प्रसादगोचरो महानुभावः[6]।

प्रभाविलासः

**भगवन्नतिधृष्टोऽयमिति** प्रगमनं नाम प्रतिमुखसंधेरङ्गं निरूपितम्।

### प्रभावली

महाराष्ट्रसंबन्धिनी प्राकृतभाषा। मगधदेशसंबन्धिनी मागधी। शूरसेनदेशभवा शौरसेनी। लाटदेशसंबन्धिनी लाटी। गौडदेशभवा गौडी। **अन्यादृशीं** उक्तभाषाव्यतिरिक्तं भाषान्तरं च। तच्चापभ्रंशपैशाचादयः। **बौद्धार्हताद्यैः**; बौद्धः सुगताः; आर्हताः जैनाः; तदाद्यैः। **आगमीकृत्य दत्ताम्**; तत्तन्मतार्थप्रमाणविषयान् प्रबन्धीकृत्य वितीर्णां **हास्यां** संस्कृतभाषिभिः परिहास्यां **भाषां** प्राकृतरूपामेते **अङ्गीकुर्वन्ति** अङ्गीकृत्य तया व्यवहरन्तीत्यर्थः॥ ९७॥

तत्रभवता किं क्रियत इत्यत्राह—**अहं चेत्यादि**। **प्रतिक्षेप्स्यामि**; प्रत्याख्यास्यामि। संस्कृतिनां प्राकृतभाषापरिग्रहनिषेधमाशङ्क्य क्वचित्संकटे तत्परिग्रहानुमतिं दर्शयति—**वदन्ति हीति**। सन्त इति शेषः। तत्तदवसरोचितं यथेष्टं

[1] कांस्तानेतान्—ग. [2] प्रतिक्षिपामि—च.
[3] वा परिणतां—क. [4] भणितिं—ख. ग.
[5] विशेषतो added after—क. [6] महानुभावो बालः—इति प्रभावलीसंमतः पाठः

**सेनापतिः**—देव, किमत्र चित्रम्[1] ?

**कथाकलहकौतुकग्रहगृहीतकौतस्कुत-**
**प्रथाजलधिसंप्लवग्रसनकुम्भसंभूतयः ।**
**जयन्ति सुधियो यतिक्षितिभृदन्तिकोपासन-**
**[2]प्रभावपरिपक्त्रिमप्रमिति[3]भारतीसंपदः ॥ ५८ ॥**

प्रभाविलासः

"उत्तरोत्तरवाक्यैरनुरागबीजप्रकाशनं प्रगमनम्" इति लक्षणात् । **कथेति** । **ग्रहः ;** पिशाचः । **प्रथा ;** प्रसिद्धिः । सैव जलधेः संप्लवः समृद्धिः । **कुम्भसंभूतिः ;** अगस्त्यः । **अन्तिकोपासनम् ;** समीपशुश्रूषणम् । **परिपक्त्रिमा ;** परिपक्वा ॥ ५८ ॥

**प्रभावली**

**दैवीं** संस्कृतरूपाम् ; "दैवीं वाचं यच्छामि" इत्युक्तेः । **अदैवीं** मानुषीं, प्राकृतरूपाम् ; "मानुषाद्दैव्यमुपैमि" इत्युक्तेः । **भणितिं** भाषां **पुरस्कुर्याः अङ्गीकुर्वित्यर्थः** । दैव्येव भाषा सर्वमनोहरेत्यत्र हेतुमाह—**महाराज** इति । विवेकोऽपि संस्कृतभाषायां प्रायशो दत्तदृष्टिः । **गोचरः ;** विषयः । **बालः ;** माणवकः । **देवेति** राजा संबोध्यते । **कथेत्यादि** । कथारूपकलहे कौतुकमेव ग्रहः पिशाचः, तेन गृहीता ये कौतुस्कुताः, तेषां प्रसिद्धिरेव जलधिः, तस्य संप्लवस्य प्रवाहस्य, ग्रसने चुलकीकरणे, कुम्भसंभूतयः अगस्त्याः । **यतिक्षितिभृदित्यादि** । यतिक्षितिभृत् यतीन्द्रः, तदन्तिके उपासनम् अवस्थानम्, तस्य प्रभावेण परिपक्त्रिमाः परिणमन्त्यः प्रमितिभारतीसंपदः ज्ञानवचःसंपदो येषां ते सुधियः जयन्ति ; उत्कर्षेण वर्तन्ते ; यद्वा दुर्वादिनो जयन्ति । किमत्र चित्रमिति संबन्धः ॥ ९८ ॥

[1] किमत्र चित्रम् omitted—क.
[2] स्वभाव—क.
[3] प्रमति०—क.

अपिच,[1]

विकल्पाटोपेन श्रुतिपथमशेषं विघटयन्
यदृच्छानिर्दिष्टे यतिनृपतिशब्दे विरमति ।
वितण्डाहंकुर्वत्प्रतिकथकवेतण्डपृतना-
वियातव्यापारव्यतिमथनसंरम्भकलहः ॥ ५९ ॥

शिष्यः—सभापतिसेनापतिसाक्षिकं प्रवृत्तस्य दयारूपदेशिकदृष्टिदृढदंसितस्य[2] कथाहवेषु कस्त्रासः ? अद्य हि[3]—

## प्रभाविलासः

**विकल्पेति** । **यतिनृपतिशब्दे** ; यतिनृपतिरिति शब्दे । वितण्डायामहंकुर्वन्तः प्रतिकथका एव वेतण्डाः गजाः, तेषां पृतनायाः सेनायाः, वियातव्यापारेण धृष्टव्यापारेण व्यतिमथने मर्दने संरम्भेण कोपेन कलहः विरमतीति पूर्वेणान्वयः ॥ ५९ ॥

## प्रभावली

यतीन्द्रसिंहनादश्रवणमात्रेण दुर्वादिगजानामन्योन्यकलहो निवर्तत इत्याह—**विकल्पेति** । विकल्पसंभ्रमेणाशेषं वेदमार्गं विघटयन् पीडयन् । **वितण्डेत्यादि** । वितण्डाः शुष्कवादाः, तन्मात्रेणाहंकुर्वन्तः प्रतिवादिन एव गजघटा, तस्याः वियातव्यापारेण प्रगल्भशुष्कोपन्यासरूपव्यापारेण व्यतिमथने अन्योन्यनिरासे यः संभ्रमविशिष्टः कलहः । यद्वा संरम्भः कोपः, तद्विशिष्टः कलहः वादरूपः । **यतिनृपतिशब्दे** ; यतीन्द्रस्य शब्दः सिंहनादः श्रीभाष्यादिरूपः, तस्मिन् । **यदृच्छानिर्दिष्टे** ; यदृच्छया उच्चारित एव । **विरमति** ; उपरतो भवतीति ॥ ५९ ॥

[1] किंच—क. [2] दंशितस्य—च. छ. [3] तथाहि—क.

अर्थ्या तिष्ठति मामिका मतिरसावाजन्म राजन्वती
पत्या संयमिनामनेन[1] जगतामत्याहितच्छेदिना ।
यत्सारस्वतदुग्धसागरसुधासिद्धौषधास्वादिनां
प्रस्वापाय न बोभवीति भगवन्मायामहायामिनी ॥ ६० ॥

प्रभाविलासः

**अर्थ्येति । अर्थ्या;** अर्थादनपेता । **अत्याहितम्;** महाभीतिः । **यस्य** संयमिपतेः सारस्वतमेव दुग्धसागरः, तत्र सुधा प्रतिपाद्यं निरतिशयानन्दं ब्रह्म, तदेव सिद्धौषधं तस्यास्वादिनाम् । **माया;** प्रकृतिः । **महायामिनी;** प्रलयरात्रिः । **प्रस्वापाय;** बन्धायेत्यर्थः । "मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते" इति स्मरणात् । अत्र प्रस्वापायेति प्रपदेन प्रसिद्धस्वापव्यतिरेको व्यज्यत इत्युपसर्गेणालंकारध्वनिः । न च महायामिनीति वाच्यानुग्राहकतया वाच्यसिद्ध्यङ्गत्वम्; वस्तुव्यङ्ग्यालंकाराणां मध्यमकाव्यतानिषेधात् । आह च ध्वनिकारः—

प्रभावली

सभापतिसेनापती साक्षिणौ यस्मिन् कर्मणि तथा प्रवृत्तस्य । देशिकदृष्ट्या दृढं **दंसितस्य** कवचितस्य । स्वावस्थां प्रकाशयति—**अर्थ्येति** । जगतामत्याहितं महाभीतिं संसारभीतिं छिनत्तीति सः, तेन । **संयमिनां** यतीनां **पत्या** यतीन्द्रेण । **आजन्म;** जन्मारभ्य । **राजन्वती;** सुराजयुक्ता । **मामिकासौ** मतिः **अर्थ्या;** अर्थः प्रयोजनं; प्रकृतप्रयोजनानुगुणवादाहवाभिलाषिणी तिष्ठतीत्यर्थः । यतीन्द्रसेविनामिदं किमाश्चर्यमित्याह—**यत्सारस्वतेति** । यस्य सारस्वतं वाक्समूहः श्रीभाष्यादिः, स एव दुग्धसागरः, तस्य सुधा ब्रह्मणो जगत्कारणत्वोपायत्वप्राप्यत्वादितात्पर्यम्, सैव सिद्धौषधं रसायनविशेषः, तदास्वादिनां तदनुभव-

[1] अशेष—ख.

अपिच वयमेतावन्तमनेहसमनेकसाहस्रवैतण्डिकमण्डल[1]-मण्डितेषु तुण्डीरचोलपाण्ड्यकेरलकर्णाटनेपालमालवगौडलाटादिकटकेष्वखण्डिताहंकारा निष्कण्टकेन नीतिघण्टापथेन निगमसंचरेषु संचरमाणाः सद्भिरेव जातसख्याः सुख्यामः । किं बहुना ?

**आस्तां नाम यतीन्द्रपद्धतिजुषामाजानशुद्धा[2] मति-**
**स्तच्चाव्याजविदग्धमुग्धमधुरं सारस्वतं शाश्वतम् ।**

**प्रभाविलासः**

"व्यज्यन्ते वस्तुमात्रेण यदालंकृतयस्तदा ।
ध्रुवं ध्वन्यङ्गता तासां काव्यवृत्तेस्तदाश्रयात"

इति ॥ ६० ॥

**आजानसिद्धा**; स्वभावसिद्धा । **विदग्धम्**; प्रगल्भम । **मुग्धम्**;

**प्रभावली**

शीलानां पुंसां, भगवन्मायेव महायामिनी अतिदीर्घा रात्रिः, प्रस्वापाय ज्ञाननिद्रापादनाय न प्रभवति । तादृशस्य यतीन्द्रस्य कृपया मम दुर्वादिविजयः कियानिति भावः ॥ ६० ॥

स्वस्य सर्वदेशविजयित्वं प्रकटयति—**अपिचेत्यादि** । **वयम्**; आत्मनि बहुवचनम ; छात्रसहितत्वाद्वा । **एतावन्तमनेहसम** ; एतत्कालपर्यन्तम् । **वैतण्डिकाः** ; अन्तरसारवादिनः । पाण्ड्यात्पश्चिमः केरलदेशः । प्रादक्षिण्येन निर्दिशति । तत उत्तरतः कर्णाटः । ततोऽप्युत्तरतो नेपालादयः । लाटादिदेशानां कटकेषु राजस्थानेषु वादेष्वखण्डितपौरुषाः नीतिघण्टापथेन नीतिविशिष्टेन महता मार्गेण वैदिकमार्गेषु प्रवर्तमानाः सद्भिः विद्वद्भिरेव कृतमैत्राः सुखं प्राप्ताः स्मः । बहुना प्रलापेन किं

[1] मण्डल omitted—क. ख. ग. [2] आजानसिद्धा—इति प्रभाविलासपाठः.

**को वा चक्षुरुदञ्चयेदपि पुरः साटोपतर्कच्छटा-**

**शस्त्राशस्त्रिविहारसंभृतरणास्वादेषु वादेषु नः ॥ ६१ ॥**

[1]**सेनापतिः**—किमुच्यते ?

### प्रभाविलासः

सुन्दरम् । "मुग्धः सुन्दरमूढयोः" इत्यमरः । **साटोपाभिः** साडम्बराभिः तर्कच्छटाभिरेव शस्त्रैः प्रवृत्तं युद्धं, तेनैव विहारेण संभृतो रणास्वादो युद्धानुभवो येषु तेषु ॥ ६१ ॥

### प्रभावली

प्रयोजनम् । श्रीभाष्यादिवेत्तारः श्रीभाष्यादिशास्त्रं च तिष्ठन्तु । केवलं मम पुरतः वादाहवे को विद्वान् चक्षुरुन्मीलयितुं शक्त इत्याह—**आस्तामिति** । **यतीन्द्रस्य** पद्धतिः मतं, तज्जुषां महताम्, **आजानशुद्धा** स्वतो निर्मला या मतिः, सा आस्तां नाम । तस्याः दुर्वादिनो न पर्याप्ता इति भावः । तेषां महताम्, अव्याजं यथा तथा स्वभावत इत्यर्थः, विदग्धं प्रौढम्, मुग्धं ललितम्, मधुरं रसवत्, यत् सारस्वतं सततानुभाव्यं सारस्वतं प्रबन्धरूपमस्ति, तच्च आस्ताम् । तदप्येतेषां निरसने नापेक्षणीयमिति भावः । केवलमस्माकं पुरः पुरतः, साटोपा ससंभ्रमा या तर्कच्छटा युक्त्युपन्यासपरंपरा अनुमानप्रयोगपरंपरा वा, सैव शस्त्राशस्त्रि शस्त्रैः शस्त्रैश्च प्रवृत्तं युद्धं, तदेव विहारो लीला; तेन संपादितयुद्धरसवत्सु वादेषु को वा दुर्वादी तिष्ठतु । सकलशास्त्रमूर्धाभिषिक्तो वा अन्यः कश्चित् चक्षुरुदञ्चयेदपि? चक्षुरुन्मीलयितुमपि न शक्नोति; किमुत प्रत्युत्तरं दातुमित्यपिशब्दार्थः ॥ ६१ ॥

[1] किंच ;

व्याकुर्वत्करनिर्वहच्छ्रुतिशिरोरक्षां यतिक्ष्माभृत-

स्तामेतां हृदये निधाय तमसो वित्रासिकामासिकाम् ।

कोटीरेषु कुदृष्टिबाह्यपृतनानासीरमासीदतां

मायामूढदृशां दिशामि चरणं दाक्षिण्यवैदेशिकम् ॥ added before—क.

**एकयैव गुरोर्दृष्ट्या द्वाभ्यां वापि लभेत यत् ।**
**न तत्तिसृभिरष्टाभिः सहस्रेणापि कस्यचित्[1] ॥ ६२ ॥**

**[2]अध्यासीनतुरङ्गवक्त्रविलसज्जिह्वाग्रसिंहासना-**
**दाचार्यादिह देवतां समधिकामन्यां न मन्यामहे ।**

**प्रभाविलासः**

**एकयेति** । आचार्यो मन्त्रोपदेशसमये शिष्यमङ्के निधाय आपाद-मस्तकं कृपया आलोकयेदिति संप्रदायः ; तदिदमुक्तम्—**एकयेति** । तदुक्तं भरद्वाजेन—"स्वकरेण स्पृशन् गात्रं मन्त्रविद्भावयेद् दृशम्" इति । 'दयारूपदेशिकदृष्टिदृढदंसितस्य' इत्यधस्तादप्युक्तम् । श्रीवेदान्ताचार्यो बाल्ये वयसि वात्स्यवरदाचार्येण कृपया सम्यगवलोकित इति प्रसिद्धिः । उक्तं च तत्त्वमुक्ताकलापे—"वरदगुरुकृपालम्भितोद्दामभूमा" इति । ज्ञानोपदेशरूपा द्वितीया दृष्टिः । **कस्यचित्** ; शंकरादेः । शंकराद्यवलोक-नेनापि दुर्लभ इत्यर्थः । तदुक्तम्—

"पश्यत्येनं जायमानं ब्रह्मा रुद्रोऽथवा पुनः ।
रजसा तमसा चास्य मानसं समभिप्लुतम् ॥"

इति ॥ ६२ ॥

"देवमिवाचार्यमुपासीत" इति श्रुतिमभिप्रयन्नाह—**अध्यासी-**

**प्रभावली**

**एकयेति** । एकयैव दृष्ट्या कृपादृष्ट्या, द्वाभ्यां बाह्यदृष्टिभ्यां वा, शिष्यः यत्प्रयोजनं श्रेयो वा लभते प्राप्नुयात्, तत् कस्यचिद्गुरोरन्यस्य रुद्रस्य तिसृभिः दृष्टिभिरपि न लभते । चतुर्मुखस्याष्टाभिरपि दृष्टिभिः न लभते । इन्द्रस्य सहस्रेणापि दृष्टिभिः न लभते ॥ ६२ ॥

[1] लभ्यते—घ.

[2] The entire stanza is omitted—ख. ग.
अयं श्लोकः प्रभावल्यां न व्याख्यातः

**यस्यासौ भजते कदाचिदजहद्भूमा स्वयं भूमिकां**
**मग्नानां भविनां भवार्णवसमुत्ताराय नारायणः ॥ ६३ ॥**

गुरुः—महाराज, भव्यभाषितेन भवद्भमूपतिना नियमितास्त एते परमतकथकधौरेयाः[1] प्रत्येकमुपतिष्ठन्ताम्[2]। (शिष्यमवलोक्य) शृणु सौम्य, श्रुतिशिरःप्रत्यासन्नतया प्रथमसमुत्थितानां सांख्यानां संप्रति[3] स्वमतोपन्यासम्[4]। अमी च[5],

**कपिलासुरिपञ्चशिखादिमुनिप्रतिपादित[6] सांख्यमतप्रवणाः।**
**प्रकृतिं पुरुषं च विभज्य परं पुरुषं न [7]पठन्त्यघरुद्धधियः ॥६४॥**

## प्रभाविलासः

**नेति**। अध्यासीनेनाधिरूढेन तुरङ्गवक्त्रेण हयग्रीवेण विलसत् जिह्वाग्रमेव सिंहासनं यस्य, तस्मात्। तमेव विशिनष्टि—**यस्यासाविति**। **अजहद्भूमा**; अजहत्स्वरूपस्वभावः। **असौ नारायणः** यस्याचार्यस्य भूमिकामवतारं भजते, आचार्यः सन्नवतरतीत्यर्थः;

"साक्षान्नारायणो देवः कृत्वा मर्त्यमयीं तनुम्।
मग्नानुद्धरते लोकान् कारुण्याच्छास्त्रपाणिना ॥"

इति स्मरणात् ॥ ६३ ॥

सांख्यमतस्य प्रथमनिरासे हेतुमाह—**श्रुतिशिर इति**। **कपिलेति**।

## प्रभावली

भव्यं मङ्गलम्। एकैकश उपतिष्ठन्तामित्यर्थः। **श्रुतिशिरःप्रत्यासन्नतया**; "अजामेकाम्" इत्यादिश्रुत्यन्तसिद्धप्रयोजनादिस्वीकारात् प्रत्यास-

[1] कथक omitted—क. [2] तिष्ठन्ते—क. [3] संप्रति omitted—ग.
[4] पन्यासः—ग. [5] अमी च omitted—क. ख. ग.
[6] प्रतिबोधित—ङ. च. [7] वदन्त्यघ—ख.

शिष्यः—(स्वगतम्) संप्रवृत्तेऽस्मिन्वादे संवननीयाश्चैते प्रथमं सभासदः। (प्रकाशम्)

**अक्षय्यशान्तिमकरन्दरसप्रसक्ता-**
**नभ्यर्थये [1]मुरभिदङ्घ्रिसरोजभृङ्गान्।**
**कामं प्रसीदत यथाहमनन्यभावः**
**कर्णामृतानि भवतामवतारयेयम्॥ ६५॥**

**प्रभाविलासः**

कपिलादयः सांख्यमतप्रवर्तकाः। परमपुरुषापठने हेतुमाह—**अघरुद्धधिय इति**॥ ६४॥

**संवननीयाः**; वशीकरणीयाः। **अक्षय्येति**। मकरन्दरसपदेन निरवधिकपुरुषार्थो लक्ष्यते "तत्र सन्ति हि रसाश्चतुर्विधाः" इतिवत्॥६५॥

**प्रभावली**

त्तिरिति वेदितव्यम्। अनेन तर्कपादे प्रथमत एव "स्मृत्यनवकाशदोषप्रसङ्ग इति चेत्" इत्यादिना सांख्यमतदूषणसंगतिरुक्ता भवति। तन्मतप्रक्रियां दर्शयति—**कपिलेति**। कपिलः, आसुरिः, पञ्चशिख इत्यादिमुनिभिः प्रतिपादिते सांख्यमते प्रवणाः नम्राः, प्रकृतिं पुरुषं च पृथग्विभज्य पठित्वा "क्षरात्मानावीशते देव एकः" इत्यादिवाक्यपठितेषु प्रधानपुरुषेश्वरेषु प्रकृतिपुरुषौ पृथक्त्वेन तत्त्वे अङ्गीकृत्य ईश इत्युक्तं परं पुरुषं न पठन्ति नाङ्गीकुर्वन्ति। तत्र हेतुमाह—**अघेति**; पापेन मूढबुद्धयः॥ ६४॥

**संवननीयाः**; वशीकर्तव्याः। वशीकरणप्रक्रियां दर्शयति—**अक्षय्येति**। अक्षय्यः नित्यो यः शान्तिरेव मकरन्दरसः, तत्र प्रसक्तान् तदनुभवपरानित्यर्थः। मुरभिदः अङ्घ्रिसरोजविषये भृङ्गायमाणमानसान् युष्मान् सभ्यान् अभ्यर्थये

[1] मधुजिद॰—घ.

[1](गुरुमवलोक्य सविनयमञ्जलिं बद्ध्वा) भगवन्, भगवदाज्ञया प्रतिक्षिपामि तावत्सांख्यान्।

**प्रधानपुरुषौ यदि प्रकृतियन्त्रितैरादृतौ**
**परः किमपराध्यति श्रुतिसहस्रचूडामणिः।**
**कुतर्कशतकर्कशैर्यदि विभुः प्रतिक्षिप्यते**
**भवत्परिगृहीतमप्यपहरन्तु पाटच्चराः॥ ६६॥**

## प्रभाविलासः

प्रतिबन्द्या दूषयति—**प्रधानेति**। प्रधानपुरुषयोः क्वचित्प्रतिपादनस्यान्यपरत्वं दर्शयितुं **श्रुतिसहस्रे**त्युक्तिः। एवमनन्यपरश्रुतिसहस्रबोधितानङ्गीकारे निमित्तमुक्तम्—**प्रकृतियन्त्रितैरिति**; अविद्यापरवशैरित्यर्थः। **पाटच्चराः**; तस्कराः, चार्वाका इति यावत्। तैः प्रधानपुरुषयोरप्यनभ्युपगमादिति भावः। अनेन निरोधो नाम प्रतिमुखसंधेरङ्गमुक्तम्, "छद्मना हितागमननिरोधनं निरोधः" इति लक्षणात्॥ ६६॥

## प्रभावली

प्रार्थये। किमित्यत्राह—**काममिति**। भृशं प्रसीदत; मयीति शेषः। यथा येन प्रकारेणाहमनन्यचित्तः सन् भवतां कर्णयोरमृतानि अमृतवत्सरसानि वचनानि अवतारयेयं प्रवेशयेयम्। कर्णरस्यानि वचनानि यथा वदेयं तथा प्रसीदत॥६५॥

सांख्यान् प्रथमं प्रतिक्षिपति—**प्रधानेति**। प्रधानं प्रकृतिः, पुरुषः प्रत्यगात्मा, प्रकृत्या बद्धैः भवद्भिः स्वीकृतौ यदि, ताभ्यां सह परिगणितः "प्रधानक्षेत्रज्ञपतिः" इत्यादिश्रुतिसहस्रप्रतिपादितः परः भवद्भ्यः किमपराध्यति; कमपराधं कृतवान्। अनादरेण तर्कैः वयं परमपुरुषं प्रतिक्षिपाम इत्यत्राह—**कर्कशैरिति**। कठिनैः कुतर्कशतैः विभुः ईश्वरः प्रतिक्षिप्यते यदि, तर्हि भवद्भिः परिगृहीतं पधानपुरुषरूपमपि वस्तु **पाटच्चराः** तस्कराः वैशेषिकचार्वाकादयः

[1] आपादचूडमनपायिनि दर्शनेऽस्मिन्नाशासनीयमपरं न विपक्षहेतोः।
आपातसौख्यमधुरान्पुनरस्मदीयानन्योन्यभेदजननी विजहात्वसूया॥added before—च.

**सेनापतिः**—देव,

**विश्वपतिमार्यवचसा[1] सांख्याः संमत्य विगतसंरम्भाः ।**
**गणयन्ति पञ्चविंशं षड्विंशं सप्तविंशं वा ॥ ६७ ॥**

**राजा**—भगवन्, यदि[2] खल्वेते सेश्वरतामानीताः, भजन्तु तावत् भवत्क्षमागोचराः सांख्यास्त्र्यय्यन्तपार्श्वम् ।

**गुरुः**—महाराज, मैवं वादीः । किंतु अभ्युपगतेश्वराणामपि

## प्रभाविलासः

**विश्वपतिमिति** । "पतिं विश्वस्यात्मेश्वरम्" इति श्रुत्या विश्वपतिमित्युक्तम् । **संमत्य**; अङ्गीकृत्य । अन्तर्भूतात्मकानि तत्त्वानि चतुर्विंशतिः; पञ्चविंश ईश्वर इत्येकः पक्षः । पञ्चविंश आत्मा; षड्विंश ईश्वर इत्यन्यः । षड्विंशः कालः; सप्तविंश ईश्वर इत्यपरः ॥ ६७ ॥

## प्रभावली

अपहरन्तु । संभावनायां लोट् । वैशेषिकाः जगत्कारणत्वेन परमाणूनङ्गीकृत्य प्रकृतिमपलपन्ति । चार्वाकादयः शरीरव्यतिरिक्तं प्रत्यगात्मानमपहरन्ति । जगदीश्वरानङ्गीकारे भवत्सर्वस्वं चोरा अपहरेयुरिति च ध्वन्यते ॥ ६६ ॥

सेश्वरसांख्यानामार्यवचसा ईश्वराङ्गीकारं दर्शयति—**विश्वपतिमिति** । सेश्वरसांख्याः आर्यस्य शिष्यस्य वचसा विगतक्रोधाः सन्तः विश्वपतिं "पतिं विश्वस्य" इत्युक्तं सर्वेश्वरमङ्गीकृत्य तत्पङ्क्तौ पञ्चविंशं चतुर्विंशतितत्त्वानन्तरमीश्वरं पञ्चविंशतया स्वीकुर्वन्ति । जीवस्य पञ्चविंशत्वे ईश्वरं षड्विंशतया स्वीकुर्वन्ति । जीवात्परं कालं षड्विंशतया अङ्गीकृत्य ईश्वरं सप्तविंशतयाङ्गीकुर्वन्ति वेत्यर्थः ॥ ६७ ॥

**त्र्यय्यन्तपार्श्वं भजन्तु**; त्र्यय्यन्तसिद्धान्तवदादरणीया भवन्तु । **किंतु**; अत्र वक्तव्यान्तरं किंचिदस्तीत्यर्थः । किं तदित्यत्राह—**अभ्युपगतेति** । अभ्युप-

[1] वचनात्—च.  [2] अद्य—क.

सांख्यानां प्रायिकसंवादयोगसमयसिद्धपरिच्छिन्नैश्वर्येश्वरपक्षप्रणिहित-
चक्षुषां [1]प्रतिवक्तव्यमयमादिश्यतामौपनिषदवादी ।

**राजा**—आदिष्ट एवायमीदृशेन भगवतो वाक्येन ।

**शिष्य:**—

**य एते योगाख्ये कतिचिदपतन्त्रे पठितिनः**
**प्रजल्पन्त्यैश्वर्यं प्रतिफलनकल्पं भगवतः ।**
**स्वतः सिद्धान् बोधप्रशकनबलादीन् गुणगणान्**
**गृणन्तस्त्रय्यन्ताः प्रतिभणितिरेषामवितथा ॥ ६८ ॥**

### प्रभाविलासः

योगशास्त्रोक्तप्रक्रियाणामविरुद्धानां ग्राह्यतया प्रायिकेत्युक्तिः । **य एत इति । अपतन्त्रे**; शास्त्राभास इत्यर्थः । "एतेन योगः प्रत्युक्तः" इति सांख्यमतनिरासानन्तरमुक्तदूषणातिदेशेन योगशास्त्रस्य निरस्ततया प्रसिद्धेः **योगाख्ये** इत्युक्तम् । **पठितिनः**; पाठवन्तः । **प्रतिफलनम्**; आरोपः । तस्यानिर्वचनीयताव्यावृत्तये **कल्पमित्युक्तिः । स्वतः सिद्धानिति** "स्वाभाविकी ज्ञानबलक्रिया च" इति श्रुतिरुपात्ता । **प्रशकनम्**;

### प्रभावली

गतेश्वराणामपि तेषां प्रायिकसंवादो यो योगसमयः, तत्रोक्तपरिच्छिन्नैश्वर्येश्वर-पक्षप्रणिहितदृशां प्रतिवक्तव्यार्थमाज्ञाप्यतामित्यर्थः । प्रायिको बहुस्थलसिद्धः । उपनिषत्सिद्धान्तवादी सांख्यमतं निरस्य तत्प्रत्यासन्नं योगतन्त्रमपि "एतेन योगः प्रत्युक्तः" इति शास्त्रानुसारेण दूषयति—**य एत इति । योगाख्ये अपतन्त्रे** तन्त्राभासे **य एते कतिचित्पठितिनः** पठनवन्तः **भगवत ईश्वरस्य ऐश्वर्यं प्रतिफलनकल्पं** प्रतिबिम्बकल्पं प्रजल्पन्ति । एवं हि योगमत-प्रक्रिया—प्रधानमेव जगदुपादानम् । ईश्वरस्तु निमित्तकारणमात्रम् । ईश्वरस्य

[1] **प्रतिवक्तव्यार्थ—ग. घ.**

**सेनापतिः**— देव,

**कृतं सांख्यकृतान्तस्थैः कृपणैरद्य शिक्षितैः ।**

**काणादमतभङ्गाय कार्यमार्यस्य शासनम् ॥ ६९ ॥**

**राजा**—नियुक्त एवायं भगवता[1] यथार्हं निगमान्तविपक्ष-पक्षप्रतिक्षेपाय ।

**शिष्यः**—महाराज, अनुतिष्ठामि यथानियोगम् । इह हि,

### प्रभाविलासः

शक्तिः । तेन "परास्य शक्तिर्विविधैव श्रूयते" इति श्रुतिरभिमता । **प्रतिभणितिः**; प्रतिवचनम् ॥ ६८ ॥

**कृतमिति । कृतम्**; अलम् । **कृतान्तः**; सिद्धान्तः ॥ ६९ ॥

### प्रभावली

ज्ञानशक्त्यादिगुणाः प्रतिफलनकल्पा इति । तत्र "यः सर्वज्ञः सर्ववित्" "स्वाभाविकी ज्ञानबलक्रिया च" इत्यादित्रय्यन्ता एव प्रत्युत्तरमित्याह—**स्वतः सिद्धानिति** । ज्ञानशक्त्यादिगुणान् स्वतः सिद्धान् गृणन्तः त्रय्यन्ता एव एषामपि प्रत्युत्तरमित्यर्थः । प्रधानमेव जगदुपादानमित्यादेरपि "सोऽकामयत बहु स्यां प्रजायेय" इत्यादिकर्मिति हृदयम् । **प्रतिभणितिः**; प्रत्युत्तरमागम-विधानेन दर्शितमित्युक्तं भवति ॥ ६८ ॥

**कृतमिति** । सांख्यमतस्थैः कृपणैः दीनैः अद्य शिक्षितैरलम् । काणाद-मतभङ्गायार्यस्याज्ञापनं कार्यमिति ॥ ६९ ॥

**भगवता**; यतीन्द्रेण । **यथानियोगं**; नियोजनानुसारेणेत्यर्थः । इह हि काणादमते अप्रामाणिकार्थकल्पनात् प्रामाणिकार्थपरित्यागाच्च तेषां मतमना-

[1] भगवता omitted—च, छ,

**असद्द्रव्यसृष्टिप्रभृत्यर्थक्लृप्त्या श्रुतिप्रक्रियाणामधिक्षेपतश्च ।**
**उलूकोपदेशापदेशप्रवृत्तः कथाशेषितोऽसौ कणादप्रणादः ॥७०॥**

**गुरुः—**(सबहुमानमीक्षते)

**शिष्यः**—(सापहासम्) आकर्ण्यतामिदमत्यद्भुतं महाराजेन ।

**प्रभाविलासः**

**असदिति**। अवस्थावत्त्वस्य स्वमतेऽपि सिद्धत्वात् द्रव्यग्रहणम् । प्रभृतिपदेन सामान्यविशेषसमवायादिकमुच्यते । **श्रुतिप्रक्रियाणाम्**; "आत्मन आकाशः संभूतः" "प्रकृतेर्महान्" "न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते" "एषोऽणुरात्मा चेतसा वेदितव्यः" "रसं ह्येवायं लब्ध्वानन्दी भवति" "एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च" इत्याद्युक्तगगनोत्पत्तिप्रकृत्युपादानत्वज्ञाननित्यत्वात्माणुत्वानन्दानुभवमनःसृष्टिप्रभृतिप्रक्रियाणाम् । **उलूकेति**। कणाद उलूको भूत्वा स्वशास्त्रं प्रवर्तयामासेति प्रसिद्धिः ॥ ७० ॥

**सबहुमानमिति** । शिष्यवचनेन तुष्टिप्रतीतेरनुनयो नाम नाट्यालं-

**प्रभावली**

दरणीयमित्याह—**असदिति** । असद्द्रव्यस्य अवयवातिरिक्तावयविनः सृष्टिः । प्रभृतिशब्देन समवायपारिमाण्डल्यग्रहणम् । एतेषां कल्पनया श्रुतिप्रक्रियाणां ब्रह्मोपादानकारणत्वादीनां दूषणाच्च उलूकोपदेशव्याजेन प्रवृत्तः कणादस्य प्रणादः, प्रणादरूपं वैशेषिकशास्त्रं, सर्वैरनादृतत्वात् लोके अस्तीति प्रसङ्गमात्रशेषितोऽभूत् ॥ ७० ॥

अत्र दूषणान्तरं वक्तुमुपक्षिपति—**आकर्ण्यतामिति** । परमानन्दो लक्षणं यस्य तत् । पाषाणसाधर्म्यरूपम् आचक्षते वदन्ति । तथात्वे को दोष

**राजा**—किं तत् ?

**शिष्यः**—एते किल कणचरणमतानुवर्तिनः[1] परमानन्द-लक्षणं[2] परमपुरुषसाम्यमपहाय[3] पाषाणसाधर्म्यलक्षणं मोक्षमाचक्षते। तथाच कुम्भकर्ण एव विजयेत[4]। शाप एव तस्यानुग्रहः स्यात्।

**राजा**—सत्यमेतत्।

**सेनापतिः**—देव,

**अर्धवैनाशिकास्तावदार्येण विमुखीकृताः।**
**वैनाशिकगणास्त्वेते विनाश्या वेददूषकाः॥ ७१॥**

### प्रभाविलासः

कारः, "वचसा कर्मणा प्रीतिर्यस्मिन्ननुनयो हि सः" इति लक्षणात्। भवतु कुम्भकर्णविजय इत्यत आह—**शाप एवेति**। एतेषां पदार्थतत्त्वज्ञान-वैयर्थ्येन शापार्थं मुमुक्षुप्रवृत्तिः स्यादित्यर्थः। **अर्धवैनाशिकाः**; वेदप्रामाण्यमङ्गीकृत्यार्थविशेषेषु भ्रान्ताः॥ ७१॥

### प्रभावली

इत्यत्राह—**विजयेतेति**। मोक्षप्राप्त्या विजयेत। तस्मिन् पक्षे कुम्भकर्णस्य शाप एवानुग्रहः कृतः स्यात्। **अर्धवैनाशिकास्त्विवति**। **अर्धवैनाशिकाः**; अर्धवेदबाह्याः सांख्यादयः। आगमस्यानुमानमन्तरेण पृथक्प्रामाण्यानङ्गीकारात् अवैदिकपरमाणुकारणत्वकल्पनाच्च वैदिकादृष्टेश्वराद्यङ्गीकाराच्चैषामर्धवैनाशिकत्वम्। **वैनाशिकाः**; पूर्णवेदबाह्याः बौद्धादयः॥ ७१॥

[1] सारिणः—घ.
[2] सागरं—क.
[3] साधर्म्यमपहाय—ख.
[4] विजयी स्यात्—क. ख.

राजा—(साशङ्कम्) आर्य, पर्याप्तोऽसि कुतर्केन्द्रजालकोविदानां तथागतानां निरासे?

शिष्यः—(सामर्षमिव) राजन्, अपर्याप्तास्त्वेते त्वदादिष्टस्य ममैकस्यापि प्रतिक्षेपाय। तथाहि—

**कथयति जडो विश्वं वैभाषिकः क्षणभङ्गुरं**
**परमनुमितं बाह्यं सौत्रान्तिको मतिवैचित्र्यतः।**
**तदिदमनृतं योगाचारस्तथा निखिलं परः[1]**
**स्ववचनहताः सर्वे गर्वं त्यजन्ति ममाग्रतः॥ ७२॥**

**प्रभाविलासः**

**आर्य पर्याप्तोऽसी**त्यादिना पर्युपासनं नाम प्रतिमुखसंधेरङ्गमुक्तम्, "इष्टजनानुयः पर्युपासनम" इति लक्षणात्। बाह्याश्चतुर्विधाः—वैभाषिकसौत्रान्तिकयोगाचारमाध्यमिकभेदात्। तेषु वैभाषिको बाह्यमान्तरं च सर्वं सत्; प्रत्यक्षानुमाने प्रमाणे इति जल्पति। सौत्रान्तिकस्तु बाह्यं बुद्धिवैचित्र्यकृतमनुमेयमाह। योगाचारस्तु विज्ञानातिरिक्तं सर्वं भ्रान्तिकल्पितमाह। त्रयोऽपि क्षणिकवादिनः। माध्यमिकस्तु बाह्यमाभ्यन्तरं च शून्यमेवेति प्रलपति। तदेतदन्योन्यव्याहतिमुपदर्शयन्नाह—**कथयतीति**॥७२॥

**प्रभावली**

**साशङ्कम्**; बौद्धानामैन्द्रजालिकत्वदर्शनादाशङ्का। **पर्याप्तोऽसि**; समर्थोऽसि किमिति प्रश्नः। पर्याप्तोऽसीति शङ्कनात् सामर्षं ममैकस्याप्येते सर्वे प्रतिक्षेपायापर्याप्ता इत्याह—**अपर्याप्तास्त्विति**। तदेव प्रतिपादयति—**कथयतीति**। जडः वैभाषिकः सौगतैकदेशी विश्वं जगत् क्षणभङ्गुरं कथयति। सौत्रान्तिकस्तु बाह्यं पदार्थं घटपटादिकं **मतिवैचित्र्यतः** ज्ञानस्य विचित्रभावात्

[1] परे—ख, ग.

तथाहि[1]—

दन्तादन्तिविधानलम्पटधियो दिङ्नागमुख्या बुधाः[2]
शृण्वन्त्वद्य विपद्यते परमियं शिक्षा भवत्पक्षतः ।
बुद्ध्वा बोध्यमुदाहरन्ति विशदं[3] बुद्धादयश्चेज्जितं
नो चेद्धन्त जितं पुनस्तदिह नस्तूर्यं तु जोघुष्यते ॥ ७३ ॥

### प्रभाविलासः

क्षणिकत्वनिरासेन तान्निरस्यति—**दन्तादन्तीति** । दिङ्नागो नाम कश्चित् बौद्धमताचार्यः । दिङ्नागानां दन्तादन्तिलम्पटत्वं युक्तमिति ध्वन्यते । बुद्धादयो बोध्यं विशदं बुद्ध्वोदाहरन्तीति चेत्, अस्माभिर्जितम्; बोधक्षणोदाहरणक्षणयोर्बोद्धुः स्थिरत्वाङ्गीकारात् । अबुद्ध्वा चेत्, पुनर्जितम्; अज्ञात्वैव यत्किंचित्प्रलपनादित्यर्थः ॥ ७३ ॥

### प्रभावली

नानाकाराद्धेतोः केवलमनुमानगम्यं वदति । तदिदं वैभाषिकसौत्रान्तिकाभ्यां क्षणिकत्वेनानुमेयत्वेन च कथितं जगत् योगाचारः अनृतं मिथ्येति वदति । **परः**; माध्यमिकः । **निखिलम्**; ज्ञातृज्ञेयज्ञानं सर्वमपि मिथ्येति वदति । **अनृतमिति** । अनृतशब्दस्तुच्छपर्यायः । एवमन्योन्यं स्वस्ववचनहताः स्ववचनविरोधादेव सर्वे एते वैभाषिकादयः मम संनिधौ गर्वहीना वर्तन्ते ॥ ७२ ॥

तेषां त्यक्तगर्वत्वमेव प्रतिपादयति—**तथाहीत्यादि**। गजा यथा दन्तादन्ति युध्यन्ते, एवं वादविधाने लम्पटबुद्धयः । दिङ्नागो नाम कश्चित्सौगतमतप्रवर्तकः; तत्प्रभृतयो बौद्धाः मद्वचः शृण्वन्तु । **अद्य** इदानीं **भवत्पक्षतः** **भवत्पक्षाणां** युष्मत्पक्षस्थानाम् । यद्वा, **भवत्पक्षतः** भवत्पक्षे इयं शिक्षा सर्वं क्षणिकमिति शिक्षा परं केवलं विपद्यते विपदं प्राप्नोति । कुत इत्यत्राह—**बुद्ध्वेति**। **बुद्धादयो** भवन्तो बोध्यमर्थं **बुद्ध्वा** उदाहरन्ति वा, अबुद्ध्वा वा? प्रथमे

1 अपिच—क. ख. 2 जडाः—क. 3 परमं—घ.

**सेनापतिः**—(सश्लाघम्) देव, परिमितगम्भीरमक्षोभ्यमिदं पारिषदहृदयंगममार्यवचनमुपश्रुत्य पलायिताः सौगतापशदा दिशि दिशि[1] प्रविशन्ति। अपितु अयं माध्यमिको नाम बौद्धमतनासीरवीरः कथितमपि दूषणमनादृत्य[2] वैयात्यमात्रावष्टम्भेन पाण्डित्यं स्वं[3] प्रख्यापयति। तदयं विशेषतोऽप्युन्मूलयितव्यः। यश्चैवमुद्घोषयति[4]—

**भाषा वैभाषिकाणां [5]शुभमनुभवतु स्वस्ति सौत्रान्तिकेभ्यो**
**योगाचाराः [6]प्रयोगं विजहतु किमु तर्त्किकरैः शंकराद्यैः।**

प्रभाविलासः

अस्त्वेतत्; स्वस्य सर्वनिर्वाहकतया स्वान्तर्भूतैर्न भेतव्यमिति माध्यमिकः प्रत्यवतिष्ठते—**भाषेति**। **प्रमाणं विजहतु**; प्रमाणगवेषणप्रयासो मास्त्वित्यर्थः। **तर्त्किकरैः**; तन्मतानुसारिभिः। तदुक्तम्—

**प्रभावली**

बोध्यबोधनक्षणादनन्तरक्षणिकत्वकथनात् क्षणिकत्वं भग्नम्। अबुद्धा चेदाश्रयासिद्धेः क्षणिकत्वं गतम्। तथाचास्माभिर्जितम्। उभयथा क्षणिकत्वस्य साधयितुमशक्यत्वात् अस्माभिर्जितमिति नस्तूर्यं भृशं ध्वनति॥ ७२॥

**सश्लाघम्**; सप्रशंसम्। यद्यपि परिमितं, तथापि बह्वर्थगर्भितं परैरदूष्यं सभ्यमनोहरं च। सौगतहतकाः दशसु दिक्षु प्रविष्टाः। **अपितु**; तथापि। **अथ** माध्यमिक इति प्रसिद्धः बौद्धमताग्रयायी कथितमपि क्षणिकत्वदूषणमनादृत्य प्रागल्भ्यमात्राश्रयतया स्वपाण्डित्यं प्रख्यापयति। **उन्मूलयितव्यः**; उद्धरणीयः। विशेषतो निरसनीय इत्यर्थः। तस्य बिरुदं कथयति—**यश्चैव**-

[1] प्रतिदिशं—घ. ङ.
[2] अवमत्य—क.
[3] स्वं omitted—क. ख. ङ.
[4] यस्यायमुद्घोषः—क.
[5] सुखमनु—घ.
[6] विचारं प्रजहतु—क; प्रमाणम्—छ.

मिथ्यातत्त्वव्यवस्थाविघटनघटनोद्दण्डशौण्डीर्यचण्डो
निस्तत्त्वाद्वैतवादी निरुपधिककथादुर्जयो[1] निर्जिहीते ॥७४॥

इति ।

प्रभाविलासः

"वेदोऽनृतो बुद्धकृतागमोऽनृतः
प्रामाण्यमेतस्य च तस्य चानृतम् ।
बोद्धानृतो बुद्धिफले तथानृते
यूयं च बौद्धाश्च समानसंविदः ॥"

इति । **मिथ्या;** सद्विलक्षणत्वम । **तत्त्वम्;** असद्विलक्षणत्वम्। तयोर्व्यवस्था-विघटनस्य घटनं करणम्; तत्रोद्दण्डेनोच्छृङ्खलेन शौण्डीर्येण सामर्थ्येन चण्डः प्रचण्डः । यद्वा मिथ्यातत्त्वस्य शून्यतत्त्वस्य व्यवस्थायां यत् परैः कृतं विघटनं, तस्य पुनर्विघटने; शून्यत्वनिर्वाह इत्यर्थः । **निरुपधिककथायाम्;** अकपटवादे । "कपटोऽस्त्री व्याजदम्भोपधयश्छद्मकैतवे" इत्यमरः । वितण्डावाद इत्यर्थः । **निर्जिहीते;** निर्गच्छति ॥ ७४ ॥

प्रभावली

**मित्यादि** । वैभाषिकाणां शास्त्रं शुभं प्राप्नोतु । सौत्रान्तिकेभ्यः स्वस्त्यस्तु । **प्रयोगं** जगन्मिथ्यात्वसाधनानुमानं त्यजन्तु । **शंकराद्यैः**; शंकरादिभिः । **तत्किंकरैः**, विज्ञानमात्रमेव सत्यम्, अन्यत्सर्वं मिथ्येति तद्वचनाङ्गीकारात् । **मिथ्यातत्त्वेत्यादि** । मिथ्यातत्त्वं शून्यतत्वम्, तस्य व्यवस्था स्थापनम्, तस्य विघटनं दूषणम्, तस्य घटनं नाम परिहरणम , तेनोद्दण्डमुच्छृङ्खलं शौण्डीर्यं सामर्थ्यं, तेन चण्डः परवादिषु कुपितः । **निस्तत्त्वम**, तत्त्वं किमपि नास्ति, सर्वं शून्यमित्युक्तसर्वशून्यता । **तदद्वैतवादी**; तदेवास्ति, अन्यन्नास्तीति वादी । शून्यतत्त्वाद्वैतवादीत्यर्थः । निरुपधिककथा अद्वैतवादः, तेन हेतुना दुर्जयः । उपधिश्छद्म । **निर्जिहीते**; वादाय निर्गच्छति ॥ ७४ ॥

[1] **निरुपधिककथा** निरधिष्ठानभ्रमवाद इति सांप्रदायिकोऽर्थः

राजा—[1]आर्य, विश्वमिथ्यात्व[2]व्यवस्थापने[3] वैतण्डिकपण्डितंमन्यः शून्यवादी पुनः शून्यतां प्रापयितव्य[4] ।

गुरुः—भद्र, सावधानमभिदध्याः ।

शिष्यः—किमत्रावधातव्यम् । अयं खलु जननीवन्ध्यात्वप्रतिज्ञानसंवादिभिरयथायथप्रलापैरात्मनोऽपि मौनमाजन्ममरणमुपपिपादयिषति[5] । अपिच ;[6]

परस्परविघट्टनत्रुटिततर्कशस्त्रच्छटा-
तिरस्कृतचमत्कृतिः स्वयमखण्डि वैतण्डिकः ।

प्रभाविलासः

परस्परेति । परस्परं विघट्टनेन व्याघातेन, त्रुटिताभिस्तर्काणामेव

प्रभावली

विश्वमिथ्यात्वं सर्वशून्यत्वं, तद्व्यवस्थापने । शून्यवादी; माध्यमिकः । पुनरिति वाक्यालंकारे । शून्यताम्; तुच्छताम् । किमत्रेति; अवधातव्यमत्र किमस्तीत्यर्थः । तदेव दर्शयति—अयं खल्विति । यथा जननी मे वन्ध्येति प्रतिज्ञा व्याहता, तत्सदृशैरित्यर्थः । अयथायथम्; असंगतम् । प्रलापैः; सर्वं शून्यमित्यादिप्रलापैः । सर्वमित्यनुभवेनैव सर्वत्वस्य सिद्धेस्तस्य शून्यत्वप्रतिज्ञाने व्याहतिरिति भावः । सर्वमित्यनुभवस्यासत्त्वे शशविषाणवदनुभवस्यैवाभावात् सर्वमिति वचनानुपपत्तिः । तेन स्वस्य सर्वदा मौनव्रतमेवोपपादयितुमिच्छतीति भावः । अस्य स्ववचनमेव खण्डनमित्याह—परस्परेति ।

[1] भगवन्—क. [2] मिथ्यातत्त्व—ख.

[3] स्थापनशौण्डीर्यचण्डो—क; स्थापनः—क.

[4] प्रमापयितव्यः—क. [5] उपपादयिष्यति—क. ख.

[6] राजा—तथा कुर्याः । शिष्यः—राजन्, तर्काङ्गपञ्चकान्यतमहानिनान्तरीयकवचसां दूषणे न विशेषतः प्रयतितव्यम् । तथाहि—क.

किमत्र परिशिष्यते किमपि दूषणोद्भावनं
स्वतो निहतमुद्गरप्रहरणप्रयासायते ॥ ७५ ॥

[1](नेपथ्ये) पिशाचाः पिशाचाः ।

**सेनापतिः**—देव,[2] मा मैवम् । दिगम्बरास्त्वेते[3] सौगतमत[4]निरसनसंतोषविषादशबलिताः प्रत्यक्षं परोक्षं च प्रमाणमनुरुन्धानाः प्रतारयन्ति पामरान् ।

**प्रभाविलासः**

शस्त्राणां छटाभिः तिरस्कृता चमत्कृतिश्चमत्कारो यस्य सः । स्वतो निहते पुरुषे मुद्गरेण प्रहरणं वितथमिति न्यायः । तमिममाह—**स्वत इति** ॥ ७५ ॥

**प्रभावली**

अन्योन्यं यद्विघट्टनं हननं, तेन भग्ना या तर्कशस्त्रच्छटा, तर्का एव शस्त्राणि तेषां छटा, तया न्यक्कृतसामर्थ्यः वैतण्डिकः माध्यमिकः स्वयमेवाखण्डि । तस्मात् तन्मतदूषणेऽस्माभिर्वक्तव्यं किं परिशिष्यत इत्याह—**किमत्रेति** । तथाप्यस्माभिरुद्भावितं चेद् दूषणं, तत् दूष्याभावादप्रयोजनं स्यादित्याह—**स्वत** इति । स्वयमेव खण्डितो यो मुद्गरः मुसलं तस्य पुनः खण्डनवत् व्यर्थो भवति ॥ ७५ ॥

आगच्छतो दिगम्बरानालोक्य जनो वदति—**पिशाचाः पिशाचा इति** । आगच्छन्तीति शेषः । **मा मैवम्**; जनैर्यथोच्यते, एवं नेत्यर्थः । सौगतनिरसनेन संतोषः सतां क्षणिकत्वनिरसनेन; विषादः परमाणुकारणत्वेनेति

[1] राजा—(संतोषं नाटयति) added before—क.

[2] महाराज—क. [3] अमी—क. ख.

[4] मत omitted—क.

**शिथिलोदयसप्तभङ्गिशिक्षा[1]विषमोपन्यसनव्यथाविलक्षाः ।**
**मलिनास्त इमे मयूरपिञ्छभ्रमणैरेव[2] विलोभयन्ति मन्दान् ॥७६॥**

तत्प्रतिक्षेपार्थमयमनुज्ञायतामार्यः ।

राजा—

**प्रतिक्षिप्तं विदधतां विहितं प्रतिषेधताम् ।**
**क इवान्यः प्रतिक्षेपः कार्यः स्ववचनादृते ॥ ७७ ॥**

## प्रभाविलासः

क्षणिकत्वनिरासेन संतोषः । स्वयूथ्यपराजयेन विषादः । **शिथिलेति** । व्याहतत्वेनोपन्यासक्षण एव निरस्तप्रायत्वं वक्तुं **शिथिलोदयेत्यु**क्तम् । **सप्तभङ्गी**—स्यादस्ति, स्यान्नास्ति, स्यादस्ति च नास्ति च, स्यादवक्तव्यः, स्यादस्ति चावक्तव्यः, स्यान्नास्ति चावक्तव्यः, स्यादस्ति च नास्ति चावक्तव्य इत्येवंरूपा । **मयूरपिञ्छभ्रमणानि;** जीवहिंसापरिहारार्थानि, परव्यामोहनमन्त्रशक्त्यभिनयार्थानि वा ॥ ७६ ॥

**प्रतिक्षिप्तमिति;** शास्त्रेणेति शेषः ॥ ७७ ॥

## प्रभावली

मन्तव्यम् । **परोक्षम्**; अनुमानम् । पामरप्रतारणप्रकारमाह—**शिथिलेति** । शिथिलमूला या **सप्तभङ्गी;** स्यादस्ति स्यान्नास्तीत्यादिका, तस्याः शिक्षार्थं यो विषमोपन्यासः, अस्ति नास्तीति व्याहतोपन्यास इत्यर्थः; तेन व्यथया मनःपीडया, विलक्षाः लज्जिताः मलिनाः मलपङ्कधारिणः मन्दान् अज्ञान् विलोभयन्ति वञ्चयन्ति ॥ ७६ ॥

**प्रतिक्षिप्तमिति** । स्यान्नास्तीति निषिद्धं स्यादस्तीति विदधताम् । **विहितम्**; एकदेशेन; अन्यांशेन प्रतिषेधतां स्ववचनादृते को वान्यः प्रतिक्षेपः; स्ववचनमेव तेषां प्रतिक्षेपकमिति भावः ॥ ७७ ॥

[1] शैली—क.

[2] भ्रमणेनैव—क.

(गुरुमवलोक्य) भगवन्, अमीषामादित्यस्तम्भनपाषाणस्फोटनप्रतिमाजल्पनादि[1]विप्रलम्भोपायानां भवत्प्रसाद एव प्रतिक्षेपकर्ता ।

गुरुः—महाराज, तथाविधकुहकवृत्तीनां राजभिरेव दण्डो दातव्यः ।

शिष्यः—(सापहासम्)

**भक्ष्याभक्ष्यस्वपरसमय[2]स्थापनादूषणादि-**
**ष्वैकान्त्यं ये जहति विहतिं क्वापि नैते विदन्ति ।**
**दैवैरेषां निगमपदवीदूषणोदीर्णरोषै-**
**र्दत्तो नूनं स्थिरशिरसिजोल्लुञ्छनेनैव दण्डः ॥ ७८ ॥**

शेषं तु भगवति महाराजे चायतते ।

## प्रभाविलासः

तेषां जीवनादिकमप्यनवस्थितमित्याह—**भक्ष्याभक्ष्येति** । उल्लुञ्छनसमयेऽत्यन्तखेदं सूचयितुं स्थिरेत्युक्तम् । अनेन वज्रं नाम प्रतिमुखसंधेरङ्गमुक्तम्, "प्रमुखनिष्ठुरवचनं वज्रम्" इति लक्षणात् ॥ ७८ ॥

## प्रभावली

तद्वञ्चनोपायानां भवत्प्रसाद एव प्रतिक्षेपकः । **भक्ष्याभक्ष्येति** । सप्तभङ्गीपरिग्रहात् भक्ष्याभक्ष्यादिषु च सर्वत्र ऐकान्त्यं नियमं ये विजहति, एते कुत्रापि विहतिं न विदन्ति । तेषामेषां निगमपथेऽपि दूषणेनोज्जृम्भितरोषैर्दैवैरेव स्थिराणां शिरसिजानां केशानामुल्लुञ्छनमुद्धरणं, तेनैव दण्डो दत्तः ॥ ७८ ॥

[1] दिनानाविध—क. [2] नियम—क.

**राजा**—सेनापते, आः कष्टममीषामालोकनम्। उत्सार्यन्तामेते दृष्टिगोचरात्।

**सेनापतिः**—देव, भवत्प्रतापतपनप्रतिहतदृष्टयो दिवाभीता [1]इवानार्याधिष्ठितेषु गिरिगह्वरेषु[2] निभृतं निलीयन्ते।

[3]**राजा**—के पुनरेते क्षपणकादिवदनैगमिकलिङ्गधारिणः किमप्युग्रं व्रतमास्थाय तापसविडम्बिनस्त्वय्यन्तमुपरुन्धते?

**गुरुः**—प्रमथगणानुकारिणः केचन दुराचाराः। एते च नैगमिकधर्मकल्मोपमर्दिनः कडंकरीया इव [4]दूरपरिहरणीयाः।

**शिष्यः**—स्वयमेवैते दूरीभवन्ति। यथा—

**कपिलकणादबुद्धकचलुञ्छनतन्त्रकथा-**
**कलकलकोविदेषु कथकेषु गलन्मतिषु।**
**मुनिवरसापराधजनमोहनकौतुकिना**
**पशुपतिना यदुक्तमपयान्त्यथ तत्प्रवणाः॥ ७९॥**

प्रभाविलासः

**कडंकरीयाः**; पशवः। **कपिलेति**। **मुनिवरः**; गौतमः। स खलु सापराधान् शिष्यान् शशाप। तदुक्तम्—

प्रभावली

**शेषम्**; दण्डनशेषं तु। **भगवति**; गुरौ। **महाराजे**; त्वयि च। **आयतते**; अधीनं भवति। अवशिष्टो दण्डो युष्माभिरेव कर्तव्य इत्यर्थः। **कष्टम्**; पापजनकम्। **गिरिगह्वरेषु**; पर्वतप्रान्तदेशेषु। **निभृतं** निःसंभ्रमं गूढा वर्तन्ते। अथ पाशुपतमतनिरासायोपक्रमः—के पुनरित्यादि। **क्षपणकाः**;

[1] इवार्यानधिष्ठितेषु—क.
[2] गहनगह्वरेषु—क. ङ.
[3] राजा omitted—क.
[4] दूरीकरणीयाः—क.

**सेनापतिः**—देव, अमी पुनरार्यवचनमसहमाना दिगम्बरादिवत् केनापि विप्रलम्भोपायेन[1] स्वसिद्धान्तश्रद्धासंवर्धनाय प्रयतन्ते। तत्र तावदिमां प्रत्यायनामारचयन्ति—यदकाण्ड एव वर्षासमयमादर्शयन्ति[2]।

(नेपथ्ये)

पलायध्वम् पलायध्वम्।

**प्रभाविलासः**

"त्रिपुण्ड्रधारिणो यूयं भस्मोद्धूलनतत्पराः।
भविष्यथ त्रयीबाह्या मिथ्याज्ञानप्रवर्तकाः॥"

इति। तानधिकृत्य प्रवृत्तं पाशुपतं शास्त्रम् ॥ ७९ ॥

**प्रभावली**

जैनाः। अवैदिकचिह्नधारिणः। उग्रं व्रतं पाशुपतम्। तापसानुकारिणः उपरुन्धते पीडयन्ति। प्रमथगणाः; तदनुचराः। वैदिकधर्माख्यसस्यस्य भक्षकाः। कडंकरीयाः; चौर्यतः सस्यभक्षका गवादयः। स्वयमेव दूरभञ्जनं दर्शयति—कपिलेति। कचलुञ्छनाः; जैनाः। तच्छास्त्रमधिकृत्य वादकोलाहलेषु कोविदाः समर्था ये कथकवादिनः, तेषु गलन्मतिषु भ्रष्टमतिषु पराजितेष्वित्यर्थः। तद् दृष्ट्वा, मुनिवरः; गौतमः। केनचित्कारणेन तस्मिन् शिष्या अपराध्यन्निति कथा पुराणेष्वनुसंधेया—

"त्रिपुण्ड्रधारिणो यूयं भस्मोद्धूलनतत्पराः।
भविष्यथ त्रयीबाह्या मिथ्याज्ञानप्रवर्तकाः॥"

इत्यादि। जनानां मोहने कुतूहलिना पशुपतिना यदुक्तं पाशुपतं शास्त्रं, तत्प्रवणाः तच्छास्त्रनिष्ठाः पाशुपताः। अथ; त्वद्दर्शनानन्तरम्। अपयान्ति; स्वयमेवापसरन्ति ॥ ७९ ॥

**दिगम्बराः**; जैनाः। वञ्चनोपायेन स्वमते सर्वेषामादराभिवृद्धये प्रयस्यन्ति। तत्र; विप्रलम्भने। इमाम्; अकाले जलदोद्गमनरूपाम्।

[1] आत्ममायावष्टम्भेन—क.

[2] आनयन्ति—क.

**राजा**—किम्, किम्?

(इत्यवलोकयति)

**सेनापतिः**—नान्यत्किंचित्।

अक्ष्णोरञ्जनवर्तिका यवनिका विद्युन्नटीनामियं
स्वर्गङ्गायमुना वियज्जलनिधेर्वेलातमालाटवी।
वर्षाणां कबरी पुरंदरदिशालंकारकस्तूरिका
कंदर्पद्विपदर्पदानलहरी कादम्बिनी जृम्भते॥ ८०॥

प्रभाविलास:

**अक्ष्णोरिति**। **अञ्जनवर्तिका**; नीलाञ्जनलेपनम्। **यवनिका**; तिरस्करिणी बिम्बग्रहणोचितोच्यते। तदुक्तं संगीतचूडामणौ—

"नीरन्ध्रा तत्र कर्तव्या स्निग्धा यवनिका समा।
अपरे द्वे यवनिके नीहारावरणोपमे॥
प्रेक्षकाणां वितन्वाना नयनानन्दकन्दलम्।
नेपथ्यान्तरिता भूत्वा नर्तकी नृत्यमाचरेत्॥"

इति। **कादम्बिनी**; मेघमाला। अत्र परंपरा नाम रूपकप्रभेदोऽलंकारः.

प्रभावली

**प्रत्यायनाम्**; विश्वासजननम्। इमामिति सामान्यत उक्तां विशेषतो दर्शयति—यदिति। **अकाण्डे**; अकाले। **वर्षासमयम्**; प्रावृट्कालम्। **पलायध्वं पलायध्वम्** इति वर्षोद्गमं दृष्ट्वा जनो वदति। **नान्यत्किंचित्**; अन्यत्किंचित् स्वाभाविकं नास्तीत्यर्थः, अस्यैन्द्रजालिकत्वात्। **अक्ष्णोरिति**। **अक्ष्णोः**; लोचनयोः, अञ्जनशलाका। विद्युन्नटीनां नृत्यन्तीनां यवनिका तिरस्करिणी। स्वर्गङ्गायाः समीपस्था यमुना। आकाशाख्यसमुद्रस्य वेलायां संजाततमाला-

किंच ;

**प्रत्यग्रप्रतिबुध्यमानकलिकानीरन्ध्रनीपाटवी-**
**निःसाधारणनिःसरन्मधुसुधासौरभ्यसारस्पृशः ।**
**क्रोडादम्बुमुचां क्षरन्ति कतिचित्क्रोडीकृता दन्तिभि-**
**र्धारासिक्तवसुंधरासुरभयो झञ्झासमीराङ्कुराः ॥ ८१ ॥**

**प्रभाविलासः**

"विकृतं प्रकृतादन्यत् स्यादेतच्च चतुर्विधम् ।
परंपरा मेखला च मालारूपकरूपके ॥"

इत्युक्तत्वात् ॥ ८० ॥

**प्रत्यग्रेति** । प्रत्यग्रं नूतनं यथा तथा प्रतिबुध्यमानाभिः कलिकाभिः कोरकैः नीरन्ध्राणां नीपानां कदम्बानाम् अटव्या निःसाधारणं निरर्गलं यथा तथा निःसरन्त्याः मधुसुधायाः सौरभ्यसारं स्पृशन्तीति तथोक्ताः । अनेन सौरभ्योक्तिः । **दन्तिभिः क्रोडीकृता** इति मान्द्योक्तिः । **झञ्झासमीराङ्कुराः अम्बुमुचां** मेघानां **क्रोडादा**लोडनात् उत्पन्नाभिः धाराभिः सिक्ताया वसुंधरायाः सुरभयो येषां ते तथोक्ताः सन्तः **क्षरन्ति** निर्गच्छन्ति । अनेन शैत्योक्तिः ॥ ८१ ॥

**प्रभावली**

टवी । **वर्षाः**; प्रावृट्, तस्याः कबरी केशपाशस्थानीया । **पुरंदरदिशायाः** पूर्वदिगङ्गनायाः अलंकारार्थं कस्तूरिका । कंदर्पगजस्य दर्पेण मदेन संजाता मदजलवीचिः । इति जनैरुत्प्रेक्ष्यमाणा इयं मेघमाला ऊर्ध्वं प्रसर्पति ॥ ८० ॥

तत्र मन्दवायून् वर्णयति—**प्रत्यग्रेति** । तत्क्षणविकसत्कोरकनिबिडिता या नीपानां कदम्बानामटवी, तस्या असाधारणं यथा तथा निर्यन्मकरन्दामृतस्य सौरभ्ये परिमले यः सारांशः, तत्स्पृशः । **दन्तिभिः क्रोडीकृताः**; उपगृहीताः, आदृता इत्यर्थः । वसुंधरायाः परिमलवन्त इमे कतिचित्समीराङ्कुरा अम्बुमुचां क्रोडात् अङ्कात् निःसरन्तीत्यर्थः ॥ ८१ ॥

(सर्वे ससंभ्रमाद्भुतमवलोकयन्ति)

राजा—भगवन्, किमस्त्यमीषां प्रतीकारः ?

गुरुः—राजन्, किमस्माभिरत्र यतितव्यम् ?

[1]स कैटभतमोरविर्मधुपरागजञ्झामरु-[2]
द्धिरण्यगिरिदारणस्त्रुटितकालनेमिद्रुमः ।
किमत्र बहुना भजद्भवपयोधिमुष्टिंधयः
[3]कथं न भवति स्वयं कपटकर्मनिर्मूलनः ॥ ८२ ॥

### प्रभाविलासः

**स कैटभेति** । मधुर्नाम कश्चित् दैत्यः । **हिरण्येति**; हिरण्याक्ष-हिरण्यकशिपू । **मुष्टिंधयः**; नाशक इत्यर्थः । अत्र पूर्वार्धेन वीररसः । तृतीयपादेन शान्तरसः । श्लोकेन समाधानालंकारेण भगवद्विषयकरत्याख्यो भावश्च व्यज्यत इत्येषामङ्गाङ्गिभावेन संकरः । तेनैकस्यैवानेकरूपतयाद्भुतरसो व्यज्यते ॥ ८२ ॥

### प्रभावली

**ससंभ्रमाद्भुतम्**; वर्षादर्शनात् संभ्रमः, अकालातर्किताागमनादद्भुतम् । **अमीषाम्**; ऐन्द्रजालिकव्यापाराणाम् । भगवानेवात्र प्रतिकर्तेत्याह—**स कैटभेति** । कैटभाख्यान्धकारस्य सूर्यः । **मधुः**; मध्वाख्यो राक्षसः, स एव परागः, तस्य झञ्झावातः । **हिरण्यासुर** एव गिरिः । **कालनेमिरेव द्रुमः** । **अत्र किं बहुना** भाषितेन । **भजतां भवपयोधेः मुष्टिंधयः**; मुष्ट्या चुळकीकृत्य अगस्त्यवत्पाता । एवं सर्वविरोधिनिरासको भगवान् इह **कपटकर्मण** ऐन्द्रजालिकस्य स्वयमेव **निर्मूलनः कथं न भवति**; भवत्येवेत्यर्थः ॥ ८२ ॥

[1] यतः added before—क. [2] निलो—क.

[3] प्रभुः प्रतिभटैः कृतां विघटयेत मायामिमाम्—क.

[1]सर्वे—(सहर्षविस्मयम्) प्रसन्नाः खल्वेता दिशो विदिशश्च।

[2]गुरुः—भक्तजनवत्सले भगवति प्रसेदुषि किं नाम न प्रसीदति?

राजा—भगवन्, अमी पुनः सात्त्वतं शास्त्रमधीयाना-स्त्र्यय्यन्तवादिभिरैक्यमिवापन्ना बल्बजप्रायबहुविधविद्याजल्पविमुखी-कृतमानसा बहिरन्तश्च शुद्धाः श्वेतद्वीपवासिन इव शुभंयवः पुरुषा-स्तामिमामौपनिषदीं परिषदमुपजिगमिषन्ति। अपिच,

**परमपुरुषप्रत्यासत्त्या विमुक्तपृथग्जना-**
**स्तदभिगमनोपादानाद्यैरवन्ध्यमनोरथाः।**

प्रभाविलासः

**सात्त्वतं शास्त्रम्**; पाञ्चरात्रम्। **बल्बजम्**; तृणविशेषः। **शुभंयवः**। शुभान्विताः। **परमपुरुषेति**। **विमुक्तपृथग्जना इति**। अनेन

"वरं हुतवहज्वालापञ्जरान्तर्व्यवस्थितिः।
न शौरिचिन्ताविमुखजनसंवासवैशसम्॥"

**प्रभावली**

तदानीमेवापगमात् विस्मयः। **प्रसेदुषि**; प्रसन्ने सति। दिशां प्रसदनं नाश्चर्यमिति भावः। अथ पाञ्चरात्रिकाणामवैदिकत्वमाशङ्क्य परिहर्तुमुपक्रमते—**अमी पुनरित्यादि**। **सात्त्वतम्**; पाञ्चरात्रं शास्त्रम्। वेदान्तिभिरैकराश्यमापन्ना इव स्थिताः। **बल्बजा**; गोमयादुत्पन्नास्तृणविशेषाः, तत्सदृश्यः। बाहुल्या-त्तुच्छत्वाच्च तत्सादृश्यम्; बहुविधा विद्यास्त्रैवर्गिक्यः; तासां पाठे विमुखीकृत-चित्ताः। यद्वा विद्या एव जल्पः। **बहिः** शरीरतः, **अन्तः** मानसतश्च परिशुद्धाः। **शुभंयवः**; शुभान्विताः। **औपनिषदीम्**; औपनिषदानां वेदान्तिनां गोष्ठीमुपगन्तु-मिच्छन्ति। पुनरपि तान् श्लाघते—**अपिचेति**। **परमपुरुषे** भगवति प्रत्यासत्त्या।

[1] राजा—(सविस्मयं विलोक्य)   [2] शिष्यः—क.

[1]नमति दिविषद्वर्गे नाथप्रभावसमीक्षया
[2]जहति त इमे मानाटोपं परस्परजीविता: ॥ ८३ ॥

किमेतन्मते प्रतिवक्तव्यमार्यस्य ?

गुरुः—(कर्णौ पिधाय) न खलु ; न खलु ।

न बाधः प्रतिरोधो वा वेदसात्त्वतयोर्मिथः ।
कुदृशां तद्भ्रमो वार्यः श्रुत्योरिव परीक्षकैः[3] ॥ ८४ ॥

### प्रभाविलासः

इति स्मारितम् । **तदभिगमनम्** ; तस्य भगवतोऽभिगमनम् । **उपादानम्** ; यागार्थद्रव्यसंग्रहः,

" पूर्वमेव यथान्यायमभिगम्य जगद्गुरुम् ।
उपादाय च यागार्थान् संभारान् नियतः स्वयम ॥ "

इति भरद्वाजस्मरणात । आदिपदेनेज्यास्वाध्याययोगा उक्ताः, " अभिगमनोपादानेज्यास्वाध्यायमन्वहं योगः " इत्युक्तत्वात । **नमतीति** ; " सर्वेऽस्मै देवा बलिमावहन्ति " इत्युक्तत्वात् ॥ ८३ ॥

**न बाध इति** । अधिकबलेन प्रतिहतिर्बाधः । तुल्यबलेन प्रतिहतिः

### प्रभावली

यद्वा परमपुरुषा: भागवताः । **पृथग्जनाः** ; नीचाः । **तस्य** परमपुरुषस्य यान्यभिगमनादीनि, तैः सफलाभिलाषाः ; अभिगमनादीनां भगवत्कैंकर्यरूपत्वादवन्ध्यमनोरथत्वम् ; तेषाम् । नाथस्य भगवतः प्रभावं समीक्ष्य देववर्गे नमस्कुर्वति सति अमी गर्वेण जातं संभ्रमं त्यजन्ति । परस्परं जीवितं येषाम् । परस्परं जीवितं जीवनवृत्तिर्येषामिति वा ॥ ८३ ॥

**प्रतिवक्तव्यम्** ; दूषणीयम । न खल्वित्युक्तमुपपादयति—**न बाध इति** ।

[1] अत्र " यस्त्वेवं ब्राह्मणो विद्यात । तस्य देवा असन् वशे " इति श्रुत्यर्थोऽनुसंधेयः ।

[2] प्रतिजहदहंकारास्तेऽमी परस्पर—क.

[3] परस्परम् —घ.

शिष्यः—तदहं वारयामि। शृण्वन्तु च[1] परमपुरुषप्रणीते पञ्च-रात्रतन्त्रे[2] तन्त्रान्तरवत् प्रादेशिकदोषोत्प्रेक्षकाः[3] पण्डितंमन्याः—

**आरोहन्त्वनवद्यतर्कपदवीसीमादृशां मादृशां**
**पक्षे कार्तयुगे निवेशितपदाः पक्षे पतद्भ्यः परान्।**

## प्रभाविलासः

प्रतिरोधः। **श्रुत्योरिवेति**। "उदिते जुहोति" "अनुदिते जुहोति" इति श्रुत्योरिव, भेदाभेदश्रुत्योरिवेति वा॥ ८४॥

**प्रादेशिकदोषोद्भावकाः**; 'जीवो जायते' इत्यादिदोषारोपकाः। **आरोहन्त्विति**। **कार्तयुगे**; कृतयुगसंबन्धिनि; ज्ञानलक्षण इत्यर्थः,

## प्रभावली

वेदसात्त्वतयोः; वेदपाञ्चरात्रयोः। **मिथः**; अन्योन्यम्। **बाधः**; प्रबलेन दुर्बलस्य पीडा; स नास्ति। तुल्ययोः पीडनं प्रतिरोधः। सोऽपि नास्ति। बाधप्रतिरोधाभावात् पाञ्चरात्रे परिहर्तव्यदूषणांशो नास्तीत्यर्थः। कर्तव्यं किंचिदस्तीत्याह—**कुदृशामिति**। **कुदृशां** कुदृष्टीनां **तद्भ्रमः** परस्परबाधप्रतिरोधभ्रमोऽस्ति। यथान्येषां श्रुत्योर्बाधप्रतिरोधभ्रमे उभयोरपि प्रामाण्यात् विषयव्यवस्था परीक्षकैः कल्प्यते, एवं श्रुतिपाञ्चरात्रयोः कुदृष्टीनां बाधप्रतिरोधभ्रमस्य परिहारो वक्तव्य इत्यर्थः॥ ८४॥

**वारयामि**; दुर्दृष्टिभ्रमं वारयामि। **शृण्वन्त्विति**। साक्षाद्भगवत्प्रणीते भ्रमस्यावकाशो नास्तीति सूच्यते—**परमपुरुषेत्यादिना**। **तन्त्रान्तरवत्**; पाशुपतादिवत्। क्वचित्क्वचिद्दोषमुत्प्रेक्षमाणाः; "वासुदेवात् संकर्षणो जायते" इत्येकदेशगतजीवोत्पत्त्यादिदोषोद्भावकाः। "विज्ञानादिभावे वा तदप्रतिषेधः" इति सूत्रकृतैव परिहारे कृते तस्यान्यथा वर्णनं कुर्वन्त आत्मानं सूत्रकृतोऽपि **पण्डितं** मन्यमाना इत्यर्थः। श्रोतव्यं किमित्यत्राह—**आरोहन्त्विति**। **अनवद्या**

[1] च omitted—क. ख. [2] तन्त्रेऽपि—क. ख.. [3] दोषोद्भावका इति प्रभाविलासपाठः

सर्वानुश्रवसारदर्शिसशिरःकम्पद्विजिह्वाशन-

[1]क्रीडाकुण्डलमौलिरत्नघृणिभिः साराात्रिकाः सूक्तयः ॥८५॥

## प्रभाविलासः

"ध्यायन् कृते यजन् यज्ञैस्त्रेतायां द्वापरेऽर्चयन्" इति स्मरणात् । यद्वा दोषगन्धरहिते, प्रामाणिक इत्यर्थः । **निवेशितपदाः**; प्राप्तव्यवसिताः, निष्णाता इति यावत् । "पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु" इति निघण्टुः ; निक्षिप्तचरणा वा । सर्वानुश्रवाणां सकलवेदानां सारदर्शिनः ; "त्रिवृत्ते शिरो गायत्रं चक्षुः स्तोम आत्मा साम ते तनूर्वामदेव्यम्" इत्यादिना प्रसिद्धवैभवस्य सशिरःकम्पस्य द्विजिह्वाशनस्य गरुत्मतः **क्रीडाकुण्डलानां** लीलार्थं भूषणतया धृतानां सर्पाणाम्, "सुपर्णं वैनतेयं च नागारिं नागभूषणम्" इति स्मरणात् ; मौलिरत्नानां घृणिभिः प्रभाभिः साराात्रिकाः सनीराजनाः मादृशां सूक्तयः **मादृशां पक्षे पतद्भयः**

## प्रभावली

या तर्कपदवी सत्तर्कपदवी, तस्याः सीमादृशां पारदृश्वनां **मादृशाम्** । सत्तर्कपरिकर्मितवेदान्तपक्षपरिग्रहमात्रात् सादृश्यम् । पूर्वाचार्याणां पक्षे वेदान्तसिद्धान्ते । कीदृशे कार्तयुगे ; कृतयुगसमृद्धिविजृम्भणात् । तत्र **निवेशितपदाः** ; वेदान्तसिद्धान्तमनुप्रविश्य स्थिता इत्यर्थः । **सर्वेति** । अनुश्रूयत इत्यनुश्रवो वेदः । सर्ववेदसारदर्शी गरुत्मान्, तस्य वेदात्मकत्वात् । **सशिरःकम्पः** ; भगवत्पुरतः श्रीपाञ्चरात्रसारार्थश्रवणात् शिरःकम्पः, तेन सहितः । सशिरःकम्पश्चासौ द्विजिह्वाशनश्च ; द्विजिह्वाः सर्पाः अशनं यस्य तस्य विहगेश्वरस्य संहिताकर्तुः । **क्रीडाकुण्डलयोः** ; पद्ममहापद्माख्यौ नागौ, तयोः । मौलिरत्नस्य कान्तिभिः साराात्रिकाः नीराजनवत्यः, नीराजिता इत्यर्थः । **सूक्तयः पक्षे पतद्भयः** पक्ष-

[1] क्रीडाकुण्डलि—क. ग. घ.

निरूपितं हि सात्त्वतप्रामाण्यं निखिलनिगमव्यसनव्यसनिना मतिमन्थाननिर्मथितनिगमसिन्धुसमुदितमहाभारतचन्द्रचन्द्रिकानिरवशेषमुषितभुवनभवनोदरतिमिरेण बादरायणेन भगवता नारायणेन।
तत्र च,

### प्रभाविलासः

**परान्** अस्मत्पक्षपातिविरोधिपक्षनिष्ठान् आरोहन्त्वित्यन्वयः। अत्र रत्नघृणिष्वारोप्यमाणस्यारात्रिकत्वस्य प्रकृतोपयोगात् परिणामालंकारः।

"आरोप्यमाणमारोपविषयात्मतया स्थितम्।
प्रकृतस्योपयोगित्वे परिणाम उदाहृतः॥"

इति लक्षणात्॥ ८५॥

**बादरायणेन भगवतेति**;

"कृष्णद्वैपायनं व्यासं विद्धि नारायणं परम्।
को ह्यन्यः पुण्डरीकाक्षान्महाभारतकृद्भवेत्॥"

### प्रभावली

पातिभ्यः **परान्** अपक्षपातिनो व्यासादीन् पाञ्चरात्रप्रामाण्यवादिनः **आरोहन्तु** आश्रयन्तु। आश्रित्य प्रमाणतया जयन्त्वित्यर्थः। व्यासादिभिः प्रामाण्यस्य स्वग्रन्थे समर्थितत्वात् पक्षपतिभिः युष्माभिः यत्किंचिदुच्यतां नामेति भावः॥ ८९॥

**निरूपितमिति**; समर्थितमित्यर्थः। तस्य सर्वज्ञत्वं दर्शयति—**निखिलेत्यादिना**। निखिलवेदानां व्यसने विभजने व्यसनिना तात्पर्यवता। **मतिमन्थानेत्यादि**; बुद्धिरेव मन्थानदण्डः। निगमसिन्धोः समुदितो यो महाभारतचन्द्रः, तस्य चन्द्रिका तदर्थज्ञानं, तेन निरवशेषं निःशेषं यथा तथा मुषितं भुवनमेव भवनं तस्य उदरम्, उदरशब्देन तदन्तर्वर्तिजन उच्यते, **तिमिरम्** अज्ञानं येन बादरायणरूपिणा। **तत्र च**; महाभारते। कुत्र पाञ्चरात्रप्रामाण्यं प्रतिपादितमित्यत्राह—

**स्वतः सर्वावेक्षी [1]श्रुतिशतशिरस्त्राणचरणः**
**स्वभृत्यान्नस्त्रातुं यदिदमनघं तन्त्रमकृत ।**
**इदं श्रेयः पुण्यं[2] हिततममितीव व्यपदिशन्**
**मुनिः पाराशर्यः प्रकटयति मानं तदखिलम् ॥ ८६ ॥**

### प्रभाविलासः

इति स्मारितम्। **स्वत इति** । **सर्वावेक्षी**; सर्वज्ञः । श्रुतिशतानां शिरस्त्राणभूतं चरणं यस्य सः । **इदं श्रेयः** इत्यादिना भारतवचनं स्मारितम् । यथोक्तम्—

"इदं शतसहस्राद्धि भारताख्यानविस्तरात् ।
आविध्य मतिमन्थानं दध्नो घृतमिवोद्धृतम् ॥
नवनीतं यथा दध्नो द्विपदां ब्राह्मणो यथा ।
आरण्यकं च वेदेभ्य ओषधीभ्यो यथामृतम् ॥
इदं महोपनिषदं चतुर्वेदसमन्वितम् ।

### प्रभावली

**स्वत** इति । **सर्वावेक्षी**; सर्वज्ञ इत्यर्थः । **श्रुतिशतस्य**; वेदगणस्य **शिरस्त्राणं** शिरोभागरक्षकं चरणं यस्य; सर्ववेदप्रतिपाद्यपादारविन्द इत्यर्थः । **स्वभृत्यान्**; स्वशेषभूतान् । **नः**; अस्मान् । **त्रातुम्**; संसारादुद्धर्तुम्; अस्मदुज्जीवनार्थमित्यर्थः । **अनघम्**; निर्दोषम्; स्वतः प्रमाणभूतमित्यर्थः । **तन्त्रम्**; श्रीपाञ्चरात्रशास्त्रं कृतवान्, तत्रेति शेषः । **इदम्**; श्रीपाञ्चरात्रशास्त्रतन्त्रम् । **श्रेयः**; परमपुरुषार्थप्रदम् । **पुण्यम्**; पापाच्छोधकम् । **हिततमम्**; परमहितप्रतिपादकम् । **इतीव**; इवशब्दोऽलंकारे । इत्युपदिशन् । अनेन "इदं श्रेय इदं पुण्यम्" इत्यादिमहाभारतवचनं सूच्यते । तत्र इदमिति शब्देन प्रकृतस्य पाञ्चरात्रस्य ग्रहणमिति द्योतयितुमत्रापि 'इदं श्रेयः' इत्युपात्तम् ।

[1] श्रुतिगण—क.

[2] पथ्यं—घ.

**सेनापतिः**—देव, अपर इवायं पाराशर्यः पञ्चरात्रतन्त्रं प्रतिष्ठापितवान् ।

**राजा**—भगवन्, गुरुकुमारिलमतानुसारिणः किमेते निरसनीया भवच्छिष्येण ?

**गुरुः**—महाराज, अमी पुनरागमाभिरक्षणे प्रवृत्ता वेदान्तपरित्यागिनस्तोषयितव्या भीषयितव्याश्च[1] ।

प्रभाविलासः

सांख्ययोगकृतान्तेन पञ्चरात्रेति शब्दितम् ॥
इदं श्रेय इदं पुण्यमिदं हितमनुत्तमम् ।
ऋग्यजुःसामभिर्जुष्टमथर्वाङ्गिरसैस्तथा ।
भविष्यति प्रमाणं वा एतदेवानुशासनम् ॥"

इति ॥ ८६ ॥

**देव अपर इवाय**मित्यादिना पुष्पं नाम प्रतिमुखसंधेरङ्गमुक्तम् ।

**प्रभावली**

"इदं शतसहस्राद्धि भारताख्यानविस्तरात् ।
आविध्य मतिमन्थानं दध्नो घृतमिवोद्धृतम् ।
भविष्यति प्रमाणं वा एतदेवानुशासनम्" ॥

इति वचनमत्रानुसंधेयम् । **पाराशर्यः**; व्यासः । **तदखिलम्**; पाञ्चरात्रशास्त्रमापादमस्तकं प्रमाणमिति प्रकटयति । अन्येषां तन्त्राणां क्वाचित्कं प्रामाण्यम्; श्रीपाञ्चरात्रं तु सर्वत्र प्रमाणमित्युक्तवान् ॥ ८६ ॥

**अयम्**; शिष्यः । **अपरः पाराशर्य इव प्रतिष्ठापितवा**नित्यनेन ग्रन्थकर्त्रा श्रीवेदान्तगुरुवर्येण श्रीपाञ्चरात्ररक्षा कृतेति सूचितम् । अथ गुरुकुमारिलशिक्षामुपक्रमते—**गुरुकुमारिले**त्यादि । **आगमे**त्यादि । **आगमाः**; वेदाः । तद्रक्षण-

[1] जिगीषितव्याश्च—घ.

शिष्यः—(सापहासम्)

**निरस्ताखिलदोषेषु निगमान्तेषु सत्स्वमी ।**
**कथं सदसि मीमांसाकबन्धमनुरुन्धते ॥ ८७ ॥**

अयं [1]खल्वखिलवैदिकसदःशिखामणीनामध्यात्मविदां निर्णयः—पापवत् परित्यक्तकाम्यधर्मैर्नित्यनैमित्तिकानुष्ठाननिष्णातैर्विष्णुभक्तैर्भवितव्यमिति । अत एव कर्मब्रह्ममीमांसयोरैकशास्त्र्यमामनन्ति सन्तः ।

**प्रभाविलासः**

"अनुरागप्रकाशविशेषवचनं पुष्पम्" इति लक्षणात् । **निरस्तेति** । निरस्ता अखिलदोषाः वेदमात्रे प्रमाणलक्षणशङ्कितदोषाः अनृतपौनरुक्त्यादयः, शारीरकचतुःसूत्र्यां व्युत्पत्त्यभावादयश्च[2] येषां ते तथोक्ताः, तेषु । **कथमिति** । निर्दोषत्वानन्यपरत्वादिना विरोधाभावे तुल्येऽपि कबन्धमात्रानुसरणे राहुमात्रानुसरणं किं न स्यादिति भावः ॥ ८७ ॥

**सन्तः**; बोधायनादयः । "संहितमेतच्छारीरकं जैमिनीयेन

**प्रभावली**

प्रवृत्तत्वात् **तोषयितव्याः** । वेदान्तपरित्यागात् **भीषयितव्याः** । **निगमान्तेषु**; वेदान्तेषु । सकलदोषवर्जितेषु सत्स्वपि **अमी**; गुरुकुमारिलाः । **सदसि**; सभ्यानां पुरत इत्यर्थः । **कबन्धम्**; पूर्वभागव्याख्यारूपमीमांसाम् । पूर्वभागमात्रं कथमनुवर्तन्ते ? ॥ ८७ ॥

इदमनुचितमिति वक्तुं कर्मब्रह्ममीमांसयोरैकशास्त्र्यं महद्भिः परिगृहीतमित्यैकशास्त्र्यहेतुं दर्शयति—**अयं खल्वित्यादि** । अखिलेत्यादिविशेषणद्वयेन निर्णेतॄणामुभयभागनिष्ठत्वमुक्तम् । उभयभागविशिष्टस्य वेदस्य महावाक्यार्थं

[1] खलु निखिल—घ. छ.

[2] "व्युत्पत्त्यभावः प्रतिपत्तिदौःस्थ्यमन्येन सिद्धत्वमथाफलत्वम् ।
एतानि वै सूत्रचतुष्टयेनानारम्भमूलानि निराकृतानि ॥" इति अत्रानुसंधेयम् .

**राजा**—(सपरितोषम्) भगवन्, यथाश्रुतं [1]सर्वं यथाहृदयमुपपाद्य स्वपक्षं रक्षता परपक्षांश्च प्रतिक्षिपता प्रशमितनिगमान्तखेदेन भवदन्तेवासिना स्थूणानिखननन्यायेन स्थिरीकृतमिदं सम्यग्ज्ञानम्। तथाप्यामुक्तनिगमकञ्चुकानाममुक्तबाह्यवर्त्मनां कथं प्रतीकारः?

**गुरुः**—(सान्तर्हासम्)

**नियत्या वैयात्यान्निगमपदवीमुज्झितवतां**
**परेषामेतेषां परिहसनगुम्भार्हवचसाम्।**
**पुरन्ध्रीसंभाव्यस्वमतरुचिनीरन्ध्रितधिया-**
**महंकारं सोढुं प्रभवति कथंकारमवनिः॥ ८८॥**

**प्रभाविलासः**

षोडशलक्षणेन" इति बोधायनः। "विंशतिलक्षणमेकं शास्त्रम्" इति चाचार्याः। **आमुक्तम्**; पिनद्धम्। **नियत्येति**। **नियतिः**; दुष्कर्म।

**प्रभावली**

दर्शयति—**पापवदित्यादि**। अयं पूर्वभागनिर्णीतोऽर्थः। **विष्णुभक्तैरिति** वेदान्तनिर्णीतोऽर्थः। **अत एव**; महावाक्यार्थस्यैवं निर्णयादित्यर्थः। **सन्तः**; बोधायनादयः। सम्यग्ज्ञानस्य स्थिरीकरणात् परितोषः। **हृदयम्**; तात्पर्यार्थः। परपक्षप्रतिक्षेपेण प्रशमितनिगमान्तखेदो भवति। निखातायाः स्थूणायाः परिमितसंचालनेन दृढीकरणं स्थूणानिखननम्। तन्न्यायेन वेदान्तसिद्धं सम्यग्ज्ञानं निश्चलीकृतम्। **तथापीति**। **आमुक्तम्**; पिनद्धम्। अमुक्तं बाह्यादीनां बौद्धादीनां वर्त्म यैस्तेषां गुरुकुमारिलानां शंकरादितन्मतनिष्ठानां च कथं निरास इत्यर्थः। **नियत्येति**। **नियत्याः**; विधेः। **वैयात्यात्**; धाष्ट्यात्, विधिवशादित्यर्थः। निगममार्गं त्यक्तवतां **परेषाम्**; चार्वाकबौद्धादीनाम्। **एतेषाम्**; गुरुकुमारिलशंकरमतानुवर्तिनाम्। **परिहसनेति**; कथाकाले परिहासवाक्यार्हवचना-

[1] सर्वं omitted—ग.

शिष्यः—[1]महाराज, छिन्नमूलाः खल्वेते बाह्यनिरसनेन । तथाहि—

**गाथा ताथागतानां गलति गमनिका कापिली क्वापि लीना**
**क्षीणा काणादवाणी द्रुहिणहरगिरः सौरभं नारभन्ते ।**
**क्षामा कौमारिलोक्तिर्जगति गुरुमतं गौरवाद् दूरवान्तं**
**का शङ्का शंकरादेर्भजति यतिपतौ भद्रवेदीं त्रिवेदीम् ॥८९॥**

## प्रभाविलासः

**वैयात्यम्;** धाष्टर्यम् । युक्तीनामाभासतया **पुरंध्रीसंभाव्ये**त्युक्तिः ॥ ८८ ॥

**गाथेति ।** तथागतः; बुद्धः; तन्मतानुसारिणः **ताथागताः ।** गाथायाः कुत्राप्यनुप्रवेशानर्हतया **गलती**त्युक्तिः । प्रकृत्युपादानत्वाद्यभ्युपगमेऽपि स्वातन्त्र्याभ्युपगमापराधेन **क्वापि लीने**त्युक्तिः । "यत् किंचिदन्यदपि वा मतम्" इत्युक्तरीत्या भेदादिप्रक्रियाणां बहूनां स्वीकारेऽप्येकदेशविरुद्धतया क्षीणेत्युक्तिः । तदुक्तार्थलेशोऽप्यनादृत इति वक्तुं **सौरभं**

## प्रभावली

नाम् । **पुरन्ध्रीति;** यदेतैः स्वप्रणीतं शास्त्रमुच्यते, तत् स्वस्वपुरन्ध्रीभिः संभाव्यं, नेतरैः । तादृशे स्वग्रन्थे नीरन्ध्रं संततं बद्धबुद्धीनाम् । **अहंकारम्;** गर्ववाक्यम् । **इयमवनिः** कथं सोढुं समर्था स्यात् । सैव तान् हिनस्तीति भावः ॥ ८८ ॥

कथं प्रतीकार इत्यत्रोत्तरं दर्शयति—**छिन्नमूला** इति । एते; प्राभाकरादयः, बाह्यारातिनिरसनेनैव छिन्नमूलाः खलु, तच्छास्त्रयुक्तिभिरेव स्वशास्त्रप्रणयनादिति भावः । तदेतदुपपादयति—**तथाहीत्यादिना । गाथा ताथागतानामिति । यतिपतौ;** यतीन्द्रे । **त्रिवेदीं भद्रवेदीम्;** त्रिवेदीरूपां मङ्गल-

[1] **विचिन्त्य** added before—**क.**

अथवा पारिप्लवविविधपरिकल्पनाकल्लोल[1]कलहजनितसितासितविकल्पविप्लवेन[2] सिद्धिकामजनमोहनप्रवृत्तांस्तानिमान् प्रतिक्षिपामि । (सहस्तास्फालनं विहस्य)

प्रभाविलासः

**नारभन्त** इत्युक्तिः । एकदेशानुपादेयतया **क्षामे**त्युक्तिः । गुरुद्वेषप्रवृत्ततया **दूरवान्त**मित्युक्तम् । समूलोन्मूलिताः शंकरादय इत्याह—**का शङ्केति** । आदिपदेन यादवभास्करौ ग्राह्यौ । अत्र प्रत्यक्षे गुरुकीर्तनात उद्दिष्टं नाम नाट्यालंकारः । "उद्दिष्टं स्यात् परोक्षे च प्रत्यक्षे चार्थकीर्तनम" इत्यमृतानन्दवचनात् ॥ ८९ ॥

प्रभावली

वेदिकाम । **भजति**; आरूढवति, प्रमाणत्वेन स्वीकुर्वति सति । **ताथागतानाम्**; बौद्धमतानुवर्तिनाम् । **गाथा** युक्तिराहित्यात् **गलति**; स्रंसते, शिथिलतामेति । **कापिली**; कपिलमुनिप्रणीता । **गमनिका**; संगतिप्रदर्शनदिशा । **कापि**; कुत्रापि । **लीना**; अन्तर्हिता न ज्ञायते । काणादसंबन्धिनी वाणी **क्षीणा** । **द्रुहिणहरयोः गिरः**; योगपाशुपततन्त्राणीत्यर्थः । **सौरभम्**; गम्भीरताम् । **नारभन्ते**; बालवाक्यवत न प्रकाशन्त इत्यर्थः । **कौमारिलानाम्**; भाट्टानाम । **उक्तिः**; शास्त्रम् । **क्षामा**; क्षीणा । जगतीति सर्वत्रानुषञ्जनीयम् । **गुरोः**; प्रभाकरस्य मतं **गौरवात्** अपूर्वादिकल्पनागौरवात दूरोत्सारितम् । **शंकरादेः**; शंकरभास्करयादवत्रयस्य । **का शङ्का**; निरासविषयशङ्काया अवकाश एव नास्ति, ताथागतमतनिरासेनैव निरस्तत्वादिति भावः ॥ ८९ ॥

यद्यपि प्रतिक्षिप्तप्रायं, तथापि तन्मतं प्रतिक्षिपामि । **अथवेति** शंकरमतदूषणमारभ्यते । विशेषतः प्रतिक्षेपः कर्तव्य इत्यर्थः । **पारिप्लवाः**; चलाः । त्रिचतुरकक्ष्यामात्रविश्रमयोग्या इत्यर्थः । **विविधाः परिकल्पनाः**, तदर्थः **कल्लोलकलहः**; निरर्थकलह इत्यर्थः, तेन जनिताः **सितासितविकल्पाः** दुर्विभाव्य-

[1] कल्पोरु—क [2] कल्पनेन—च.

अविद्यामाहात्म्यादनहमिदमर्थे[1] जगदिदं
गृणन्त्येते भातं गगन इव गन्धर्वनगरम् ।
अवन्ध्यैर्व्याघातैरतिपतितविन्ध्यद्रढिमभि-
र्निबन्ध्यास्ते वन्ध्यासुतनृपतिवैतालिकगणे ॥ ९० ॥

### प्रभाविलासः

शंकरमतमनुवदति—**अविद्येति** । अविद्यापदेन सदसद्विलक्षणमनिर्वचनीयमायातमःपदवाच्यमज्ञानमुच्यते ; "नासदासीन्नो सदासीत्तदानीम्" "तम आसीत्" "मायां तु प्रकृतिं विद्यात्" इति श्रुतेः । तस्या **माहात्म्यात् ;** आच्छाद्य विक्षिपतीत्येवंरूपसामर्थ्यात् । अहमर्थः अहंकारः, "अथातोऽहंकारादेशः" "अथात आत्मादेशः" इत्यात्मनोऽहंकारस्य पृथगभिधानात् । इदमर्थः पृथिव्यादिभूततत्कार्याणि । तदुभयविलक्षणे साक्षिचैतन्यमात्र इत्यर्थः, "साक्षी चेता केवलो निर्गुणश्च" इत्यादिश्रुतेः । **इदमिति** प्रस्तुतनिर्देशेन इदमहंरूप चिद्विलक्षणमुच्यते "अहमिति तावत्प्रथमोऽध्यासः" इत्युक्तत्वात् ; प्रतिभासतो युष्मदर्थत्वाभावेऽपि लक्षणतो युष्मदर्थत्वाङ्गीकाराच्च । **भातम् ;** कल्पितम् ; प्रतीतिमात्रशरीरमिति यावत् ।

### प्रभावली

विकल्पाः ; त एव **विप्लवः** उपद्रवः, तेन । **सिद्धिकामाः** मोक्षकामाः त एव जनाः, तन्मोहनप्रवृत्तान् इमान् शंकरमतनिष्ठान् । हस्तयोरास्फालनं यस्मिंस्तथा विहस्य । **अविद्येति** । एते ; मायिनः । **अनहमिदमर्थे ; अनहमर्थे अनिदमर्थे च ;** अहमर्थेदमर्थव्यतिरिक्तज्ञानमात्रे ब्रह्मणि । **अविद्याया माहात्म्यात् ;** अज्ञानवशात् । **इदं जगत् ;** सर्वं प्रपञ्चं **भातं** भ्रान्तं **गृणन्ति** । किमिव ? गगने गन्धर्वनगरं यथा भ्रान्त्या गृह्यते, तद्वत् । य एते एवं **गृणन्ति, ते अवन्ध्यैः** अपरिहरणीयैः **व्याघातैः** परस्परव्यावृत्तिरूपतर्कैः **अतिपतित-**

[1] दनिदमहमर्थे—ङ.

अपिच,

**निध्यायन्त्वनसूयवः शुभगुणं निर्दोषमाराध्यमि-**
**त्यध्वा विश्वविशेष[1]शून्यकथकैरप्यादितः स्वीकृतः ।**

प्रभाविलासः

एतच्च "नेह नानास्ति किंचन" "एकमेवाद्वितीयम्" इत्यादिश्रुतिबलात् कल्प्यते । अनुमानं च दर्शयति—**गगन इति** । नीरूपनिरवयवादेरप्यधिष्ठानत्वं समस्तीति वक्तुं गगनोपादानम् । **अतिपतितविन्ध्यद्रढिमभिः ;** अतिक्रान्तविन्ध्याचलदार्ढ्यैः । वस्तुनो द्वैरूप्याभावेन सदसद्वैलक्षण्यव्याहतिः । अहमर्थस्यानात्मत्वे प्रत्यक्त्वव्याहतिः । प्रमेयस्याभिधेयस्य निर्विशेषत्वव्याहतिः ॥ ९० ॥

श्रुतीनामर्थान्तरपरत्वं 'मिथो भेदम्' इति श्लोके वक्ष्यति । परैरपि सविशेषवस्तुनोऽभ्युपगमात् तत्रैव सकलवेदान्तपर्यवसाने सति, अप्रामाणिकनिर्विशेषकल्पनं निष्प्रयोजनमित्याह—**निध्यायन्त्विति**[2] । **अन-**

प्रभावली

**विन्ध्यद्रढिमभिः** अतिपतितोऽतिक्रान्तो विन्ध्यस्य द्रढिमा यैः, विन्ध्यादप्यधिकद्रढिमवद्भिः । **वन्ध्यासुतनृपतिवैतालिकगणे** ; वन्ध्यासुतश्चासौ नृपतिश्च, तस्य वन्दिगणे **निबन्ध्याः** ; अत्यन्तानुपपन्नानहमिदमर्थव्यतिरिक्तसदसदनिर्वचनीयाद्यर्थवादित्वात् वन्ध्यासुतगोष्ठ्यर्हा इत्यर्थः ॥ ९० ॥

स्वाभ्युपगमविरोधं चाह—**निध्यायन्त्विति** । **अनसूयवः** पण्डिताः

[1] विवेक—घ.

[2] A. MS. of the Prabhāvilāsa reads thus :

निध्यायन्त्विति । निरभिनिवेशेन सम्यक् विचारयन्तु । **शुभगुणमिति** ; "समस्तकल्याणगुणात्मकोऽसौ" इति वचनं स्मारितम् । **निर्दोषमिति** ; "अपहतपाप्मा" इति श्रुतिरभिप्रेता । **आराध्यम्** ; उपास्यम् । इतिशब्दः प्रकारवचनः । **अध्वा** ; मार्गः । **आदित इति** ; अनिष्पन्नसमाधीनां प्रथमतो निर्विशेषवस्तुन आलम्बनत्वायोग्यतया

यद्यर्थस्थितिरेतदेकशरणा समप्रत्यवायो भव-
त्यध्यक्षादिविरुद्धनिर्गुणकथानिर्वाहगर्वाहवः ॥ ९१ ॥

प्रभाविलासः

**सूयवः** असूयारहिताः सन्तः निध्यायन्तु पश्यन्तु । **विश्वविशेषशून्यकथकैः;** निर्विशेषचिन्मात्रवादिभिः शांकरीयैरप्यादितः **शुभगुणं** समस्तकल्याणगुणरत्नं **निर्दोषं** हेयगुणरहितं ब्रह्म **आराध्यम्** उपास्यमिति **अध्वा** मार्गः स्वीकृतः । अशेषगुणशून्यस्य ध्यातुमशक्यत्वात् सगुणं ब्रह्म प्रथममुपास्यमिति स्वीकृतमित्यर्थः । **अर्थस्थितिः;** वस्तुस्थितिः । **एतदेकशरणा यदि;** पूर्वोक्तसगुणब्रह्मोपासनपरा यदि । तदा **अध्यक्षादिविरुद्धनिर्गुणकथानिर्वाहगर्वाहवः;** अध्यक्षादिभिः प्रत्यक्षानुमानागमरूपप्रमाणैर्विरुद्धाया निर्गुणकथाया निर्वाहे गर्वेण कृत आहवः वादरूपो विग्रहः ।

प्रभावली

**निध्यायन्तु;** वक्ष्यमाणं पश्यन्त्वित्यर्थः । तत्किमित्यत्राह । **आदितः;** प्रथमसूत्रे । **विश्वविशेषशून्यकथकैः;** शास्त्रस्य विषयप्रयोजनसिद्ध्यर्थं निर्विशेषचिन्मात्रं ब्रह्मेत्युपगच्छद्भिरेव **अध्वा शुभगुणं** निर्दोषमित्यध्वा गुणोपसंहारपादे गुणोपसंहारानुपसंहारचिन्तनार्थम् **उपास्यं** ब्रह्म सगुणं निर्दोषमित्ययं मार्गः स्वीकृतः । ब्रह्मसगुणत्वस्यावास्तवत्वे प्रत्यक्षादिप्रमाणविरोधः, तेषां सविशेषविषयत्वात् । सगुणत्वस्य वास्तवत्वे निर्विशेषवस्तुप्रतिपादनविरोध इत्याह—**यद्यर्थस्थिति-**

**स्थूलारुन्धतीन्यायेन** विभूतिविग्रहगुणविशिष्टमवलम्ब्य पश्चान्निर्विशेषदर्शनं सुलभमिति भावः । **अर्थस्थितिः;** वस्तुतत्त्वनिर्णयः । **एतदेकशरणा;** सगुणवस्तुमात्रपर्यवसिता यदि । **समप्रत्यवायः;** सदोषः, वितथ इत्यर्थः । प्रत्यवायमेव विवृणोति—**अध्यक्षादीति** । "इदमित्थमिति हि सर्वा प्रतीतिः" इति श्रीभाष्योक्तेरध्यक्षग्रहणम् । आदिपदेनानुमानशब्दौ गृहीतौ, अनुमानस्य सविकल्पकैकगोचरत्वात् शब्दस्य प्रवृत्तिनिमित्तसापेक्षत्वादित्युक्तेः । ९१

अतः स्थाने खलु मेघनादवदङ्कुरितविश्वव्यामोहनेन शंकर-
दत्तेन केनापि मायातन्त्रेण [1]समानाधिकरणोपप्लवमाचरतामाचरित-

### प्रभाविलासः

**सप्रत्यवायो भवति**; सदोषो भवति। मायिभिः प्रथमं स्वीकृतं सगुण-ब्रह्मोपासनं वास्तवं वा न वा? प्रथमे निर्विशेषवस्तुप्रतिपादनविरोधः। द्वितीये प्रत्यक्षादिप्रमाणविरोधः। तेषां वस्तुतः सविशेषवस्तुविषयत्वादित्यर्थः ॥ ९१ ॥

[2]**स्थाने**; युक्तम्। **शंकरदत्तेन**; शंकरनाम्ना भाष्यकृता दत्तेन। अन्यत्र पशुपतिदत्तेन। **मायातन्त्रेण**; अविद्याप्रधानसिद्धान्तेन। अन्यत्र

### प्रभावली

**रिति**। **अर्थस्थितिः**; अर्थतत्त्वम्। **एतदेकशरणा**; सगुणब्रह्मविषयिणी चेत्। **अध्यक्षादीति**। प्रत्यक्षादिप्रमाणविरुद्धः ब्रह्मणो निर्गुणत्वकथाया निर्वाहरूपो गर्वेण क्रियमाणः **वादाहवः सप्रत्यवायः** दोषदुष्टो भवतीत्यर्थः ॥ ९१ ॥

एवमसमञ्जसत्वात्तेषां निवारणाय लक्ष्मणमुनिप्रादुर्भाव इति सदृष्टान्तमाह—**अत इति**। लोकव्यामोहकत्वादित्यर्थः। **स्थाने**; युक्तं खलु। **मेघनाद**-

[1] समानाधिकरण—क. ख. ग.

[2] **अत इत्यादि**। **मेघनादः**; इन्द्रजित्। **शंकरः**; भाष्यकर्ता, अन्यत्र शिवः। **मायातन्त्रेण**; मायावादिभाष्येण, शाम्बरतन्त्रेण च। समानां सविशेषवस्तुप्रतिपादकानामधिकरणानामीक्षत्यादीनामुपप्लवम्। अन्यत्र समेनाधिकेन च रणेन युद्धेनोपप्लवम्। **तमः**; अज्ञानमन्धकारश्च। **लक्ष्मणः**; श्रीरामानुजाचार्यः, सौमित्रिश्च। **पौण्ड्रकाद्वैतम्**; ब्रह्माहमस्मीत्यद्वैतम्। पौण्ड्रको हि वासुदेव एवाहमिति भ्रान्तः। **नित्यमुक्तवादताम्**; नित्यत्यक्तवादताम्। **मुक्तस्येति**। मुक्तामुक्तभेदे हि अमुक्तस्य मुक्त्यर्था प्रवृत्तिर्युज्यते। स च नास्तीत्याह—**अविशिष्टतनोरिति**। "अनृतेन हि प्रत्यूढाः" इति नित्यमुक्तेरेवाप्रामाणिकत्वेन मुक्तस्य मुक्त्यन्तरकल्पनमतिसाहसमित्याह—**स्वप्नेति**।—A.

तमःप्रवृत्तीनामनवरतकर्बुरप्रकृतीनां कलिब्रह्ममीमांसकानामेतेषां नि-
रासाय लक्ष्मणाचार्यप्रादुर्भावः । हन्त, परिगृहीतपौण्ड्रकाद्वैतानाम-
मीषां नित्यमुक्तवादोऽपि नित्यमुक्तवादतामापादयति । तथाहि-—

प्रभाविलासः

शाम्बरतन्त्रेण । **समाधिकरणोपप्लवम्;** **समानाम्;** एकरूपाणाम्; सवि-
शेषवस्तुप्रतिपादनैकस्वभावानामित्यर्थः । **अधिकरणानाम्**; आनन्दमयाद्यधि-
करणानाम् । **उपप्लवम्;** उपद्रवम् । अन्यत्र समेनाधिकेन च रणेन युद्धेन ।
**तमः;** अज्ञानम् । अन्यत्रान्धकारः । कलि ब्रह्ममीमांसकानां शंकरमत-
स्थानाम् । **लक्ष्मणः;** लक्ष्मणमुनिः । अन्यत्र सौमित्रिः । **परिगृहीत-
पौण्ड्रकाद्वैतानामिति;** पौण्ड्रको वासुदेवोऽहमिति वदन् महतीं विपदमुप-

प्रभावली

**वत्;** इन्द्रजिद्वत् । विश्वव्यामोहः अङ्कुरितो येन । **शंकरदत्तेन;** शंकरनाम्ना
भाष्यकृता; प्रसिद्धशंकरेण च । **मायातन्त्रेण;** अविद्याप्रधानशास्त्रेण; शाम्बर-
तन्त्रेण च । **समाधिकरणोपप्लवम्** । **समानाम्;** सविशेषवस्तुप्रतिपादकतया
एकरूपाणाम् । **अधिकरणानाम्;** आनन्दमयादीनाम् । **उपप्लवम्;** उपरोधम ।
अन्यत्र समेनाधिकेन च रणेन प्राणिनामुपद्रवम् । **तमः;** अज्ञानं तन्मूलाः प्रवृत्तयः
आचरिता यैः । अन्यत्रान्धकारे प्रवृत्तिः कृता यैः । **कर्बुरप्रकृतीनाम्;** शबलित-
प्रकृतीनां, नानास्वभावानामित्यर्थः । अन्यत्र राक्षसप्रकृतीनाम । कलियुगानु-
रूपब्रह्ममीमांसकाः शंकरादयः । तन्निरसनाय लक्ष्मणमुनिप्रादुर्भावः । यथा
मेघनादादिराक्षसविनाशाय लक्ष्मणस्य रामावरजस्य प्रादुर्भावः, तद्वत् ।
अर्थान्तरमपि दूषयति—**हन्तेति** । हन्तेति हर्षे; विषादे वा । **पौण्ड्रका-
द्वैतानाम्;** स्वरूपैक्याद्वैतम् । यथा पौण्ड्रको वासुदेवोऽहमिति स्वरूपैक्य-
बुद्ध्या वदन्महतीं विपदं प्राप, तथा स्वरूपैक्यबुद्ध्या ब्रह्माहमस्मीति वादिनो-

**मुक्तस्य नित्यमविशिष्टतनोरपूर्वां**
**मुक्तिं प्रकल्पयितुमात्तविचारयत्नः ।**
**स्वप्नप्रसूनमकरन्दरसस्य मन्ये**
**स्वादुत्वमन्यदुपपादयितुं क्षमेत ॥ ९२ ॥**

### प्रभाविलासः

गतः । एवं ब्रह्माहमिति ब्रह्मैक्यवादिनोऽपीति भावः । **नित्यमुक्तवादोऽपि**; नित्यमुक्तोऽहमिति वादोऽपि । **नित्यमुक्तवादताम्**; नित्यं मुक्तो वादो यैस्तेषां भावः तत्ता, ताम् । नित्यमुक्तवादोऽनुपपन्नत्वान्नित्यमौनितामापादयतीत्यर्थः । तस्यानुपपन्नतामेव प्रतिपादयति— तथाहीत्यादिना । **मुक्तस्येत्यादि** । **नित्यम्**; सदा । **मुक्तस्याविशिष्टतनोः**; केनापि विशेषेणाविशिष्टस्वरूपस्य । **अपूर्वाम्**; पूर्वमविद्यमानाम । **मुक्तिं** प्रकल्पयितुमात्तविचारयत्नः पुरुषः स्वप्नप्रसूनमकरन्दरसस्यान्यदेव स्वादुत्वं कल्पयितुं शक्त इत्यर्थः ॥ ९२ ॥

### प्रभावली

ऽपीति भावः । **अमीषां नित्यमुक्तवादोऽपि**; नित्यमुक्तोऽहमिति वादश्च । **नित्यमुक्तवादताम्**; नित्यं मुक्तो वादो यैस्तत्ताम् । नित्यमुक्तवादस्यानुपपन्नत्वात् मौनितामापादयतीत्यर्थः । तदेव प्रतिपादयति—**तथाहीत्यादि** । **नित्यमुक्तस्य**; सांसारिकदुःखमुक्तस्य । अत एव **अविशिष्टतनोः**; अविशिष्टस्वरूपस्य एकरूपस्वरूपस्यात्मनः । **अपूर्वाम्**; पूर्वमविद्यमानाम । **मुक्तिं कल्पयितुं** स्वीकृतविचारयत्नः पुरुषः **स्वप्नप्रसूनमकरन्दरसस्य** स्वप्नदृष्टपुष्परसस्यान्यत् स्वादुत्वं कल्पयितुं क्षमेत; शक्तो भवेत । स्वप्नदृष्टसुमनोमकरन्दरसप्राया नित्यमुक्तिर्मिथ्येत्यर्थः । ततोऽप्यन्यमुक्तिं कल्पयन् पूर्वोक्तमकरन्दरसस्याप्यन्यत्स्वादुत्वं कल्पयितुं शक्त इत्यर्थः । इति मन्ये ॥ ९२ ॥

आलक्ष्यतामयं रजनिचरवंशबान्धवानां राहुमीमांसकानां सुभगाभिक्षुकन्यायः, यदेते निगमान्तपरित्यागिनः परानधिक्षिपन्ति, प्रतिक्षिपन्ति च स्वयमेव निगमान्तान् । अतः सभाकम्पा-

**प्रभाविलासः**

[1]**रजनिचरवंशबान्धवानाम्;** अहमेव ब्रह्मेति वादित्वादिति भावः। **राहुमीमांसकानामिति;** ब्रह्मभागपूर्ववृत्तत्वेन पूर्वमीमांसानङ्गीकारात् तत्त्वम्। **सुभगाभिक्षुकन्याय इति;** कश्चिद्भिक्षुः कस्याश्चित्सुभगाया गृहं भिक्षार्थमागतः। तस्याः स्नुषा 'भिक्षो, भिक्षा नास्ति' इति प्रत्याचख्यौ। ततः स प्रतिनिवृत्तो बभूव। तं निवृत्तं सुभगा समालोक्य किं निवर्तसे इत्युवाच। भिक्षुश्च तस्यै तस्याः स्नुषाया भिक्षाप्रत्याख्यानमाचख्यौ। तत् सा श्रुत्वा तं 'पुनरेहि गृहम्। न सा स्वतन्त्रा प्रत्याख्यानाय' इत्युवाच। भिक्षाशया तस्मिन् पुनर्गृहं समागते स्वयमेव 'भिक्षा नास्ति,

**प्रभावली**

एषामन्यदपि विरुद्धाचरणं दर्शयति—**आलक्ष्यतामिति। रजनिचरवंशबान्धवानाम्;** रावणादिवंशबन्धूनाम्; कपटिनामित्यर्थः। **राहुमीमांसकानाम्;** पूर्वोत्तरमीमांसयोरेकावयवत्वेऽपि पूर्वावयवानङ्गीकारेण वेदशिरोभागविचाररूपोत्तरमीमांसामात्रं परिगृहीतवतामेतेषाम्। **सुभगेति;** विपर्ययलक्षणा, दुर्भगेत्यर्थः। दुर्भगाभिक्षुकन्यायस्त्वयम्—स्नुषया भिक्षुकाय भिक्षायां प्रत्याख्यातायां भिक्षौ निवृत्ते, श्वश्रूरागत्य 'एहि भिक्षो, स्नुषा किं जानाति' इत्युक्त्वा, अनन्तरं भिक्षाशया भिक्षावागते, स्वयमेव भिक्षा **नास्तीत्युक्तवती।** तमेव न्यायं तेषु दर्शयति—

[1] **आलक्ष्यतामित्यादि।** भिक्षुके भिक्षार्थं गृहं प्रविष्टे स्नुषया परिहृते **श्वश्रू**रागत्य न स्नुषा स्वतन्त्रा किंत्वहमेवेति तं पुनर्गृहं **प्रवेश्य** स्वयं नास्तीत्याह। सोऽयं सुभगाभिक्षुकन्यायः। **यदीति। अपरै;** माध्यमिकादिभिः। **अयथाभाषणम्;** स्यादस्ति, स्यान्नास्तीत्यादिकम्। —A.

भावप्रतिपादकजडपुरुषप्रयुज्यमानभसापङ्काभाववचनवदपहास्यवच सामभीषां प्रतिक्षेपेऽप्यपत्रपामहे। श्रुतयस्तु त्रिभुवनसंरक्षणे प्रवृत्ताः प्रतिक्षिपन्ति। यदपि चैतेषां चिदचिदीश्वरयाथात्म्यतस्कराणामन्तिमयुगमस्करिणां नित्यानित्यवस्तुविवेकादिसाधनचतुष्टयाभिधानम्, तच्च तत्त्वातत्त्वविवेकाभावः, रागद्वेषादिसाधनसंपत्, लौकिकवैदिक[1]धर्मानुष्ठानवैमुख्यं, बुभुक्षुत्वं चेति यथानुष्ठानं विपरिणामेन परिहसन्ति सन्तः।

### प्रभाविलासः

गच्छ' इत्युवाच। सोऽयं सुभगाभिक्षुकन्यायः। तमेव न्यायं तेषु दर्शयति—**यदेत इति। श्रुतयस्त्विति। श्रुतयः**; भेदश्रुतयः। **अन्तिमयुगमस्करि-**

### प्रभावली

**यदेत इति। निगमान्ताः**; "यः सर्वज्ञः सर्ववित्" इत्यादयः। **पगान्**; बाह्यान्। **अधिक्षिपन्ति**; स्वग्रन्थे दूषयन्ति। **स्वयमेव निगमान्तान् प्रतिक्षिपन्ति च**; निगमान्ताः भेदश्रुत्यादयः। अपहास्यवचसामेषां निरासोऽप्यस्माकमवद्यकर इत्याह—**अत इति**; निगमान्तप्रतिक्षेपात्। यथा सभाकम्पो मास्त्विति विवक्षन् जडपुरुषः जाड्यात् भसापङ्को मास्त्विति प्रयुङ्क्ते, तद्वत् अपहास्यवचसाममीषां शंकरादीनां प्रतिक्षेपेऽप्यपत्रपामहे; लज्जामहे। एषां श्रुतय एव प्रतिक्षेपिका इत्याह—**श्रुतयस्त्विति**; भेदश्रुतयः। तुशब्दोऽवधारणे। एषां प्रतिक्षेपे जगद्रक्षणं कृतं स्यादिति सूचनाय **त्रिभुवनेत्याद्युक्तम्**। यदपि चैषां साधनचतुष्टयकल्पनं तत् दूषयति—**यदपि चेति। चिदचिदीश्वरयाथात्म्यम्**; चितो याथात्म्यम् ईश्वरापृथक्सिद्धस्वरूपत्वं तच्छेषत्वं च। अचितो याथात्म्यं सत्यत्वे सति आच्छादकत्वम्। ईश्वरस्य याथात्म्यमुभयलिङ्गत्वादि।

[1] कर्मानुष्ठान—क. घ. ङ.

**गुरुः**—भद्र, किमत्र विस्तरेण?

**शिष्यः**—भगवन्, पक्षान्तरमपि प्रतिक्षिपामि।

यदि भास्करयादवप्रकाशौ
[1]निगमान्तस्थितिनिर्णयप्रवीणौ।
अपरैः किमिवापराद्धमार्यै-
रयथाभाषणचातुरीधुरीणैः ॥ ९३ ॥

**प्रभाविलासः**

**णाम्**; कलियुगसंन्यासिनाम्। **यदीति**। **भास्करयादवप्रकाशौ निगमान्तस्थितिनिर्णयप्रवीणौ यदि**; वेदान्तस्थितिनिश्चयनिपुणौ यदि। **अयथाभाषणचातुरीधुरीणैः**; स्यादस्ति, स्यान्नास्ति, इत्ययथाभाषणचातुर्यां धुरीणैः। **अपरैरार्यैः**; बाह्यैः। **किमिवापराद्धम्**; यथा बाह्या वेदान्त-

**प्रभावली**

तत्सर्वमपलपताम्। **अन्तिमयुगमस्करिणाम्**; कलियुगसंन्यासिनाम्। नित्यानित्यविवेक इत्यस्य स्थाने तत्त्वातत्त्वविचाराभावः, शमदमादिसाधनसंपदित्यस्य रागद्वेषादिसंपत, इहामुत्रफलभोगविराग इत्यस्य लौकिकवैदिकधर्मानुष्ठानवैमुख्यम्; मुमुक्षुत्वं चेत्यस्य बुभुक्षुत्वं चेति नित्यानित्यवस्तुविवेकाद्यनुष्ठानेषु तत्त्वातत्त्वविचाराभावाद्यनुष्ठानविपरिणामेन तेषां साधनचतुष्टयाभिधानं परिहसन्ति तन्त्रान्तरस्था महान्तः। किमत्रेति; विस्तरेणालमित्यर्थः। **पक्षान्तरमपि**; भास्करादिपक्षमपीत्यर्थः। प्रतिक्षिपति—**यदीति**। **निगमान्तस्थितेः** वेदान्तार्थस्य निर्णये समर्थौ यदि। **अपरैः**; जिनादिभिः। **आर्यैः**; तन्मतस्थानां पूज्यैः। **अयथाभाषणम्**; स्यादस्ति स्यान्नास्तीति परस्परव्याघातभाषणम्; तत्र चतुरैरित्यर्थः। **किमपराद्धम्**; को वापराधः कृतः। ते वा वेदान्तार्थ-

[1] परमार्थस्थिति—घ.

अत एव निर्गुणब्रह्मवादिनां प्रच्छन्नबौद्धप्रसिद्धिवदनयोरपि जैनगन्धिवेदान्तिनाविति नामधेयमनुशोश्रूयामहे। इदं किल निखिलोपनिषदेकरहस्यम्[1]—

**प्रभाविलासः**

निर्णयाय न प्रवीणाः, तथा तावपि न वेदान्तनिर्णयप्रवीणावित्यर्थः ॥९३॥

**जैनगन्धिवेदान्तिनाविति**; एकस्य वस्तुनः ऐकरूप्याकथनात् तथात्वम्। सूत्रकृतापि तन्मतं प्रतिक्षिप्तम्—"नैकस्मिन्नसंभवात्" इति। स्वमते भेदाभेदश्रुतिनिष्कर्षणं दर्शयन् तासां श्रुतीनामर्थं दर्शयति—मिथ[2]

**प्रभावली**

निर्णायका भवन्तु। वेदान्तार्थविरुद्धप्रलापिनस्त इति चेत्, तदत्रापि समानमिति भावः ॥ ९३ ॥

एवं जैनैः समानयोगक्षेमत्वात् जैनगन्धिवेदान्तिनाविति नाम जगति प्रसिद्धमित्याह—**अत एवेति**। तत्र दृष्टान्तमाह—**निर्गुणब्रह्मवादिनाम्**; शंकरस्य। एकस्मिन् बहुवचनम्। प्रच्छन्नबौद्ध इति यथा प्रसिद्धं जगति नाम, तद्वदनयोः भास्करयादवयोरपि जैनगन्धिवेदान्तिनाविति नाम नित्यमनुशृणुम इत्यर्थः। "मायावादमसच्छास्त्रं प्रच्छन्नं बौद्धमुच्यते" इति पाद्मे पुराणे। एवं जैनगन्धिवेदान्तिनाविति पूर्वाचार्यग्रन्थेषु। एकस्य वस्तुन ऐकरूप्यानङ्गीकारात् जैनगन्धित्वमिति भावः। शंकरादिभिरुक्तार्थस्य वेदान्तार्थत्वव्यावृत्तये सकलवेदान्तसारार्थं संगृह्य दर्शयति—**इदं किलेति**। यद्वा भवन्मते मिथो विरुद्धार्थयोर्भेदा-

[1] ऐकरहस्यम्—क. ख.

[2] **मिथ इति**। **भेदश्रुतिः**; "भोक्ता भोग्यं प्रेरितारं च मत्वा" "तयोरन्यः पिप्पलं स्वाद्वत्ति अनश्नन्नन्योऽभिचाकशीति" "पतिं विश्वस्यात्मेश्वरम्" इत्यादिका। **ऐक्यश्रुतिः**; "सर्वं खल्विदं ब्रह्म" "तत्त्वमसि" इत्यादिका। तस्या अर्थमाह—**विशिष्टैक्यादिति**। **अपराभिः**; "यः पृथिव्यां तिष्ठन्, य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयति" इत्यादिभिः। **गोष्ठुम**;

मिथो भेदं तत्त्वेष्वभिलपति भेदश्रुतिरतो[1]
विशिष्टैक्यादैक्यश्रुतिरपि च सार्था भगवती ।
इमावर्थौ गोप्तुं निखिलजगदन्तर्यमयिता
निरीशो लक्ष्मीशः श्रुतिभिरपराभिः[2] प्रणिदधे ॥ ९४ ॥

## प्रभाविलासः

इति । **भेदश्रुतिः**; "द्वासुपर्णा सयुजा सखायौ" इत्यादिभेदप्रतिपादिका श्रुतिः । **तत्त्वेषु**; चिदचिदीश्वरतत्त्वेषु । **मिथः**; परस्परम । **भेदमभिलपति**; कथयति । यदि भेद एव तत्त्वं, तर्हि अभेदश्रुतेः का गतिरित्याशङ्क्याह—**अत** इति । यतो भेदश्रुतिस्तत्त्वेषु परस्परभेदप्रतिपादनमात्रपरा, अतो हेतो**र्भगवती ऐक्यश्रुतिः**; "सर्वं खल्विदं ब्रह्म" इत्याद्यभेदप्रतिपादिका श्रुतिरपि **विशिष्टैक्यात्** चिदचिद्विशिष्टस्य ब्रह्मण एकत्वात् **सार्था** अर्थवती, न तु विहितभेदनिषेधपरत्वादित्यर्थः । एवं भेदाभेद-

## प्रभावली

भेदश्रुत्योः कथं निर्वाह इत्याकाङ्क्षायामस्मन्मतरहस्यं श्रूयतामित्याह—**इदमिति** । **एकरहस्यम्**; ऐककण्ठ्यरूपम । रहस्यार्थमेव दर्शयति—**मिथ इति** । **असौ भेदश्रुतिः**; मायिभिः निरस्यमाना भेदश्रुतिः "द्वा सुपर्णा" इत्यादिः । **तत्त्वेषु**; चिदचिदीश्वरेषु । मिथः स्वरूपभेदं वदति । **ऐक्यश्रुतिः**, "सर्वं खल्विदं ब्रह्म" इत्यादिका । **विशिष्टैक्यात्**; चिदचिद्विशिष्टब्रह्मणः एकत्वेनैक्यप्रतिपाद-

मुख्यार्थापरित्यागेन घटयितुम् । निष्पन्नमर्थमाह—**जगदन्तर्यमयितेति** । "नेह नानास्ति" इति श्रुतिमर्थतो विशदयति—**निरीश इति** । "न तत्समश्चाभ्यधिकश्च दृश्यते" इति श्रुत्यन्तरानुगुण्येनेश्वरान्तरभेदनिषेधपरा सेति भावः । देवताविशेषनिर्णयार्थमाह—**लक्ष्मीश इति** । —A.

९४

[1] असौ—क, ख, ङ.

[2] रमूभिः—च.

## प्रभाविलासः

श्रुत्योर्विषयं विविच्य घटकश्रुतीनामपि विषयं विविनक्ति—**इमाविति**। **यमयिता**; निखिलजगदन्तर्यामितया समस्तं जगदन्तः प्रविश्य नियन्ता। **निरीशः**; स्वस्य नियन्त्रन्तररहितः। **लक्ष्मीशः**; श्रियः पतिः। **अपराभिः श्रुतिभिः**; "यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयति, य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयति" "एष सर्वभूतान्तरात्मा" "अपहतपाप्मा दिव्यो देव एको नारायणः" इत्यादिभिश्चिदचितोर्ब्रह्मणश्च शरीरात्मभावप्रतिपादिकाभिः श्रुतिभिः। **इमौ**; भेदविशिष्टैक्यरूपावर्थौ। **गोप्तुम्**; घटकश्रुत्युक्तशरीरशरीरिभावमन्तरेण तयोर्मुख्यार्थत्वाघटनात् रक्षितुमित्यर्थः। **प्रणिदधे**; अभिहितः। एवं सति भेदाभेदश्रुत्योर्मुख्यार्थापरित्यागः शारीरकसूत्रस्वारस्यं चेत्यभिप्रायः। इतरेषु व्याख्यातृषु सूत्रास्वारस्यं तत्र तत्र भाष्ये द्रष्टव्यम्। शरीरलक्षणं च कणादादिभिरभिहितं त्रय्यन्तस्थापितशरीराविषयं मन्वानेन भगवता भाष्यकारेण "यस्य चेतनस्य यत् द्रव्यं सर्वात्मना स्वार्थे नियन्तुं शक्यं शेषतैकस्वरूपं तत् तस्य शरीरम्" इति वदताभ्यधायि॥ ९४॥

## प्रभावली

नात्। **सार्था**; सप्रयोजना। **भगवती**; पूज्या; विशिष्टाद्वैतप्रतिपादनात् विशिष्टाद्वैतज्ञानस्य उपासनादाववश्यंभावात्। **इमावर्थौ**; भेदं चाभेदं च। **गोप्तुम्**; मुख्यार्थतया रक्षितुम्। **निखिलजगतामन्तर्यामी** सर्वशरीरी **निरीशः** नियन्त्रन्तररहितः लक्ष्मीपतिः **अपराभिः श्रुतिभिः**; "यः पृथिव्यां तिष्ठन्" "य आत्मनि तिष्ठन्" "सर्वभूतान्तरात्मा" इत्यादिकाभिः। **प्रणिदधे**; अभिहितोऽभूत्। तस्मादस्मन्मते सर्वश्रुतीनामविरोधो मुख्यार्थत्वं चेति भावः॥ ९४॥

राजा—ब्रह्मन्,

तत्त्ववृत्तोभयभ्रष्टपाषण्डि[1]गणसंकुलः।
कृती भवति कालोऽयं कृतिना संप्रति त्वया ॥ ९५ ॥

शिष्यः—महाराज, सर्वमेतद्भगवतः प्रसादेन[2]। अद्य हि—

कणादपरिपाटिभिः कपिलकल्पनानाटकैः
कुमारिलकुभाषितैर्गुरुनिबन्धनग्रन्थिभिः।

प्रभाविलासः

तत्त्वेति। तत्त्वभ्रष्टाः शैवादयः। वृत्तभ्रष्टाः विशिष्टाद्वैतैकदेशिनो दर्शनाभिनिवेशेन त्यक्तवैदिकाचाराः। केचिदुभयभ्रष्टाः कुदृष्टिप्रभृतयः; ते हि प्रायेणावैदिककर्माभिनिवेशवन्तः। अत्र राजवाक्येनानुवर्तनप्रतीतेर्दाक्षिण्यं नाम नाट्यालंकारः, "दाक्षिण्यं श्लक्ष्णया वाचा परचित्तानुवर्तनम्" इति लक्षणात् ॥ ९५ ॥

प्रभावली

राजा शिष्यं प्रशंसति—ब्रह्मन्निति। तत्त्वेति। तत्त्वभ्रष्टः, वृत्तभ्रष्टः, उभयभ्रष्टः। तत्त्वं ज्ञानम्। वृत्तमाचारः। तत्त्वज्ञानाद्भ्रष्टाः भाट्टप्राभाकराः। वृत्तभ्रष्टाः शंकरादयः। उभयभ्रष्टाः चार्वाकबौद्धादयः।

"तत्त्वपाषण्डिनः केचिद्वृत्तपाषण्डिनः परे।
अपरे तत्त्ववृत्ताभ्यां ज्ञेयाः पाषण्डिनः कलौ ॥"

इत्युक्तेः। एवं त्रिविधपाषण्डिगणसंकुलः अयं कालः कलियुगाख्यः संप्रति कृतिना कुशलेन विदुषा च त्वया कृतकृत्यो भवति; कृतयुगीभवति च ॥९५॥

भगवतः प्रभावेणेति। भगवच्छब्दः विवेकपरः; गुरुपरो वा। उक्तमेव दर्शयति—अद्य हीति। कणादेति। कणादस्य परिपाटयः वैशेषिक-

[1] पाषण्ड—क, ख.
[2] प्रभावेण—ग.

तथागतकथाशतैस्तदनुसारिजल्पैरपि
प्रतारितमिदं जगत्प्रगुणितं यतीन्द्रोक्तिभिः ॥ ९६ ॥

किंच,

मुकुन्दाङ्घ्रिश्रद्धाकुमुदवनचन्द्रातपनिभा
मुमुक्षामक्षोभ्यां ददति मुनिबृन्दारकगिरः ।
स्वसिद्धान्तध्वान्तस्थिरकुतुकदुर्वादिपरिषद्-
दिवाभीतप्रेक्षादिनकरसमुत्थानपरुषाः ॥ ९७ ॥

## प्रभाविलासः

**कणादेति** । कणादस्य परिपाटिभिः रीतिभिः । **प्रगुणितम्**; निष्कण्टकीकृतमित्यर्थः ॥ ९६ ॥

**मुकुन्देति** । **मुनिबृन्दारकः**; मुनिदेवः । स्वसिद्धान्त एव ध्वान्तः,

## प्रभावली

ग्रन्थाः । कपिलस्य कल्पना सांख्यशास्त्राणि । तान्येव नाटकानि, अनृजुत्वात् । कुमारिलस्य भट्टस्य **सुभाषितानि**, सुभाषितसदृशैः ग्रन्थैः । **गुरोः** प्राभाकरस्य **निबन्धनान्येव ग्रन्थयः**; पीडावहत्वात् । **तथागतस्य** सुगतस्य कथा कथावदनृजुभिः **शतैः** ग्रन्थशतैः । **तदनुसारिणः** शंकरादयः, तेषां प्रलापैः । इदमनुक्तानामप्युपलक्षणम् । वञ्चितं जगत् **यतीन्द्रोक्तिभिः** श्रीभाष्यादिभिः **प्रगुणितं** प्रकृष्टज्ञानादिगुणयुक्तं कृतम्; स्वस्वरूपेऽवस्थापितमिति यावत् ॥ ९६ ॥

यतीन्द्रसूक्तीरभिष्टौति—**मुकुन्देति** । मुकुन्दाङ्घ्रिविषयिणी या श्रद्धा आदरातिशयः, सैव कुमुदवनं तस्य चन्द्रातपसदृशाः । **स्वसिद्धान्तेति**; स्वसिद्धान्त एव ध्वान्तं, तत्र स्थिरं कुतुकं येषां तेषां दुर्वादिनां परिषदेव

सेनापतिः—देव,

वशंवदवचोवृत्तिर्वादाहवमहारथः ।

परिभूतविपक्षोऽसौ पारितोषिकमर्हति ॥ ९८ ॥

प्रभाविलासः

तत्र स्थिरकुतुकानां दुर्वादिनां परिषदेव दिवाभीता उलूकाः, तेषां प्रेक्षाया दृष्टेः दिनकरसमुत्थानवत् सूर्योदयवत् परुषाः कठिनाः ॥ ९७ ॥

**वशंवदेति** । स्वदर्शनतदनुबन्धिरक्षणं कुर्वन् परपक्षमजयदिति महारथत्वरूपणम्,

"आत्मानं सरथिं चाश्वान् रक्षन् युध्येत यो नरः ।

स महारथसंज्ञः स्यादित्याहुर्नीतिकोविदाः ॥"

इत्युक्तत्वात् । अत्रोपन्यासो नाम प्रतिमुखसंधेरङ्गमुक्तम्, पारितोषिकदाने वशंवदेत्यादिनोपपत्तिकथनात् । तदुक्तम्—"उपपत्तियुतं वाक्यमुपन्यासं प्रचक्षते" इति ॥ ९८ ॥

प्रभावली

दिवाभीतः उलूकः, तस्य प्रेक्षायाः दिनकरस्य सूर्यस्य समुत्थानवत् उदयवत् निष्ठुराः । **मुनिबृन्दारकस्य**; मुनीन्द्रस्य श्रीभाष्यकारस्य । **गिरः** श्रृण्वतां जनानाम् अक्षोभ्यां परैरविचाल्यां मोक्षेच्छां ददति ॥ ९७ ॥

देवेति विवेकसंबोधनम् । दुर्वादिविजयादयं पारितोषिकार्ह इत्याह—**वशंवदेति** । **वचोवृत्तिः**; वाग्व्यवहारः; सा वशंवदा स्वाधीना यस्य सः । वादाख्ये आहवे महारथः । परिभूताः पराजिताः विपक्षा येन सः । परितोषेण देयं वस्तु पारितोषिकम् ॥ ९८ ॥

शिष्यः—सेनापते,

दयया देशिकेन्द्रस्य दृष्ट्या चास्य महीपतेः ।
परितोषेण चैवं ते प्राप्तोऽहं पारितोषिकम् ॥ ९९ ॥

राजा—भगवन्, प्रियहितमेवासौ वदति ।

सेनापतिः—ततश्च,

सभाजयितुमिच्छामि प्रत्यक्षितसभाजयम् ।
एतं भगवतश्छात्रमेकभक्त्या परिष्कृतम् ॥ १०० ॥

शिष्यः—महाराज, भगवन्त एव संभावनामर्हन्ति ।

गुरुः—त्वमपि मन्नियोगेन ।

राजा—भगवन्,

त्र्यन्तस्थापकोऽयं दृढतरममुना तत्त्वदृष्टिश्च दिष्टा
दिष्ट्या चादिष्टमेतद्दिशि दिशि लडहो[1] डिण्डिमस्ताडनीयः ।

प्रभाविलासः

सभाजयितुमिति । सभाजयितुम्; पूजयितुम् ॥ १०० ॥

त्र्यन्तेति । दिष्टा; निरूपिता । शुष्कोपन्यासस्य शिक्षाया

प्रभावली

एवंभूतेन ते परितोषेण चाहं पारितोषिकं प्राप्तवानेव । नेतोऽधिकं वाञ्छामीति भावः ॥ ९९ ॥

प्रियं च तत् हितं च, तदेव । असौ; सेनापतिः । सभाजयितुम्; पूजयितुम् । सभाजयः; सभास्थप्रतिवादिजयः । सर्वैः प्रत्यक्षितः सभाजयो यस्य तम् । भगवतः; भवत इति शेषः । एकभक्त्या; एका मुख्या भक्तिः, तया; अलंकृतम् ॥ १०० ॥

मन्नियोगेन; मच्छासनेन । त्र्यन्तेति । अयम्; भगवतः शिष्यः

[1] सुदृढं—ङ, च, छ.

शुष्कोपन्यासशिक्षापटिमकटुरटद्वैरिविद्वत्करोटी-
कुट्टाकक्रीडमष्टापदकटकमसौ वामपादे बिभर्तु ॥ १०१ ॥

(इति कटकं ददाति)

**शिष्य:**—(गुरुमवलोकयति)

**गुरु:**—भद्र, अस्त्वेवमलङ्घनीया खलु राजाज्ञा।

**शिष्य:**—यदाज्ञापयति भगवान्। (इति कटकमाधत्ते)

**गुरु:**—आयुष्मन्, अवधार्यतामेतदद्य प्रभृति ते कर्तव्यम्—

**प्रभाविलास:**

अभ्यासस्य पटिम्ना दाढर्येन कटु कठिनं यथा तथा रटतां प्रलपतां वादिविदुषां करोटीषु शिरोऽस्थिषु कुट्टाकं कुट्टनं, तदेव क्रीडा यस्य तत। **वामपादे**; 'पदमदक्षिणं लक्ष्यताम्' इत्युक्तलक्षणवामपादे इत्यर्थः ॥ १०१ ॥

**प्रभावली**

त्रय्यन्तसिद्धान्तस्थापकः। दृढतरं स्थापक इति वा संबन्धः। **अमुना तत्त्वज्ञानं** दृढतरं दत्तम्। एतज्जयसूचनाय लडहो डिण्डिमः चारुर्वाद्यविशेषः दिशि दिशि ताडनीय इत्येतत् आदिष्टम्। शुष्केति। **शुष्कोपन्यासः**; वितण्डा अप्रामाणिकप्रलापः, तच्छिक्षायां पटिमा पटुत्वं, तेन क्रूरं यथा तथा नदन्तः शब्दयन्तः, ये वैरिविद्वांसः प्रतिवादिनः, तेषां करोटीषु शिरोऽस्थिषु कुट्टनं करोतीति कुट्टाका क्रीडा यस्य तत्। **अष्टापदकटकं** स्वर्णमञ्जीरं मया दत्तं वामे पादे धारयतु ॥ १ १ ॥

**अस्त्वेवम्**; तथास्तु, धारयेत्यर्थः। **आधत्ते**; धारयति। इतः परं कर्तव्यं शिष्यस्याज्ञापयति—अवधार्यतामिति। कर्तव्यं संगृह्य उपदिशति—

सत्कारकीर्तिधनलब्धिषु निर्व्यपेक्षः
प्रश्नोचितेषु परया कृपया प्रसीदन् ।
सत्तर्कतन्त्रपरिकर्मितमाशरीरा-
च्छारीरकप्रवचनव्रतमाद्रियेथाः ॥ १०२ ॥

शिष्यः—यदादिशति भगवान् ।

(नेपथ्ये)

गम्यताम्, गम्यताम् । आः कष्टमापतितम् ।

रागद्वेषाभिख्यया ख्यातपूर्वौ
मूढावेतौ दानवौ मोहभृत्यौ ।

प्रभाविलासः

सत्कारेति । धनलब्धिः; धनलाभः ॥ १०२ ॥

पात्रप्रवेशं सूचयति—आः कष्टमित्यादिना । रागद्वेषेति । ख्यात-

**प्रभावली**

सत्कारेति । सत्कारः; पूजा । कीर्तिः; ख्यातिः । धनस्य लब्धिः; लाभः । ख्यातिलाभपूजास्वित्यर्थः । निर्व्यपेक्षः; अपेक्षारहितः । प्रश्नोचितेषु; उचितप्रश्नेषु शिष्येष्वित्यर्थः । सत्तर्कः; प्रमाणानुग्राहकस्तर्कः । सत्तर्करूपं यत् तन्त्रं ब्रह्ममीमांसा तेनालंकृतम् । शारीरकस्य वेदान्तशास्त्रस्य प्रवचनं व्याख्यानं, तत्र व्रतं नियमम् । आशरीरम्; एतद्देहावसानावधि । आद्रियेथाः; आदरेण कुर्वित्यर्थः ॥ १०२ ॥

यदादिशतीत्यङ्गीकृतवान् । उत्तराङ्कपात्रं सूचयितुं पीठिकामारचयति—नेपथ्ये गम्यतामित्यादि । आगच्छन्तौ रागद्वेषावालोक्य जनास्तत्रस्थान् वदन्ति—युष्माभिर्गम्यताम्, अन्यत्र पलाय्यतामिति । कष्टं कृच्छ्रं संप्राप्तम् । कष्टापतनं विवृणोति—रागेति । रागः द्वेषः इत्यभिख्यया नाम्ना पूर्वख्यातौ दानवौ

निष्प्रत्यूहौ निर्जिहाते विरक्तिं
बन्दीकर्तुं विष्णुभक्त्या समेताम् ॥ १०३ ॥

(सर्वे ससंभ्रममाकर्णयन्ति)

राजा—भगवन्, अद्य खलु शान्तिकर्मणि वेतालोदयः संवृत्तः। तत्साधयन्तु भवन्तः समीहितसमर्थनाय। वयमपि वैरिबलनिर्मूलनाय संप्रयतामहे।

(इति परिक्रम्य निष्क्रान्ताः सर्वे)

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेंकटनाथस्य वेदान्ताचार्यस्य कृतिषु संकल्पसूर्योदये [1]प्रतिमतभङ्गो नाम द्वितीयोऽङ्कः।



**प्रभाविलासः**

**पूर्वौ**; 'रागप्रमोहमुखम्' इत्यत्रेति भावः ॥ १०३ ॥

अत्र संप्रयतामह इति विरक्तिविष्णुभक्त्यादिसहायगवेषणयत्नवर्ण-

**प्रभावली**

असुरौ महामोहस्य भृत्यौ विष्णुभक्त्या सहितां **विरक्तिं बन्दीकर्तुं**—रागेण विरक्तिः बन्दीक्रियते, द्वेषेण च विष्णुभक्तिः—एवं बन्दीकर्तुं निर्विघ्नं यथा तथा **निर्जिहाते**; निर्गच्छतः। अतो गम्यतामिति पूर्वेण संबन्धः। **भगवन्निति** गुरोः संबोधनम्। अद्यान्यस्मिन् क्रियमाणे अन्यदापतितमित्याह—**अद्येति**। वेतालशान्त्यर्थं शान्तिकर्मणि क्रियमाणे वेतालस्योदयः अभिवृद्धिर्भवति। तद्वदिह परपक्षप्रतिक्षेपे क्रियमाणे रागद्वेषोपद्रवः संवृत्त इत्यर्थः। **तत्**; तस्मात्।

[1] परपक्षप्रतिक्षेपो—ख. घ.

प्रभाविलासः

नात् वर्णसंहाराख्यं प्रतिमुखसंधेरङ्गमुक्तम्, "सहायानुवृत्तिवर्णनेन कथाया वर्णनं वर्णसंहृतिः" इति लक्षणात् ।

[1]इति श्रीअहोबलाचार्यकृते संकल्पसूर्योदयव्याख्याने प्रभाविलासाख्याने प्रतिमतभङ्गो नाम द्वितीयोऽङ्कः ।



प्रभावली

साधयन्तु; गच्छन्तु, समीहितकार्यसमर्थनाय । निर्मूलनाय; समूलोच्छेदनाय प्रयत्नं कुर्मह इति परितोऽपसृत्य निष्क्रान्ताः सर्वे ॥ १०३ ॥

इति श्रीनृसिंहराजविरचितायां संकल्पसूर्योदयव्याख्यायां प्रभावल्यां प्रतिमतभङ्गो नाम द्वितीयोऽङ्कः



[1] इत्यात्रेयगोत्रसंभवेन श्रीमदहोबिलनाम्ना विरचिते—C.

# तृतीयोऽङ्कः

(ततः प्रविशतो रागद्वेषौ)

रागः—सखे, त्वत्सहायस्य मे स्वामिकार्यनिर्वर्तनं सिद्धप्रायमिति निश्चिनोमि ।

द्वेषः—वयस्य, [1]त्वद्विरुद्धविषयविवेकसंरम्भनिरोधेन त्वदेककार्य एव ह्यहमादिष्टोऽस्मि[2] महाराजेन ।

रागः—सखे, अन्यदपि[3] तावदवसरोचितमाज्ञप्तिगोचरमावेदयामि—

**विवेककुहनाबलाद्[4] व्यतिहतेषु बाह्येष्वसौ**
**त्रिवर्गपदवी परं शरणमद्य मोहश्रियः ।**

**प्रभाविलासः**

अथ मध्यमपात्रप्रवेशरूपं शुद्धविष्कम्भमारभते—**तत इत्यादिना** । लक्षणमधस्तादुक्तम् । **विवेकेति** । **कुहना** ; कपटः । **बाह्येषु** ; बाह्यशास्त्रेषु ॥ १ ॥

**प्रभावली**

अथ तृतीयेऽङ्के विवेकमुखतो मुक्त्युपायं निरूपयितुं तत्पूर्वं द्वितीयाङ्कावसाने सूचितयोः रागद्वेषयोः प्रवेशं वर्णयति—**ततः प्रविशत इति** ।

[1] तत्त्वविरुद्ध—क.
[2] अस्मि omitted—घ. ङ. च.
[3] अथ तावत्—क. ग. घ.
[4] मुखात्—क. छ.

विरक्तिमिह तापसीं व्यपनयामि दूरादहं
विमथ्य विनिवर्त्यतां सपदि विष्णुभक्तिस्त्वया ॥ १ ॥

संभवति च सर्वथा सर्वतः प्रसारिताभ्यां स्वर्गापवर्गगुणदोषजालाभ्यां तयोरुपरोधः । अहं पुनर्मायासहस्रवेदी मारीचमैथिली-

प्रभाविलासः

**अहं पुनर्मायासहस्रवेदीत्यादि** । मैथिल्यादीनां रत्यभावेऽपि

प्रभावली

**रागः**; संसाररागः । **द्वेषः**; मोक्षद्वेषः । **निर्वर्तनम्**; निर्वहणम । **सिद्धप्रायमिति**; सिद्धसदृशमित्यर्थः । त्वद्विरुद्धविषयश्चासौ विवेकसंरम्भश्च, तन्निरोधेन । त्वयापि संरम्भनिरोधः कर्तव्यः; त्वया कर्तव्ये तस्मिन्नेकस्मिन्नेव कार्ये अहमप्यादिष्टोऽस्मि । **अवसरोचितम्**; एतत्कालोचितम । **आज्ञप्तीति**; महामोहाज्ञापनविषयमाज्ञप्तं कार्यमित्यर्थः । **विवेकेति** । **विवेकस्य कुहना** कपटम, **तद्बलात् बाह्येषु** चार्वाकादिषु **व्यतिहतेषु** अन्योन्यं प्रतिक्षिप्तेषु, पराजितेष्वित्यर्थः । **अद्य मोहश्रियः**; महामोहसंपदः । **शरणम्**; अवलम्बनम । **त्रिवर्गपदवी**; धर्मार्थकामानां मार्ग एव, संरक्षकः । **तापसीम्**; तापससंबन्धिनीं, भिक्षुकीमिति च गम्यते । **विरक्तिम्**; वैराग्यम । **इह**; इदानीम । **दूरात् व्यपनयामि**; पुरुषात् दूरदेशं प्रापयामि, मारीचो राघवमिव । अनन्तरं त्वया सपदि विष्णुगोचरा भक्तिः **विमथ्य** कदर्थीकृत्य; बलात्कृत्येत्यर्थः । **विनिवर्त्यताम्**; पुरुषसमीपादपसार्यताम, रावणेनेव सीता ॥ १ ॥

विरक्तिविष्णुभक्त्योः प्रमथने उपायमाह—**संभवति चेति** । स्वर्गे ये **गुणाः** अपवर्गे दोषाश्च आरोपिताः, तेषां समूहावेव जाले आनाय्यौ, ताभ्यां सर्वत्र प्रसारिताभ्यां सर्वथा तयोः विरक्तिविष्णुभक्त्योः उपद्रवो भविष्यतीत्यर्थः । स्वर्गे गुणारोपणमपवर्गे दोषसमर्थनं च कर्तव्यमिति भावः । स्वस्य विरक्तिव्यपनये सामर्थ्यकथनपूर्वकं त्वया विष्णुभक्तिरवश्यं विमथ्यतामित्याह—**अहं पुनरिति** । पुनःशब्दो वाक्यालंकारे । **मायासहस्रवेदी**; मारीचवदिति भावः ।

न्यायेन विरक्तिं तावत्तपस्विनीं विप्रलभे । भवतस्तु विष्णुभक्ति-विमथने पौलस्त्य एव प्रमाणम् ।

द्वेषः—अथ किम् ।

रागः—[1]यद्यपि त्रय्यन्तवादिना महामोहसौवस्तिकाना-मग्रण्यो[2] हिरण्यासुरपुरोहिता इव धरण्यामवतीर्णाः [3]कबन्धमीमांसकाः प्रतिक्षिप्ताः, तथापि तन्मतमेव सोपपत्तिकमुत्तम्भयन् स्वामिकार्यं निर्वर्तयामि ।

द्वेषः—स्थाने खलु[4] भवतः समारम्भः[5] । यदिह नास्ति-

### प्रभाविलासः

रावणादिरतेरनौचित्यप्रवृत्तत्वाद्रसाभासः । तदुक्तं काव्यप्रकाशे—"तदाभासा अनौचित्यप्रवर्तिताः" इति । **सौवस्तिकाः**; स्वस्तिवाचकाः ।

### प्रभावली

**मारीचमैथिलीन्यायेन विप्रलभे**; वञ्चयामि । **पौलस्त्यः**; रावणः । पौलस्त्यकृतविमथनवदाचरेत्यर्थः । **प्रमाणम्**; दृष्टान्तः । अथ **किम्**; त्वया किं क्रियत इत्यर्थः । उत्तरमाह—**यद्यपीत्यादिना** । **त्रय्यन्तवादिना**; यतीन्द्रशिष्येण । **सौवस्तिकाः**; स्वस्तिवादिनः पुरोहिताः । **हिरण्यासुरपुरोहिता इव**; ते हि प्रह्लादाय त्रिवर्गमार्गमेवोपदिदिशुः । **कबन्धमीमांसकाः**; निरीश्वरमीमांसकाः, निरस्ताः । अथापि **सोपपत्तिकं** सयुक्तिकं समर्थयन स्वामिनो महामोहस्य कार्यं साधयामि । **स्थाने**; युक्तम् । **समारम्भः**; उद्योगः । युक्ततामेवोप-

[1] यद्यपि त्रय्यन्तवादिना त्रयीपूर्वभागमात्रवर्तिनोऽपि निरस्ता एव । तथापि—क.

[2] अग्रगण्याः—क. ख. ग.

[3] कलिमीमांसकाः—ङ.

[4] खलु omitted. ख. ग.

[5] संरम्भः—क.

क्यसंवर्धकानां महामोहसैनिकधुरंधारणां नासीरविजयपताका निरी-
श्वरमीमांसा समालम्ब्यते ।

**रागः—**

**अल्पमस्थिरमानन्दमिच्छतो यदि रागिता ।**
**अनन्तस्थिरकामस्य विरक्तिः कस्य कीदृशी ॥ २ ॥**

अपिच,

**स्वस्यावाप्तिः[1] सुखमिति मृषा स्वेतरस्यानुभूतौ**
**कामादन्यः क इव घटते मोक्षनामा पुमर्थः ।**

## प्रभाविलासः

**अल्पमिति** । अत्र भिन्नानामपि पदानामेकपदवत् पाठसमये प्रतिभानात् श्लेषो नाम गुणः । "मसृणश्लिष्टपदता श्लेष इत्यभिधीयते" इति लक्षणात् ॥ २ ॥

कैवल्यस्यापुरुषार्थत्वमाह—**स्वस्येति** । स्वस्वरूपस्य नित्यप्राप्तत्वेन सुखरूपत्वादर्शनादिति भावः । **स्वेतरस्य ;** ब्रह्मणः । **अनुभूतौ ;** अनुभूतेः

## प्रभावली

पादयति—**यदिहेति** । नास्तिक्यसंवर्धकानां निरीश्वरधुरंधराणां निरीश्वर-मीमांसकानां नासीरविजयपताका महामोहसेनाग्रस्थिता विजयसूचिका पताका निरीश्वरमीमांसा समालम्ब्यत इति युक्तं भवतीति संबन्धः । अथ सोपपत्तिकं विरक्तिविप्रलम्भप्रकारमाह— **अल्पमिति** । **आनन्दम् ;** स्वर्गादिसुखम्, इच्छतः । **अनन्तस्थिरकामस्य ;** निरतिशयानन्दमोक्षकामस्य । **कीदृशी विरक्तिः ;** विरक्ति-दूरता निरस्तेत्यर्थः ॥ २ ॥

एवं विरक्त्यभावं प्रतिपाद्य स्वर्गापवर्गयोर्गुणदोषौ दर्शयितुं रागः प्रथम-मपवर्गं विकल्प्य दूषयति—**स्वस्येति** । **सुखमिति** चेत्तन्मृषा । **स्वेतर-**

[1] स्वस्यैवाप्तिः—ङ. च.

तस्माद्स्मद्बहुमतनिरध्यक्षमीमांसकोक्त्या
स्वेच्छानृत्यद्बहुगुणनिधिः स्वर्ग एवापवर्गः ॥ ३ ॥

द्वेषः—किमुच्यते? अयं पुनर्महामोहतन्त्रपारदृश्वभिः [1]परमार्थोपदेशदेशिकैः [2]सावधाननिपुणनिरूपितः संप्रदायपरंपरासमधिगतोऽर्थः—

प्रभाविलासः

सुखत्वे। **निरध्यक्षाः**; निरीश्वराः। स्वेच्छया स्वसंकल्पेन नृत्यन्तः निष्पाद्यमानाः बहुगुणाः स्रक्चन्दनादयः, तेषां निधिः। अत्रोत्तरोत्तरवाक्यार्थं प्रति पूर्वपूर्ववाक्यार्थस्य हेतुत्वात् वाक्यार्थहेतुकं काव्यलिङ्गमलंकारः, "हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गमुदाहृतम्" इति लक्षणात् ॥ ३ ॥

परब्रह्मानुभवो मोक्ष इति वदन् वादी प्रष्टव्यः—किं सविशेषम, उत निर्विशेषं ब्रह्म प्राप्यत इति। इत्थं विकल्प्य न तावदाद्य इत्याह—

प्रभावली

**स्यानुभूतौ** मोक्षत्वेनाङ्गीक्रियमाणायां तदा **कामादन्यः** मोक्षपुरुषार्थः को वा सिध्येत्? अयं भावः—कोऽयमपवर्गो नाम? स्वस्यावाप्तिर्वा? स्वेतरस्य वा? नाद्यः, स्वस्य नित्यप्राप्तत्वेनोपायोपदेशवैयर्थ्यात्। न द्वितीयः, नामान्तरेण कामपुरुषार्थस्यैव स्वीकारादिति। अपवर्गमेवं दूषयित्वा स्वर्गमभिष्टौति—**तस्मादिति**। **अस्माकं बहुमता** ये निरीश्वरमीमांसकाः, तदुक्तप्रकारेण **स्वेच्छानृत्यद्बहुगुणनिधिः** अभिलाषोपनीतदुःखासंभिन्नत्वादिबहुगुणानां निधानं **स्वर्ग एव** मोक्षः; नान्यः ॥ ३ ॥

त्वदुक्तोऽर्थ एव निरीश्वरमीमांसारहस्यार्थ इत्याह—**अयं पुनरिति**। **महामोहतन्त्रम्**; निरीश्वरमीमांसा। पुनरप्यपवर्गस्य प्राप्यनिरूपणपूर्वं दोषं दर्शयन् तत्प्रतिपादिकानामुपनिषदां पाठमात्रेणैवाध्ययनविधिशेषत्वमित्याह—

[1] परमार्थोपदेशिभिः—ग. घ.

[2] सावधानमतिभिः—च; सावधाननिरूपितः—क.

**प्रपञ्चकृतकञ्चुकं यदि परं महः प्राप्यते**
**न दुःखमपहस्तितं भवति नैकधोपप्लवात् ।**
**अथैकमखिलोज्झितं न खलु भोग्यतामेति तत्**
**ततो निगममस्तकैर्निगदमात्रशेषैः स्थिम् ॥ ४ ॥**

प्रभाविलासः

**प्रपञ्चेति** । **अपहस्तितम्**; हस्तादपनीतम्, निवर्तितमिति यावत् । **न दुःखमिति;** हेयरूपप्रपञ्चविशिष्टब्रह्मप्राप्तेर्हेयत्वादित्यर्थः । न चानन्दादिविशिष्टमेव ब्रह्म प्राप्यते, नान्यदिति वाच्यम्; सूक्ष्मचिदचिद्विशिष्टस्य कारणतया तस्यैव "कारणं तु ध्येयः" इति ध्येयत्वेन यथोपासनं फलमिति हेयविशिष्टत्वस्यावर्जनीयत्वादिति भावः । अनेन साक्षाद् ब्रह्मैव नित्यसंसारि अज्ञमित्यादि वदद्भिरभ्युपगतब्रह्मप्राप्तेर्दुःखरूपतायां किमु वक्तव्यं भवति? नापि द्वितीय इत्याह—अथैकमिति । **निगदः;** कण्ठपाठः । **निगदमात्रशेषैः;** पाठमात्रशेषैः, न तु विवक्षितार्थैः । **स्थितम्;** अलम् । प्रत्युत तद्गुणैरेव विरुद्धकार्योत्पत्तेर्विषमालंकारः ।

**प्रभावली**

**प्रपञ्चेति** । **प्रपञ्चैः** चिदचित्प्रपञ्चैः **कृतं कञ्चुकं** शरीरं यस्य तत् **परं महः** परं ब्रह्म मोक्षदशायां यदि लभ्यते, तदा **दुःखं** सांसारिकम् **अपहस्तितं न भवति**; अपहस्तो विह्वलः, अपहस्ततां प्राप्तमपहस्तितं, निरस्तं न भवतीत्यर्थः । कुतः? **नैकधोपप्लवात्**; प्राप्यस्य चिदचिद्गतानन्तापुरुषार्थविशिष्टत्वरूपोपद्रवात् । **अथ** यद्वा **अखिलोज्झितं** निर्विशेषमेकं चिन्मात्रं ब्रह्मैव प्राप्यते चेत्, **तद्भोग्यतां** नैति; तत्प्राप्यं न स्यादित्यर्थः । ततः **निगममस्तकैः** वेदान्तैः पाठमात्रशेषैः **स्थितं** स्यात् । अयमर्थः—चिदचिद्विशिष्टं ब्रह्म प्राप्यम्? उत निर्विशेषं वा? नाद्यः, प्राप्यविशेषणयोः चिदचितोरपुरुषार्थतया दुःखितया च तदविनाभूतस्य विशेष्यस्य ब्रह्मणोऽपि

**रागः**—सखे, साधु भाषितम्। नूनमीदृशेन[1] वचसा [2]दवदहनदन्दह्यमानतरुशिखरकुलायकुहरनिष्क्रान्ता [3]विहगपङ्क्तिरिव विष्णुभक्तिरपसर्पति। अद्य खल्वनादिभोगवासनाजालजटिलबुद्धेरात्मनः कथं नाम निर्विवेको विवेकः संसारजिहासां साधयिष्यति? प्रत्युत दिव्यभौमयुवतिगुणापह्नवकुतूहली तद्गुणैरेव निबिडं निबध्यते[4]। पश्य तावदमृतोद्भवास्त्रैलोक्यललामभूताः[5] पद्मलोचनाः। यासाम्,

प्रभाविलासः

"विरुद्धकार्यस्योत्पत्तिर्यत्रानर्थस्य वा भवेत्।
विरूपघटना वा स्याद्विषमालंकृतिर्मता॥"

इति लक्षणात्॥ ४॥

प्रभावली

तत्प्रसङ्गात्। न द्वितीयः, अखिलविशेषशून्यस्य वस्तुनो निष्प्रमाणत्वेन शशविषाणायमानस्याभोग्यत्वात्। अतस्तत्प्रतिपादिकानामुपनिषदां पाठमात्रपर्यवसायित्वमिति॥ ४॥

**कुलायम्**; नीडम्, तस्य **कुहरम्**; गर्भः। विष्णुभक्तेरपसर्पणे विवेकोद्योगो भग्नो भविष्यतीत्याह—**अद्य खल्विति**। **अद्य**; विष्णुभक्तेरपसर्पणकाले। **भोगः** शब्दाद्यनुभवः, तस्य वासनाजालेन जटिला जटासादृश्यं प्राप्ता, निबिडबद्धेत्यर्थः; तादृशी बुद्धिर्यस्य। **निर्विवेकः**; बुद्धिशून्यः। **संसारजिहासाम्**; संसारे विरक्तिमित्यर्थः। **प्रत्युत** तद्विपरीतं भौमा दिव्याश्च या युवतयः, तासां गुणमपह्नोतुकामः प्रसङ्गात् तद्गुणैरेव निबध्यते पुरुषः। अथ दिव्ययुवतिगुणान् वक्तुमुपक्रमते—**पश्य तावदित्यादि**। **पद्मलोचनाः**; युवतयः। तद्गुणानाह—**यासामित्यादिना**। **स्मेरेण**; विकसता। **तिरोधि**-

[1] हि added after—क.
[2] दवदह्यमान—च.
[3] विहंग—क.
[4] निबध्येत—ख. ङ. छ.
[5] तिलकभूताः—क. ग. घ. छ.

**स्मेरेण स्तनकुड्मलेन[1] भुजयोर्मध्यं तिरोधित्सितं**
**नेत्रेण श्रवणं लिलङ्घयिषितं नीलोत्पलश्रीमुषा ।**
**अङ्गं सर्वमलंचिकीर्षितमहो भावैः स्मराचार्यकै-**
**स्तन्वीनां विजिगीषितं च वयसा धन्येन मन्ये जगत्[2] ॥५॥**

प्रभाविलासः

बाल्ययौवनसंधिमभिसंधायाह—स्मेरेणेति । अत्र स्मेरेणेति पुष्पधर्मेण विकासेन बाधितमुख्यार्थेनोच्छूनत्वसंबन्धात् पृथुलत्वं लक्ष्यते । तेन संभोगक्षमत्वं व्यङ्ग्यम् । स्तनकुड्मलेनेत्युपमालंकारेण काठिन्यं व्यज्यते । **तिरोधित्सितमिति** । इच्छारूपेण पुरुषधर्मेण कार्यकारणभावसंबन्धात् व्यापकत्वम् । तेनोत्तुङ्गत्वं निरवकाशत्वं च व्यङ्ग्यम् । **लिलङ्घयिषितमिति** । उक्तसंबन्धादिना अतिदीर्घत्वाविश्रान्तत्वचञ्चलत्वानि लक्ष्याणि । तेन पुरुषवागुरत्वं व्यङ्ग्यम् । **नीलोत्पलश्रीमुषे**त्युपमालंकारेण मदनविस्रम्भशरता व्यज्यते । मुषेति सर्वस्वहरणकथनेनोत्पलादप्यधिकशोभाकरत्वं व्यज्यते । **अलंचिकीर्षितम्;** अलंकर्तुमिष्टम् । तेन भूषणाधारणेऽप्यतिरम्यत्वं व्यज्यते । **भावैरिति** हावहेलादीनामुपलक्षणम् । **स्मराचार्यकैरिति;** अनायासशिक्षणं व्यङ्ग्यम् । **तन्वीनामिति;** कृशतानिबन्धनं सौकुमार्यं व्यज्यते । **विजिगीषित**मित्यप्राप्तरूपत्वं व्यज्यते । अन्यथा विजितमिति स्यात् । **वयसेति;** बाल्ययौवनसंधिकालो लक्ष्यते । **धन्येनेति**; समभिव्याहारात् रागिजनस्पृहणीयत्वं धन्यपदव्यञ्जितम् । ततो निबिडं निबध्यत

**प्रभावली**

**त्सितम्;** तिरोधातुमिष्टम्, तिरोहितमिति यावत् । **श्रवणं** श्रोत्रं लङ्घयितुमीष्टम् । **अलंचिकीर्षितम्;** अलंकर्तुमीप्सितम्; अलंकृतमित्यर्थः । **स्मरः**

[1] युग्मलेन—क. मण्डलेन—ख. [2] ततः—ग. ङ. छ.

तिष्ठतु [1]तावदभिनवयौवनविजृम्भणम् । परामृश्यतां पुनर्विभ्रमावेशः ।

**अभिनयति [2]यथार्थान् भ्रूपताका पुमर्थान्**
**गतिरपि गतिमन्यां मन्यते[3] गर्हणीयाम् ।**

**प्रभाविलासः**

इति भावः । यद्वा यतो भुजमध्यादिकं तिरोधित्साविषयं ततो धन्येन वयसा जगद्विजिगीषितमिति । अत्र पाठसमय एव पदविभागः प्रतिभातीति माधुर्यं नाम गुणः, "अग्रे लीला पृथग्भक्तिः पदानां माधुरी मता" इति लक्षणात् ॥ ५ ॥

**अभिनयतीति । भ्रूपताका;** वेणुपत्राकारा भ्रुवोर्मध्यस्थिता रेखा लक्ष्यत इति तद्विदः । यद्वा भ्रुवावेव पताका, मकराकृतिर्मकरध्वजः । सा पुरुषार्थान् **यथार्थान् अभिनयति;** कामपुरुषार्थ एक एवाबाधितः पुरुषार्थ इति ज्ञापयतीत्यर्थः ।

"अभिपूर्वस्तु नयतिराभिमुख्यार्थनिर्णये ।
यस्मात्पदार्थान्नयति तस्मादभिनयः स्मृतः ॥"

इत्युक्तत्वात् । **गतिः;** सविलासगमनम् । न केवलं कामपुरुषार्थ एव पुरु-

**प्रभावली**

आचार्यो येषां ते: । **भावैः;** शृङ्गारचेष्टाभिः । **धन्येन** श्लाघ्येन यौवनेन **वयसा जगत् विजिगीषितं** विजेतुमिष्टं मन्ये ॥ ५ ॥

**परामृश्यताम्;** विचार्यताम् । **अभिनयतीति** । यासामित्यनुवर्तते । **भ्रूपताका** विभ्रमविशिष्टा भ्रूः । **यथार्थान् पुरुषार्थान्;** कामपुरुषार्थ एव परमपुरुषार्थः, न धर्मादिरिति भावः । **अभिनयति;** सूचयति । तासां **गतिः;**

[1] तावदिदमनङ्गविजयपताकानामङ्गनानामभिनवयौवनविजृम्भणम्—क.
[2] पुमर्थान् भ्रूपताका यथार्थान्—क. [3] गर्हते—च.

**मदकलुषितमन्तर्मन्मथाद्वैतगर्भा-**
**मुपनिषदमधीते लोचनं लोलतारम् ॥ ६ ॥**

**द्वेषः—(सहर्षामर्षम्)** सखे, विश्वपुरुषार्थविशेषविद्भिः[1] त्वन्मतप्रतिष्ठापकैः[2] कामकामैरेभिः[3] कक्षीकृतं महानन्दलक्षणं

**प्रभाविलासः**

पार्थान्तरं गर्हते, किंतु गतिरपीत्यपेरर्थः । **अन्यां गतिम्**; अर्चिरादिकाम् । मदेति तारुण्यमदोक्तिः,

"अव्यक्ता संगतिर्वाक्ये रोमाञ्चनिचयस्तनौ ।
सुकुमारस्खलद्गत्याभिनयेत्तारुणं मदम् ॥"

इति लक्षणात् । तेन कलुषितम् । मन्मथ एवाद्वैतम्; अद्वितीयं ब्रह्म; तत् गर्भे यस्यास्ताम् । **उपनिषदमधीत इति**; मदन एव दैवतमिति ज्ञापयतीत्यर्थः । अत्रोपनिषत्पदेन "कामस्तदग्रे समवर्तताधि" इत्येतत् व्यज्यते । **लोलतारमिति**; चलच्चञ्चरीकगर्भतामरससाम्यं व्यज्यते ॥ ६ ॥

**महर्षिविशेषभाषितमिति**; महर्षयः वात्स्यायननन्दीश्वरघोणिका-

**प्रभावली**

मन्दगमनम् । **अन्यां गतिं** स्वव्यतिरिक्तां स्वर्गादिगतिं **गर्हणीयां मन्यते** । **अन्तः** मदेन **संजातकल्मषं लोलतारं** लोचनं तु **मन्मथाद्वैतगर्भाम्**; मन्मथ एव जगति वीरः, नान्य इतीदं मन्मथाद्वैतम्; तद्गर्भे यस्याः ताम् **उपनिषदं** कामागमरहस्यं प्रकाशयतीति ॥ ६ ॥

**सहर्षामर्षम्**; एतद्वाक्यश्रवणात् हर्षः; एतद्विपरीतार्थवादिनो विचिन्त्यामर्षः । **विश्वेति**; समस्तपुरुषार्थविशेषविद्भिः । **कामकामैः**; निरीश्वरवादिभिः ।

[1] विवेकवद्भिः—क. [2] प्रतिष्ठितकर्मैकान्तिभिः—क.
[3] एभिः omitted—घ.

मोक्षतया महर्षिविशेषभाषितं पुरंदरपुरीभुजिष्याभोगमवधूय विपश्चितामपि क इवायं विप्रतिषिद्धवादः?

**सर्वाधारः कथं भूयात्सर्वदोषविवर्जितः।**
**तथैव[1] सर्वकामार्थी निरपेक्षः कथं प्रभुः॥ ७॥**

**रागः—सखे, न[2] चैतावदेव;**

**मधुभरितहेमकुम्भीमधुरिमधुर्यौ पयोधरौ सुदृशाम्।**
**पिशितमिति भावयन्तः पिशाचकल्पाः प्रलोभयन्ति जडान्॥८॥**

**प्रभाविलासः**

पुत्रादयः। ते हि कामशास्त्रं प्रवर्तयामासुः। तदुक्तं रतिरहस्ये—"तत्र प्रथमं नन्दीश्वरघोणीपुत्रयोर्मतं[3] संग्रहीष्यामः, परतो वात्स्यायनीयम्" इति। **भुजिष्याः;** वेश्याः "वेश्या दास्यो भुजिष्याः स्त्रियः" इति निघण्टुः। **सर्वाधार इति**। अत्र "एष सेतुर्विधरणः" इति श्रुत्यर्थोऽभिप्रेतः। **सर्वकामार्थीति;** "बहु स्यां प्रजायेय" इति श्रुत्यर्थोऽभिप्रेतः॥ ७॥

**मध्विति**। **मधुभरिते**त्यान्तरहेयराहित्योक्तिः। **हेमकुम्भीति** दर्श

**प्रभावली**

स्वीकृतम्, पुरुषार्थतयेति शेषः। निरतिशयानन्दं **मोक्षतया महर्षिविशेषैः** वात्स्यायनादिभिः भाषितम्। **पुरंदरभुजिष्याः** दास्यः, अप्सरसः। **विपश्चितामपि** विदुषां च **को वायं** विपरीतप्रलाप इत्यर्थः। सर्वेति पुनरपि ब्रह्मणः प्राप्यत्वं दूषयति। **सर्वेषां** चिदचिताम् **आधारः** पुरुषः **कथं सर्वदोषैः विवर्जितो** भवेत्? चिदचिद्दोषस्यावश्यं भावात्। **सर्वकामार्थी;** सर्वकामाः गोपिकाषोडशसहस्रमहिषीसंभोगादयः, तदर्थी; कथं **निरपेक्षः प्रभुः** स्यात्? सापेक्षस्यापूर्णस्य कथं प्राप्यत्वमिति भावः॥ ७॥

एतावत्; भोगस्य पुरुषार्थत्वाकथनमात्रं न भवति; किं तु पुरुषार्थमपि दूषयन्तीत्याह—**मध्विति**। **मधुना** पूर्णा या हेमकलशी, तस्याः भोग्यत्वधुर्यौ,

[1] यथैव—व.
[2] किमेतावदेव—क.
[3] गोणिकापुत्रयोर्मतमिति मुद्रिते रतिरहस्ये पाठः

(आकाशे)

किं ब्रूथ किं न तथेति[1]; अहह, कथमन्धानामभिलप्यते पयसो नैर्मल्यम्?

**द्वेषः**—अहो महानयमध्यात्माभिनिवेशो विवेकपरतन्त्राणां वेतालानाम्। अथवा युक्तमेवैतत्। न खलु बधिराणां कुतूहलमातनोति कोकिलालापः। तिष्ठन्त्वेते। सखे, विवेक एव तावज्जेतव्यः। यतः;

**प्रभाविलासः**

नीयतोक्तिः। तेनापातरमणीयता व्यावृत्ता। एतच्च पुरंदरभुजिष्यासु संभावनयोक्तम्। प्रसिद्धं हि रम्भायाः स्वोदरविदलनेन शुकायान्तरहेयराहित्यज्ञापनम्। **मधुरिमधुर्यौ**; माधुर्यधारिणौ, तत्तुल्यावित्यर्थः। **पिशितम्**; मांसम्। **पिशाचकल्पा इति** शुकादिप्रतीतिर्व्यज्यते ॥ ८ ॥

**प्रभावली**

तत्सदृशभोग्यावित्यर्थः, **पयोधरौ पिशितं** मांसपिण्डं भावयन्तः, अत एव **पिशाचसदृशाः जडान्** अज्ञान् **प्रलोभयन्ति** वञ्चयन्ति। प्रौढास्तु तद्वचो नाङ्गीकुर्वन्तीति भावः ॥ ८ ॥

केषांचिद्वचनं श्रुतं नाटयति रागः—**किं ब्रूथेति**। **किं न तथा**; अस्माभिरुक्तप्रकारं न भवति किम्। **अहहेत्याश्चर्ये**। राग आह—**अन्धानामिति**। सहस्रश उक्तेऽपि न तथेति वदतां केनापि परिहारो वक्तुं न शक्यत इत्यस्मिन्नर्थे दृष्टान्तमाह—**अन्धानामिति**। जात्यन्धानां **पयसो नैर्मल्यं कथमभिलप्यते**, वक्तुं शक्यत इत्यर्थः। **अध्यात्माभिनिवेशः**; अध्यात्ममार्गे आग्रहः। विवेकानुयायिनां पिशाचानामध्यात्माभिनिवेशो युक्त इत्याह—**अथवेति**; अस्मन्मताज्ञत्वादिति भावः। अस्मन्मतं विवेकिनां न रोचत इत्यत्र दृष्टान्तमाह—**न खल्विति**। **तिष्ठन्त्वेते**; विवेकपरतन्त्रा इति

[1] किं तन्न तथेति—ङ. छ.

विवेकविजयादेव विद्वत्परिषदो जयः ।
उपघ्नतरुविच्छेदे न किमुच्छिद्यते[1] लता ॥ ९ ॥

रागः—साधु विचिन्तितम् ।
द्वेषः—(सोच्चैर्हासम्)[2]

अनघगुणौघमेकमवधूतसमाभ्यधिकं
स्ववितरणीयसर्वपुरुषार्थमुपास्तिपदम् ।
उपनिषदूषरान्तपरिवर्तनधूसरधी-
र्न खलु विवेक एष[3] मयि तिष्ठति साधयिता ॥ १० ॥

प्रभाविलासः

आकाशवचनरूपमुपसंधिमाह—**किं ब्रूथेति** । **विवेकेति** । **उपघ्नतरुः**; अवलम्बनवृक्षः । **लतेति**; विद्विट्परिषदोऽतिदौर्बल्यं व्यज्यते ॥९॥

**अनघेति** । **अनघगुणेति**; "अपहतपाप्मा" इति श्रुत्यर्थोऽभिप्रेतः । **एकमिति**; "आसीदेकमेव" इति विवृतम् । **अवधूतेति**; "न तत्समश्चाभ्यधिकश्च दृश्यते" इति श्रुत्यर्थोऽभिप्रेतः । स्वेन वितरणीयाः प्रदेयाः सर्वपुरुषार्थाः चतुर्वर्गो यस्य तम् । **उपास्तिपदम्**; सद्वारकाद्वारकतया सकलोपासनाकर्मभूतमित्यर्थः । ब्रह्मेति शेषः । **उपनिषद** एवोषरः;

प्रभावली

भावः । तत्र हेतुमाह—**यत इति** । मूलभूतविवेकविजयात् तदाश्रयाः सर्वे जिता भवन्ति । एतदर्थान्तरन्यासेन द्रढयति—**उपघ्नेति** । उपघ्नः; आश्रयः ॥९॥

स्वस्मिन् तिष्ठति विवेकस्योपास्तिपदस्थानाशक्तेः उच्चैर्हासः । **अनघेति** । अखिलहेयरहितं कल्याणगुणपरिपूर्णं निःसमाभ्यधिकं सर्वपुरुषार्थप्रदं ब्रह्म उपासनाविषयम् उपास्यम् । **उपनिषद** एवोषरस्थलं तदन्तपरिवर्तनेन लुठनेन

[1] किमापत्स्यते—क. [2] सखे, संदृश्यतामेतत् added after—क. ख.
[3] एव—क.

(नेपथ्ये)

कः कोऽत्र भोः ?

**उभौ**—(कर्णं दत्त्वा सभयसंभ्रमम्) आः [1]कष्टम् । अतिपतितनरपतिनियोगनिर्वाहौ कथमावां भविष्यावः ? हन्त सर्वथा विपरिवृत्तमिवास्माकं भागधेयम् । अद्य हि,

**प्रभाविलासः**

तेन वेदान्तभागस्य कर्मशेषतया दन्तिभुक्तकपित्थन्यायेन निःसारत्वमुक्तम् । तस्यान्ते परितो वर्तनं लुठनम् । अनेन तद्विचारायासस्य निष्प्रयोजनत्वमुक्तम् । तेन धूसरा धीर्यस्येति । न केवलमायासफलता, प्रत्युत कर्मफलहेयत्वादिबुद्ध्युत्पादनेन दूषितत्वोक्तिः । अत्र परिवर्तनधूसरपदाभ्यां पशुसाम्यं व्यज्यत इत्युपमालंकारध्वनिः, विवेकनिन्दा चेति एकव्यञ्जितव्यङ्ग्यद्वयध्वनिभेदः । तिष्ठतीति न साधयितेत्यनेन च न तिष्ठति साधयितेति वेदान्तविचारस्य कामादिविजयमूलत्वं ध्वन्यते ॥ १० ॥

**प्रभावली**

धूसरधीः एष विवेकः मयि द्वेषे तिष्ठति सति पुरुषस्य न खलु साधयिता । विवेकवशादुपास्यवस्तुनिर्णये सत्यपि द्वेषश्चेन्न तत्परिगृह्णातीति भावः ॥ १० ॥

अथ अङ्कप्रधानपात्रसूचनाय विवेकागमनं प्रस्तौति—**नेपथ्य इत्यादिना** । **कः कोऽत्र भोः**; अत्र को वा त्वं वर्तसे इत्यास्थानमागच्छतः सपत्नीकस्य विवेकस्य नेपथ्येऽन्तर्हितस्य वचनम् । भोः अत्र कः वर्तत इति वाक्यार्थः । कः क इति वीप्सायां द्विरुक्तिः । **उभौ**; रागद्वेषौ । अतिक्रान्तमहामोहशासननिर्वहणौ । महामोहशासनमकृत्वेत्यर्थः । **भविष्यावः**; जीवावः । **विपरिवृत्तम्**; परिक्षीणमिति यावत् । भाग्यविपरिवृत्तेर्हेतुं दर्शयति—

[1] कष्टमापतितम् । नरपतिनियोगनिर्वाहकौ—क. ख.

अतिक्रम्य दुरुच्छेदामास्माक[1]गुणवागुराम् ।
विरक्तिर्विष्णुभक्तिश्च[2] विवेकस्थानमृच्छतः ॥ ११ ॥

स चैष नूनं विरक्तिविष्णुभक्तिभ्यां प्रोत्साहितो देव्या सुमत्या दत्तहस्त इत एवाभिसमेति[3] । जितकाशिनश्चामुष्य संनिधाने[4] न मन्दभाग्यैरस्माभिः स्थातव्यम् । जीवन्तो हि भद्राणि पश्यन्ति । अस्मदवरजाभ्यामपि कामक्रोधाभ्यामविलम्बितकारिभ्यामपि विलम्बनीयम् । काले हि सर्वं संपद्यते[5] । न चानेन व्यवसायसहायेन दुर्जयः कश्चित् । एवं च नूनमापत्स्यते राजकृत्यम् ।

[6]धिग्धिग्वासवशम्भलीनयनयोरालोलमालोकितं
धिग्धिङ् [7]मन्मथकार्मुकं युधि सदा टङ्कारसाडम्बरम् ।

प्रभाविलासः

**अतिक्रम्येति** । **ऋच्छतः**; गच्छतः । "ऋ गतौ" इति धातुः ॥ ११ ॥

**धिगिति** । **शम्भल्यः**; स्त्रियः । हठात् दर्शनमालोकितम् ।

**प्रभावली**

**अतिक्रम्येति** । **दुरुच्छेदाम्**; अन्यैरुच्छेत्तुमशक्याम् । **आस्माकीम्**; त्रिगुणमयीं वागुरामतिक्रम्य ॥ ११ ॥

अथ रागद्वेषयोर्विचारं दर्शयति—**जितकाशिन** इत्यादि । जितेन जयेन काशितुं प्रकाशितुं शीलमस्येति जितकाशी जयशीलः । **अवरजाभ्याम्**; रागानन्तरं कामो जायते; द्वेषानन्तरं क्रोधः । **अनेन**; विवेकेन दुर्जयः कोऽपि नास्ति । विवेकोऽवश्यं पुरुषं मोक्षयिष्यति । अतोऽस्मद्बलं सर्वं

[1] अस्माकं—क. घ; आस्मीकीमिति प्रभावलीपाठः.
[2] विरक्तिविष्णुभक्ती च—ग.
[3] अभिवर्तते—क.
[4] दृष्टिपाते—क.
[5] संपत्स्यते—ख.
[6] अयं श्लोकः निर्जित्य इत्यनन्तरश्लोकानन्तरं पठितः—क.
[7] मान्मथ—घ. छ.

**धिग्धिक्पञ्चमपाठकान् परभृतान् धिग्धिक्किमन्यैर्जडैः**
**शृङ्गारागमरङ्गमण्डपनटीं मोहेन्द्रवीरश्रियम् ॥ १२ ॥**

अद्य हि[1]—

**निर्जित्य मोहमसुरेन्द्रमिवामरेन्द्रो**
**बद्धस्य मङ्क्षु पुरुषस्य विमोक्षणेन ।**
**अश्रूण्यकृत्रिमगिरामभिषङ्गजाता-**
**न्यानन्दजैर्विपरिवर्तयिता विवेकः ॥ १३ ॥**

(इति वदन्तौ निष्क्रान्तौ)

इति शुद्धविष्कम्भः



**प्रभाविलासः**

"सहसा दर्शनं यत्तदालोकितमुदाहृतम्" इत्युक्तत्वात् ॥ १२ ॥

पात्रप्रवेशं सूचयति—**निर्जित्येति । मङ्क्षु**; शीघ्रम् । **अभिषङ्गः**; पराभवः । **विपरिवृत्तिः**; विनिमयः । अत्र पुरुषमोचनरूपवस्तु-

**प्रभावली**

व्यर्थमित्याह—**धिग्धिगिति । शम्भली**; वृद्धगणिका । **आलोकितं** सविलासवीक्षणं धिक् निन्द्यं जातमित्यर्थः । **टङ्कारेण** ज्याशब्देन ससंभ्रमम् । पञ्चमस्वरपाठकान् **परभृतान्** कोकिलान् । **शृङ्गारागमः** कामशास्त्रम्, तदेव रङ्गमण्डपं, तस्य नटीभूतां मोहेन्द्रवीरस्य श्रियं, 'त्रिवर्गपदवी परं शरणमद्य मोहश्रियः' इत्युक्तां धिग्धिक् । अन्यैर्जडैः किं प्रयोजनमिति ॥ १२ ॥

कुत एवं निन्द्यत इत्यत्राह—**निर्जित्येति । विवेकः अमरेन्द्रः असुरेन्द्रमिव** मङ्क्षु शीघ्रं मोहं निर्जित्य बद्धस्य पुरुषस्य संसारपथात् विमोक्षणेन अकृत्रिमगिरां वेदवाचाम् **अभिषङ्गजातानि** अभिषङ्गः कुदृष्टिकृतपरिभवः, तज्जन्यान्यश्रूणि **आनन्दजैः** अश्रुभिः सदर्थप्रतिपादनद्वारा पुरुषस्य

[1] अयं हि—क.

(ततः प्रविशति विवेकः सुमतिश्च)

**विवेकः**—देवि, समाश्वसिहि समाश्वसिहि। परप्रयुक्तपाटच्चरभयापनोदनेन विरक्तिविष्णुभक्ती त्वत्सकाशं प्रापिते।

**प्रभाविलासः**

गवेषणस्य मोहविजयावधित्वात् तत्पर्यन्तं गर्भसंधेरनुवृत्तिः सूचिता॥ १३॥

**इति शुद्धविष्कम्भः**



अथ गर्भसंधिः षड्भिरङ्गैः प्रस्तूयते—तत इत्यादिना। अत्र गर्भसंधिर्नाम मुखसंधौ स्तोकोद्दिष्टतया लक्ष्यालक्ष्यस्य प्रतिमुखसंधौ सम्यक् प्रवृत्तस्य तत्रैव पुनर्नष्टस्य पुरुषमोचनरूपबीजस्य पुनरन्वेषणम्। तदुक्तम्—"गर्भस्तु दृष्टनष्टस्य बीजस्यान्वेषणं मुहुः" इति। स च प्राप्त्याशापताकयोः संबन्धादुपपद्यते। तत्र प्राप्त्याशा नाम पुरुषमोचनरूपफलप्राप्तेरुपायापायशङ्काभ्यामनिर्धारितैकान्त्यम्। तदुक्तम्—"उपायापायशङ्काभ्यां प्राप्त्याशा प्राप्तिसंभवः" इति। तच्च "अनुचितपदवीभिः" इत्यादिना दर्शयिष्यते। पताका तु व्यापिनी कथा। अयमर्थः—नाटके

**प्रभावली**

मोक्षणेन जनितैरानन्दाश्रुभिः **विपरिवर्तयिता** दुःखाश्रूणामानन्दाश्रुभिः विपरिवृत्तिं कारयिता॥ १३॥

**इति शुद्धविष्कम्भः**



ततः **प्रविशतीत्यादि**। **समाश्वसिहि**; रागद्वेषाभ्यां विरक्तिविष्णुभक्त्योर्बन्दीकरणात् भीता त्वं समाश्वस्ता भव धीरा भव। तत्र हेतुमाह—**परेति**। **परः** मोहः, तत्प्रयुक्तौ **पाटच्चरौ** तस्करौ रागद्वेषौ, ताभ्यां विरक्तिविष्णुभक्त्योः यद्भयं, तदपनोदनेन प्रापिते; अस्मदीयैरिति शेषः।

**सुमतिः**—(दीर्घं निश्वस्य) णाह[1], तह वि अज्ज वि किं होज्जत्ति [2]तरलहिअआ किं भणामि ? पच्चण्णआरिणो खु राअद्देसा ओसरं पेक्खंति ।

(नाथ, तथापि अद्यापि किं भवेदिति तरलहृदया किं भणामि ? प्रच्छन्नचारिणौ खलु रागद्वेषौ अवसरं प्रतीक्षेते)

**विवेकः**—भीरु, मा ते भूदिह मनोदौर्बल्यम् । किमस्माकमपि संनिधौ रागद्वेषयोरवकाशः ? अपिच ;

**प्रभाविलासः**

वस्तु द्विविधम्, प्रासङ्गिकमाधिकारिकं चेति, "तत्राधिकारिकं मुख्यमङ्गं प्रसङ्गिकं विदुः" इत्युक्तत्वात् । आधिकारिकलक्षणं चैवमुक्तम्—

"अधिकारः फलं स्वामी अधिकारी च तत्प्रभुः ।
तन्निर्वर्त्यमभिव्यापि वृत्तं स्यादाधिकारिकम् ॥"

इति । अत्र च विवेकनिर्वर्त्यं पुरुषमोचनरूपं मुख्यं फलम् । एतदितिवृत्तम् । प्रासङ्गिकलक्षणं तु—"प्रासङ्गिकं परार्थं स्यात्स्वार्थो यस्य प्रसङ्गतः" इति । तदपि द्विविधम्—पताकाप्रकरीभेदात् । तदुक्तम्—"सानुबन्धा पताका स्यात् प्रकरी च प्रदेशभाक्" इति । तत्र पर-

**प्रभावली**

**दीर्घं निश्वस्य** ; इतः परमपि किं भविष्यतीति दुःखात् । **णाह** ; नाथ । **तह वि**—तथापि । यद्यपि मत्सख्यौ प्रापिते, तथापीत्यर्थः । **किं होज्जत्ति**—किं भवेदिति । **तरलहिअआ**—तरलहृदया । किं भणामि । **पच्चण्णआरिणो खु**—प्रच्छन्नचारिणौ खलु । **राअद्देसा**—रागद्वेषौ । **ओसरं**—अवसरम् । **पेक्खंति**—प्रेक्षेते । **मनोदौर्बल्यम्** ; भीतिः । **अस्माकमपि संनिधौ** ; मम तव च संनिधौ । विवेकसुमत्योः सद्भावे पुरुषे रागद्वेषयोरवकाशाभावः । भीत्यभावे

[1] अय्यउत्त—क. [2] तरलिअ—क.

अनुचितपदवीभिश्चिन्तयित्वा प्रयाता-
न्यलमलमतिमात्रैरद्य बाले विषादैः ।
उपनिषदमुदारामुद्गमन्[1] क्वापि लक्ष्ये
शरणमुपगतान्नस्त्रायते शार्ङ्गधन्वा ॥ १४ ॥

**सुमतिः**—(सविषादं संस्कृतमाश्रित्य) आर्यपुत्र,

**प्रभाविलासः**

भक्तिकथायाः सर्वत्रानुवृत्तत्वात् सैव पताका निरूपिता । प्रकरी तु शुभाश्रयनिरूपणादिकथेति विशेषः । पताकाया उपक्रमव्याप्तिं दर्शयति—**देवि समाश्वसिहीति** । **अनुचितेति** । **अनुचितपदवीभिः**; अयोग्यस्वर्गनरकादिमार्गैः । **प्रयातानि**; गतागतानि । चिन्तयित्वा अतिमात्रैर्विषादैरलमित्यन्वयः । **उदाराम्**; महतीम्, निःश्रेयसप्रदात्रीं वा । "उदारो दातृमहतोः" इति निघण्टुः । **उपनिषदम्**; श्रीगीताम् । **क्वापि**; अर्जुने । **उद्गृणन्**; उपदिशन् ॥ १४ ॥

**प्रभावली**

कारणान्तरमप्याह—**अनुचितेति** । **अनुचितपदवीभिः**; स्वर्गनरकमार्गैः । **प्रयातानि**; पूर्वगतानि यातायातानि । **चिन्तयित्वा** तेन संजातैः **अतिमात्रैः** अत्यर्थैर्विषादैरलमलम् । रक्षणस्यावश्यंभावात् द्विरुक्तिः । कुत इत्यत्राह—**उपनिषदमिति** । **क्वापि लक्ष्ये**; अर्जुने विषये । क्वापीत्यनेनार्जुने अनास्था; साधुपरित्राण एवास्थेति सूच्यते । **उदाराम्**; परमपुरुषार्थलक्षणमोक्षप्रापणीम् । **उपनिषदं** श्रीगीतोपनिषदम् । **उद्गमन्**; स्वयमेवोद्गिरन् । शरणागतरक्षणप्रतिज्ञातुः श्रीकृष्णस्य सत्यप्रतिज्ञत्वात् शरणागतानामस्माकं न भीत्यवकाश इति भावः ॥ १४ ॥

**सविषादम्**; पुरुषावस्थानिरूपणात् । **संस्कृतमाश्रित्य**; स्त्रीणां संस्कृतभाषाप्रयोगे संस्कृतमाश्रित्य प्रयोक्तव्यमिति सूचनायैवं प्रयोगः । पुरुषस्य

[1] उद्गृणन् इति प्रभाविलासपाठः

**सर्गेषु प्रतिसंचरेषु बहुशः स्वर्गे तथा दुर्गतौ**
**जाग्रत्स्वप्नसुषुप्तिमुग्धिमरणावस्थासु दुःस्थासु च ।**
**दुःख्यन् प्रस्तरवद्भवन् बहुपशुः सुख्यन्नसौ देहभृद्**
**दग्धादग्धसजीवितद्रुमदशादीनो दरीदृश्यते ॥ १५ ॥**

अपिच,

**विचित्रजवविश्वकृद्विहृतिमारुतप्रेरणा-**
**विभक्तभवितव्यताविपिनसिन्धुविष्फूर्तिभिः ।**

प्रभाविलासः

**सर्गेष्विति । प्रतिसंचरेषु ;** प्रलयेषु । **दुर्गतौ ;** नरके । **मुग्धिः ;** मूर्च्छा । **बहुपशुः ;** पशुसदृशः । अत्र निर्वेद उदित इति भावोदय-ध्वनिः ॥ १५ ॥

**विचित्रेति । विश्वकृत् ;** ईश्वरः । **विहृतिः ;** लीला । विचित्र-जवश्चासौ विश्वकृद्विहृतिमारुतश्च । तस्य **प्रेरणया विभक्ता भवितव्यता** अवश्यंभावित्वमेव **विपिनसिन्धुः**, तस्य **विष्फूर्तिभिः** प्रवृद्धिभिः ।

**प्रभावली**

बहुविधामवस्थां दर्शयति—**सर्गेष्विति । असौ** देहभृत् **सर्गेषु** सृष्टिषु **प्रति-संचरेषु** प्रलयेषु **दुर्गतौ** नरके जाग्रदाद्यवस्थासु ; जाग्रत् जाग्रद्दशा, स्वप्नः अन्तरिन्द्रियमात्रव्यापारदशा, सुषुप्तिः मनसोऽप्युपरतिदशा, मुग्धिर्मूर्च्छा । **दुःस्थासु ;** विषमासु । एतास्ववस्थासु नरकादिषु बहुशो **दुःख्यन् बहुपशुः** पशुसदृशः पराधीनः **सुख्यन्** स्वर्गाद्यवस्थासु **प्रस्तरवत्** भवन् प्रलयादिषु पाषाणवत् भवन् **दग्धादग्धः** अर्धदग्धः सजीवितो यो द्रुमः, तस्य दशा, तया दीनः कृपणः **दरीदृश्यते** भृशं दृश्यते ॥ १५ ॥

जन्तुरस्मिन् जगति सुकृतदुष्कृतकर्मावर्तैर्बम्भ्रमीतीत्याह—**अपिचेति । विश्वकृत्** ईश्वरः, तस्य विहृतिः लीला, सैव मारुतः, स च विचित्रजवो भवति । तस्य प्रेरणया सुकृतदुष्कृतकारिविषया भवितव्यता विभज्यते । **भवितव्यता ;**

जटालवृजिनाविले जवनयौवनास्वादने
जरामरणभीषणे जगति जन्तुरावर्त्यते[1] ॥ १६ ॥

**विवेकः**—(सानुशयम्) देवि, सत्यमिदमितः पूर्वम् । अद्य[2]त्वपुनरावृत्तिवर्तनीमारुरुक्षतः पुरुषस्य चिरकालसंचितपुण्य-संचयपरिणतं विशेषमाकर्ण्य—

पातत्रासनिरीक्षणप्रशमितस्वर्वासदुर्वासना
पुंसः संप्रति शेमुषी[3] निरवधि पुष्णाति तृष्णां परे ।

प्रभाविलासः

**जटालेन** अन्योन्यानुबद्धेन **वृजिनेन** पापेन **आविले** कलुषे । एवं पाप-भूयस्त्वमुक्तम् । सुखाल्पीयस्त्वमाह—**जवनेति** । अत्र संसारकुत्सनप्रतीते-र्गर्हणं नाम नाट्यालंकारः । "गर्हणं गुणविच्छेदाद् दोषोद्भेदेन कीर्तनम्" इति लक्षणात् ॥ १६ ॥

**पातेति** । पादं स्पष्टम् । **परे**; ब्रह्मणि । **अर्थित्वे**; मोक्षार्थित्वे ।

प्रभावली

पुण्यपापरूपा । सैव **विपिनसिन्धुः** अरण्यनदी, तस्या **विष्फूर्तिभिः** समृद्धि-भिर्हेतुभिः **जटालवृजिनाविले** जटालान्यन्योन्यसंयुक्तानि यानि पापानि तैः कलुषिते, जवनं शीघ्रगामि यद्यौवनं "त्रिचतुराणि दिनानि" इत्युक्तेः, तदेवा-स्वादनं सारांशो यस्मिन् । जरामरणाभ्यां भयंकरेऽस्मिन् जगति जन्तुरावर्त्यते बम्भ्रम्यते । तस्य कथं निस्तार इति शेषः ॥ १६ ॥

**सानुशयम्**; सानुतापम् । इतः पूर्वमिदं सर्वं सत्यम्; अद्य कश्चिद्विशेषो-ऽस्तीत्याह—**अद्य खल्विति** । **अपुनरावृत्तिवर्तनी**; मोक्षमार्गः अर्चिरादिः, तामारोढुमिच्छतः पुरुषस्य; मुमुक्षोरित्यर्थः । चिरकालार्जितपुण्यसंचयप्राप्तं विशेषं

[1] रावर्तते—घ. छ. [2] अद्य पुनः—ख.

[3] शेमुषीम्—ङ. छ. शेमुषीमिति पाठे प्रशमिता या वासना, विरक्तिरित्यर्थः, सा **परे** निरवधिं तृष्णां परभक्तिरूपां शेमुषीं पुष्णातीत्यर्थः । अत्र पाठे "शेमुषी भक्तिरूपा" इति पूर्वाचार्यसूक्तिसंवादोऽपि विवक्षितः कविनेति स्वारस्यमवधेयम् ।

**अर्थित्वे मतिकश्मलप्रचलितेऽप्येवं[1] प्रतिष्ठापिते**
**सामर्थ्यं च समाधिसीम्नि नियतावस्थं व्यवस्थाप्यते ॥१७॥**

अपिच,

**प्रतिक्षिप्तावद्यप्रवरगुणनिर्धारणभुवा**
**परप्रेम्णा जुष्टो भवभृदधुना भाग्यवशतः ।**
**अभिन्नास्वादानाममृतलहरीणामिव धियां**
**विकल्पं विज्ञाता विधिपवनवैषम्यजनितम् ॥ १८ ॥**

**प्रभाविलासः**

**मतिकश्मलप्रचलितेऽपि ;** स्वर्गसुखाक्षयत्वादिना चञ्चलत्वं प्रापितेऽपि । **एवं प्रतिष्ठापिते ;** पातत्रासनिरीक्षणेन स्थिरीकृते । **नियतावस्थमिति ;** सति सामर्थ्ये समाधावेवाधिकार इति नियतविषयमित्यर्थः ॥ १७ ॥

**प्रतिक्षिप्तेति ।** **प्रतिक्षिप्तावद्यानां** हेयविरोधिनां **प्रवरगुणानां निर्धारणेन** भवतीति तथोक्तः, तेन । **परप्रेम्णा** परभक्त्या **धियां** सद्विद्या-

**प्रभावली**

श्रृणु । विशेषमेव दर्शयति—**पातत्रासेति** । पुंसः **शेमुषी ;** बुद्धिः । पाते स्वर्गात्पतने यस्त्रासः, तस्य निरीक्षणेन प्रशमिता स्वर्गवासे दुर्वासना यस्याः सा सती **परे पुरुषे** ब्रह्मणि **निरवधिकां तृष्णां पुष्णाति** । **अर्थित्वे ;** मोक्षार्थित्वे । **मतिकश्मलेन ;** बुद्धिमोहेन। **प्रचलिते ;** शिथिलितेऽपि। **एवम् ;** पूर्वोक्तपातत्रासनिरीक्षणेन । **प्रतिष्ठापिते ;** दार्ढ्यमुपगते सति । **समाधिसीम्नि सामर्थ्यं** योग्यता । **नियता** व्यवस्थिता अवस्था यस्मिंस्तद्यथा तथा **व्यवस्थाप्यते** । एवं च पुरुषस्य मोक्षेऽधिकारस्य संपत्तिः संजातेत्यर्थः ॥ १७ ॥

अथोपायप्रवृत्तिरपि क्रमेण भविष्यतीत्याह—**अपिचेति** । **प्रतीति** ।

[1] प्रशमितेऽप्येवं—क.

अयं च परमपुरुषचरणारविन्दमकरन्दमधुकरो बृन्दारकनगरमपि नरकं परं निश्चेष्यति । अत्र च,

**भवपथकथारागे भग्ने गतागतचिन्तया**
**परमपुरुषप्रेप्सालाभे तदद्भुतबोधनात्[1] ।**

**प्रभाविलासः**

भूमविद्यादीनां **विधिपवनवैषम्यजनितं** तत्तददृष्टव्यवस्थाकृतम् । यद्वा विधिभेदेन फलभेदरूपवैषम्यापादनेनैकस्मिन् पुरुषे समुच्चयेनाग्निहोत्रदर्शपूर्णमासज्योतिष्टोमादिवत् अनुष्ठानशङ्कायां परिहारतया निष्पन्नमित्यर्थः । **विकल्पम्;** 'सर्वं वाक्यं सावधारणम्' इति न्यायेन विकल्पमेव **विज्ञाता,** न तु समुच्चयमित्यर्थः । तत्रोपपत्तिमाह—**अभिन्नास्वादानामिति** । एतेन "विकल्पोऽविशिष्टफलत्वात्" इति न्यायः सूचितः ॥ १८ ॥

**भवपथेति** । **तदद्भुतबोधनात्;** तस्य ब्रह्मणः सर्वविलक्षणनिरति-

**प्रभावली**

**अधुना भाग्यवशतः प्रतिक्षिप्तावद्याः** हेयसंबन्धवर्जिता ये प्रवरगुणाः कल्याणगुणाः तेषां निश्चयेन भवता **परमप्रेम्णा** प्राप्यरुचिलक्षणेन **जुष्टः** पुमान् **क्रमेण** **अमृतलहरीणामिव अभिन्नास्वादानां** समानानन्दानां **धियां** विद्यानां भक्तीनां प्रपत्तीनां च **विकल्पं** "विकल्पोऽविशिष्टफलत्वात्" इति सूत्रकारोक्तं **विज्ञाता** ज्ञास्यति; ज्ञात्वा कुत्रचित् प्रवृत्तो भवति । विकल्पः कुतो ज्ञात इत्यत्राह— **विधिपवनेति** । विधिशब्देन लिङादिशब्दा उच्यन्ते । **विधिरेव पवनः**, तस्य **वैषम्यं** भेदः, **तज्जनितं** शब्दादिभेदजनितं विद्याभेदं ज्ञास्यतीति । यद्वा भाग्यभेदजनितां विद्यासु विकल्पेन प्रवृत्तिं ज्ञास्यतीत्यर्थः ॥ १८ ॥

अथ पुरुषस्य भगवद्विषये प्रेमातिशयं तदितरविषये वैराग्यातिशयं चाह— **अयं चेति** । परमपुरुषचरणारविन्दमकरन्दे मधुकरो भूत्वा बृन्दारकनगरं स्वर्गमपि **परं** केवलं **नरकं** निश्चेष्यति । अथ संपन्नं कृत्यमेतावत्, संपाद्यमिदमेवेत्याह—

[1] दर्शनात् इति प्रभावलीपाठः

**गुणगणभिदासंभेदाभ्यामुपस्कृतविग्रहे**
**क्षममिह परं विद्यावर्गे विमोहनिवर्तनम् ॥ १९ ॥**

इह च मोहप्रशमनं दिङ्मात्रेणोदाहरामि[1] —

**समाना मुक्तिश्चेन्न खलु घटते साधनभिदा**
**न चेत्स्वर्गन्यायस्तरतमतयान्याभिमतया ।**

प्रभाविलासः

शयानन्दस्वरूपत्वज्ञापनात् । गुणगणपदेन मनोमयत्वप्राणशरीरत्वभारूपत्व-सर्ववशित्वसर्वेशानत्वादय उक्ताः । तेषां **भिदा;** भेदः । **संभेदः;** ऐक्यम् । ताभ्याम् **उपस्कृतविग्रहे** विशिष्टशरीरे । **विद्यावर्गे;** शाण्डिल्याक्षिपुरुषविद्यादिसमूहे **विमोहनिवर्तनं क्षमं** समर्थम् । अयं भावः—एकामेव शाण्डिल्यविद्यामधिकृत्याग्निरहस्ये सत्यसंकल्पत्वाकाशात्मत्वादयः श्रुताः । बृहदारण्यके च सर्ववशित्वसर्वेशानत्वादय उक्ताः । मनोमयत्वादयस्तूभयत्राविशेषेणोक्ताः । तत्रैवं सति शाण्डिल्यविद्या किं भिन्ना? उत अभिन्ना? इति संशयः स्यात् । स च सर्ववशित्वादेः संकल्पविततिरूपत्वेनाविरोधं निरूप्य निवर्त्य इति गुणोपसंहारपादे प्रपञ्चितमिति ॥ १९ ॥

**समानेति । समाना;** एकरूपा, तारतम्यरहितेति यावत् ।

प्रभावली

**अत्र चेति ।** पुरुषस्य **गतागतचिन्तया** संसारमार्गप्रसङ्गरागे **भग्ने तदद्भुतदर्शनात्** तस्येश्वरस्य अद्भुतत्वमुभयलिङ्गत्वादि, तस्य दर्शनात् वेदान्ते तस्य बोधनात् परमपुरुषप्राप्तीच्छालाभे च सति, **गुणगणभिदासंभेदाभ्यां** गुणगणाः तत्तद्विद्यासाधारणाः आनन्दादयः, तेषामनुपसंहारोपसंहाराभ्यां संस्कृतस्वरूपे **विद्यावर्गे** परविद्यासमूहे **इह परं विमोहनिवर्तनं** भ्रान्तिविघटनं क्षमं युक्तम् ॥ १९ ॥

मोहः कीदृशः? तन्निवर्तनं च कीदृशमित्यत्राह—**इह चेति ।** भ्रान्तिप्रशमं

[1] स्थालीपुलाकन्यायेनोदाहरामि—क.

प्रमाणप्रागल्भ्यप्रणिधिमवधूय प्रलपता[1]-
मिति क्षीबः क्षोभः [2]स्वमतिविहतेरेव निहतः ॥ २० ॥

## प्रभाविलासः

**स्वर्गन्यायः**; स्वर्गतुल्यतेत्यर्थः। **अन्याभिमतया**; कर्मकाण्डोक्तया। मुक्तेरेकरूपत्वेऽपि विकल्पेनानेकविद्यासाध्यत्वस्य प्रामाणिकत्वादङ्गीकार इत्याह—**प्रमाणेति**। वेदान्तविद्या एव विधिभेदं फलैक्यं च विदधति, किं कुर्म इति भावः। **प्रणिधिः**; सावधानता। अन्येषामपीदमेवाभिमत-मित्याह—**स्वमतेति**। ज्योतिष्टोमदर्शपूर्णमासविश्वजिदादिसाध्यस्य स्वर्ग-स्यैकस्यैवाङ्गीकारात्। "स स्वर्गः स्यात्सर्वान् प्रत्यविशिष्टत्वात्" इत्यश्रुत-फलकर्मणामेकरूपफलकत्वस्य न्यायनिर्णयाच्चेति भावः ॥ २० ॥

## प्रभावली

संक्षेपेणोदाहरामि। मोहस्वरूपं दर्शयति पूर्वार्धेन। उत्तरार्धेन तत्परिहारः। विद्यासाध्या मुक्तिरेका अनेका वेति विकल्प्याद्यं दूषयति—**समानेति**। सर्वाभि-र्विद्याभिः साध्या मुक्तिः **समाना** एका चेत् साधनभिदा न घटते; साधनभेदो व्यर्थः स्यात्, एकेन साधनेनैव साध्यसिद्धेः। द्वितीयं दूषयति—**न चेत्**; अनेका चेत्। **अन्याभिहितया** पूर्वमीमांसकाभिहितया **तरतमतया स्वर्गन्यायः** स्यात्। अयमर्थः—यथा अग्निहोत्रदर्शपूर्णमासाद्यनेकसाधनसाध्यस्य स्वर्गस्यै-कत्वेऽपि स्वर्गशब्दवाच्यस्य सुखस्य तारतम्यात् अग्निहोत्रदर्शपूर्णमासादिसाधना-नामवैयर्थ्यम्, एवं मुक्तेरपि तारतम्याङ्गीकारेण साधनानेकत्वावैयर्थ्यम्; तच्चानिष्ट-मिति। अत्र परिहरति—**प्रमाणेति**। **प्रमाणस्य**; "निरञ्जनः परमं साम्यमुपैति" इत्यादेः। **प्रागल्भ्यं** प्राबल्यं, तस्य **प्रणिधिः** चिन्तनम् **अवधूय** प्रमाणप्राबल्यं विस्मृत्येत्यर्थः। यत्किंचिज्जल्पताम्, **इति** एवंरूपेण प्रलापः **स्वमतिविहतेः** स्वा-ज्ञानादेव बाधितः। अयमाशयः—अग्निहोत्रदर्शपूर्णमासादीनां स्वर्गसाधनभाव-बोधकानामनेकेषां शास्त्राणां वैयर्थ्यभिया स्वर्गे तारतम्यकल्पने बाधाभावः।

[1] प्रलपतां मतिक्षोभः क्षीबः—ग.  [2] स्वमत—घ. छ.

[1]एवमपि ये मुह्यन्ति ते मुह्यन्त्येव । न खलु सहस्रैरपि सलिलकुम्भैर्बलिभुजः प्रक्षाल्यमाना वलक्षतां प्रतिपद्यन्ते । दुर्वादिगर्वसर्वस्वनिर्वापकैः सर्वज्ञबुद्धिभिर्वर्णितं निर्विशङ्कमखिलमधिगम्य सर्वेश्वरं निर्विशन्ति सन्तः ।

**सुमतिः**—(सश्लाघम्) णाह, पडिसंठाविअम्हि[2] दाणिं[3] पमाणप्पणअपेसलेण तुम्ह भासिएण पडिबुद्धजणसंभावणिज्जे[4] पमाणउत्तंदणिरिक्खणम्मि । समब्भहिअदरिद्दं खु तुह माहप्पं । [5]एण्हिं किल ;

**कप्पारंभपअंडतंडवकलाकीलंतकालंदअ-**
**क्खोहुव्वेलकवद्दसिंधुलहरीधूअंतचंदप्पहं ।**
**एक्कक्खरणिज्ज[6] णिब्भरसुहासंदोहसंतोसिआ**
**आमेल्लंदि भुअंगिआ तुह जसं वेलंतसेलंदरे ॥ २१ ॥**

**प्रभाविलासः**

**बलिभुजः ;** काकाः । **कल्पारम्भे ;** प्रलयारम्भे । **प्रचण्डताण्डवस्य ;** इदं च गानश्रवणजनितहर्षातिशयेनेति वेदितव्यम् । **कलया** व्यापारेण

**प्रभावली**

अत्र मोक्षतारतम्याङ्गीकारे "निरञ्जनः परमं साम्यमुपैति" इति श्रुतिविरोधप्रसङ्गेन मोक्षतारतम्यं परित्यक्तमिति ॥ २० ॥

**एवमिति** । एवं **स्थितेऽपि ये मुह्यन्ति** मोक्षे तारतम्यं कल्पयन्ति, ते सहस्रशो बाधप्रदर्शनेऽपि स्वभावं न जहतीत्याह—**न खल्विति** । **बलिभुजः ;** काकाः । एवमसतां स्वभावमभिधाय सतां स्वभावं दर्शयति—**दुर्वादीति** । दुर्वादिनां गर्व एव सर्वस्वं, तन्निरासकैः **सर्वज्ञबुद्धिभिः** बोधायनबादरायणनाथादिभिर्वर्णितं मोक्षतारतम्याभावं **निर्विशन्ति** अनुभवन्ति । **श्लाघा ;** निर्णयसमर्पक-

[1] एवमपि ते मुह्यन्त्येव—ङ. छ. [2] पडिबोहिअम्हि—क. [3] एण्हिं—क. ग.
[4] णिज्जम्मि—क. [5] दाणिं—ख. [6] णित्त—क. ग. घ.

(नाथ, प्रतिसंस्थापितास्मीदानीं प्रमाणप्रणयपेशलेन युष्मद्भाषितेन प्रतिबुद्धजनसंभावनीये प्रमाणवृत्तान्तनिरीक्षणे । समाभ्यधिकदरिद्रं खलु तव माहात्म्यम् । इदानीं किल ;

कल्पारम्भप्रचण्डताण्डवकलाक्रीडत्कालान्तक-
क्षोभोद्वेलकपर्दसिन्धुलहरीधूयमानचन्द्रप्रभम् ।
एकैकाक्षरनिर्यन्निर्भरसुधासंदोहसंतोषिता
आम्रेडयन्ति भुजङ्गिकास्तव यशो वेलान्तशैलान्तरे ॥)

प्रभाविलासः

**क्रीडमानस्य कालान्तकस्य** शम्भोः **क्षोभेणोद्वेलायाः कपर्दसिन्धोः** जटाजूटगङ्गायाः **लहरीभिः** दूयमाना चन्द्रप्रभा यस्मिन् कर्मणि तत् । **एकैकाक्षरात्** गानेन **निर्यत्याः निर्भरसुधायाः संदोहेन संतोषिताः** ; गानमहिम्ना विषस्यैव सुधारूपेण परिणामात् सुधेत्युक्तिः । **भुजङ्गिकाः** ; सर्पस्त्रियः । **आम्रेडयन्ति** ; बहुधा गायन्तीत्यर्थः । अत्र गानस्य शम्भु-

प्रभावली

वचनात् । **पडिसंठाविअम्हि**—प्रतिसंस्थापितास्मि । **दाणिं**—इदानीम् । **पमाणपणअपेसलेण**—प्रमाणप्रणयपेशलेन ; प्रमाणानुगुणेनेत्यर्थः । **तुम्ह**—तव । **भासिएण**-भाषितेन । **पडिबुद्धजणसंभावणिज्जे**-प्रतिबुद्धजनसंभावनीये । **पमाणउत्तंदणिरिक्खणम्मि**-प्रमाणवृत्तान्तनिरीक्षणे ; प्रमाणप्राबल्यनिरूपण इत्यर्थः । **समब्भहिअदरिद्दं**-समाभ्यधिकदरिद्रम् । **खु**-खलु । **तुह**-तव । **माहप्पं**-माहात्म्यम् । **एण्हिं किल**-इदानीं किल । तव कीर्तिर्जगत्प्रसिद्धेत्याह—**कप्पारंभेति** । **कप्पारंभपअंडतंडवकला**-कल्पारम्भप्रचण्डताण्डवकला ; प्रलयकाले उद्धतनृत्तक्रिया । **कीलंतकालंतअ**-क्रीडत्कालान्तक । कालान्तको रुद्रः तस्य । **क्खोहुव्वेल**-क्षोभोद्वेल । नृत्तक्षोभेणोद्वेलः । **कवद्दसिंधु**-कपर्दसिन्धु । कपर्दे स्थिता गङ्गा, तस्याः । **लहरीधूअंतचंदप्पहं**-लहरीधूयमानचन्द्रप्रभम् । धूयमानः कम्पमानः । चन्द्रसदृशधवलम् । **तुह जसं**-तव यशः । **एक्कक्कक्खर**-एकैकाक्षरेभ्यः । **णिज्ज**-

(विद्यामाहात्म्यमनुचिन्त्य सहर्षरोमाञ्चम्[1])

**जंभाअंतदइच्चमद्दणदआसोल्लोअसोत्तस्सिणी-**
**वीईसीअलसाहुसुद्धसुहआ[2] सोहंति विज्जा इमा ।**
**जाणं किं वि भवग्गिदाविअजणो घेत्तूण चिंताणिअं**
**मुत्तिं पेक्खइ हत्थमज्झणिहिअं मोहम्मि संते चिअ[3] ॥ २२ ॥**

(जृम्भमाणदैत्यमर्दनदयास्वर्लोकस्रोतस्विनी-
वीचीशीतलसाधुशुद्धसुभगाः शोभन्ते विद्या इमाः ।
यासां किमपि भवाग्नितापितजनो गृहीत्वा चिन्तानीतां
मुक्तिं प्रेक्षते हस्तमध्यनिहितां मोहे सत्येव ॥)

**प्रभाविलासः**

नाख्यनिमित्तत्वासंबन्धेऽपि संबन्धस्य कविप्रौढोक्तिकल्पनादतिशयोक्तिरलंकारः । तेन यशसो निरतिशयत्वं प्रतीयत इत्यलंकारेण वस्तुध्वनिः । वेलान्तपदेन यशस आचक्रवालव्यापित्वं कालान्तकसिन्धुचन्द्रपदैः शिवादितुल्यधावल्यं च व्यज्यते ॥ २१ ॥[4]

**प्रभावली**

**णिब्भरसुहा**-निर्यन्निर्भरसुधा, निर्गच्छत्परिपूर्णामृतम् । तस्याः; **संदोहसंतोसिआ**-संदोहसंतोषिताः, प्रवाहेण तुष्टाः । **भुअङ्गिआ**-भुजङ्गिकाः भुजङ्गकन्याः । **वेलंतसेलंतरे**-वेलान्तशैलान्तरे ; समुद्रतीरशैलाभ्यन्तरेषु । **आमेल्लंदि**-आम्रेडयन्ति, बहुशो गायन्तीत्यर्थः । शार्दूलविक्रीडितं वृत्तम् ॥ २१ ॥

अथ विद्यानां माहात्म्यमनुसंस्मृत्य । **जंभाअंत**-जृम्भमाण । **दइच्चमद्दणदआ**-दैत्यमर्दनदया । **सोल्लोअसोत्तस्सिणी**-स्वर्लोकस्रोतस्विनी आकाशगङ्गा, तस्याः । **वीईसीअल**—वीचिवच्छीतल । **साहुसुद्धसुहआ**-साधुशुद्धसुभगाः, भृशं शुद्धाः सुभगाश्च । **सोहंति**-शोभन्ते । **विज्जा इमा**-विद्या इमाः, सद्विद्यादयः । **जाणं**-यासां मध्ये । **किं वि**-किमपि किंचित् । **भवग्गिदाविअजणो**-

[1] रोमाञ्चं omitted—क. [2] सुद्धसाहुसुहआ—क. [3] संतेचिअ—घ. ङ; संतेविअ—क.
[4] द्वाविंशस्य श्लोकस्य प्रभाविलासव्याख्या नास्ति.

**विवेकः**—किमुच्यते ? अवरोपितप्रायः खलु पुरुषस्य चिन्ताभारः । अपिचास्य संसारदोषदर्शनसातत्यसमुत्थितादपि परब्रह्मदिदृक्षासंरम्भजृम्भितं [1]वैराग्यमुपधानीभवति । तथाहि —

**निषिद्धं विद्यार्थादधिकमपि काम्यं च विजहत्**
**परप्रीत्यै कर्म प्रतिनियतमादाय मुदितः ।**

**प्रभाविलासः**

**सातत्यसमुत्थितादपि ;** वैराग्यादिति शेषः । **उपधानम् ;** उपबर्हः । **निषिद्धमिति । निषिद्धम् ;** "न राज्ञः प्रतिगृह्णीयात्" "न विरुद्धप्रसङ्गेन" इत्यादिशास्त्रनिषिद्धम् । **विद्यार्थादधिकम् ;**

"कामस्य नेन्द्रियप्रीतिर्लाभो जीवेत यावता ।"
"शरीरयात्रापि च ते न प्रसिध्येदकर्मणः ॥"

**प्रभावली**

भवाग्नितापितजनः । **घेत्तूण**-गृहीत्वा । **चिंताणिअं मुत्तिं पेक्खइ**-चिन्तानीतां चिन्तयोपनीतां मुक्तिं प्रेक्षते । कथं प्रेक्षत इत्यत्राह—**हत्थमज्झणिहिअं मुत्तिं पेक्खइ**-हस्तमध्यनिहितां करतलगतामिव मुक्तिं मन्यत इत्यर्थः । तच्च कदेत्यत्राह—**मोहम्मि संते च्चिअ**-मोहे सत्येव । मोहकरे देहेऽस्मिन् सत्येव । **संते**-सति । **च्चिअ**-एव इति पदच्छेदः ॥ २२ ॥

**अवरोपितप्रायः ;** अपनीतसदृशः । चिन्तैव भारः । किंचास्य संसारदोषदर्शनजनितवैराग्यादपि परब्रह्मदिदृक्षया जनितं वैराग्यमवलम्बनं भवतीत्याह—**अपिचेत्यादि । संरम्भः ;** कुतूहलम् । इदं तु परमवैराग्यमित्युच्यते । **उपधानम् ;** उपकारकम् । एतदेवोपपादयति—**तथाहीत्यादि । निषिद्धम् ;** अकृत्यम् । विद्यार्थादधिकम् इतरत् काम्यं च कर्म विजहत् । **प्रतिनियतं कर्म**

[1] वैराग्यमिदानीमुपधानीभवति—क, परमवैराग्यम्—ख, ग, (अत्रेदमवधेयम् ; विषयवैराग्यं द्विधा—विषयदोषदर्शनजं परब्रह्मदिदृक्षात्वराजं चेति । अत एव स्मर्यते—"परमात्मनि यो रक्तो विरक्तोऽपरमात्मनि" इति । परमात्मरागः अपरमात्मविरागं जनयतीति तदाशयः । तत्र पूर्वं कैवल्ये, उत्तरं तु मोक्षे प्रकृष्टोपकारकं भवतीति ।)

**शुभश्रद्धादुग्धोदधिनवसुधोल्लासललिते**
**समाधावाधातुं त्वरयति [1]मुनिः संप्रति मनः ॥ २३ ॥**

अपिच—

**विलक्षोपक्षिप्तं विषयरसगन्धर्वनगर-**
**प्रशंसायाथार्थ्यं[2] प्रणिदधति चित्तेऽपि तनुभृत् ।**
**मया दत्ते हस्ते मतिकलुषमुल्लङ्घ्य तरसा**
**परब्रह्मैकान्ती भवजलनिधिं गोष्पदयति ॥ २४ ॥**

प्रभाविलासः

इत्याद्युक्तविद्योपयोगिदेहधारणातिरिक्तं काम्यं च । **प्रतिनियतम्**; नित्य-नैमित्तिकं कर्म । **परप्रीत्यै**; "मत्कर्मकृन्मत्परमः" इत्युक्तत्वात् । **मुदित** इति; "संतोषी च भवेत्" इति स्मारितम् । **शुभे** शुभाश्रये श्रद्धा ॥२३॥

**विलक्षेति** । **विलक्षैरुपक्षिप्तमपि** संसारिभिः श्रावितमपि । **चित्ते प्रणिदधति** ध्यायत्यपीति सति सप्तमी । वासनानां झटित्यनिवृत्तेरिति

**प्रभावली**

नित्यं नैमित्तिकं च **परमात्मप्रीत्यै** स्वीकृत्य कैंकर्यरूपेण करणान्मुदितः । एव-मङ्गानुष्ठानवानयं पुरुषः; **शुभं** शुभाश्रयं, तस्मिन् **श्रद्धा** प्रेमरूपा भक्तिः, सैव **दुग्धोदधिः**, तस्य नवसुधाया उल्लासवल्लुलिते समाधौ निरन्तरध्याने **मुनिः** मननशीलः मन आधातुं त्वरयति; मनः प्रेरयतीत्यर्थः । अयमप्यपरो धीविशेषो जात इत्यर्थः ॥ २३ ॥

पुनरपि विशेषान्तरमाह—**अपिचेति** । **तनुभृत् चित्ते** मनसि; सति-सप्तमी । **विषयरसः** शब्दाद्यनुभवः, स एव **गन्धर्वनगरं** भ्रान्त्या कल्पितम्, तस्य प्रशंसा, तस्या याथार्थ्यं, **विलक्षोपक्षिप्तं** विलक्षा लज्जा तत्समन्वितं यथा तथा उपन्यस्तं **प्रणिदधति** सावधानमनुसंदधति सति; विषयरसप्रशंसा-

[1] मनः संप्रति मुनिः—ग. घ. ङ. च.   [2] यथात्म्यं—ङ. च. छ.

**सुमतिः**—(सविमर्शम्) तह वि पिआमहप्पमुहे [1]महा-जोइजणे [2]वासणादाविअविसअरसबलिसमोहिए णिसाअरग्गहण-कोदूहलप्पसारिअकरस्स बालिसस्सेव्व [3]कहं उण कस्स वि मोक्खो होज्जत्ति विअलिआसंसं[4] वीलिअं विअ मह माणसं ।

**प्रभाविलासः**

भावः । तर्हि वासनानिवृत्तिः कथमित्यत्राह—**मयेति** । विवेकमहिम्नैव वासनानामपि क्रमेण शैथिल्यं भविष्यतीति भावः ॥ २४ ॥

**बडिशेति** ।

"जिह्वयातिप्रमाथिन्या जनो रसविमोहितः ।
मृत्युमृच्छत्यसद्बुद्धिर्मीनस्तु बडिशैर्यथा ॥"

**प्रभावली**

याथार्थ्यं गन्धर्वनगरप्रशंसायाथार्थ्यवदित्यनुसंदधति सतीत्यर्थः । **मया हस्ते दत्ते** ; विवेकसहाये च सति । **मतिकलुषम्** ; अणिमादियोगसिद्धिम् । **उल्लङ्घ्य** ; अविचार्य, अवधीर्येत्यर्थः । **परब्रह्मैकान्ती** ; परब्रह्मानुभवैकप्रयोजनः सन् सहसा भवसागरं गोष्पदयति ॥ २४ ॥

**सविमर्शम्** ; चिन्तान्तरोदयात् । **तह वि**-तथापि । **पिआमहप्पमुहे**-पितामहप्रमुखे । **महाजोइजणे**-महायोगिजने । **वासणादाविअ**-वासनादापित । **विसअरसबलिसमोहिए**-विषयरसबडिशमोहिते । बडिशं मत्स्यवेधनम् । ब्रह्मादिष्वेव मोहितेषु सत्सु । **णिसाअरग्गहण**-निशाकरग्रहणे । **कोदूहलप्पसारिअकरस्स**-कौतूहलप्रसारितकरस्य । **बालिसस्सेव्व**-बालिशस्येव । **कहं उण**-कथं पुनः । **कस्स वि**-कस्यापि । **मोक्खो**-मोक्षः । **होज्जत्ति**—भविष्यतीति । **विअलिआसंसं**-विगलिताशंसम् । **वीलिअं विअ**-व्रीडितमिव । **मह माणसं**-मम मानसम् ।

[1] महा omitted—घ. ङ.
[2] वासणादंसिअ—क. घ. ङ. च.
[3] किह—घ.
[4] आसासं—क. ख ; आसंगं—च. छ.

(तथापि पितामहप्रमुखे महायोगिजने वासनादापितविषयरस-बडिशमोहिते निशाकरग्रहणकौतूहलप्रसारितकरस्य बालिशस्येव कथं पुनः कस्यापि मोक्षो भवेदिति विगलिताशंसं व्रीडितमिव मे मानसम् ।)

**विवेकः**—अयि भीरु, अवधारितपरमार्थापि किंपचान[1]मान-सेव किं पुनर[2]प्यतिशङ्कसे? शृणुष्व चैतत्—

**विषमधु बहिष्कुर्वन्धीरो बहिर्विषयात्मकं**
**परिमितरसस्वात्मप्राप्तिप्रयासपराङ्मुखः ।**
**निरवधिमहानन्दब्रह्मानुभूतिकुतूहली**
**जगति भविता [3]दैवात्कश्चिज्जिहासितसंसृतिः ॥ २५ ॥**

**प्रभाविलासः**

इत्यवधूतवचनं स्मारितम् । **आसङ्गः**; आश्वासः । **विषेति** । अनिष्टो-दर्कसुखं विषमध्वित्युच्यते । तेनाब्रह्मभवनं हेयमित्युक्तम् । कैवल्यविशेष-माह—**परिमितेति**; पुनर्दुःखोदर्कमिति भावः ॥ २५ ॥

**प्रभावली**

**किंपचानमानसेव**; दुर्मनस्केव । **अतिशङ्कसे**; अस्थाने शङ्कस इत्यर्थः । ब्रह्मादिषु तथाभूतेष्वपि दैवात् कस्यचित् परब्रह्मैकान्तित्वं संभवतीत्याह—**विषमध्विति** । इह **जगति** दैवात् कश्चित् जिहासितसंसृतिर्भवति । कथ-मित्यत्राह—**धीरः** सन् शब्दादिविषयात्मकं **विषमधु** विषसंपृक्तमधु **बहिष्कुर्वन्** परित्यजन् । शब्दादिविषयपरित्यागेऽपि स्वात्मानुभवमात्राकाङ्क्षी भवेदित्यत्राह—**परिमितरसेति** । **परिमितरसः**; परब्रह्मानुभवापेक्षया । अयमपि परित्यागहेतुः । स चासौ **स्वात्मप्राप्तिः** स्वात्मानुभवः, तद्विषयप्रयासे तत्साधनयत्ने पराङ्मुखः । अपिच निरतिशयानन्दब्रह्मानुभवे निरतिशयप्रीतिमान् भवति ॥ २५ ॥

[1] किंपचानेत्यत्र किंपूर्वात् पचेः औणादिकः आनच् । अतो न मुक् इति बोध्यम् ।
[2] अपि omitted—क.
[3] कश्चिद्दैवात्—ख.

निःसंशयः खलु पटुभिरपि विटपमारोहद्भिरप्राप्तानां पचेलिमानां फलानामयतमानस्यापि सुकृतपरिपाकेन पान्थजनस्य पुरतः परिपातः । अपिच—

**विवित्सति यदि स्वयं किमपि सूरिसेव्यं पदं**
**कृतस्य यदि निष्कृतिर्यदि करिष्यते नाहितम् ।**
**निसर्गसुहृदीश्वरो यदि [1]च [2]रक्ष्यमन्वीक्षते**
**किमत्र परमुच्यते किमिति नात्मविन्मुच्यते ॥ २६ ॥**

**सुमतिः**—णाह, जइ एव्वं तुए दिण्णहत्थो संसारसाअरं

**प्रभाविलासः**

**विवित्सतीति । विवित्सति**; लब्धुमिच्छति । **कृतस्य**; पापस्य । **निष्कृतिः**; प्रायश्चित्तम् । **रक्ष्यम्**; रक्षाविषयम् ॥ २६ ॥

**प्रभावली**

ब्रह्मादिष्वलब्धस्याधुनिकेषु संभवे दृष्टान्तमाह—**निःसंशयः खल्विति । पटूनां** विटपाप्रारोहणसमर्थानाम् अलभ्यं चूतफलं पान्थस्यायतमानस्यापि पुरतः स्वयमेव गलितं पततीति लोकदृष्टम्, तद्वत् । किंच कथमस्य मोक्षाप्राप्तिः ? सामग्र्यां सत्यां कार्योत्पत्तिरवश्यंभाविनी । यत्र कार्यानुदयस्तत्र सामग्रीवैकल्यमप्यूह्यमित्याशयेनाह—**विवित्सतीति** । मोक्षेच्छा यदि, कृतस्य पापस्य यदि प्रायश्चित्तिः, उत्तरत्र पापाकरणं च यदि ; श्रीपतेर्दया च मोक्षसामग्री, तस्यां च सत्यां कथं प्राप्त्यभाव इत्यर्थः । **विवित्सति** ; लब्धुमिच्छति । **रक्ष्यम्** ; स्वरक्षणविषयम् । **किमत्र परमुच्यते** ; अत्र किं बहूच्यते । **आत्मवित्** ; परापरतत्त्ववेदी **किमिति न मुच्यते** ? मुच्यत एवेत्यर्थः ॥ २६ ॥

त्वया दत्तहस्तस्य पुंसः यद्यवश्यं मुक्तिर्भवित्री कथमयं संतोष्टव्ये ससाध्वसो दृश्यत इति चोदयति—**जइ एव्वं इति । जइ एव्वं**-यद्येवम् ; यदि सामग्र्यां सत्यामवश्यं मुक्तिप्राप्तिः । तुए-त्वया । **दिण्णहत्थो**-दत्तहस्तः ।

[1] यदिह—ख. ग. [2] लक्षम्—ग. घ. च. छ.

अइलंघेइ पुरिसो, ता कहं दवदहणपज्जलिअ[1]पस्सजुअलदारूअरग-ओव्व कीडो, सारमेअगणपरिगओव्व सारंगो, समीरणंदोलणडोला-अंतपोओदरगओव्व संजत्तिअसत्थो, महप्पवाहमज्झणिरोहसंभंत-णअणोव्व जंबुओ, विसहरपरिगहिअघरघोलंतहिअओव्व कुडुंबि-अणो, विअडअरभंगसंभमसंक्खुहिअगंगाअडवेपंतसंहणणोव्व साहि-मण्डलो, राहवसरणिअरक्खोहिअरअणाअरमज्झठिओव्व मच्चसंघा-ओ, सद्धसगहिओ होइ ?

(नाथ, यद्येवं त्वया दत्तहस्तः संसारसागरमतिलङ्घते पुरुषः, तत्कथं दवदहनप्रज्वलितपार्श्वयुगलदारूदरगत इव कीटः; सारमेयगणपरिगत इव सारङ्गः, समीरणान्दोलनडोलायमानपोतोदर-

## प्रभाविलासः

**सारमेयः**; श्वा। **सारङ्गः**; हरिणः। **पोतः**; यानपात्रम्।

## प्रभावली

**संसारसाअरं**-संसारसागरम्। **अइलंघेइ**-अतिलङ्घते। **पुरिसो**-पुरुषः। **ता**-तत्। **कहं**-कथम्। **दवदहणपज्जलिअ**-दवदहनप्रज्वलित। **पस्सजुअल**-पार्श्वयुगल। **दारूअरगओव्व**-दारूदरगत इव। **कीडो**-कीटः; पिपीलिकादिः। ज्वलितोभयपार्श्वकाष्ठगतः कीटः ससाध्वसो भवति। **सारमेअगणपरिगओव्व**-सारमेयगणपरिगत इव। **सारंगो**-सारङ्गः; हरिणः। **समीरणंदोलण**-समीरणा-न्दोलन। **डोलाअंत**-डोलायमान। **पोओदरगओव्व**-पोतोदरगत इव। **संजत्तिअ-सत्थो**-सांयात्रिकसार्थः। पोतो यानपात्रम्; तन्मध्यगतः सांयात्रिकसार्थः पोत-वणिक्समूहः। **महप्पवाह**-महाप्रवाह। **मज्झणिरोह**-मध्यनिरोध। **संभंतणअ-णोव्व**-संभ्रान्तनयन इव। **जंबुओ**-जम्बुकः। **विसहरपरिगहिअ**-विषधरपरि-गृहीत। **घरघोलंत**-गृहघूर्णमान। **हिअओव्व**-हृदय इव। **कुडुंबिअणो**-कुटुम्बि-जनः। विषधरः सर्पः, तत्परिगृहीतगृहे घूर्णमानहृदय इव कुटुम्बिजनः।

[1] पास—ङ.

गत इव सांयात्रिकसार्थः, महाप्रवाहमध्यनिरोधसंभ्रान्तनयन इव जम्बुकः; विषधरपरिगृहीतगृहघूर्णमानहृदय इव कुटुम्बिजनः; विकटतरभङ्गसंभ्रमसंक्षुभितगङ्गातटवेपमानसंहनन इव शाखिमण्डलः, राघवशरनिकरक्षोभितरत्नाकरमध्यस्थित इव मत्स्यसंघातः, साध्वसगृहीतो भवति ?)

**विवेकः**—भद्रे, पाण्डित्यमपि निर्विद्य [1]बाल्येन तिष्ठासिसि, यन्मोक्ष्यमाणमपि मुक्तमिवाभिमन्यसे। पश्य पश्य—

**वर्णितगुणप्रकर्षा वर्णाश्रमनियमदेशकालमुखाः।**
**अनवहितमानसानां भवन्ति नित्यं भयोदयस्थानम् ॥ २७ ॥**

प्रभाविलासः

**सांयात्रिकसार्थः**; पोतवणिक्समूहः। **संहननम्**; गात्रम्। **शाखिमण्डलः**; वृक्षसमूहः। **पाण्डित्यमिति**; "तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत्" इति श्रुतिरभिप्रेता। **वर्णितेति**। "तस्माद्ब्राह्मणेभ्यो वेद-

**प्रभावली**

**विअडअरभंगसंभमसंक्खुहिअ**-विकटतरभङ्गसंभ्रमसंक्षुभित। **गंगाअडवेवंत**-गङ्गातटवेपमान। **संहणणोव्व**-संहनन इव। **साहिमंडलो**-शाखिमण्डलः। वेपमानं कम्पमानम्। संहननं गात्रम्। **राहवसरणिअरक्खोहिअ**-राघवशरनिकरक्षोभित। **रअणाअरमज्झठिओव्व**-रत्नाकरमध्यस्थित इव। **मच्छसंघाओ**-मत्स्यसंघातः। **सद्धसगहिओ होइ**-साध्वसगृहीतो भवति। एभिर्दृष्टान्तवचनैः परकालसहस्रगाथाप्रबन्धान्तिमदशकप्रतिपादिता अवस्था उक्ता इति विवेकः। **पाण्डित्येत्यादि**। "पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत्" इत्युपनिषदर्थमनुतिष्ठसि। कथं मोक्ष्यमाणस्य पुंसः प्रामादिकाकृत्यकरणादिसंभवनिमित्तभयं भवतीति जानत्यप्यजानतीव भाषस इत्यर्थः। अभिप्रेतमर्थमाह—**वर्णितेति**। **वर्णितगुणप्रकर्षाः**; अवहितपुरुषविषये वर्णिता गुणप्रकर्षा येषां ते। गुणो

[1] बाल्येनैव वर्तसे—च.

अन्येषु विशेषमवबोधयामि[1]—

**भयाभयस्थानविशेषवेदिनः प्रमादमुक्तस्य परीक्ष्यकारिणः ।**
**परानुभूतिप्रतिबन्धशङ्कया भयानुबन्धोऽप्यभयाय कल्पते ॥२८॥**

**प्रभाविलासः**

विद्धयो दिवे दिवे नमस्कुर्यात" "तेषां पूर्वः पूर्वो जन्मतः श्रेयान्" इत्यादिना गुणप्रकर्षो वर्णस्य वर्णितः । "काषायदण्डमात्रेण यतिः पूज्यो न संशयः" "सर्वाश्रमनमस्कृतम्" इत्यादिनाश्रमस्य । "तस्माद्वाजपेययाजी न कश्चन प्रत्यवरोहति" इत्यादिना नियमस्य । "सितासिते सरिते यत्र संगथे तत्राप्लुतासो दिवमुत्पतन्ति" इत्यादिना देशस्य । "एकादश्युपवासस्य कलां नार्हन्ति षोडशीम्" इत्यादिना कालस्य । आदिपदेन कृष्णकेशत्वाद्यवान्तरावस्थाविशेषाः । अनवधाने गुणप्रकर्ष एव दोषप्रकर्षहेतुतया भयनिमित्तं भवतीत्यर्थः ; "सुरा पेया न च द्विजैः" "कदापि युवतिं भिक्षुर्न स्पृशेद्दारवीमपि" "तस्मादाहिताग्निर्नानृतं वदेत्" "एकादश्यां न भुञ्जीत" इति शास्त्रात् ॥ २७ ॥

एवमनवहितानामभयनिमित्तानामपि भयनिमित्तत्वमुक्त्वा सावधानानां भयनिमित्तमप्यभयाय भवतीत्याह—**भयाभयेति** । **परानुभूतिः ;**

**प्रभावली**

मुक्तिहेतुत्वम् ; तस्य प्रकर्षः प्रशस्तत्वम् । "स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः" इत्यादिवचनेन प्रशंसितगुणोत्कर्षाः । वर्णः ब्राह्मणत्वादिः, आश्रमः ब्रह्मचर्यादिः, तयोर्नियमाः धर्माः, देशः श्रीरङ्गादिः, काल उत्तरायणादिः, मुखशब्देन देहादिकं विवक्षितम् । उक्ता एते **अनवहितमानसानाम्** ; अनवधानयुक्तमनसां प्रमादवतां, कर्मसु भगवदाराधनत्वबुद्धिविधुराणाम् । भयस्योत्पत्तिस्थानं भयजनकं भवति । भयं प्रमादप्रयुक्तं भागवतापचारादिप्रयुक्तं चेति भावः ॥२७॥

उक्तमेवार्थं व्यतिरेकमुखेनापि द्रढयति—**अन्येष्विति** । विशेषं दर्शयति—**भयाभयेति** । भयस्थानं काम्यं कर्म । अभयस्थानं नित्यकर्मादि । तयोर्विशेषं

[1] **अव** omitted—ङ. छ.

आ मोक्षाच्च न खलु विदुषोऽपि निरनुबन्धा भीतिरिति नभःप्रसूनसौरभास्वादः । [1]यतः ;

**दिग्देशकालकरणाकरणादिरूपे**
**देहादिके च[2] हितसाधनभावयोग्ये ।**
**दुष्कर्मपङ्क्ति[3]मनुचिन्तयतो विचित्रां**
**किं तद्यदस्य पुरुषस्य न भीतिहेतुः ॥ २९ ॥**

**प्रभाविलासः**

परब्रह्मानुभवः । तत्र प्रतिबन्धो भवतीति शङ्कया ॥ २८ ॥

"कालेष्वपि च सर्वेषु दिक्षु सर्वासु चाच्युत ।
शरीरे च गतौ चापि वर्तते मे महद्भयम्" ॥

इत्यादि प्रमाणमभिप्रयन्नाह—**दिगिति** । करणाकरणपदेन विहितकरणा-विहिताकरणे । आदिपदेन गतिरुक्ता । अनेन कुदृष्टिकल्पितजीवन्मुक्ति-र्निरस्ता ॥ २९ ॥

**प्रभावली**

जानतः । **परानुभूतिप्रतिबन्धशङ्कया परीक्ष्यकारिणः**; आलोच्य नित्यनैमित्ति-कमात्रानुष्ठायिनः कर्मसु भगवदाराधनत्वबुद्धिमतः । तस्य **भयानुबन्धोऽपि** प्रमाद्यतो भयहेतुरपि अप्रमाद्यतोऽस्य मोक्षाय कल्पते ॥ २८ ॥

उक्तमेवार्थं शङ्कामुखेनाक्षिप्य समाधत्ते—**आ मोक्षादिति** । **विदुषोऽपि निरनुबन्धा भीतिः**; निष्कारणा भीतिः । कारणाभावात् भीतिहेतुः प्रमादो न भवतीति योऽयमर्थः, सः **नभःप्रसूनसौरभास्वादः**; खपुष्पसौरभाघ्राणवदत्यन्ता-संगतः, दुष्कर्मणोऽपि विद्यमानत्वादिति भावः । तदेव दर्शयति—**दिगिति** । **विचित्रां दुष्कर्मपङ्क्तिमनुचिन्तयतोऽस्य** पुरुषस्य नित्यकर्मकरणतया काम्य-कर्माकरणतया च **हितसाधनभावयोग्ये** हितस्य मोक्षस्य साधनतायोग्ये; अवहि-तानां मोक्षसाधनभूतेऽपीत्यर्थः । **दिग्देशकाले देहादिके च**; आदिशब्देन

[1] यत्र च—क. [2] अस्य—क. ख. [3] पङ्क्ति—क. ख.

**सुमतिः**—णाह, एव्वं किल सव्वं वि जइ भअट्ठाणं, ता कहं णिब्भअणिप्पाअणिज्जं पणिहाणं संपज्जइ ?

(नाथ, एवं किल सर्वमपि यदि भयस्थानं, तत्कथं निर्भय-निष्पादनीयं प्रणिधानं संपद्यते ?)

**विवेकः**—भद्रे, सम्यगनुयुक्तं भवत्या। अस्ति [1]खलु सूक्ष्मं किंचित्। तदपि प्रतिपन्नमेव[2] त्वां [3]प्रतिबोधयामि। प्रति-संधीयतामिदं तावत्।

**सुमतिः**—आणवेदु अय्यउत्तो।

(आज्ञापयतु आर्यपुत्रः)

**प्रभाविलासः**

आब्रह्मप्राप्ति भयानुवृत्तावपि समाधिनिष्पत्तेरप्रत्यूहत्वं भगवत्कृपयैव

**प्रभावली**

गत्यादिर्गृह्यते; "शरीरे च गतौ चापि" इत्युक्तेः। अस्य पुरुषस्य **भीतिहेतुर्यन्न भवति, तत्किम्**; न किमपीत्यर्थः। विचित्रदुष्कर्मवशात् किमत्र विनिपात-हेतुर्भवेदिति प्रमादात् भीतिश्च यावच्छरीरं संभवत्येवेत्यर्थः ॥ २९ ॥

**एव्वं किल**-एवं किल। **सव्वं**—सर्वम्। **वि**-अपि। **जइ**-यदि। **भअट्ठाणं**-भयस्थानम्। **ता**-तत्। **कहं**-कथम्। **णिब्भअणिप्पाअणिज्जं**-निर्भयनिष्पाद-नीयम्। **पणिहाणं**-प्रणिधानम्। **संपज्जइ**-संपद्यते। **अनुयुक्तम्**; पृष्टम्। **प्रतिप-न्नमेव**; युक्तमेव। **प्रतिसंधीयताम्**; श्रूयताम्। **आणवेदु**-अज्ञापयतु। **अय्य-उत्तो**-आर्यपुत्रः। स्वर्गार्थं विद्यार्थं चेति कर्मणामनुष्ठानं द्विविधम्। तत्र स्वर्गार्थिकर्मानुष्ठानस्य क्षयिफलत्वेन तदनुष्ठातुर्भयसद्भावात् प्रणिधानं न संपद्यत इति त्वदुक्तमभ्युपगम्यत इत्येतद्वक्तुमिमर्थं तावदवधेहीत्याह—**प्रतिसंधीयता-**

[1] तु—ग. घ. ख. छ. [2] प्रतिपन्नामेव—ख. ग.

[3] प्रति omitted—ग. ख.

विवेकः—

**प्रवृद्धमतिकश्मलप्रलयपावकप्रक्रियां**
**विमुच्य भगवत्कृपां वृजिनसिन्धुकुक्षिंभरीम्।**
**कदध्वपरिवृत्तिभिर्यदिह कर्म निर्मीयते**
**तदस्तु लवणाकरे लवणसेतुराधित्सितः ॥ ३० ॥**

किंच यः पुनरनन्यभावेन भगवदनुकम्पामवलम्बते तस्य तु तत्तादृशीं सिद्धिमवधारय[1]।

**विविक्तनिखिलस्थितिर्विषयवृत्तिनिर्वेदवान्**
**विरक्तिपरिरम्भणग्लपितसर्वदुर्वासनः।**

प्रभाविलासः

सेत्स्यतीति वदन् प्रथमं तामन्तरेणासिद्धिमाह—**प्रवृद्धेति**। **मतिकश्मलम्**; मतिमोहः। **कदध्वपरिवृत्तिभिः**; अमार्गव्यापारैः; सूक्ष्मोपायानभिज्ञैः। **लवणाकर इति**। लवणाकरे लवणसेतुवदकिंचित्कर इति भावः ॥ ३० ॥

**विविक्तेति**। **विविक्ताः** पवित्राः निखिलाः स्थितयो यस्य सः।

**प्रभावली**

मिति। **प्रवृद्धेति**। **प्रवृद्धं यन्मतिकश्मलं मोहः** संसारः, तस्य कालाग्निकल्पां पापसिन्धोः **कुक्षिंभरीं भगवत्कृपां विमुच्य** अनवलम्ब्य **कदध्वपरिवृत्तिभिः**, कदध्वा निरीश्वरमीमांसकमतम्, तत्र परिवृत्तिः परिशीलनं येषां तैः। स्वर्गाद्यर्थं यत्कर्मानुष्ठीयते तत्कर्म सागराहितलवणसेतुवत् स्वयमेव नश्यतीति भावः। लवणसेतुरस्तु; संभावनायां लोट् ॥ ३० ॥

विद्यार्थं कर्मानुष्ठातुरङ्गानां प्रधानफलेनैव फलवत्त्वनियमात् भगवत्प्रसादहेतुत्वेनाभयहेतुत्वे निर्भयनिष्पादनीयं प्रणिधानं संपद्यत इत्याह—**किंचेति**। **यः पुनरित्यादि**। **अनन्यभावेन**; इदमेव प्रधानं साधनं नान्यदिति भावेन। **तत्तादृशीं सिद्धिम्**; प्रणिधानरूपां निश्चिनु। विद्यार्थं कर्मानुष्ठातुः समाधिसिद्धिहेतुभूतविविक्तदेशसेवित्वादिसंभवात् समाधिसिद्धिरुपपद्यत इत्याह—**विविक्तेति**।

[1] अवधारयामि—क.

**निवृत्तिपथजाङ्घिको निभृतचित्तवृत्तिः परं**[1]
**प्रपद्य मुरभित्पदं भयमतीत्य संसिध्यति ॥ ३१ ॥**

**सुमतिः**—जुत्तं एदं । तह वि पच्चक्खिअपरमत्थं तुमं एव्व पडिपुच्छम्मि-णिम्मलगुरुसआसणिद्धारिअणिअमंतहिअआणं, णि-[2]ट्टाविअणिहिलपडिपक्खाणं, [3]णिस्सेसपसमिअणिज्जरघरवासरसवासणाणं, अणालक्खिअदोसगंधमंगलेक्कताणमहुमहणचलणसेवामहा-

## प्रभाविलासः

"विविक्तौ पूतविजनौ" इत्यमरः । अत्र **विरक्तिपरिरम्भणेति** शृङ्गाररसो व्यज्यत इति पदव्यङ्ग्यम् ॥ ३१ ॥

## प्रभावली

**विविक्ता** निखिला **स्थितिर्यस्य** । शब्दादिविषयवृत्तौ **निर्वेदवान्** । वैराग्यक्षपितैहिकामुष्मिकभोगवासनः । **निवृत्तिपथजाङ्घिकः** ; प्राप्यविषयत्वरावान् मुमुक्षुः । **निभृतचित्तवृत्तिः** ; एकाग्रचित्तः । **परम्** ; प्रशस्तम् । अनेन भक्त्यादेर्मुख्योपायत्वं निवर्तयति । **मुरभित्पदं प्रपद्य** ; श्रीपतिपदद्वन्द्वमुपायं बुद्ध्वेत्यर्थः । **भयमतीत्य** ; पुनरावृत्तिभयरहितो भूत्वा । **संसिध्यति** ; समाधिस्थितो भवतीत्यर्थः ॥ ३१ ॥

**जुत्तं एदं**—युक्तमेतत् । **तह वि**-तथापि । **पच्चक्खिअपरमत्थं**—प्रत्यक्षितपरमार्थम् । **तुमं एव्व**-त्वामेव । **पडिपुच्छम्मि**—परिपृच्छामि । **णिम्मलगुरुसआस**—निर्मलगुरुसकाश । **णिद्धारिअणिअमंत**—निर्धारितनिगमान्त । **हिअआणं**·हृदयानाम् । **णिट्ठाविअणिहिलपडिपक्खाणं**—निष्ठापितनिखिलप्रतिपक्षाणाम् । निष्ठापितो नाशं प्रापितः । "निष्ठानिष्पत्तिनाशान्ताः" इति निघण्टुः । **णिस्सेसपसमिअणिज्जरघरवासरसवासणाणं**—निःशेषप्रशमितनिर्जरगृहवासरसवासनानाम् । रसो रागः । **अणालक्खिअदोसगंध**-अनालक्षितदोषगन्ध ।

[1] स्वयं—क. [2] णिट्ठाविअ इति प्रभावलीपाठः [3] णीसेस—ङ. छ

णंद[1]लाहलंबडाणं,[2] अप्पमादपरिगहिअणिवुत्तिधम्माणं, असंभाविअ-पच्चूहाणं वि महापुरिसाणं केण उण विणिवाएण मोक्खोवाओ सिग्घं ण संपज्जइ ?

(युक्तमेतत् । तथापि प्रत्यक्षितपरमार्थं त्वामेव परि-पृच्छामि—निर्मलगुरुसकाशनिर्धारितनिगमान्तहृदयानां, निष्ठापित-निखिलप्रतिपक्षाणां, निःशेषप्रशमितनिर्जरगृहवासरसवासनानाम्, अनालक्षितदोषगन्धमङ्गलैकतानमधुमथनचरणसेवामहानन्दलाभलम्प-टानाम्, अप्रमादपरिगृहीतनिवृत्तिधर्माणाम्, असंभावितप्रत्यूहाना-मपि महापुरुषाणां केन पुनर्विनिपातेन मोक्षोपायः शीघ्रं न संपद्यते ?)

**विवेकः**—प्रिये, इदमपि ते महामतिभिरवधारणीयमति-[3]गहनमभिदधामि, यत्तत् [4]सनकसनन्दनसनत्कुमारनारदशाण्डिल्य-प्रभृतयः परमैकान्तिनः प्रतिपादयन्ति । आकर्ण्यतामेतदवहितया भवत्या—

## प्रभावली

**मंगलेक्कताण**-मङ्गलैकतान । **महुमहणचलण**-मधुमथनचरण । **सेवामहाणंदलाहलं-बडाणं**-सेवामहानन्दलाभलम्पटानाम् । **अप्पमादपरिगहिअ**-अप्रमादपरिगृहीत । **णिवुत्तिधम्माणं**-निवृत्तिधर्माणाम् । **असंभाविअपच्चूहाणं**-असंभावितप्रत्यूहानाम् । **वि**-अपि । **महापुरिसाणं**-महापुरुषाणाम् । **केण उण**—केन पुनः । **विणिवाएण**-विनिपातेन । विनिपातो विघ्नः । **मोक्खोवाओ** मोक्षोपायः । **सिग्घं**-शीघ्रम् । **ण संपज्जइ**-न संपद्यते । **अवधारणीयम्**; निश्चेतव्यम् । **गहनम्**; रहस्यम् । सनकस-नन्दनसनत्कुमारनारदाः ब्रह्मपुत्राः केवलं ब्रह्मनिष्ठाः । शाण्डिल्यः श्रीपाञ्चरात्र-प्रवर्तकत्वेन प्रसिद्धः । प्रभृतिशब्देन शुकशौनकादिग्रहणम् । **परमैकान्तिनः**;

[1] लाह omitted—क.

[2] लंबडहिअआणं—च.

[3] गहनगम्भीरम्—छ.

[4] सनकसनन्दन omitted—क.

**तिमिं किल तिमिंगिलो गिलति तद्गिलस्तं तथा**
**तमप्यथ च तद्गिलस्तदिह पश्य कर्मक्रमे ।**
**समस्तवृजिनोदधि[1]ग्रसन[2]डम्भकुम्भोद्भवं**
**[3]निवृत्तिमपि धर्ममत्त्यनघतत्त्वविन्निग्रहः ॥ ३२ ॥**

प्रभाविलासः

**तिमिमिति ।**

"अस्ति मत्स्यस्तिमिर्नाम शतयोजनमायतः ।
तिमिंगिलगिलोऽप्यस्ति तद्गिलोऽप्यस्ति राघव ॥"

इति प्रसिद्धास्तिम्यादयः । एवं प्रबलेन कर्मणा दुर्बलस्य नाशः प्रकृते द्रष्टव्य इत्याह—तदिह पश्येति । "पापं प्रज्ञां नाशयति" "धर्मेण पापमपनुदति" "ज्ञानाग्निः सर्वकर्माणि" इत्यादिप्रमाणानुसारादिति भावः । परभक्तिलक्षणनिवृत्तिधर्ममाहात्म्यमाह—**समस्तेति** ।

"यथाग्निः सुसमिद्धार्चिः करोत्येधांसि भस्मसात् ।
तथा मद्विषया भक्तिरुद्धवैनांसि कृत्स्नशः ॥"

इति श्रीकृष्णोक्त्या समस्तवृजिनेत्युक्तम् । **डम्भकुम्भोद्भवः**; कपटागस्त्यः ।

प्रभावली

भगवदेकनिष्ठानामग्रेसराः । **तिमिमिति** । **तिमिम्**; शतयोजनप्रमाणं मत्स्यविशेषम् । **तिमिङ्गिलः**; तिमिं गिलति भक्षयतीति तिमिभक्षको मत्स्यविशेषः ततोऽपि महान् मत्स्यः गिलति भक्षयति । **तद्गिलः**; तिमिंगिलगिलः कश्चित्ततोऽप्यतिप्रमाणमत्स्यविशेषः सहस्रयोजनप्रमाणः तं तिमिभक्षकं मत्स्यं तथा गिलति । **तमपि च**; तिमिंगिलगिलमपि मत्स्यम । अथशब्दः कार्त्स्न्यपरः । **तद्गिलः**; तिमिंगिलगिलगिलः कश्चित्ततोऽप्यतिप्रमाणमत्स्यविशेषः गिलतीत्यत्राप्यनुषज्यते; भक्षयति । तिमिंगिलादीनां प्रबलेन हिंसनं यदुक्तं तत् **इह कर्मक्रमे** पुण्यपापरूपकर्मविषयेऽपि पश्य । किंचित् कर्म ततोऽप्यधिकं नाश-

[1] वृजिनार्णव—क. [2] ग्रसनदक्ष—च. [3] निवृत्तमपि—च.

अन्यदप्येतादृशमवधारयेथाः—

**प्रथितं पातकिवर्गं कृतघ्न एको हि कृत्स्नमतिशेते ।**
**तमिमं क्रियमाणघ्नस्तमपि दुरात्मा करिष्यमाणघ्नः ॥ ३३ ॥**

प्रभाविलासः

अत्र "आयुः श्रियम्" इत्यादि पूर्वोक्तं द्रष्टव्यम् ॥ ३२ ॥

विनिपातान्तरमाह—**प्रथितमिति** । अत्र

"ब्रह्मघ्ने च सुरापे च चोरे भग्नव्रते तथा ।
निष्कृतिर्विहिता सद्भिः कृतघ्ने नास्ति निष्कृतिः ॥"

इति वचनमनुसंधेयम् । "यं यं स्पृशति पाणिभ्यां यं यं पश्यति चक्षुषा" इति, "यदपाश्रयाः शुध्यन्ति" इति च भागवतसंबन्धवर्तमानक्षण एवोपकारलाभात् तदपचारकारी क्रियमाणघ्न इत्युक्तः । उत्पत्स्यमान-

**प्रभावली**

यति । ततोऽप्यधिकं तच्च नाशयति । तदपि ततोऽपि प्रबलं कर्म नाशयतीति पश्य । एवं कर्मक्रमे विचार्यमाणे समस्तवृजिनानि पापान्येवोदधिः, तद्ग्रसनसंभ्रमे कुम्भोद्भवमगस्त्यायितं निवृत्तिधर्ममपि भक्तिप्रपत्तिरूपमित्यर्थः । **अनघतत्त्वविन्निग्रहः**; तत्त्ववित् ब्रह्मवित्, तन्निग्रहः तद्विषयापराधः । अत्ति; भक्षयति नाशयतीत्यर्थः । अत्र प्रमाणम् —

"चण्डालमपि मद्भक्तं नावमन्येत बुद्धिमान् ।
अवमानात्पतत्येव रौरवे नरके हि सः ॥"

इत्यादि ॥ ३२ ॥

सर्वपापघ्नान्निवृत्तिधर्मादपि ब्रह्मविदपराधस्य प्राबल्यं दृष्टान्तान्तरप्रदर्शनेनोपपादयति—**अन्यदपीति** । **कृतघ्नः**; कृतमुपकारं न गणयति यः स कृतघ्नः । स एक एव **अतिशेते**; अतिशयेन पापिष्ठ इत्यर्थः । तं कृतघ्नमिमं **क्रियमाणघ्नः**, तदानीं परैरनुष्ठीयमानमुपकारं तत्कालेऽपि यो न जानाति स क्रियमाणघ्नः ।

**सुमतिः**—(विचिन्त्य) इअ णाम णिस्समब्भहिअमाहप्पस्स पडिबुद्धजणणिग्गहस्स[1] पहावो दंसिओ। एदस्स[2] उण[3] णाह, किं णत्थि पडिहारो ?

(इति नाम निःसमाभ्यधिकमाहात्म्यस्य प्रतिबुद्धजननिग्रहस्य प्रभावो दर्शितः। एतस्य पुनर्नाथ, किं नास्ति परिहारः ?

**विवेकः**—अस्ति तु कश्चिदेकः, यदिह पुनस्तत्प्रसादनम्। तथाहि—

**तोयोज्झनेन[4] परितापमुपेत्य जन्तु-**
**स्तोयेन जीवति पुनः क्रमयोजितेन।**

प्रभाविलासः

निःश्रेयसप्रदाचार्यापचारकारी करिष्यमाणघ्न इत्युक्त इति संप्रदायः ॥३३॥

**किं णत्थि पडिहारो इति**। अत्र पश्चात्तापो नाम नाट्यालंकारः, "पश्चात्तापोऽनुतापस्तु कृत्वा कार्यान्तरं यथा" इति लक्षणात्। **तोयोज्झनेनेति**। यावत्प्रसादं क्षमयितव्यमिति वक्तुं **क्रमयोजितेने**त्युक्तम्। अत्र

**प्रभावली**

अतिशेते इत्यनुषज्यते। **तमपि**; क्रियमाणघ्नमपि **दुरात्मा करिष्यमाणघ्नः**, अत्राप्यतिशेत इत्यनुषज्यते ॥ ३३ ॥

**विचिन्त्य**; एवं च सति पुरुषस्य कथं निस्तार इति चिन्तयित्वा। **इअ णाम**-इति नाम। **णिस्समब्भहिअ** निःसमाभ्यधिक। **माहप्पस्स**-माहात्म्यस्य। **पडिबुद्धजणणिग्गहस्स**—प्रतिबुद्धजननिग्रहस्य। **पहावो** प्रभावः। **दंसिओ**-दर्शितः। **एदस्स उण**-एतस्य पुनः। **णाह किं णत्थि पडिहारो** नाथ किं नास्ति परिहारः। कश्चिदित्युक्तं विशेषयति—यदिहेति। **पुनस्तस्य** ब्रह्मविदः **प्रसादनं** क्षमापणम्, क्षमस्वेति प्रार्थना। ब्रह्मविदपचारस्य तत्प्रसादनमेव परिहार इत्येतत् दृष्टान्तेनोपपादयति—**तथाहीति**। **जन्तुः**; मत्स्यः।

[1] जणावराहस्स—च.
[2] अस्स—घ.
[3] उण अत्थि वा पडिहारो—क.
[4] तोयोज्झितेन—ग. घ. ङ.

[1]तद्वन्महत्त्यजनतस्तमसि प्रविष्ट-
स्तत्संश्रयेण भजते [2]परमार्थदृष्टिम् ॥ ३४ ॥

अपिच—

बहुजन्मसुकृतसिद्धं ब्रह्मविदपचारदूरगं पुरुषम् ।
अभिसरति नित्यरक्ता[3] सत्वरमपवर्गसाधनी विद्या ॥ ३५ ॥

प्रभाविलासः

"प्रमादाद्बुद्धितो वापि यदागः क्रियते सताम् ।
अनुतप्तस्तु तानेव क्षमयेन्नान्यथा शमः ॥"
"कृतापराधस्य हि ते नान्यत्पश्याम्यहं क्षमम् ।
अन्तरेणाञ्जलिं बद्ध्वा लक्ष्मणस्य प्रसादनात् ॥"

इत्यादिकमनुसंधेयम् ॥ ३४ ॥

**बहुजन्मेति** । अभिसरतीत्यभिसारिकावृत्तान्तप्रतीत्या संभोगशृङ्गारो व्यङ्ग्यः ॥ ३५ ॥

प्रभावली

**तोयोज्झनेन**; जलपरित्यागेन **परितापमुपेत्य** स्थितः अनन्तरं **क्रमेण योजितेन** संसृष्टेन **तोयेन** यथा पुनर्जीवति **तद्वत् महतां** महात्मनां **त्यजनतः**; स्वापराधात् ब्रह्मवित् तं त्यजति निगृह्णाति, तस्मान्निग्रहात् **तमस्यज्ञाने** संसारे **प्रविष्टः** कश्चित् **तस्यैव** ब्रह्मविदः **संश्रयेण** प्रसादनेन **परमार्थदृष्टिं** सम्यग्ज्ञानं भक्तिप्रपत्तिरूपं **भजते** प्राप्नोति । अन्यथा उपायरूपं ज्ञानं नश्यतीति भावः ॥ ३४ ॥

एवं तर्हि तस्याप्यपवर्गसाधनसमाधिः किं न सिध्यतीति शङ्कायां सिध्यत्येवेत्याह—**अपिचेति** । बहुजन्मस्वार्जितेन सुकृतेन सिद्धं सिद्धोपायानुष्ठानं **ब्रह्मविदपचारात् दूरगं** ब्रह्मविदपचारं परिहृत्य वर्तमानमधिकारिणम् । **नित्यमुक्ता**; नित्यमनुसंहिता । अन्यत्राभिसारिकापक्षे नित्यमुक्ता अयन्त्रिता । यद्वा

[1] एवं—क. [2] पुरुषः समाधिम्—ख.
[3] सक्ता—ङ. च. छ; नित्यमुक्ता इत्यपि पाठः प्रभावल्यामादृतः

सा च,

**परभक्तिरप्रकम्प्या [1]निवृत्तिधर्मानुबन्धिगुणबन्धैः ।**
**भवजलधिपोतपात्री जाता वृद्धिं दिने दिने भजते ॥ ३६ ॥**

**सुमतिः**—(सविमर्शम् ) णाह, [2]जुत्तं एदं ; जइ [3]**दुण्णिवारणिअइबलणिम्मिआ**[4] अपक्कणी[5]सेसकसाअस्स मोक्खपक्खणिक्खेव-

**प्रभाविलासः**

**परभक्तिरिति ;** दिने दिने इति चन्द्रौपम्यप्रतीतेः वस्तुना अलंकारध्वनिः ॥ ३६ ॥

**प्रभावली**

नित्यरक्ता ; नित्यरागवती । अपवर्गसाधनभूता विद्या समाधिरित्यर्थः । **सत्वरमभिसरति ;** स्वयमेवेति शेषः । कृतब्रह्मविदपचारस्य तत्प्रसादनं निष्कृतिरिति भावः ॥ ३५ ॥

ननु त्वया समाधेरपवर्गसाधनत्वमुच्यते । "भक्त्या त्वनन्यया शक्यः" इत्यादिषु भक्तेरपवर्गोपायत्वं प्रतीयते । कथमिदं संगच्छत इत्यत आह—**सा चेति । परभक्तिः ;** भगवत्साक्षात्काररूपा निरतिशयप्रीतिः । **अप्रकम्प्या ;** ध्रुवानुस्मृतिरूपा । **निवृत्तीत्यादि । निवृत्तिधर्मः ;** फलाभिसंधिकर्तृत्वाभिमानविधुरतयानुष्ठीयमानधर्मः, **तदनुबन्धिगुणाः** तदविनाभूता विवेकविमोकादयः, तेषां बन्धैः संबन्धैः । **भवजलधिपोतपात्री जाता ;** अपवर्गसाधनभूता सती **दिने दिने वृद्धिं भजते ।** अयमाशयः—दर्शनसमानाकारा निरतिशयप्रीतिरूपा सप्ताङ्गानुगृहीता भक्तिशब्दवाच्या ध्रुवानुस्मृतिः अपवर्गसाधनभूता । सैव समाधिशब्देनाभिधीयत इति ॥ ३६ ॥

**सविमर्शम् ;** अणिमादिप्रत्यूहभिया । **जइ इत्यादि । जइ-**यदि । **दुण्णिवारणिअइबल-**दुर्निवारनियतिबल । नियतिर्विधिः । **णिम्मिआ-**निर्मिता: । **अपक्क-**

[1] निवृत्तिधर्मेण मत्प्रयुक्तेन—क. [2] सच्चं—क.
[3] अदिदुण्णिवार—क. [4] णिअमिआ—छ. [5] णिस्सेस—घ. ङ.

जोग्गा अणिममहिमगरिमलहिमवसित्तणेसित्तण[1]पत्तिपाअम्मप्पमुहा परमपुरिसत्थसिद्धि[2]साहणजोअंतराआ ण होंति ।

(नाथ, युक्तमेतत्; यदि दुर्निवारनियतिबलनिर्मिता: अपक्वनि:शेषकषायस्य मोक्षपक्षनिक्षेपयोग्या: अणिममहिमगरिमलघिमवशित्वेशित्वप्राप्तिप्राकाम्यप्रमुखा: परमपुरुषार्थसिद्धिसाधनयोगान्तराया न भवन्ति ।)

## प्रभाविलास:

**पाअम्मप्पमुहा इति** । अत्र प्रमुखपदेन दूरश्रवणदर्शनादिकमुच्यते । तदुक्तमेकादशे —

"अणिमा महिमा मूर्तेर्लघिमा प्राप्तिरिन्द्रियैः ।
प्राकाम्यं श्रुतदृष्टेषु शक्तिप्रेरणमीशिता ॥
गुणेष्वसङ्गो वशिता यत्कामस्तदु पश्यति ।
अनूर्मिमत्त्वं देहेऽस्मिन् दूरश्रवणदर्शने ॥
मनोजवः कामरूपं परकायप्रवेशनम् ।
स्वच्छन्दमृत्युर्देवानां सहक्रीडानुदर्शनम् ॥

## प्रभावली

**णीसेसकसाअस्स**-अपक्वनि:शेषकषायस्य । कषाया: पापानि । अपक्वानि नि:शेषकषायाणि यस्य तस्य । **मोक्खपक्खनिक्खेवजोग्गा**-मोक्षपक्षनिक्षेपयोग्या: । **अणिममहिमगरिमलहिमवसित्तणेसित्तणपत्तिपाकम्मप्पमुहा**-अणिममहिमगरिमलघिमवशित्वेशित्वप्राप्तिप्राकाम्यप्रमुखा: । अणिमा अणुत्वम् । महिमा महत्त्वम् । गरिमा गुरुत्वम् । लघिमा लघुत्वम् । वशित्वं वश्येन्द्रियत्वम् । ईशित्वं स्वातन्त्र्यम् । प्राप्ति: सद्य इष्टदेशप्राप्ति: । प्राकाम्यं चिन्तितमात्रे सर्वार्थसिद्धि: । **परमपुरिसत्थसिद्धिसाहणजोअंतराआ** - परमपुरुषार्थसिद्धिसाधनयोगान्तराया: ।

[1] ईसरत्तण—ङ. च. छ.

[2] सिद्धि omitted—ङ.

**विवेकः**—सत्यं देवि, दुर्जया एते दुरन्तवैरिणो योगान्तरायाः। तदेषां संभवे परिहरणादपि संभवस्यैव परिहरणेन निष्प्रत्यूहा भविष्यति नैःश्रेयसिकी सिद्धिः।)

(ततः प्रविशति भूर्जपत्रभूषितोत्तमाङ्गो दूतः)

प्रभाविलासः

यथासंकल्पसंसिद्धिराज्ञाप्रतिहता गतिः।
त्रिकालज्ञत्वमद्वन्द्वं परचित्ताद्यभिज्ञता ॥
अग्न्यर्काम्बुविषादीनां प्रतिष्टम्भोऽपराजयः।
एतास्तूद्देशतः प्रोक्ता योगधारणसिद्धयः ॥"
अन्तरायान्वदन्त्येतान् युञ्जतो योगमुत्तमम्।
मया संपद्यमानस्य कालक्षेपणहेतवः ॥"

इति। संभवस्यैव परिहारेणेत्यस्यायमर्थः—अणिमादिकामनया तत्तत्प्राप्तिहेतुत्वेन विहितप्रतीकमात्रोपासनाविशेषानुष्ठाने हि त उत्पद्यन्ते। तथाविधोपासनाभावे नोत्पद्यन्त इति। तदुक्तं तत्रैव—

"भूतसूक्ष्मात्मनि मयि तन्मात्रं धारयेन्मनः।
अणिमानमवाप्नोति तन्मात्रोपासको मम ॥
महत्यात्मन्मयि परे तथासंस्थं मनो दधत्।
महिमानमवाप्नोति भूतानां च पृथक् पृथक् ॥"

इत्यादिना। अथ दूतलेख्यलक्षणे उपसंधी दर्शयति—ततः **प्रविशती-**

प्रभावली

**ण होंति**-न भवन्ति। **दुरन्ता**; दुर्जयाः। **संभवस्यैव**; उत्पत्तेरेव। परिहरणं नाम तदनाकाङ्क्षणम्। **नैःश्रेयसिकी**; मोक्षसंबन्धिनी। भूर्जपत्रं नाम राजशासनरूपा तालपत्रस्थानीया तरुविशेषत्वक्। तत्र मष्या वाचिकं विलिखन्ति। दूता उत्तमाङ्गे राजशासनं निक्षिप्य गच्छन्ति। महाराजेति मध्ये विवेक-

दूतः—(साञ्जलिबन्धम्) राजन्, अयमस्मि देवस्य महाराजस्य महामोहस्य दृष्टिपथमनुज्झन् सर्वत्राप्रतिहतगतिः संवृतिसत्यो नाम दूतः। तदभिवादयेऽहं सावरोधं भवन्तम्[1]।

विवेकः—(आत्मगतम्) किं निमित्तमयमुपागतः? (प्रकाशम्) अस्थानवृत्तिमपहायापरिमितायुर्भूयाः।

दूतः — (उत्तमाङ्गादवतारित[2]दरविकसिताञ्जलिकोशनिहितं भूर्जपत्रमुपदर्शयन्) इदं किल महाराज, चतुर्दशभुवनचक्रचक्रवर्तिनः द्वापरमन्त्रिनिर्धारितनिखिलकार्यस्य दुर्मतिमतप्रतिष्ठितस्य[3] देवस्य महामोहस्य लोभनाम्ना गणकेन लिखित्वा[4] त्वदर्थं प्रेषितमन्तरङ्गेण मया [5]उपहृतमलङ्घनीयं शासनम्।

प्रभाविलासः

**त्यादिना**। **संवृतिसत्यः**; व्यावहारिकसत्यः। **आत्मगतमिति**; जनैरश्राव्यमाणमुच्यते। **अस्थानवृत्तिम्**; अपरमार्थवस्तुवृत्तिम्। **द्वापरः**; संशयः।

**प्रभावली**

संबोधनम्। **अनुज्झन्**; सर्वदा वर्तमानः। **सर्वत्र**; आब्रह्मलोकम्। **संवृतिसत्यः**; व्यावहारिकसत्यः। अपरमार्थसत्य एव योगाचारेण संवृतिसत्य इति व्यवह्रियते। तमेव प्रच्छन्नयोगाचाराः शंकरमतानुसारिणः व्यावहारिकसत्य इति व्यवहरन्तीति विशेषः। **तत्**; तस्मात्, दूतत्वात्। **अभिवादये**; नमस्करोमि। **अस्थानवृत्तिम्**; अपरमार्थवस्तुवृत्तिं विहाय दीर्घायुर्भवेत्यर्थः। **दरविकसितम्**; अल्पविकसितम्। **द्वापरः**; संशयः। स एव मन्त्री। **दुर्मतेः** मतमभिलषितं, तत्र प्रतिष्ठितस्य। **अन्तरङ्गेण**; आप्तेन। **अलङ्घनीयमिति**; भवताप्यलङ्घनीयमिति

[1] भगवन्तम्—क.
[2] अवतारितं—ङ. ख. छ.
[3] त्वत्पूर्वजस्य added after—क.
[4] लेखयित्वा—क.
[5] उपसृष्टं—क; उपनीतं—घ.

**विवेकः**—(सानादरावहित्थम्) भद्र, अस्माकमप्यभिमतः[1] खल्वसि। तदिहोपह्वरे त्वमेव वाचय।

**दूतः**—यदादिशति महाराजः।

(इति विनयनिभृतं वाचयति)

**"एतत्कामादिमान्यस्य महामोहस्य शासनम्।**
**संसारह्रासभीतानां स्वर्गिणामपि संमतम्॥ ३७॥"**

**विवेकः**—(अपवार्य सान्तर्हासम्) देवि, किं वयमपि शासनीया [2]दुरात्मनो महामोहस्य? परचित्तवेदनार्थमिह वाचिकं तावत् श्रोतव्यम्। भद्र, ततस्ततः।

प्रभाविलासः

"संदेहह्रासपरावपि" इति निघण्टुः। **एतदिति**। **संसारह्रासभीतानामिति**; अनेन

"वासुदेवे भगवति भक्तिमुद्वहतां नृणाम्।
संसारन्यूनताभीतास्त्रिदशाः परिपन्थिनः॥"

इति स्मारितम्॥ ३७॥

**अपवार्येति**। इयं हि नाटकपरिभाषा—

**प्रभावली**

भावः। **अभिमतः**; संवृतिरूपविशेषणत्याग इति भावः। **उपह्वरे**; एकान्ते। विनयेन निभृतम् अनुद्धतं यथा तथा। **एतदित्यादि** वाचिकम्। संसारस्य ह्रासे क्षये भीतानां देवानामपि संमतम्। "संसारन्यूनताभीतास्त्रिदशाः परिपन्थिनः" इत्युक्तेः॥ ३७॥

**अपवार्य**; वाचनिकान्निवृत्य, शासनशब्दश्रुतेः। **शासनीयाः**; नियम-

[1] अनुमतः खल्वसि—च.

[2] दुरात्मना महामोहेन—ख.

दूतः—

"परोपास्तिश्रद्धावधिकमतिवृत्तं यदिह ते
तदैश्वर्यप्राप्त्यै[1] भवतु बहु [2]मन्येमहि तदा ।"

विवेकः—(अवज्ञां नाटयन्) प्रिये, आकर्णितः किलायं

प्रभाविलासः

" अश्राव्यो नियतश्राव्यः श्राव्यो योऽर्थस्य वस्तुनः ।
अश्राव्यमन्यैरज्ञातमात्मन्येव स्थितं विदुः ॥
तमात्मगतमित्युक्त्वा काव्यबन्धे निवेशयेत् ।
अर्थस्त्वेकेन विज्ञेयो नियतश्राव्य इष्यते ॥
द्विविधः स परिज्ञेयो जनान्तश्चापवारितः ।
गुह्यो गुह्येतरश्चेति जनान्तोऽपि द्विधा मतः ॥
स्याज्जनान्तिकमित्युक्त्वा वाच्यः पूर्वस्तथापरः ।
कर्ण एवमिवेत्युक्त्वा ज्ञाप्यः पश्चात्प्रसङ्गतः ॥
परैरलक्ष्यव्यापारः कथितोऽर्थोऽपवारितः ।
उक्त्वा प्रागपवार्येति पश्चादेव प्रयोजयेत् ॥
सर्वैराकर्णनीयोऽर्थः श्राव्य इत्यभिधीयते ।
एनं प्रकाशमित्युक्त्वा तयोरन्ते प्रयोजयेत् ॥"

इति । अतोऽपवार्येत्युक्तम् । एवं जनान्तिकम् आत्मगतं प्रकाशमित्यादिषु यथायोगं द्रष्टव्यम् । **परोपास्तीति । अतिवृत्तम्;** अतिक्रमः ।

प्रभावली

नीयाः । बहु मन्येमहि; अनुमन्येमहीत्यर्थः । उत्तरार्धवचनात् पूर्वमेव विवेकः

[1] प्राप्तेः—क, [2] मन्येमहितराम् —च,

भिक्षुपादप्रसरणन्यायः[1] । अथवा स्वाभाव्यमेव[2] शवमुष्टिवत् गृहीत-ग्राहिता महामोहस्य ।

सुमतिः—एव्वं एदं ।

(एवमेतत्)

विवेकः—ततस्ततः ।

दूतः—

"अतिक्रान्तावस्मद्भ्रुकुटिनटनारम्भसमय-
प्रदीप्त[3]क्रोधादिप्रतिभटनिरुद्धो न भवसि ॥ ३८ ॥"

विवेकः—प्रिये, स्वधर्मनिरतानस्मान् प्रति सोऽय-माशीर्वादः । [4]अयि मोहदूत, किमस्ति शेषं वाचिकस्य ?

प्रभाविलासः

**भिक्षुन्यायः**; कश्चित् भिक्षुः कस्यचित् गृहमेधिनो द्वारि वर्षासमये तिष्ठन् गृहस्थे तं गृहं प्रवेशयति पादप्रसरणमात्रस्यानुमतिं प्राप्य लब्धावकाशः क्रमेण गृहं सर्वमाक्रान्तवान् । **अतिक्रान्ताविति** । **निरुद्धो न भवसि**; निरुद्धः सन् न भवसीत्यर्थः । प्रतिभटनिरोधो नास्तीति च ध्वन्यते ॥३८॥

**प्रभावली**

अवज्ञामनादरं नाटयन् । **भिक्षुपादप्रसरणन्यायः**; किंचिदवकाशे दत्ते सर्वमप्याक्रमिष्यामीत्यभिप्रायः । उत्तरार्धं पठति—**अतिक्रान्ताविल्यादि** । अस्मदुक्त्यतिक्रमे, अस्माकं भ्रुकुटिनटनं भ्रूविक्षेपः, **तदारम्भसमये प्रदीप्ताः** क्रुद्धाः ये क्रोधादयः त्वद्वैरिणः, तैरुपद्रुतो **न भवसि**; न जीविष्यसि ॥ ३८ ॥

**सोऽयम्**; निरुद्धो न भवसीति यदुक्तम् । **अयि**; रे इत्यर्थः । **विश्वाधिक**

[1] भिक्षुन्यायः इति प्रभाविलासपाठः
[2] स्वाभाविकमेव—ग.
[3] क्रोधाग्नि—घ.
[4] अथ—ग.

दूतः—अस्ति किंचिदात्मीय[1]बलाध्यक्षकामक्रोधवैभव-विषयम् ।

विवेकः—अस्तु ; को दोषः ? शृणुमस्तावत ।

दूतः—

“ विश्वाधिको विलयमेष्यति कस्य भूम्ना
वीरः[2] प्रसिद्धमहिमा विबुधेषु कामः ।
क्रोधोदितं यदनुभाववशेन शंभोः
शृङ्गारशीतलमभून्नयनं तृतीयम् ॥ ३९ ॥

अपिच—

कामोऽसौ समवर्तताग्र इति हि[3] ब्रूते समीची श्रुतिः
कामादेव जगज्जनिस्थितिलयैराद्यः पुमान्क्रीडति ।

**प्रभाविलासः**

ध्वन्यर्थमेवानुमोदयन्नाह—**स्वधर्मेति** । **विश्वाधिक** इति । **कस्य भूम्ना विलयमेष्यति ;** न कस्यापीत्यर्थः । कस्य भूम्ना दैववलेन विलयमेष्यतीति ध्वनिः ॥ ३९ ॥

**काम** इति । “ कामस्तदग्रे समवर्तताधि ” इति श्रुतिः । **कामा-**

**प्रभावली**

इति कामविषयं श्लोकद्वयम् । प्रथमश्लोकेन कामस्य केनापि दुर्जयत्वमाह—**विश्वाधिक** इति । विश्वेभ्योऽधिकः । **भूम्ना ;** पराक्रमेण । **विबुधेषु प्रसिद्धमहिमा** । तदुपपादनाय रुद्रेणापि दुर्जयत्वमाह—**शंभोः** कामविषयक्रोधेन **प्रदीप्तं तृतीयं नयनं** यस्य कामस्यानुभावो माहात्म्यं, तद्वशात **शृङ्गाररसेन** शीतलमभूत् ; शंभुः देव्यामासक्तो बभूव । कामेन जितो बभूवेति यावत् ॥ ३९ ॥

अथ तस्य कामस्य दुर्जयो नास्तीत्याह—**कामोऽसाविति** । “ काम-

[1] आत्मीय omitted—च. [2] धीरः—ङ. छ. [3] च—क

**निष्कामोऽपि सकाम एव लभते निःश्रेयसं दुर्लभं**
**कामः कस्य वशे क एष भुवने कामस्य न स्याद्वशे ॥४०॥"**

**सुमतिः**—महाराअ, किं तुम्हेहिं वि दुज्जओ मअरलंछणो ?

(महाराज, किं युष्माभिरपि दुर्जयो मकरलाञ्छनः ?)

**विवेकः**—देवि, मिथ्यादृष्टिप्रियस्य महामोहस्य प्रलपिते किं प्रत्युच्यते ? अवशिष्टमपि निशामयामः ।

**दूतः**—

**"यदि कुप्यति कोपाय न कोपमतिवर्तते ।**
**अकोपविषयं कोपं कथं कश्चिद्विजेष्यते ॥ ४१ ॥**

[1]तदिदमुभयतःपाशा रज्जुः ।"

### प्रभाविलासः

**देवेति** । "सोऽकामयत बहु स्यां प्रजायेयेति" इति श्रुतेः । **सकामः**; मोक्षकामः ॥ ४० ॥ कोपस्य दुर्जयत्वं विकल्पमुखेनाह—यदीति ॥ ४१ ॥

### प्रभावली

स्तदग्रे समवर्तताधि" इति श्रुतिस्तस्य पुरातनत्वं ब्रूते । **कामाद्धेतोः आद्यः पुमान्** जगज्जनिस्थितिलयैः क्रीडति । "सोऽकामयत बहु स्याम्" इति श्रुतिः । "कामाच्च नानुमानापेक्षा" इति ब्रह्मसूत्रम् । अनेन भगवानपि कामजित इति सूच्यते । **निष्कामो** मुमुक्षुरपि अन्ततः **सकामः** प्राप्यविषयकामविशिष्टः सन्नेव **दुर्लभं निःश्रेयसं** लभते । प्राप्याकाङ्क्षाभावे तदपि दुर्लभमिति दुर्लभशब्दाभिप्रायः । अतः **कामः कस्य** पुंसो **वशे** स्थितः; न कस्यापीत्यर्थः । **कामस्य वशे यो न स्यात् स भुवने क एषः**; कोऽपि नास्तीत्यर्थः ॥ ४० ॥

**महाराअ** इत्यादि । महाराअ-महाराज । **किं तुम्हेहिं वि**-किं युष्माभिरपि । **दुज्जओ**-दुर्जयः । **मअरलंछणो** मकरलाञ्छनः । मिथ्यादृष्टिप्रियस्येति

[1] तदियं—च. छ. उभयतःस्पाशा रज्जुरित्यपि क्वचित् सांप्रदायिकः पाठः । तदा स्पाशः ग्रन्थिः । उभयपार्श्वयोरपि ग्रन्थियुक्ता रज्जुरिति तदर्थः ।

**सुमतिः**—णाह, णं कामादो वि कोवो दुज्जओ, जेण [1]कामजअम्मि वि सअं कालणं होइ ।

(नाथ, ननु कामतोऽपि कोपो दुर्जयः, येन कामजयेऽपि स्वयं कारणं भवति ।)

**विवेकः**—प्रिये,[2] स्थानक्रोधो न खलु दोषाय । योऽसौ कामादिनिरसनार्थतया परमार्थवेदिभिः प्रशस्यते । (दूतमवलोक्य) दूत, श्रुतमिह श्रोतव्यम् । ब्रूहि मद्वचनाद्युष्मत्स्वामिनम्—

**अप्राणितमहामोहमनङ्गीकृतमन्मथम् ।**
**विधूतप्रतिघं लोको विवेकं बहु मंस्यते ॥ ४२ ॥**

**दूतः**—महाराज, साधयाम्यहम् । (इति द्वित्रपदान्यतिक्रम्य स्वगतम्)

प्रभाविलासः

**अप्राणितेति । अप्राणितः**; प्राणैर्वियोजित इत्यर्थः ॥ ४२ ॥

**प्रभावली**

हेतुगर्भम् । तत्प्रियत्वान्मिथ्यैव वदति । तत्प्रलपिते प्रत्युत्तरमपि किमुच्यते ? न किमपीत्यर्थः । **यदीति** । अयं कोपमहिमविषयश्लोकः । **कोपं** प्रति यदि कश्चित् कुप्यति, तदा न **कोपमतिक्रान्तः**, निष्क्रोधो न भवति । यदि कोपः कस्यचित् कोपविषयो न स्यात्, तदा को वा कोपं विजयेत ॥ ४१ ॥

तस्मादयं कोपः पुरुषस्य उभयतःपाशा रज्जुः । यदा गोः कण्ठरज्जुः उभयतःपाशबद्धा भवति, तदा गौरुभयतोऽप्यतिपतितुं न शक्नोति । तथात्र पुरुषोऽपीति भावः । णं ननु । **कामादो वि**-कामादपि । **कोवो**-कोपः । **दुज्जओ**-दुर्जयः । **जेण**-येन । **कामविअ अम्मिवि**-कामविजयेऽपि । **सअं**-स्वयम् । **कालणं**-कारणम् । **होइ**-भवति । **स्थानक्रोधः**; युक्तस्थले क्रियमाणः कोपः । **अप्राणितेति**; निहतमहामोहम् । अनङ्गीकृतः अस्वीकृतः, अङ्गरहितीकृतः हत इति

[1] कामविअअम्मि इति प्रभावलीपाठः ।

[2] देवि—क.

**सुप्तप्रबोधनसमुत्सुकया सुमत्या**
**पत्न्या [1]सहाचरितविश्वहितं विवेकम् ।**
**जेतुं क एव जगति प्रभवेत्तथापि**
**स्वामी नियोजयति मोह इह स्वयं नः ॥ ४३ ॥**

(प्रकाशम्) महाराज, "त्यजेदेकं कुलस्यार्थे" इति नीतिं नातिवर्तेथाः ।

(इति निष्क्रान्तः)

**सुमतिः**—अय्यउत्त, जइ मुत्तिसाहणसज्जो पुरिसो मोहप्पजुत्तेहिं कामक्कोहलोहमअमच्चलप्पहुदीहिं अहिहूअइ,[2] एआवंतो तुम्हपरिस्समो विहलो होइ ।

### प्रभाविलासः

**सुप्तेति** । सुप्तस्य अनादिमायया सुप्तस्य प्रबोधने समुत्सुकया । **स्वामी नियोजयति**; अतो नः प्रतिवक्तव्यं नास्तीति शेषः ॥ ४३ ॥

### प्रभावली

चार्थः, मन्मथो येन तम् । विधूतः प्रतिक्षिप्तः प्रतिघः क्रोधः येन तं विवेकम् अयं लोको बहु मंस्यते बहुमानविषयं करिष्यति । मोहादीन् सर्वान् शीघ्रं हनिष्यामीत्यर्थः ॥ ४२ ॥

साधयामि; गच्छामि । **सुप्तेति** । अनादिमायया **सुप्तस्य** जीवस्य **प्रबोधने** तात्पर्यवत्या **सुमत्या सहाचरितं विश्वेभ्यो हितं** येन तं **विवेकं को वा जेतुं प्रभवति** ॥ ४३ ॥

**त्यजेदेकमिति** । एकस्मिन् पुरुषे बन्धादविमोचिते कुलद्वयमपि जीवति; मोचिते कुलद्वयमपि नश्यति । अतः पुरुषमोचने यत्नो न कार्य इति भावः । **जइ**-यदि । **मुत्तिसाहणसज्जो**-मुक्तिसाधनसज्जः । **पुरिसो**-पुरुषः । **मोहप्पजुत्तेहिं**-

[1] समाचरित—ख. [2] ओहूअइ—ग; ओहुवै—ङ; परिहूअइ—च.

(आर्यपुत्र, यदि मुक्तिसाधनसज्जः पुरुषो मोहप्रयुक्तैः काम-क्रोधलोभमदमत्सरप्रभृतिभिरभिभूयते, एतावान् युष्मत्परिश्रमो विफलो भवति ।)

**विवेकः**—देवि, मैवं मन्वीथाः । आशंसेथाः पुनः शोभनमेव ।

**त्रय्यन्तैरवधारिते भगवति क्षिप्ते विरोधभ्रमे**
**साङ्गोपायविभागसंभृतमतिः संप्रत्यसौ साधकः ।**
**कामक्रोधनिशातकण्टकमिलत्कालुष्यपङ्कच्छटा-**
**निर्मुक्तेन सुशीतलेन [1]सुपथा निःश्रेयसं प्राप्स्यति ॥ ४४ ॥**

**प्रभाविलासः**

त्यजेदिति । अनेन,

"त्यजेदेकं कुलस्यार्थे ग्रामस्यार्थे कुलं त्यजेत् ।
ग्रामं जनपदस्यार्थ आत्मार्थे पृथिवीं त्यजेत् ॥"

इति स्मारितम् । उक्तरीत्या महामोहत्यागो युक्त इति ध्वन्यते । **त्रय्यन्तैरिति** । **अवधारिते**; निश्चिते । अनेन समन्वयलक्षणार्थ उक्तः । **विरोधभ्रमे**; जगज्जन्मादिकं ब्रह्मणि विरुध्यते, प्रयोजनाद्यभावादिति भ्रमे ।

**प्रभावली**

मोहप्रयुक्तैः । **कामक्कोहलोहमदमच्चरप्पहुदीहिं**-कामक्रोधलोभमदमत्सरप्रभृतिभिः । **अहिहूअइ**-अभिभूयते । **एआवंतो**-एतावान् । **तुम्हपरिस्समो**-युष्मत्परिश्रमः । **विहलो**-विफलः । **होइ**-भवति । **आशंसेथाः**; प्रार्थयेथाः । पुनरिति वाक्यालंकारे । शोभनप्राप्तौ हेतुमाह—**त्रय्यन्तैरिति** । **अवधारिते**; सर्वकारणत्वेन निश्चिते । अनेन शारीरकस्य समन्वयाध्यायार्थ उक्तः । प्रधानादेर्जगत्कारणत्वेन ब्रह्मकारणत्वं विरुद्धमिति योऽयं **विरोधभ्रमः**; तस्य भ्रमत्वं बाध्यत्वात्; तस्मिन्

[1] च पथा—ख, ग, घ.

(नेपथ्ये)

**दिव्यवैतालिकौ**—विजयतां देवः ।

**प्रथमः**—

**रम्या यामवतीपदार्पणपटी रागाब्धिवेलोद्गति[1]-**
**श्चेतोजन्मकदम्बधूलिविततिः शृङ्गारचूडाजपा ।**
**संमोहद्विपशोणबिन्दुपटली संध्या जरीजृम्भ्यते[2]**
**प्रत्यग्दिग्वनितापयोधरतटीकाश्मीरपङ्कद्युतिः ॥ ४५ ॥**

**प्रभाविलासः**

**क्षिप्ते** सति । एवमविरोधलक्षणार्थ उक्तः । **साङ्गोपायः**; यज्ञाद्यङ्गकमुपासनम्, "ब्राह्मणा विविदषन्ति यज्ञेन दानेन तपसानाशकेन" इति श्रुतेः । एवं साधनलक्षणार्थ उक्तः । कामक्रोधावेव निशातकण्टकौ, ताभ्यां मिलत् मिश्रीभवत् कालुष्यमेव पङ्कं, तस्य छटया निर्मुक्तेन सुपथा अर्चिरादिकेन । एवं फललक्षणार्थ उक्तः ॥ ४४ ॥

**रम्येति । यामवती;** रात्रिः; नायिका लक्ष्यते; तस्याः

**प्रभावली**

**क्षिप्ते;** सांख्यादिमतनिराकरणेनेति शेषः । अनेनाविरोधलक्षणार्थः सूचितः । एतद्विशेषणद्वयेनातीताङ्कद्वयप्रतिपादितार्थ उक्तः । **संप्रति;** तृतीयलक्षणे तृतीयाङ्के च । **साङ्गस्योपायस्य** भक्तिरूपस्य **विभागेन** विभज्य कथनेन **संभृता** परिपूर्णा **मतिर्यस्य सः । साधकः;** अधिकारी । कामक्रोधावेव निशातकण्टकौ, ताभ्यां संसृज्यमानं यत्कालुष्यं मतिभ्रमः, तदेव पङ्कसमूहः, तेन **निर्मुक्तेन** सुष्ठु **शीतलेन** निरतिशयप्रीतिरूपेण **सुपथा** पूर्वोक्तोपायेन मोक्षं **प्राप्स्यति** ॥ ४४ ॥

अथ विवेकस्य सपत्नीकस्य स्वस्वकार्यनिर्वहणकालसूचनाय कामादिपरपक्षसौप्तिकसंनाहयोग्यं सायंसंध्याकालं दिव्यवैतालिकौ वर्णयतः—**नेपथ्य**

[1] वेलोन्नतिः—क ; वेलोद्धतिः—च.

[2] All the MSS. except ख read **जरीजृम्भते** while ख, **जरीजृम्भ्यते.** But both the readings are incorrect. The correct reading should be **जरीजृम्भ्यते.**

द्वितीयः—

दिनाधिपविनाकृतिव्यसनखिन्नसंध्यावधू-
विधूतकबरीभरप्रसरकौतुकापादकम् ।
विशृङ्खलकलिन्दजाजलतरङ्गभङ्गावली-
मलीमसमिदं तमो जगदशेषमाचूषति ॥ ४६ ॥

प्रभाविलासः

**पदार्पणपटी**; चरणन्यासमार्गे प्रस्तारितः पटः । **रागः**; अभिलाषः, स एव रागः रक्तिमा, स एवाब्धिः, तस्य वेलोद्गतिः वेलातिक्रमः, तत्तुल्येत्यर्थः । **चेतोजन्मा**; मन्मथः, स एव कदम्बः वृक्षविशेषः, तस्य धूलिविततिः परागसमूहः । यद्वा चेतोजन्मनः कदम्बधूलिः अङ्गरागरजः काश्मीररजः । **शृङ्गारः**; शृङ्गाररसः; नायको लक्ष्यते । **संमोह** एव द्विपः, तस्य शोणबिन्दवः पद्मकानि, तेषां पटली । अत्र संध्यानिरूपणेनास्तंगतवाक्यवदनेकव्यङ्ग्यध्वनिभेदः; शृङ्गाररसश्च ध्वन्यत इति संसृष्टिः । शय्या च स्फुरति—"या पदानां परान्योन्यमैत्री शय्येति कथ्यते" इति लक्षणात् ॥ ४५ ॥

**दिनाधिपेति** । **दिनाधिपस्य** सूर्यस्य विनाकृतिः विदेशगमनं,

प्रभावली

**इत्यादि** । परोक्षत एवोभौ राज्ञो मङ्गलमाशासाते—**विजयतामिति** । मोहादीनिति शेषः । तत्र प्रथमः संध्यां वर्णयति—**रम्येति** । सायं सध्या, **रम्या यामवती** रात्रिः, तस्याः पदार्पणपटी । पदार्पणपटी अलक्तकरसाङ्कः रक्ता भवति । अथवा **रागाब्धेः वेलोद्गतिः** विकृत्युद्गतिः । यद्वा **चेतोजन्मा**, कामः, स एव कदम्बः, तस्य पुष्पधूलिविततिः । अथवा **शृङ्गाररसस्य चूडायां** बद्धा **जपा** जपाकुसुमस्रक् । **संमोहः** महामोहः, स एव **द्विपः**, तस्य **शोणबिन्दूनां** शोणवर्णगण्डस्थलगतरक्तबिन्दूनां पटली समूहः । **प्रत्यगित्यादि** । **प्रत्यक्** पश्चिमदिक्, सैव वनिता, तस्याः पयोधरतटयोः, काश्मीरं कुङ्कुमं, तस्य पङ्कस्तस्य द्युतिः । एवमुत्प्रेक्षिता संध्या जरीजृम्भ्यते विष्वक् प्रसति ॥ ४९ ॥

**विवेकः**—(कर्णं दत्वा) देवि, दिवाभीतप्रायस्यास्मत्प्रतिपक्षस्य सौप्तिकसंनाहसमयं[1] सूचयतः प्रायेण[2] स्वतो वियातवादिनौ वैतालिकौ। संपश्यतां भवती—

**प्रकाशः संकोचं भजति जगतः सीदति रवौ**
**तमिस्राविष्फूर्तिः स्थगयति मुखं शक्रहरितः।**
**अवस्कन्दन्विश्वं सुमुखि मधुना साकमधुना**
**विधत्ते दुर्दान्तो विविधमपनीतं[3] रतिपतिः॥ ४७॥**

**प्रभाविलासः**

तया जातं व्यसनं, तेन खिन्नायाः संध्यावध्वाः विधूतस्य कबरीभरप्रसरस्य कौतुकमापादयतीति तथोक्तम्। **विश्रृङ्खलायाः** अप्रतिबन्धायाः कलिन्दजायाः यमुनायाः जलतरङ्गाणां भङ्गावलीवत् शकलसमूहवत् मलीमसं नीलम्। **आचूषति;** अन्तः करोति। अत्र पूर्वार्धेन विप्रलम्भश्रृङ्गारः। आचूषतीत्यचेतनस्य तमसश्चूषणासंभवात् सामान्यविशेषसंबन्धात् निखिलव्यापनं लक्ष्यते। अतिगाढत्वं व्यङ्ग्यम्॥ ४६॥

**सौप्तिकम्;** सुप्तेषु पीडाकर्म। **वियातवादिनौ;** धृष्टौ। **प्रकाश**

**प्रभावली**

द्वितीयस्तमःप्रसरणं वर्णयति—**दिनाधिपेति**। **दिनाधिपः** सूर्यः, तस्य **विनाकृत्या** वियोगेन **यद्व्यसनं** तेन **खिन्ना** या **संध्यैव वधूः**, तया **विधूतः कबरीभरः** केशपाशभारः, तस्य कौतुकं तदेवेदमित्युत्प्रेक्षाजनकम्। **कलिन्दजायाः** कालिन्द्याः विश्रृङ्खला अनर्गला जलतरङ्गभङ्गावली, भङ्गास्तनुवीचयः, तत्पङ्क्तिरिव मलीमसम् **इदं तमः अशेषं जगदाचूषति** सशब्दं पिबति, आवृणोतीत्यर्थः॥ ४६॥

**दिवाभीताः;** उलूकाः, तत्सदृशस्यास्मत्प्रतिपक्षस्य कामादेः **सौप्तिकसंनाहसमयं** पुरुषविषये सुप्तप्रहारोद्योगकालं **सूचयतः**, तमोवर्णनेनेति शेषः।

[1] संनाहं—क. [2] प्रायेण omitted—ख. [3] अपनीतिं—ग, घ.

अपिच ;

**अश्रान्तसंततिभिराभरणप्रकाशै-**
**राम्रेडयन्त्य इव मङ्गलदीपभासः ।**
**अन्तःपुरं तिलकयन्ति समं समन्ता-**
**दारात्रिकं मृगदृशो नियमं विधातुम् ॥ ४८ ॥**

**प्रभाविलासः**

इति । **रवौ ;** सूर्ये । **सीदति ;** अस्तं गते सतीत्यर्थः । जगतः प्रकाशः संकोचं भजति । रव्यस्तगमनतारतम्येन प्रकाशसंकोचतारतम्यमिति भावः । **शक्रहरितः ;** इन्द्रहरितः । **मुखं स्थगयतीति** तस्मिन्काले प्राग्देशे तमसोऽतिगाढत्वमुक्तम् । **अवस्कन्दन् ;** पीडयन् । **दुर्दान्तः ;** मूर्खः । **अपनीतम् ;** अतिक्रमम् । अत्रापनीतमिति तमिस्रेति च कृष्णपक्षरात्रिषु पारदार्यभूयस्त्वं संभोगशृङ्गारश्च व्यज्यत इत्युभयोः संकरः ॥ ४७ ॥

**अश्रान्तेति** । **अश्रान्तसंततिभिः ;** अविच्छिन्नसंतानैः । **आभरणप्रकाशैः मृगदृशः मङ्गलदीपभासः** मङ्गलदीपप्रकाशान् आम्रेडयन्त्यः

**प्रभावली**

**प्रायेण ;** भूयसा । **स्वतो धृष्टवादिनौ** वैतालिकौ मङ्गलपाठकौ । **संपश्यताम् ;** सम्यक्पश्येत्यर्थः । विवेकः स्वयमपि संध्यां वर्णयति—**प्रकाश इति** । **रवौ** महाराज इव **सीदति** कृशतां गच्छति सति **जगतो** जनस्य च **प्रकाशः** आलोको ज्ञानं च **संकोचं भजति** । **तमिस्रायाः ;** तमःसमूहस्य । **विष्फूर्तिः ;** समृद्धिः । **शक्रहरितः ;** पूर्वाया दिशः । **मुखम् ;** पुरोभागम् । **स्थगयति ;** व्याप्नोति । हे **सुमुखि, दुर्दान्तो** दुर्विनीतो **रतिपतिश्च विश्वमवस्कन्दन् ;** विश्वं परिभवितुम् ; लक्षणहेत्वोरिति शता । **अधुना मधुमासेन साकं विविधं** यथा तथा **अपनीतम्** अपन्यायः अवाच्यं कर्म **विधत्ते** । यथा राजनि सीदति तस्करोऽपनीतिं विधत्ते तद्वदिति ॥ ४७ ॥

पुनरपि स्वान्तःपुरे आरात्रिकं कर्म विधातुं युवतीनां संभ्रमं वर्णयति—**अपिचेत्यादि** । अविच्छिन्नसंततिभिः **मङ्गलार्थं ये दीपाः**, तेषां भासः कान्तीः

तदहमिह सांध्यं नियममनुपाल्य परब्रह्मप्रवणमानसं पुरुषमभिरक्षामि। भवत्यपि क्षान्तिशान्त्यादिपरिजनसेविता मङ्गलाचरणसौधमधिरुह्य मत्प्रत्यागमनप्रतीक्षा वर्तेथाः।

(इति सुमत्या सह निष्क्रान्तः)

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेंकटनाथस्य वेदान्ताचार्यस्य कृतिषु संकल्पसूर्योदये मुक्त्युपायारम्भो नाम तृतीयोऽङ्कः।



प्रभाविलासः

द्विगुणयन्त्यः सत्यः **आरात्रिकं नियमं विधातुं समं** समकालं **समन्तादन्तःपुरं** तिलकयन्तीति संबन्धः। अत्र स्फुरद्रसत्वात् द्राक्षापाकः, "द्राक्षापाकस्तु कथितो बहिरन्तःस्फुरद्रसः" इति लक्षणात्॥ ४८॥

[1] इत्यात्रेयाहोबिलाचार्यविरचिते संकल्पसूर्योदयव्याख्याने प्रभाविलासाख्याने मुक्त्युपायारम्भो नाम तृतीयोऽङ्कः।



प्रभावली

**आम्रेडयन्त्यः** अधिकं कुर्वत्य इव स्थिताः **मृगदृशः** स्त्रियः **आरात्रिकं** नीराजनसंबन्धिनं **नियमं विधातुमन्तःपुरं तिलकयन्ति** अलंकुर्वन्ति। इतस्ततः संचरन्तीत्यर्थः॥ ४८॥

सांध्यम्; संध्यासंबन्धिनं नियमम। परब्रह्मणि प्रवणमासक्तम्। मङ्गलाचरणमेव सौधं हर्म्यम्। मदागमनं प्रतीक्षमाणा वर्तस्व॥

इति श्रीनृसिंहराजविरचितायां संकल्पसूर्योदयव्याख्यायां प्रभावल्यां मुक्त्युपायारम्भो नाम तृतीयोऽङ्कः।



[1] इत्यात्रेयगोत्रसंभवेन अहोबिलनाम्ना विदुषा विरचिते—B.

## चतुर्थोऽङ्कः

(ततः प्रविशति कामो वसन्तश्च)

**कामः**—सखे वसन्त,

**इक्षुः पेशलमीदृशं मम धनुः पुष्पाण्यमी सायका-**
**स्तन्त्रीमञ्जुलनिःस्वना मधुकरश्रेणी शुभा शिञ्जिनी ।**
**भीरुः सन्नबलाजनो मम बलं तथ्यं परं कथ्यते**
**सोऽहं निर्जितशूलभृत्प्रभृतिकः संकल्पसिद्धोदयः ॥ १ ॥**

**प्रभाविलासः**

अथ कपटोपायलक्षणमभूताहरणं नाम गर्भसंधेरङ्गं प्रस्तूयते—ततः प्रविशति काम इत्यादिना । तत्र गर्भसंधेरङ्गानि द्वादश । तदुक्तम्—

"अभूताहरणं मार्गो रूपोदाहरणक्रमाः ।
संग्रहश्चानुमानं च तोटकातिबले तथा ।
उद्वेगसंभ्रमाक्षेपा द्वादशाङ्गान्यनुक्रमात् ॥"

इति । तत्राभूताहरणलक्षणम्—"अभूताहरणं प्राहुः कपटोपायकल्पनम्" इति । **इक्षुरिति । पेशलम्**; मृदु । अत्र दुर्बलसाधनसमवधानेऽपि स्वस्य

**प्रभावली**

अथ चतुर्थेऽङ्के कामवसन्तक्रोधलोभतृष्णादयश्चन्द्रोदयसमये समाधिप्रवण-पुरुषे सौप्तिकमिच्छन्तः समेत्य पुरुषसमीपे रक्षणपरं सुमतिसहायं विवेकं दृष्ट्वा भग्नोत्साहा दश दिशो विद्रुता इत्युच्यते—ततः **प्रविशतीत्यादि । इक्षुरिति ।**

[1]अपिच ;

[2]**त्वयि संभृतशस्त्रास्त्रे[3] सहाये मम संस्थिते ।**
**महता पश्य मोहेन विश्वमेकातपत्रितम् ॥ २ ॥**

**वसन्तः**—किमुच्यते ? कामः खल्वसि ।

**कामं कामं कामपि सिद्धिं करणैः स्वैः**
**कारं कारं कर्म निषिद्धं विहितं वा ।**
**न्यस्यन्ति त्वय्यद्भुतसीम्नि प्रतिबुद्धाः**
**कामोऽकार्षीन्मन्युरकार्षीदिति नाम ॥ ३ ॥**

प्रभाविलासः

विजयित्वमुक्तम् । अत्र श्लोके प्रसादो नाम गुणः, "द्रागर्थावगतिर्यत्र स प्रसादो निगद्यते" इति लक्षणात् । **द्राक्** ; शीघ्रम् ॥ १ ॥

**त्वयीति । शस्त्राणि ;** आयुधानि । **अस्त्राणि ;** बाणाः ॥ २ ॥

**काममिति । कामं कामम् ;** कामयित्वा कामयित्वा । **कारं कारम् ;** कृत्वा कृत्वा । अत्र कामोऽकार्षीदित्यादिश्रौतपदेन घटनात् गुम्भना

**प्रभावली**

ममेदृशं पेशलमिक्षुर्धनुर्भवतु । **शिञ्जिनी** ; धनुर्ज्या । **तन्त्री** ; विपञ्ची ; तद्वन्मधुरस्वरा । एवमपि मया परं तथ्यं कथ्यते । सोऽहं तादृशोऽप्यहं निर्जित-शूलभृत्प्रभृतिकत्वात् संकल्पेन सिद्ध उदयो विभवो यस्य सोऽस्मि ॥ १ ॥

**संभृतशस्त्रे** ; संभृतानि संपादितानि शस्त्राणि येन तस्मिन् । **त्वयि मम सहाये** संस्थिते सति महामोहेन जगत्सर्वमेकातपत्रितं पश्य ॥ २ ॥

कामशब्दाभिप्रेतं विवृणोति—**कामं काममिति । प्रतिबुद्धाः** ; ज्ञानिनोऽपि । **कामपि सिद्धिं** स्वाभीष्टां **कामं कामं** कामयित्वा ; अभीक्ष्ण्ये द्विरुक्तिः । **स्वैः**

[1] ख reads अपिच and the stanza following it, after the stanza कामं कामं etc. [2] मयि संभृतशस्त्रास्त्रे त्वन्निदेशव्यवस्थिते—ख.

[3] सर्वास्त्रे—क.

अपिच—

**विषमनयनमुख्यैर्विक्रमक्रीडितं ते**
**सुरपतिभवनानि स्वैरसंचारभूमिः ।**
**उदधिवलयितेयं क्षोणिरुद्यानसीमा**
**कथमिव मदन[1] त्वं वर्ण्यसे कान्तिसिन्धुः ॥ ४ ॥**

**कामः**—[2]सखे, सर्वलोकविदितमात्मनोऽपि[3] वैभवमनुचिन्तय । यदेतत्—

**प्रख्यातस्त्वयि संभवः सुमनसां विश्वं त्वया नन्द्यते**
**मुख्यस्त्वं किल षड्विधेषु ऋतुषु ज्योतिस्त्वदेकाश्रयम् ।**
**यत्र श्रीर्धृतपङ्कजा स च परस्त्वत्संश्रयो माधवः**
**कामस्ते सचिवः क एव भविता कालोत्तमस्त्वत्समः ॥ ५ ॥**

प्रभाविलासः

नामालंकारः, "शब्दस्य प्रकृतेः सम्यग्घटना गुम्भना मता" इति लक्षणात् । रत्याख्यो भावध्वनिः ॥ ३ ॥ **विषमनयनेति** । स्पष्टम् ॥ ४ ॥

**प्रख्यात इति** । **सुमनसाम्**; पुष्पाणाम्; देवानामिति च व्यज्यते ।

प्रभावली

**करणैः**; मनोवाक्कायैः, इन्द्रियैर्वा । **निषिद्धं** पापं **विहितं** नित्यनैमित्तिकादिकं कर्म **कारं कारं** कृत्वा कृत्वा तत्सर्वमद्भुतानां परकाष्ठाभूते त्वयि **समर्पयन्ति** । कथम्? कामोऽकार्षीत्; "कामेन हि ददाति, कामेन प्रतिग्रहीता" इत्युक्तप्रकारेण काम एव सर्वमकरोत्, नाहम् । मन्युरेवाकार्षीत्, नाहमिति । मन्युः क्रोधः । नाम प्रसिद्धौ ॥ ३ ॥

**विषमेति** । ते तव **विक्रमक्रीडितं** विक्रमरूपा क्रीडा **विषमनयनमुख्यैः** त्रिनेत्रप्रभृतिभिः, नेतरैः क्षुद्रैः । ते **स्वैरसंचारभूमिः** स्वर्गभवनानि । **उदधिवलयिता**; समुद्रपरिवेष्टिता । अनेन सर्वा भूमिरित्युक्तं भवति ॥ ४ ॥

**प्रख्यातेति** । **सुमनसां** ममास्त्राणां **संभव** उत्पत्तिः त्वय्येवेति प्रसिद्धः ।

[1] मदनस्त्वं—ग. [2] अये—क. [3] अपि omitted क.

अपिच—

**वसन्तस्त्वं वह्निर्मलयपवनः सारथिरसा-**
**वशोकादिर्ज्वाला मधुकरगणो धूमपटली ।**
**सुधासूतिः स्नेहस्तदिह जितनिर्वाणवचसो**
**विरक्तिस्ते दाह्या[1] द्रुहिणगिरिशादेरपि सतः ॥ ६ ॥**

प्रभाविलासः

**मुख्य इति** । "मुखं वा एतदृतूनां यद्वसन्तः" इति श्रुत्यर्थोऽभिप्रेतः । **ज्योतिः**; ज्योतिष्टोमः । "वसन्ते वसन्ते ज्योतिषा यजेत" इति श्रुतेस्त्वदेकाश्रयमित्युक्तम । अन्यत्र ज्योतिः निरतिशयतेजोरूपं ब्रह्मेति व्यज्यते, "तं देवा ज्योतिषां ज्योतिः" इति श्रुतेः । **यत्र**; वैशाखमासे । **श्रीः**; वसन्तलक्ष्मीः । **धृतपङ्कजा**; पद्माकरवती । **स माधवः**; वैशाखः । लक्ष्मीविशिष्टः श्रीकृष्णोऽपीति व्यज्यते । अत्र पदव्यङ्ग्यं नाम ध्वनिभेदः । तदुक्तं काव्यप्रकाशे—"वाक्ये द्व्युत्थः पदेऽप्यन्ये प्रबन्धेऽप्यर्थशक्तिभूः" इति । अन्ये व्यङ्ग्यभेदा इत्यर्थः ॥ ५ ॥

**वसन्त इति** । **सारथिः**; सहकारी । **अशोकादि**रित्यादिपदेन किंशुकमुच्यते । **सुधासूतिः**; चन्द्रः । निर्वाणशब्दश्रवणमपि न सहत

प्रभावली

इदं **विश्वं त्वयैव नन्द्यते**; संतोष्यते । षड्विधेषु **ऋतुषु त्वं मुख्यः** प्रधानः किल । "ऋतूनां कुसुमाकरः" इति हि गीतम । षड्विधेषु ऋतुष्वित्यत्र "ऋत्यकः" इति प्रकृतिभावः । **ज्योतिः** ज्योतिष्टोमः **त्वदेकाश्रयं** त्वदेकाधारम्, "वसन्ते वसन्ते ज्योतिषा यजेत" इत्युक्तेः । **यत्र** यस्मिन् त्वयि वसन्तऋतौ **श्रीः** वासुदेववल्लभा **धृतपङ्कजा** भवति, ग्रीष्मादौ पङ्कजाभावात् । **स च परो माधवः** परस्तात् स्थितः वैशाखमासः **त्वत्संश्रयो** भवति ॥ ५ ॥

**मधुकरगणः** भृङ्गश्रेणिः **धूमपटली** भवति । **सुधासूति**श्चन्द्रः तैलस्था-

[1] दाह्यम् इति प्रभावलीपाठः.

**वसन्तः**—महावीर मकरकेतन, [1]मादृशामतिशयस्त्वदर्थ एव । यथा—

**ऋतवो हि मत्प्रधानास्तवैव नानास्त्रशिल्पिनः सृष्टाः ।**
**विजयसमयं शशाङ्को विश्रमकालं व्यनक्ति दिवसेशः ॥ ७ ॥**

**कामः**—आस्तामयमन्योन्य[2]प्रशंसाविस्तरः, अवधातव्यं राजकृत्ये[3] ।

**वसन्तः**—यदुच्यते [4]वयस्येन । तदिह समानभावयो-

प्रभाविलासः

इति वक्तुं जितनिर्वाणवचस इत्युक्तम् । अत्र वसन्तादीनां बाधकत्वोक्त्या विरक्तेर्विरहिणीत्वप्रतीत्या विप्रलम्भशृङ्गारो व्यज्यते । द्रुहिणेति पार्वत्यां बुद्धिविपर्यासो व्यज्यते । गिरिशेति विष्णुमायायां स्त्रियाम् ॥ ६ ॥

**ऋतव इति** । पुष्पजातिमात्रस्य मदनास्त्रत्वमाह—**नानास्त्रेति** । अत्र वीरशृङ्गारयोर्ध्वनिः ॥ ७ ॥

**प्रभावली**

नीयः; चन्द्रस्याम्मयत्वात् स्नेहत्वम् । **तत्**; तस्मात् । **जितनिर्वाणवचसः**; मोक्षप्रसङ्गो जितो येन तस्य । **तव द्रुहिणगिरिशादेरपि सतः**; ब्रह्मरुद्रादीनामपि महताम् । जात्येकवचनम् । **विरक्तिः**; दाह्यमिन्धनस्थानीयम् । अतः त्वत्समः क इति पूर्वेण संबन्धः ॥ ६ ॥

**त्वदर्थः**; त्वत्प्रयोजनकः । तदुदाहृत्य दर्शयति—**ऋतव इति** । **मत्प्रधानाः**; वसन्तादयः । नानास्त्रशिल्पित्वेन सृष्टाः; ब्रह्मणेति शेषः । मादृशामित्यत्र विवक्षितौ चन्द्रसूर्याविति दर्शयति—**विजयसमयमिति** । विजयसमयः रात्रिः । तां दर्शयति चन्द्रः । विश्रम उपरतिः । तस्य कालो दिवसः । तं व्यनक्ति सूर्यः ॥ ७ ॥

एवमन्योन्यप्रशंसां परिसमाप्य राजकार्ये अवधातव्यमित्याह—**आस्ता-**

[1] मादृशामप्यतिशयः—क. ग. व.
[2] प्रशंसनविस्तरः—ख, ग.
[3] कृत्यम्—घ. ङ.
[4] वसन्तेन—ख. च.

रावयोः[1] समाधिप्रवणपुरुषचेतःक्षोभणे शृङ्गारोद्दीपनविभावकृत्यं मय्यायत्तम्, भवता पुनरालम्बनविभावसंपत्तिरुपपादनीया[2]।

**कामः**—सुहृत्संमतमहमिदमिदानीमाचरामि[3]। अयं खलु, अपरिचितशुभाश्रयधारणाभिलाषी पुरुषः चिरपरिचितशुभालम्बने सुखेन संमुखयितुं शक्यते। अस्ति हि देवासुरसिद्धगन्धर्वविद्याधर[4]-किंनरकिंपुरुषमानुषादिसर्वपुरुषचक्षुःप्रत्यक्षं स्वतः पुरुषार्थभूतं सुलोचनाभिधानं ब्रह्म। न चैतदनुपपन्नम्;

**परमानन्ददायिन्यः प्रजानां सृष्टिहेतवः।**
**ब्रह्मलक्षणलक्षण्या[5] न कथं ब्रह्म योषितः॥ ८॥**

**प्रभाविलासः**

उद्दीपनविभावा अधस्तादुक्ताः। रससमवायिकारणभूतौ नायिकानायकौ आलम्बनविभावः। **परमानन्देति**। सौरतसुखस्य ब्रह्मानन्दतुल्यत्वं कामशास्त्रप्रसिद्धमभिप्रेत्य परमानन्देत्युक्तम्। उक्तं च रतिरहस्ये—

**प्रभावली**

**मिति**। **अवधातव्यम्**; अवधानं कर्तव्यम्। **समानभावयोः**; समानाभिप्राययोः। **क्षोभणे** विषये। **शृङ्गारोद्दीपनविभावकृत्यम्**; शृङ्गाररसस्य उद्दीपनो यो विभावः "विभावैरनुभावैश्च" इत्यत्र विभावशब्दोक्तः चन्द्रोदयमन्दमारुतकोकिलालापादिः, तद्रूपं **कृत्यम्**। **मयि**; वसन्ते। **भवता आलम्बनविभावस्य**; आलम्बनं नाम शृङ्गारादिरसाश्रयो युवत्यादिः, तस्य विभावः भ्रूविक्षेपादिः, तस्य संपत् संपाद्या। **सुहृत्संमतम्**; त्वदभिहितम्। **अयमित्यादि**। **अयं पुरुषः अपरिचितः** यः **शुभाश्रयः**; तस्य धारणा ध्यानसंततिः, तत्राभिलाषी। न तु तत्र शक्तः। **चिरपरिचितम्** अनेकजन्मसु परिचितं यत् **शुभालम्बनं**

[1] आवयोः omitted—ख. घ.
[2] कृत्यमुपपादनीयम्—ख.
[3] स्वयमाचरामि—क.
[4] विद्याधर omitted—ग.
[5] शालिन्यः—क. ख. ग.

**वसन्तः**—सखे, त्रय्यन्तसंमतश्च त्वदभिमतोऽयमर्थः। "स्त्रियो ब्रह्म" इति हि प्रथममामनन्ति[1]। "उत वा पुमान्" इति तु वैभवोक्तिः।

अपिच—

**अलस[2]ललितमन्दं स्पन्दनं लोचनाना-**
**मकृतकरमणीया वृत्तयो विभ्रमाणाम्।**
**अपि तरुणवधूनामाहरेयुर्मुनीन्द्रान्**
**शतमपि च विधूय ब्रह्मणां शाश्वतानाम्॥ ९॥**

**प्रभाविलासः**

"तत्सौख्यं परतत्त्ववेदनमहानन्दोपमं मन्दधीः को वा विन्दति सूक्ष्ममन्मथ-कथावैचित्र्यमूढो जनः" इति। प्रसिद्धमेव ब्रह्मलक्षणं जगज्जन्मादिहेतुत्वम् आनन्दप्रदत्वं च॥ ८॥

**अलसेति**। **अलसम्**; लक्ष्यान्निवृत्तम्। **वलितम्**; पुनः प्रवृत्तम्।

"अलसं तदभीष्टार्थाद् व्रीडादेर्यन्निवारितम्।
वलितं तन्निवृत्तस्य भूयस्त्र्यश्रावलोकनम्॥"

**प्रभावली**

शुभाश्रयः युवतिरूपं, तत्र सुखेनाभिमुखयितुं शक्यते। युवतीनां शुभालम्बन-त्वमुपपादयति। ब्रह्म खलु शुभालम्बनम्। ब्रह्म च युवतय एवेत्याह—**अस्ति हीति**। **चक्षुःप्रत्यक्षम्**; अपरोक्षरूपम्। **स्वतः पुरुषार्थभूतम्**; वासुदेवाख्यं तु स्वतो न भवति, तदनुभवादेरेव पुरुषार्थत्वादिति भावः। **सुलोचनाः**; युवतयः। तासां ब्रह्मत्वमनुपपन्नम्, ब्रह्मलक्षणलक्षितत्वाभावादित्याशङ्क्याह—**परमेति**। परमानन्ददायित्वं प्रजासृष्टिहेतुत्वमुभयं किल ब्रह्मलक्षणम्। उक्तं च दयाशतके; "जगज्जन्मस्थेमप्रलयरचनाकेलिरसिकः" इति। तदुभयस्याप्यत्र विद्यमानत्वात् स्त्रियो न कथं ब्रह्म? किंतु ब्रह्मैवेत्यर्थः॥ ८॥

"स्त्रियो ब्रह्म उत वा पुमान्" इत्यादिः श्रुतिः। **वैभवोक्तिः**; प्रशं-

[1] श्रूयते—क.

[2] वलितेति प्रभाविलासपाठः

प्रभाविलासः

इत्युक्तत्वात् । **मन्दम्**; प्रियदर्शनसुखातिशयेनेषन्मुकुलितम्,

"स्फुरत्संश्लिष्टपक्ष्माग्रा सुखविश्रान्ततारका ।
मुकुला दृष्टिरानन्दे तन्मन्दमिति कथ्यते ॥"

इत्युक्तत्वात् । **विभ्रमाणाम्**; त्वरया भूषादिव्यत्यासानाम् । **वृत्तयः**; व्यापाराः । **अकृतकरमणीयाः**; स्वभावरमणीयाः । यद्वा विभ्रमशब्देन चेष्टा उच्यन्ते । ताश्च हावभावादयः । तदुक्तं रसमञ्जर्याम्—

"हावो भावो हेला माधुर्यं धैर्यमथ पुनर्लीला ।
सविलासा विच्छित्तिः संभ्रमकिलिकिञ्चिते तथा चैव ॥
मोट्टायितकुट्टमिते बिब्वोकश्चैवं ललितमित्यपि च ।
चकितं विहृतं हासः कुतूहलं चेत्युशन्ति तच्चेष्टाः ॥

इति । तत्र रसाविर्भावयोग्यत्वं भावः । स च प्रपित्समानयौवनासु लज्जोदयादिकार्यलिङ्गेन ज्ञेयः । भाव एवेषद् दृष्टविकारो हावः । सुव्यक्तविक्रिया हेला । माधुर्यमभूषणेऽपि नितरां रम्यत्वम् । धैर्यं शीलादेरलङ्घनम् । लीला वाग्गतिचेष्टाभी रमणानुकृतिः । विच्छित्तिः कतिपयभूषणयोगेन रम्यत्वम् । विलासः प्रियवीक्षायां तात्कालिकविकारः । किलिकिञ्चितं क्रोधाश्रुहर्षभीत्यादेः संकरः । संभ्रमः त्वरया भूषादिव्यत्यासः । मोट्टायितं भावसूचनेष्टालापः । कुट्टमितं रतौ सुखबाहुल्यम् । बिब्वोको रमणकथालापेनेषदाचरणम् । ललितं सुकुमाराङ्गचतुरविलासः । चकितं भयसंभ्रमः । विहृतं लज्जयावसरवक्तव्यकथनम् । हासः तारुण्य-

प्रभावली

सोक्तिः, न तत्त्वोक्तिः । शाश्वतब्रह्मणोऽपि सुलोचनाभिधानं ब्रह्मातिशयितवैभवमित्याह—**अपिचेति** । **अकृतकरमणीयाः**; स्वाभाविकमनोहराः **वृत्तयश्च**

**कामः**—(सहर्षम्) सखे वसन्त, अवितथमेवैतदभिलप्यते ।

ततश्च ;

**अयमप्सरसां गणः प्रनृत्यन्**
**विशिखासारविकल्प्यमानदृष्टिः**[1] ।
**अभिगच्छतु मङ्क्षु मत्प्रयुक्तः**
**पुरुषं काङ्क्षितपुण्यहीनयोगम्**[2] ॥ १० ॥

**प्रभाविलासः**

विकारजमाकस्मिकं हसनम् । कुतूहलं रम्यवस्तुदर्शनचापलम् । **शतमिति** । एकब्रह्मविधूननं कैमुतिकन्यायसिद्धमिति भावः । अत्र विभ्रमतरुणवधूमुनीन्द्रादिपदैः च्यवनवृत्तान्तो ध्वन्यते । च्यवनो हि अतिवृद्धस्तपसा वल्मीकैक्यमापन्नः पिपीलिकादिभिर्भक्ष्यमाणो यदृच्छयान्तिकं प्राप्तां शर्यातिपुत्रीं सुकन्यां नाम कन्यां दृष्ट्वा तद्गुणवागुरितः पाणिं जग्राहेति भारते प्रसिद्धम् ॥ ९ ॥

**अयमिति** । विशिखासारेण बाणधारासंपातेन विकल्प्यमाना उपमीयमाना दृष्टयो यस्य सः ॥ १० ॥

**प्रभावली**

**मुनीन्द्रान्** जितेन्द्रियानपि **आहरेयुः** वशीकुर्युः । किं कृत्वा? **शाश्वतानां ब्रह्मणां** तैः ध्यायमानानां **शतमपि** विधूय त्याजयित्वा वशीकुर्युरिति ॥ ९ ॥

**अवितथम्**; सत्यमेवैतत् । ब्रह्मभूताः स्त्रिय एव मत्प्रयुक्ताः पुरतः पुरुषमभिगच्छन्त्वित्याह—**अयमिति** । **विशिखासारः**; बाणवर्षः, तत्सदृशत्वेनोच्यमाना दृष्टिर्यस्य । **मङ्क्षु**; शीघ्रम् । **पुण्यहीनम्**; शाश्वतं ब्रह्म, पुण्यापुण्यरहितत्वात्; तेन योगः काङ्क्षितो येन तम् । यद्वा पुण्यैर्योगो यस्य नास्ति पुण्ययोगहीनं शाश्वतं ब्रह्म, तत् काङ्क्षितं येन तम् ॥ १० ॥

[1] विकल्पमानदृष्टिः—ग. घ.
[2] योगहीनम्—घ. च.

**वसन्तः**—वयस्य पुष्पधन्वन्, त्वदादेशवर्तिनीषु मत्तकाशीनीषु सिद्धं नः समीहितम् । अद्य हि—

**स्वादुगीतमधुमोहितश्रुतेश्चारुनृत्तवशवर्तिचक्षुषः ।**
**भावभेदभृतकीकृतात्मनो योगिनस्त्यजति यौवतं न धीः ॥११॥**

**कामः**—(विचिन्त्य सरोषहासम्)

**यदि मामवमत्य संयतेत व्यवसायान्वयदर्पितो विवेकः ।**
**[1]वनिताशतवञ्चितस्य पुंसः स्वयमाधास्यति[2] सौभरेरवस्थाम् ॥१२॥**

प्रभाविलासः

**स्वाद्विति** । **भृतकीकृतः** ; वशीकृत इत्यर्थः । **यौवतम्** ; युवतिसमूहम् ॥ ११ ॥

**यदीति** । सौभरिर्नाम कश्चिन्मुनिर्वृद्धो जलान्तस्तपश्चरन् पुत्रपौत्रसहस्रपरिवृतं कंचन मत्स्यमवलोक्य संसारे मतिं कृत्वा मान्धातृतनया उपयेम इति श्रीविष्णुपुराणे प्रसिद्धम् । तदिदमाह—**सौभरेरिति** ।

"वृतो मयायं प्रथमं मयायं गृहं विशन्नेव विहन्यते किम् ।
मया मयेति क्षितिपात्मजानां तदर्थमत्यर्थकलिर्बभूव ॥"

इति कन्यावचनमभिव्यनक्ति—**वनिताशतवञ्चितस्येति** ॥ १२ ॥

प्रभावली

**आदेशः** ; शासनम् । **मत्तकाशिन्यः** ; उत्तमस्त्रियः । **सिद्धं समीहितम्** ; उद्युक्तं कार्यम् । एवं सति पुरुषस्य श्रोत्रनेत्रमनांसि युवतिगणं न मुञ्चन्तीत्याह—**स्वाद्विति** । **स्वादु** यत् **गीतमधु**, तेन वशीकृतश्रोत्रस्य । **चारु** यन्**नृत्तं**, तद्वशवर्तिनेत्रस्य । **भावभेदाः** ; रत्यादयः, तेन दासीकृतमनसः पुंसः धीर्यौवतं न त्यजति ॥ ११ ॥

**सरोषहासम्** ; रोषाद्धसित्वेत्यर्थः ; विवेकगर्वस्मरणात् । **यदीति** । **संयतेत** ; यत्नं कुर्यात् । **व्यवसायसहायदर्पितः** **वनिताशतैः** पुंसि वशीक्रियमाणे

[1] ललनाशतमोहितस्य—क.   [2] आयास्यति—ख.

वसन्तः—[1]भद्र, किमत्राद्भुतम्? विश्वविदितं हि भवतो वीरायितम्।

**विकस्वरसुरद्रुमप्रसवशस्त्रमाध्वीमद-**
**भ्रमद्भ्रमरसुन्दरीनिकरसंभृतज्याभृतः।**
**[2]प्रहृष्टपरभृत्प्रियापणववेणुवीणादिभिः**
**क्वणद्भिरुपघुष्यते [3]कुसुमधन्वनो विक्रमः॥ १३॥**

### प्रभाविलासः

**विकस्वरेति।** विकस्वराणां विकसतां सुरद्रुमसंबन्धिनां प्रसवानां पुष्पाणामेव शस्त्राणां माध्वीमदेन मरन्दजनितमदेन भ्रमन्तीनां भ्रमरसुन्दरीणां निकरेण संभृतां ज्यां बिभर्तीति तथोक्तः। पुंस्कोकिलभ्रमराणां हर्षोत्पादनेन कूजनोद्दीपकतया सुन्दरीप्रियाग्रहणम्। तत्र मदनस्तुत्या भावाख्या रतिर्व्यज्यते। तस्या उपसर्जनतया शृङ्गारोऽपि व्यज्यत इति रसवदलंकारः॥ १३॥

### प्रभावली

सति **सौभरेः** ऋषेरवस्थाम्; सौभरिर्मुनिः अन्तर्जले तपश्चरन् मत्स्यसंसारसौख्यं दृष्ट्वा स्वयमपि संसारासक्तो बभूवेति प्रसिद्धिः॥ १२॥

**किमिति;** अत्राद्भुतं नास्तीत्यर्थः। **वीरायितम्;** वीरवदाचरणम्। **विकस्वरः** यः **सुरद्रुमाणां प्रसवः** पुष्पं, तदेव शस्त्रं, तस्य माध्वी मकरन्दः, तया जातो यो मदः, तेन भ्रमन्त्यः **भ्रमरसुन्दर्यः** भृङ्ग्यः, तासां पङ्क्त्या संपादिता या धनुर्ज्या, तद्भृतः। **प्रहृष्टाः** याः परभृत्प्रियाः कोकिलस्त्रियः, ता एव पणववेणुवीणादयः, तैः। **क्वणद्भिः;** शब्दायमानैः। **उपघुष्यते;** जोघुष्यते। **भो कुसुमचाप,** तव पराक्रमः॥ १३॥

[1] भद्र omitted क.ख.ग.ङ. [2] परैः भृत भरणं यस्येति भावे क्विपि, परैः भ्रियते इति कर्मणि क्विपि वात्र परभृत्पदव्युत्पत्तिरवगन्तव्या.

[3] कुसुमचाप ते विक्रमः—घ.

तदिह लघुव्यापारलभ्ये वस्तुनि [1]न त्वया त्वरितेन प्रयतितव्यम्[2] ।

**मा भूदमोघविशिखं नमितं धनुस्ते**
**मौर्वी च मा भवतु पुङ्खितचित्रपुङ्खा ।**
**मद्दर्शितैरपि सखे बिभियाद्विवेकः**
**शाखानिषङ्गनिहितैः शतशस्त्वदस्त्रैः ॥ १४ ॥**

कामः—महति प्रतिपक्षे मैवं मन्दोत्साहेन भवितव्यम् । दृश्यते हि—

**मितप्रद्योतनिष्पाद्ये तमसामपसारणे ।**
**सहस्रेण करैः सार्धमुदेति दिवसेश्वरः ॥ १५ ॥**

### प्रभाविलासः

**मा भूदिति । पुङ्खितः**, योजितः चित्रपुङ्खो यस्याः सा । **निषङ्गः**; तूणीरः । अत्राक्षेपालंकारः, "प्रतिषेधोक्तिराक्षेपः" इति लक्षणात् ॥ १४ ॥

**मितेति । मितप्रद्योतः**; अल्पालोकः ॥ १५ ॥

### प्रभावली

**तदिति ।** अल्पप्रयाससाध्ये वस्तुनि न त्वया त्वरितव्यमिति यावत् । उक्तमर्थमुपपादयति—**मा भूदिति ।** अमोघबाणं ते धनुः **नमितं** मा भूत् । **मौर्वी च पुङ्खितचित्रपुङ्खा** संहितबाणा मा भवतु । त्वया प्रयासो न कार्य इत्यर्थः । तर्हि विवेकविजयः कथं स्यादित्यत्राह—**मद्दर्शितैरपीति । शाखा** एव निषङ्गाः, तत्र निहितैः त्वदस्त्रैः पुष्पैः, शतशो मद्दर्शितैरपि विवेको बिभियादेव ॥ १४ ॥

**प्रतिपक्षे** महति सति अल्पोद्योगेन **न भवितव्यम्** । दृश्यते हि दिवसेश्वरः अल्पसाध्ये बहुसंनाहवानित्याह—**मितेति । मितो** यः **प्रद्योतः** आतपः, तन्मात्रनिष्पाद्ये तमसो निरासे **सहस्रेण करैः सार्धमुदेति** ॥ १५ ॥

[1] न omitted—क.

[2] आकर्ण्यतामिदमवितथं सुहृद्वाक्यम् added after—क.

अपिच ;

**तिष्ठतु संग्रामकथा द्यूते पुरुषस्य वादमात्रे वा ।**
**भवति परिभूतिलेशे कति कति विपदो निदर्शिताः कविभिः॥१६॥**

**वसन्तः**—किमित्येवमात्मप्रभावमवमत्य परापरविश्वपरिभाविनस्ते कुतश्चित्परिभूतिलेशमाशङ्कसे । न खलु शलभाः सहस्रमपि सहस्रकिरणमभिभवन्ति । अद्य च[1] ;

**विपुलसुषुमापत्तौ नृत्यद्विहारतुरंगमे**
**मधुमदसमारम्भस्तम्बेरमस्थगितान्तरे ।**
**रतिरसरथोत्सेधे कश्चिद्दिधित्सितसंयमः**
**क्वचन भवतः स्कन्धावारे न जीवति जीवति ॥ १७ ॥**

प्रभाविलासः

सर्वत्रानुत्साह एव दोषमूलमित्याह—**तिष्ठत्विति** । **द्यूत इति** । बलरामादिभिः रुक्म्यादिषु व्यसनं निदर्शितम् । **वादमात्र इति** शिशुपालादिवधो व्यञ्जितः ॥ १६ ॥

**विपुलेति** । **विपुला सुषुमा** परमा शोभैव पत्तिः पदातिर्यस्मिंस्तस्मिन् । **विहारा** एव **तुरंगमाः** ; नृत्यन्तः विहारतुरंगमा यस्मिंस्तस्मिन् । **मधुमदस्य** मद्यजनितमदस्य **समारम्भा** उपक्रमा एव **स्तम्बेरमाः** गजाः,

**प्रभावली**

क्षुद्रद्यूतादिषु पुरुषस्य परिभवे सति बह्वयो विपदः कविभिरुक्ताः । महति संग्रामे किमु वक्तव्यमित्यभिप्रायेणाह—**तिष्ठत्विति** । संग्रामकथायां किमु वक्तव्यमित्यर्थः । **द्यूते** ; दुरोदरे । **केवलं वादे च** ; क्षुद्रेऽपीति भावः ॥ १६ ॥

**परापरविश्वपरिभाविनः** ; परे ब्रह्मादयः, अपरे मनुष्यादयः ; एवंरूपसमस्तलोकपरिभाविनः । परिभूतिः पराभवः । **विपुला सुषुमा** परा शोभैव

[1] हि—क.

न चेदानीं पुरुषः समाधिसौधमधिरूढः, यतस्ते तस्मिन् मनोरथप्रतिहतिशङ्का । [1]दृश्यते हि ;

**स्मरति महतामातङ्कानां मनस्कुरुते गृहान्**
**प्रसजति परब्रह्मप्राप्तौ समृद्धिमपेक्षते ।**
**अभिनिविशते भोगोदन्वत्यपत्रपते पुनः**
**प्रणिधिरधुना सिद्धापायः सितासितपद्धतिः ॥ १८ ॥**

**प्रभाविलासः**

तैः **स्थगितमन्तरं** यस्य, तस्मिन् । "मधु मद्ये पुष्परसे" इत्यमरः । **रतिरसः** सुरतसुखमेव रथोत्सेधो यस्मिंस्तस्मिन् । **स्कन्धावारे;** सैन्ये, युवतिसमूह इति यावत । **जीवति** सति **कश्चित् विधित्सितसंयमः** पुरुषः **क्वचन न जीवतीत्य**न्वयः । अत्र मदनस्तुत्या भावध्वनिः । तदुपसर्जनतया शृङ्गारवीरयोरभिव्यक्तिः । स्कन्धावारे न जीवति सति संयमी जीवतीति व्यतिरेकश्च व्यज्यते ॥ १७ ॥

**स्मरतीति । आतङ्कानामिति** कर्मणि षष्ठी । **समृद्धिम्;** ऐश्वर्यम् । **सितासितपद्धतिः;** शुद्धाशुद्धमार्गः । अत्र भावशबलता ध्वन्यते । तथाहि—

**प्रभावली**

पत्तिः पदातिः यस्मिन् । नृत्यन्तो विहारा एव तुरंगमा यत्र । **मधुना** यो मदः, तत्समारम्भा एव स्तम्बेरमाः गजाः, तैः स्थगितमाच्छादितम् अन्तरमवकाशो यत्र । **रतिरस** एव **रथोत्सेधः** रथानामुच्छ्रायो यत्र, तस्मिन् **भवतः स्कन्धावारे** युवतिसमूहरूपे **जीवति सति कश्चित्** पुमान् **विधित्सितसंयमः** संयमविधानेच्छावान् सन् **क्व जीवति**; न **क्वा**पीत्यर्थः ॥ १७ ॥

अयमेव सौप्तिकसमय इति सूचयन् मनोरथप्रतिहतिशङ्का न कार्येत्याह—**न चेति । समाधिः;** निरन्तरध्यानं, तदेव सौधः; तमिदानीमपि नारूढः । तदा खलु तव किंचित्प्रतिहतिशङ्का । समाधिसौधानारोहं दर्शयति—**दृश्यते**

[1] तथाहि—क.

**कामः**—तदिह सौप्तिकावसरः संदर्शितः प्रियसखेन ।

तथाहि—

**सोऽयमसमग्रयोगे पुरुषे सर्वास्त्रमोक्षसमयो मे ।**
**रथवैगुण्यविलक्षे राधेये फल्गुनस्येव ॥ १९ ॥**

प्रभाविलासः

स्मरतीति निर्वेदः । मनस्कुरुत इति स्पृहा । प्रसजतीति स्मृतिः । समृद्धिमपेक्षत इत्यौत्सुक्यम् । अभिनिविशत इति मोहः । अपत्रपत इति धैर्यमिति ॥ १८ ॥

अथ प्रसादन्याख्यां ध्रुवामाह—**सोऽयमिति** । तदुक्तम्—"प्रसादनी तु पात्राणां व्याकुलानां प्रसादानात्" इति । **राधेये**; कर्णे । **रथवैगुण्येन**; मग्ननेमितया रथप्रातिकूल्येन । **विलक्षे**; विमुखे । विप्रशापेन कर्णस्य पृथिवीप्रातिकूल्यं भारते प्रसिद्धम् ॥ १९ ॥

**प्रभावली**

**हीति** । **महतामातङ्कानाम्**; महतो भवरोगान्, स्मरति । "अधीगर्थदयेशां कर्मणि" इति षष्ठी । अथापि **गृहान्**; संसारम् । **मनस्कुरुते**; बहूकरोति । **परब्रह्मणः प्राप्तौ**; मोक्षे । **प्रसजति**; प्रकर्षेण सक्तो भवति । **समृद्धिं** संसारसौख्यसमृद्धिं चापेक्षते । **भोगोदन्वति**; विषयानुभवसमुद्रे **अभिनिविशते** । **पुनश्च** तत्रैव **त्रपते**; विषयानुभवात् लज्जते । एवं भूतस्यास्य **अधुना प्रणिधिः सितासितपद्धतिः**; संदिग्धमार्गः । **सिद्धापायो** भवति; सिद्धप्रत्यूहो भवति, प्रियसखेन त्वयेति शेषः ॥ १८ ॥

अयमेव पराक्रमावसर इति निश्चिनोति सनिदर्शनम्—**सोऽयमिति** । **पुरुषे असमग्रयोगे** असंपूर्णसमाधौ सति **अयमेव मे सर्वास्त्रमोक्षसमयः** । किमिव? **रथस्य वैगुण्यं** प्रतिहतिः, **तद्विलक्षे** लज्जिते **राधेये** कर्णे **असमग्रयोगे** छिन्नसंनहने **फल्गुनस्येव** अर्जुनस्येव । रथवैगुण्यात् लज्जिते कर्णे असंपूर्णसंनहने अर्जुनोऽवकाशं लब्ध्वा सर्वास्त्राणि तस्मिन् मुमोचेति कर्णपर्वण्युक्तम् ॥ १९ ॥

वसन्तः—भवतु नामैवं भगवतः समीची[1] समीहितसिद्धिः ।

**विरक्तिकपटक्रमाद् वृजिनकोटिभिर्दुर्दमे**
**परप्रणिधिकर्दमे पतितुमेकतानः पुमान् ।**
**[2]त्वदस्त्रगणताडनत्रुटितगर्वनिर्वेदवान्**
**भवप्रभृतिसेवितं भजतु भोगवर्गं पुनः ॥ २० ॥**

अपिच ;

**मलयपवनज्योत्स्नामल्लीमधुव्रतकूजित-**
**प्रभृतिविजयस्कन्धावारप्रधानपताकया ।**
**हसितलपितक्रीडाचित्रैरनुज्झदभिख्यया**
**युवतिकथया योगी सन्नप्यसङ्गमुपैति कः ॥ २१ ॥**

प्रभाविलासः

**विरक्तीति** । **परप्रणिधिः**; परब्रह्मोपासनम् । **भोगवर्गम्**; संसारमित्यर्थः । अत्र भवप्रभृतीति आरूढयोगस्य विजितकामस्य भवस्यैव पुनः संसारोऽवर्जनीय इति व्यज्यते ॥ २० ॥

**मलयेति** । **हसितलपितक्रीडाचित्रैः**; व्यापारैरिति शेषः । हसितलक्षणमुक्तम्—

**प्रभावली**

एवं सति **समीहितसिद्धिः**; कार्यसिद्धिः । **वृजिनं** पापं तस्य **कोटिभिः दुर्दमे** शोषयितुमशक्ये । **परे** ब्रह्मणि यः **प्रणिधिः** समाधिः, स एव **कर्दमः**, तस्मिन् । **विरक्तेः** वञ्चनानां क्रमात्; विरक्तिकृतवञ्चनयेत्यर्थः । पतितुमेकाग्रः **पुमान् त्वदस्त्रगणताडनात्** त्रुटितगर्वत्वेन **निर्वेदवान्** सन् **भवप्रभृतिभिः** ब्रह्मरुद्रादिभिः **सेवितं** भोगवर्गं पुनर्भजतु । समाधिमारुरुक्षुरपि त्वदस्त्रताडितो गर्वं विहाय पुनरपि भोगवर्गमेव भजेदित्यर्थः ॥ २० ॥

विरक्तोऽपि युवतिप्रसङ्गात् संसारसङ्गं को वा न प्राप्नोतीत्याह—

[1] समीचीना—ग. घ. [2] त्वदस्त्रगणतापन—क.

**कामः**—सखे, सर्वथा नूनमविचक्षणो विवेकः । यत्सागरतरणगगनातिलङ्घनमरीचिकाचर्वणमहीतलमज्जनादिवत्[1] अशक्यमेव समाधिलाभमाधिव्याधिशालिनः पुरुषस्य बालिश इव साधयितुमीहते । अपिच ;

**पुरुषमजहद्भोगश्रद्धापुरस्कृतसंभ्रमं**
**विषयमदिरास्वादक्षीबं विमोचयितुं स्थितः ।**
**अमृतमिलितद्राक्षावल्लीफलद्रवसंपदा-**
**[2]ममरतरुणीबिब्बोकानामवैति न वैभवम् ॥ २२ ॥**

प्रभाविलासः

" वक्त्रनेत्रकपोलैश्च संफुल्लैरुपलक्षितः ।
किंचिल्लक्षितदन्तैश्च तदा हसितमुच्यते ॥ "

इति ॥ २१ ॥

**पुरुषमिति । स्थितः ;** विवेक इति शेषः ॥ २२ ॥

**प्रभावली**

**मलयेति । मलयपवनः ;** मन्दमारुतः । **ज्योत्स्ना ;** चन्द्रिका । **मल्ली ;** मल्लिका । **मधुव्रतकूजितम् ;** भृङ्गगीतम् । एतदादिविजयस्कन्धावारस्य जयशीलस्य सैन्यस्कन्धावारस्य प्रधानपताकयेव स्थितया । **हसितं** हासः, **लपितं** वचनम्, **क्रीडाः** लीला ; आभिश्चित्रैः आश्चर्यभूतैः हसितादिभिः प्राप्तशोभया **युवतिकथया** युवतीनां प्रसङ्गेन, युवतिविषयकथया, युवत्या कृतकथया वा, **योगी** विरक्तोऽपि को वा निःस्पृहत्वम् **उपैति**, न कोपीत्यर्थः ॥ २१ ॥

असमर्थत्वे हेतुं दर्शयति—**यदिति** । सागरतरणं, गगनातिलङ्घनं, मरीचिकाया आस्वादनं, महीतलमज्जनम्, आदिशब्देनाकाशारोहादिः । तद्वदशक्य एव समाधिलाभः । समाधिलाभे विघ्नानाह—**आधीत्यादि** । **आधिः ;** मनःपीडा । **व्याधिः ;** देहपीडा, तद्वतः पुरुषस्य **बालिशो** मूर्ख इव

[1] आदि omitted—क. [2] अमरमहिला—ग.

दृश्यतां पुनरियमुभयतःपाशा रज्जुः—

**विवेकावष्टम्भादुपजनितवैराग्यविभवो**
**यदि क्रुध्येन्मह्यं भवति न कथं क्रोधविजितः ।**
**अथ त्यक्तक्रोधो यदि[1] कथमपक्रामयतु मां**
**मुधा कामक्रोधप्रशमनकथा मूढमनसाम् ॥ २३ ॥**

(ततः प्रविशति विकृतवेषः क्रोधः)

**क्रोधः**—(ससंभ्रममुपसृत्य) स्वस्ति[2] सुहृदे स्वैरसंचार-[3]विजितविवेकविभवाय कुसुमधन्वने । कः खल्वसौ विवेकवशवर्ती

**प्रभाविलासः**

**विवेकेति** । क्रोधेन तुल्यन्यायत्वव्यञ्जनार्थं कामपदग्रहणम् । वक्ष्यति च "विजेतुकामः" इत्यादिना ॥ २३ ॥

**प्रभावली**

साधयितुमीहते । विवेको मूढ एवेत्याह—**अपिचेति** । **अजहती** या **भोगश्रद्धा**, तया **पुरस्कृतः संभ्रमो** विलासः यस्य तम् । **विषया एव मदिरा** मद्यं, तस्या **आस्वादेन** मत्तं पुरुषं **विमोचयितुं** मोक्षं प्रापयितुमुद्युक्तो विवेकः, अमृतमिश्रः यो द्राक्षावल्लीफलद्रवः रसः, तस्य संपदिव संपत् येषाम्; **अमरतरुण्यः** अप्सरसः **तद्विब्बोकानां** विलासानां **वैभवं नावैति**; न जानातीत्युत्प्रेक्षा । जानाति चेदेवं नोद्युङ्क्त इत्यर्थः ॥ २२ ॥

उभयतःपाशत्वमेव दर्शयति—**विवेकेति** । विवेकबलात् जातवैराग्यातिशयः पुमान् मह्यं यदि क्रुध्येत्, स कथं क्रोधविजितो न भवति । अयं मां प्रति त्यक्तक्रोधो यदि, क्रोधाभावे कथं मामपक्रामयेत्; अन्यतो गमयेत् । कामाभावे क्रोधः, क्रोधाभावे कामस्तिष्ठतीत्युभयतःपाशत्वम् । **मूढमनसां कामक्रोधप्रशमनकथा मुधा**; व्यर्थैव ॥ २३ ॥

**तत इति**; एवमुभयोः कथयतोरनन्तरम् । **विकृतवेषः**; क्रोधाविष्टस्य विकृतवेषत्वात् धर्म्याकारो धर्म उपचर्यते । **स्वैरसंचारमात्रेण विजितो**

[1] मयि—क. [2] स्वस्त्यस्तु—ङ. [3] विजितभववैभवाय—ख.

कामक्रोधप्रशमनकथा[1]वृथाजल्पमुपकल्पयति[2] । (विकटं परिक्रम्य साट्टहासम्)

अयमहमुद्भटप्रथनचारभटारभटी-
नटपतिरुत्थितः कथमुदेतु विवेककथा ।
यदनुविधायिदैत्यभयसंज्वरितासु मुधा
सुरसुभटीपयोधरतटीषु पटीररसः ॥ २४ ॥

प्रभाविलासः

**विकटं परिक्रम्येति** । विकटं लास्यविशेषः, "विरूपवेषावयवव्यापारो विकटं मतम्" इति भरतवचनात् । **अयमिति** । **उद्भटे** अतिघोरे **प्रथने** युद्धे चारः संचारो येषां, ते च ते **भटाश्च,** त **एवारभटीनटाः** उद्धतनटाः, तेषां **पतिः** । **सुरसुभटीपयोधरतटीषु यत्क्रोधानुविधायिदैत्यभयसंज्वरितासु** सतीषु **पटीररसः मुधा** वितथः । भयोदयात् परं विषयेषु पुनरप्रवृत्तेः पटीरलेपेऽपि तापानिवृत्तेरिति भावः । अत्र श्लोके शब्दार्थयोरतिप्रौढतया आरभटी नाम वृत्तिः "वृत्तिमारभटीमाहुः प्रौढत्वादर्थशब्दयोः" इति लक्षणात् ॥ २४ ॥

**प्रभावली**

**विवेकविभवो** येन । विवेकवशवर्तिनं कंचिद्भर्त्सयति—**कः खल्विति**; को वायमित्यर्थः । कामक्रोधयोः प्रशमनकथाया वृथाजल्पः कार्यस्याशक्यत्वात् । **उपकल्पति**; करोतीत्यर्थः । **विकटम्**; प्रकटं विषमं वा । परितः पादक्षेपं कृत्वा । **अट्टहासः**; क्रोधस्य स्वाभाविको धर्मः । स्ववैभवं कथयति—**अयमहमिति** । उद्गता भटा यस्मिन् तदुद्भटं यत्प्रथनं युद्धं, तत्र चारः चरणं यस्य, स चासौ भटश्च, तस्यारभटी उग्रं नृत्तं, तस्या नटपतिः नर्तकः; अयमहमुत्थितः । एवं मयि क्रोधे सत्युत्थिते विवेकप्रसङ्गः कथमुदेति । क्रुद्धे विवेकप्रसङ्ग एव नास्तीत्यर्थः । यस्यानुविधायिनः अनुवर्तमानाः ये दैत्याः,

[1] कथा omitted—च.

[2] उपपादयति—क. ख. ग.

**कामः**—स्वागतं प्रियसुहृदे मत्प्रतिपक्षनियतमन्यवे मन्यवे महारथाय। समागतोऽसि च स्वामिकार्यनिर्वहणसमयमनुचिन्त्य मत्साहाय्यकमनोरथेन। वर्तयसे च स्ववशे वशिनोऽपि महेश्वरादीन्? अहो जितं महाराजेन। किंच;

**मुधारम्भे दम्भे मयि च मदने [1]मुक्तकदने**
**मितोत्साहे मोहे वृजिनगहने व्याप्तदहने।**
**अवज्ञालेशाद्यैरपि खलु भवानिन्धनशतैः**
**प्रदीप्तः प्रत्यञ्चं प्रणिधिमुपरोद्धुं प्रभवति॥ २५॥**

प्रभाविलासः

**मन्यवे**; क्रोधाय। "मन्युर्दैन्ये क्रतौ क्रुधि" इत्यमरः। **मुधेति**। **कदनम्**; युद्धम्। **गहनम्**; वनम्। **प्रत्यञ्चं प्रणिधिम्**; प्रत्यगात्मध्यानम्॥ २५॥

**प्रभावली**

तेभ्यो भयेन **संज्वरितासु** संतप्तवतीषु, सुरसुभटानां स्त्रियः सुरसुभट्यः तासां, **पयोधरयोः** स्तनयोः **तटीषु**, **पटीररसः** संज्वरशान्त्यर्थं प्रयुक्तः **मुधा** व्यर्थो भवति। पटीररसः चन्दनरसः। तेनापि संज्वरस्याशान्तत्वात्॥ २४॥

**स्वागतम्**; कुशलम्; अस्त्विति शेषः। **मत्प्रतिपक्षाः** कामवैरिणो विवेकादयः; तत्र नियतमन्यवे। **मन्यवे**; क्रोधाय। उचितावसरे प्राप्तस्त्वमित्याह—**समागत इति**। **मत्साहाय्यकम्**; मत्सहायकरणं, तन्मनोरथेन। मम सहायं कर्तुमागतोऽसीत्यर्थः। **वशिनोऽपि महेश्वरादीन् स्ववशे** स्थापयसि। कच्चिदिति शेषः। **महाराजेन**; महामोहेन। अस्मदीयेभ्यः सर्वेभ्योऽप्यतिशयितवीर्योऽसीत्याह—**मुधेति**। **दम्भः**; मिथ्याचारः, तस्मिन् व्यर्थारम्भे भग्नोत्साहे सति। **मदने मयि च त्यक्तयतने** निरुद्योगे सति। **मोहे राजनि मितोत्साहे** मन्दपराक्रमे। **वृजिनगहने** पापाटव्यां **व्याप्तदहने** दग्धायामित्यर्थः। एवं सर्वेषु प्रतिहतेष्वपि **भवान् अवज्ञालेशाद्यैरपि इन्धनशतैः** प्रदीप्तः सन् पुरुषस्य **प्रत्यञ्चं** प्रत्यगात्मविषयं **प्रणिधिं** समाधिं प्रतिबन्धुं **प्रभवति** समर्थोऽसि॥ २५॥

[1] त्यक्तयतने इति प्रभावलीपाठः

**वसन्तः**—नन्वसौ पवनपावकसमागमः, यदुत कामस्य तव च संगतम्। तदिह किमिति सामग्रीसंभवे साध्यसंपत्तावुदास्यते? अनुसरति खलु [1]उत्साहमभिलषितसिद्धिः। एतदेव चेदानीमात्मसंभवेन प्रियसुहृदा पुनः पुनरभिहितमभिमतप्रतिलम्भनमनुपश्यामि। यदुत—

**रतिपरिवारयोषिदनुपालितरत्नलता-**
**स्तबकविलोभनीयललितस्तनभारनताः।**
**अमरमृगेक्षणाः परिचरन्तु विरक्तिधनं**
**मदनधनुर्गुणभ्रमरमन्थरतारदृशः॥ २६॥**

प्रभाविलासः

**रतीति। मृगेक्षणा इति**; मृगाणामीक्षणे नेत्रे इव विशाले ईक्षणे यासां ता इति उपमेयधर्मेवादीनां लोपे त्रिलोपे समासार्थलुप्तोपमालंकारः। उक्तं च काव्यप्रकाशे—"त्रिलोपे च समासगा" इति। अत्र श्लोके संयुक्ताक्षरत्वेऽपि श्रुतिरम्यत्वेन सुकुमारता नाम गुणः, "संयुक्ताक्षरसत्त्वेऽपि श्राव्यत्वं सुकुमारता" इति लक्षणात्॥ २६॥

**प्रभावली**

हे क्रोध, **कामस्य** तव च यत् संगतं समवायोऽस्ति, असौ पवनपावकसमागमः। ननु सामग्रीसंभवे उभयसंमेलने सति साध्यस्य सिद्धौ किमिति उदास्यते विलम्ब्यते? **उत्साहवन्तम्**; उद्योगवन्तम्। **एतदेव**; युवतिभिः पुरुषपरिचरणम्। **आत्मसंभवेन**; कामेन। अभिमतवस्तुनि प्रतिलम्भनं साधनम्। **रतीति**। रतेः परिवारभूताभिः योषिद्भिः संवर्धिता याः रत्नलताः, तासां स्तबकवत् पुष्पगुच्छवत् लोभनीयौ ललितौ स्तनौ, तयोः भारेण नताः नम्राः। परिवारयोषित्सु याः रत्नलता इति वा अर्थः। **अमरमृगेक्षणाः**; अप्सरसः। **मदनधनुषो** गुणभूता ये **भ्रमराः** तद्वन्मन्थराः मन्दचलनाः ताराः यासां, तादृश्यः दृशो यासां ताः। **विरक्तिधनं** विरक्तं मुनिं पुरुषं **परिचरन्तु**॥ २६॥

[1] उत्साहवन्तमिति प्रभावलीपाठः

**कामः**—सखे, कालोचितकार्यप्रतिसंधायकः खलु कालतज्ज्ञो वसन्तः। तदेनमेव [1]विबुधपतिनगरवेशनारीपुरःसरनासीरयोधमहमधिज्यधनुरनुव्रजामि। त्वमपि परितः प्रवृत्तदृष्टिः पार्ष्णिमभिरक्षन् सावधानमन्वयेथाः।

(सर्वे तथा [2]सर्पन्ति)

**वसन्तः**—श्रूयतामयमिह महामोहसमरधुरंधराभ्यां मन्मथप्रतिघाभ्यां मामको व्याहारः[3]। अयमेवावसरः संयमारम्भं सौप्तिकेन संस्थापयितुं, यत्र समुत्थितं चतुरुदधिबृंहणं चान्द्रमसं महः। अद्य खलु पुरतः [4]स्फुरन्त्यमी मुग्धयुवतिमुखचन्द्रकिंकरस्य कुमुदिनीपतेरुदयवार्ताहराः कतिचन किरणाङ्कुराः। अमी च—

**तिमिमुखपीतमुक्तसितसागरपूरनिभा**
**रजनिविलासहासललिता हरिणाङ्ककराः।**
**शुभघनसारमिश्रहरिचन्दनपङ्करुचः**
**स्फुटमनुलेपयन्ति पुरुहूतदिशासुदृशम्॥ २७॥**

**प्रभाविलासः**

**तिमीति**। अत्र हरिणाङ्ककरैः पुरुहूतवल्लभास्पर्शप्रतीतेः रसाभासो व्यज्यते॥ २७॥

**प्रभावली**

सखे इति क्रोधसंबोधनम्। प्रतिसंधायकः; स्मारकः। **कालतज्ज्ञः**; प्रशस्तः कालः वसन्तः। **विबुधपतिनगरं** स्वर्गः, तत्र वेशनार्यः वेश्याः अप्सरसः, तत्पुरःसरं **नासीरयोधम्**; सेनापुरःसरभटम्। **प्रवृत्ता**; प्रसारिता। **पार्ष्णिम्**; पश्चाद्भागम्। **अन्वयेथाः**; अनुव्रज। **प्रतिघः**; कोपः। **व्याहारः**; वचनम्। व्याहारः क इत्यत्राह—**अयमेवेति**। संयमारम्भम्; योगारम्भम्। **सौप्तिकेन** विधिना संस्थापयितुं नाशयितुम्। यत्र यस्मिन्नवसरे **चतुरुदधिबृंहणं** पूरवर्धकं **महः**

[1] विबुधजन—ख.
[2] अनुरन्ति—क.
[3] मनीषितसंसिद्धिसूचनो व्यवहारः—क.
[4] सरन्त्यमी—क.

अपिच ;

**प्रथमस्य कान्तिमद्रेः पश्यतमेतेन भावितां शशिना ।**
**मदजलकलङ्कभाजा करटिन इव [1]कर्णशङ्खेन ॥ २८ ॥**

क्रोधः—सखे शम्बरासुरसूदन, सूनृतवादी सोऽयं सुरभिः ।

अद्य हि ;

**हरेरिह दिगन्तरे हसितदुग्धसिन्धुद्युतिः[2]**
**श्रियं कुमुदवासिनीं प्रजनयत्यसौ चन्द्रिका[3] ।**
**मनागिव विवर्तितं मधुरतारकोन्मीलिते[4]**
**निशामय निशामुखे तिमिरकन्दलं कुन्तलम् ॥ २९ ॥**

प्रभाविलासः

**प्रथमस्येति** । **करटिनः** ; गजस्य । **कर्णशङ्खेन** ; कर्णे बद्धेन कम्बुना ॥ २८ ॥ **हरेरिति** । **हरेः** ; इन्द्रस्य । **तारकोन्मीलितम्** ;

प्रभावली

ज्योत्स्ना । **मुखचन्द्रस्य किंकरः**, तद्विजितत्वात् । **कुमुदिनीपतेः** ; चन्द्रस्य । उदयसंबन्धिवार्तां हरन्तीति **वार्ताहराः** ; दूताः । **किरणाङ्कुराः** ; बालकिरणाः । **तिमीति** । **तिमिः** ; मत्स्यविशेषः । तेन पीताश्च ते मुक्ताश्च ये सितसागरस्य क्षीरसमुद्रस्य पूराः, तत्सदृशाः । रजन्याख्यनायक्याः विलासहासवत् ललिताः । **शुभो** यो **घनसारः** कर्पूरं ; तन्मिश्रं यद्धरिचन्दनं, तस्य पङ्करुचः । अमी **हरिणाङ्ककराः** ; चन्द्रपादाः । **पुरुहूतदिशासुदृशम्** ; पूर्वदिगङ्गनाम । **अनुलेपयन्ति** ; भूषयन्ति । स्फुटमित्युत्प्रेक्षा ॥ २७ ॥

एतेन **शशिना भावितां** संजातां **प्रथमस्याद्रेः** उदयपर्वतस्य **कान्तिं पश्यतम्**, भोः कामक्रोधौ । किमिव ? **मदजलमेव** कलङ्कः, तद्भाजा **कर्णशङ्खेन करटिनः** गजस्य कान्तिमिव पश्यतम् ॥ २८ ॥

**सुरभिः** ; वसन्तः । चन्द्रिकां वर्णयति—**हरेरिति** । **हरेः** इन्द्रस्य

[1] कण्ठशङ्खेन—क. [2] केचित् पदमिदं द्वितीयान्तं पठित्वा परिहसिता दुग्धसिन्धुद्युतिः यया तामिति श्रियमित्यस्य विशेषणं व्याचक्षते । तत्तु स्वरसतरमिव भाति. [3] चन्द्रमाः—घ. [4] न्मीलने—क. ख.

**कामः**—संभावनीयः खल्वसौ [1]बहुलतरतमःपटलपाटनपटीयस्तरकिरणः समाक्रान्तपशुपतिजटामण्डलः सखा मे तारकेश्वरः । अयं च ;

**कुर्वन्कामपि कौमुदीं कुमुदिनीसंमोददानव्रती**
**सान्द्रातङ्करथाङ्गनामतरुणीसंतापचिन्तामणिः ।**
**शृङ्गारागमदेशिकस्त्रिजगतामानन्दनाडिंधमो**
**रुन्द्धे [2]सर्वदिशानिरन्तरतमस्तन्द्रालुतां चन्द्रमाः ॥ ३० ॥**

**प्रभाविलासः**

नक्षत्रोदयः, नेत्रोन्मीलनं च । **कन्दलम्**; निबिडम् ॥ २९ ॥

**कुर्वन्निति**; **संतापचिन्तामणिः**; संतापप्रद इत्यर्थः ॥ ३० ॥

**प्रभावली**

**दिगन्तरे** पूर्वस्यां दिशि **हसितस्य** उद्वेलितस्य **दुग्धसिन्धोः** द्युतिरिव **द्युतिः** यस्याः **असौ चन्द्रिका कुमुदवासिनीं श्रियं** शोभां **प्रजनयति** । किंच **मधुरं तारकाणां** नक्षत्राणाम् **उन्मीलितं** यस्मिन् । स्त्रीमुखपक्षे मधुरतारकस्य नयनस्योन्मीलितं यस्मिन् । **निशामुखे**; प्रदोषे, निशाया मुखमग्रभागः । **कुन्तलवत् स्थितं तिमिरकन्दलम्** । स्त्रीमुखपक्षे तिमिरकन्दलवत् स्थितं कुन्तलम् । कन्दलमङ्कुरः तत्समूहो वा । कुन्तलं केशभारः । **मनाक्** ईषत् **विवर्तितमिव स्थितं पश्य**; विवर्तितमुपरिभागे अपसारितमिव पश्य ॥ २९ ॥

**संभावनीयः**; पूज्यः । तत्र हेतुद्वयं दर्शयति—**बहुलेति** । **पाटनम्**; निरासः । अधिकं पटीयांसः **पटीयस्तराः** । पशुपतिना शिरसा धार्यमाणा इत्यर्थः । **कुर्वन्निति** । **कुर्वन्**; विस्तारयन् । **कामपि**; वक्तुमशक्यसौभाग्याम् । **कौमुदीम्**; चन्द्रिकाम् । **कुमुदिन्याः**; कुमुदसरस्याः । **संमोदः**; संतोषः । **सान्द्रातङ्कानां** बहुलवियोगतापानां **रथाङ्गनामतरुणीनां** चक्रवाकाङ्गनानां **संतापस्य चिन्तामणिः** बहुप्रदानशीलः । **शृङ्गारागमस्य** विलासवेदस्य **देशिकः** उपदेष्टा । **आनन्दनाडिं** धमतीति सः; आनन्दनाडीवेधकः, आनन्दोत्पादयितेत्यर्थः । **सर्वासां दिशां तमसा तन्द्रालुताम्** आलस्यं जाड्यं **रुन्द्धे** अपनयति ॥ ३० ॥

[1] **बहुलतम—क. ख.** [2] **सर्वदिशां—क. ख. ङ. छ.**

अपिच ;

**पदे विष्णोरेषा प्रभवमधिगम्य[1] प्रसृमरा**
**स्फुरत्तारफेनस्तबकपरिपाटीपरिगता ।**
**क्षरन्ती पूर्वाद्रेरमरतटिनीसंप्लवसखी**
**तमिस्राकालिन्दीं शबलयति चन्द्रांशुपटली ॥ ३१ ॥**

सखे क्रोध, पश्य मे सहायसंपत्तिम् —

**ताराकान्तः प्रियसुहृदयं[2] चन्द्रिकेयं वयस्या**
**बाणारम्भाद्बहुमतिपदं बान्धवो मे वसन्तः ।**
**त्वं च त्राता विपदुपगमे क्रोध दुर्वारवेगः**
**को वा मह्यं कुसुमधनुषे तिष्ठते जीवितार्थी ॥ ३२ ॥**

प्रभाविलासः

**पदे विष्णोरिति । विष्णोः पदे** ; आकाशे, हरिचरणे च । **प्रसृमरा** ; व्याप्ता । स्फुरन्त्यः तारा एव फेनस्तबकाः, तेषां परिपाटीं परिगता प्राप्ता । अमरतटिन्याः गङ्गायाः संप्लवस्य सखी सदृशी । अत्र पूर्वाद्रेः क्षरतीति प्रसिद्धगङ्गाव्यतिरेकात् व्यतिरेकालंकारो व्यज्यते ॥ ३१ ॥

'ताराकान्त' इत्यारभ्य 'भयस्थान' इत्यन्तं स्पष्टम् ॥ ३२ ; ३३ ॥

**प्रभावली**

चन्द्रिकां गङ्गासमाधिना निरूपयति—**पद** इति । एषा **चन्द्रांशुपटली विष्णोः पदे** आकाशे; अन्यत्र श्रीशपादारविन्दे **प्रभवम्** उत्पत्तिं प्राप्य **प्रसृमरा** प्रसरणशीला । **तारा एव फेनस्तबकाः**; अन्यत्र तारा इव स्थिताः फेनस्तबकाः, तेषां **परिपाट्या** आनुपूर्व्येण **परिगता** । **पूर्वाद्रेः** उदयपर्वतात्; अन्यत्र हिमवतः । **अमरतटिन्याः** गङ्गायाः **संप्लवस्य** प्रवाहस्य **सखी** सदृशी । **तमिस्राकालिन्दीम्** ; तिमिरजालरूपां यमुनाम् । **शबलयति** ; नानावर्णयति ॥ ३१ ॥

आत्मानं वर्णयति—**तारेति** । चन्द्रोऽयं प्रियसखः । **बाणानां** पुष्पाणाम्

[1] उपगम्य—क.

[2] असौ—घ.

**क्रोधः**—सखे, अनुकूलो हि विधिः किं नाम नानुकूलयति ?

अपिच ;

[1]विजेतुकामः कामं त्वां निष्काम इति का कथा ।
त्वन्निवर्तननिष्कामः सकामस्त्वय्यनुज्झिते ॥ ३३ ॥

**कामः**—अलमनेन विलम्बहेतुना व्याक्षेपेण । उपक्रान्तसमाधिरस्माभिरुपसर्पणीयः पुरुषः ।

(सर्वे तथा कुर्वन्ति)

**वसन्तः**—पश्यतमेनं परमपुरुषचरणयुगलनिगलिताशयं परिहृतबहिर्विषयरागं प्रतिपन्नकारिणा विवेकेन चोदितं[2] प्रकान्तयोगं पुरुषम् । अयं हि,

भयस्थानग्रन्थान्परिपठति निद्राति च मुहुः
स्वमात्मानं पश्यत्युपचरति देहं च विधिना ।
निवृत्तिं दुःखाब्धेरभिलषति रज्यत्यपि सुखे
द्विधा वृत्त्या दुःख्यन्पुरुष इह डोलायित इव ॥ ३४ ॥

**प्रभाविलासः**

**ग्रन्थान्**; "कालेष्वपि च सर्वेषु" इत्यादिकान् ॥ ३४ ॥

**प्रभावली**

**आरम्भात्** हेतोः बहुमानविषयो **वसन्तः मे बान्धवः** आपद्बन्धुः । **भोः क्रोध, दुर्वारवेगः त्वं** चापत्काले मम त्राता । एवं सहायसंपन्नाय **मह्यं जीविताथीं सन् को वा तिष्ठते**; आत्मानं प्रकाशयति । "प्रकाशनस्थेयाख्ययोश्च" इत्यात्मनेपदम् ॥ ३२ ॥

**विजेत्विति** । कामं त्वां विजेतुं कामो यस्य सः **निष्काम इति** कः प्रसङ्गः । **त्वन्निवर्तने निष्कामश्चेत् त्वयि अनुज्झिते** तवानुज्झनात् **सकाम** एव ॥ ३३ ॥

**व्याक्षेपः**; कालक्षेपः । **उपक्रान्तसमाधिः पुरुषः** । तथा; उपसर्पणेन ।

[1] विनेतुकामः—क.  [2] चोदितं omitted—क

**कामः**—सखे क्रोध, अद्य खलु संक्षोभणीयदशामनतिक्रान्त इति समर्थितं वसन्तेन। दूरावधूतबाह्यान्तरवैरिभिरपि दुर्जया अस्मत्सहायिनी अनादिसंततिसिद्धविचित्रप्ररोहा वैषयिकी वासना। तथाहि[1]—

**भवत्वतिपतिष्यतो भवपयोधिमेकान्ततो**
**[2]रतिः सह मुमुक्षया ललितभाषितं योगिभिः।**
**तदप्यवसरे क्वचित्सपदि पार्ष्णिमालम्बते**
**ममत्वशतवासनारचितवारवाणं मनः॥ ३५॥**

प्रभाविलासः

**भवत्विति**। भवपयोधिमेकान्ततः **अतिपतिष्यतः**; अत्यन्तमतिक्रमिष्यतः। मुमुक्षया सह वर्तमानस्य पुंसः योगिभिः सह रहः एकान्ते ललितभाषणं भवतु; सर्वदा तत्संसर्गो भवत्वित्यर्थः। **वारवाणम्**; वर्म॥ ३५॥

प्रभावली

प्रक्रान्तयोगं पुरुषं वर्णयति—**पश्यतमिति**। युगले निगलवत् बद्धाशयम्। **प्रतिपन्नम्**; युक्तम्। पुनरपि सौप्तिकसमयं सूचयति—**भयस्थानेति**; आध्यात्मिकादितापत्रयविषयान्। निर्भयः सन् **निद्राति च**। **स्वमात्मानं** देहातिरिक्तं पश्यति। **देहं च** विधिना संस्कारेण **उपचरति**; आत्मबुद्ध्येति शेषः। दुःखसागरात् निवर्तनमपेक्षते। **सुखे**; सांसारिके। **रज्यत्यपि च**; सक्तो भवति। एवं **द्विधा** प्रवृत्त्या पुनः पुनः **दुःख्यन्** डोलावदाचरतीव॥ ३४॥

**संक्षोभणीयदशाम्**; सौप्तिकदशाम्। एतदुपपादयन् वासनाया दुर्जयत्वमाह—**अनादीति**। **अनादिसंततिसिद्धाः** अनादिपरंपरया सिद्धाः **विचित्राङ्कुराः** यस्याः सा; विषयसंबन्धिनी **वासना**, **दूरमवधूताः बाह्याः** लौकिकाः चार्वाकादयश्च, **आन्तराः** कामक्रोधादयो वैरिणो यैस्तैरपि, योगिभिरपीत्यर्थः; **दुर्जया** भवति। **भवत्विति**। **भवपयोधिम् अतिपतिष्यतः**, मुमुक्षोरित्यर्थः। **मुमुक्षया**

[1] तथाहि omitted—ग. [2] रहः—घ.

**वसन्तः**—[1]इदमप्यपरमवधारणीयमरातिजनभयंकराभ्यां भवद्भ्यां सर्वसङ्गनिवृत्तस्यापि [2]संमानागतिः समाधिपरिपन्थिनी । अत एव[3] खलु अनुचिन्तितहिरण्यगर्भवचसः संवर्तभरतविदुरादयो दुरितोच्छेदकारणं[4] जनावमानमिच्छन्त उन्मत्तचर्यामभ्यनैषुः । तदिदानीं यावदयमवमानापेक्षामाददीत, ततः पूर्वमेव संमानभङ्गादिकं दूरीकृत्य प्रसभं क्षेत्रज्ञे प्रवेष्टव्यं क्रोधेन । अथवा ;

**शृणोति कथयत्यसौ परिचिनोति संपृच्छते**
**समर्चयति गायति स्पृशति पश्यति स्तौति च ।**
**इतीव नियतादरो मुरभिदङ्घ्रिसेवारसे**
**न भेत्तुमिह शक्यते स्थिरविवेकदुर्गस्थितः[5] ॥ ३६ ॥**

**प्रभाविलासः**

हिरण्यगर्भवचनम् —

"संमानना परां हानिं योगर्द्धेः कुरुते यतः ।
जनेनावमतो योगी योगसिद्धिं च विन्दति ॥"

इति । **शृणोतीति** । भगवद्गुणान् वक्तरि सति शृणोति । श्रोतरि सति

**प्रभावली**

**सह** एकान्ते **रतिः भवतु । योगिभिः सह ललितभाषितं संलापश्च** भवतु । **तदपि**; तथापि **क्वचिदवसरे** । **ममत्वेत्यादि** । ममकारशतस्य या **वासना** तया रचितवारवाणमित्यर्थः । वारवाणं कञ्चुकम् । **मनः सपदि पार्ष्णि** पश्चाद्भागं पूर्वावस्थामित्यर्थः । **आलम्बते**; अनुसरति ॥ ३९ ॥

**संमानागतिः**; सत्कारप्राप्तिः । **समाधिपरिपन्थिनी**; समाधिविरोधिनी । **हिरण्यगर्भवचनम्**—

"संमानना परां हानिं योगर्द्धेः कुरुते यतः ।
जनेनावमतो योगी योगसिद्धिं च विन्दति ॥"

[1] अपरं omitted—च. [2] संमाननागतिः—क.ख.. [3] एव omitted—ख.
[4] कारिणं—ग. [5] स्थितिः—घ.

अपिच ;

**वितथपरिग्रहत्यजननिर्वृतबुद्धिरसौ**
**तदितरसंग्रहेऽपि विधिनैव परं नियतः ।**
**उपनतमप्यधर्म्यमुपभोगमपोह्य भज-**
**त्यजगरवृत्तिमात्रमवधीरितभूतहतिः ॥ ३७ ॥**

**प्रभाविलासः**

कथयति । उभयराहित्ये **परिचिनोति**; स्मरतीत्यर्थः । अतिरहस्यार्थमाचार्यान् प्रणिपातादिपूर्वकं पृच्छति । विग्रहादिकं पूजयति, स्पृशति, पश्यति । भगवद्गुणान् **गायति**; सुस्वरं कीर्तयति । पुरुषसूक्तादिना स्तौति च । अनेन मार्गो नाम गर्भसंधेर्द्वितीयमङ्गमुक्तम्, "तत्त्वार्थकीर्तनं मार्गः" इति लक्षणात् ॥ ३६ ॥

**वितथेति** । विद्यानिष्पत्त्युपयोगिदेहयात्रातोऽधिकं वितथपरिग्रहः; तस्य त्यजनेन निर्वृता सुखिता बुद्धिर्यस्य सः । अनेन,

**प्रभावली**

इति । **संवर्तः** मरुत्तयाजकः । **विदुरः** प्रसिद्धः । **भरतः** जडभरतः । आदिशब्देन ऋषभादयः संगृहीताः । **दुरितस्य**; संसारदुःखस्य । **उन्मत्तचर्याम् अभ्यनैषुः**; अनुकृतवन्तः । **अवमानापेक्षां** स्वीकुर्यात् । **संमानभङ्गादिकम्**; सत्कारविच्छेदादि । आदिशब्देनावमानप्राप्ति हेतुं कृत्वा **प्रसभं** बलात्कृत्य **क्षेत्रज्ञे** पुरुषे **क्रोधेन** प्रवेष्टव्यं तावत् । इदानीमपि प्रवेष्टुमशक्य इति पक्षमालम्बते—**अथवेति** । प्रवेष्टुमशक्यत्वे हेतुं दर्शयति—**शृणोतीति** । **शृणोति, कथयति**; स्वयं चान्येभ्य उपदिशति । **असौ**; योगी । **परिचिनोति**; तद्विषयं शास्त्रम् । **संपृच्छते**; तत्र संदेहान् आचार्यान् । **समर्चयति**; भगवन्तम । तन्नाम **गायति** । **स्पृशति**; तदुपभुक्ततुलस्यादि । **पश्यति**; तन्मूर्तिम् । इवशब्दो वाक्यालंकारे । इत्येवं मधुभिदः अन्तरिन्द्रियनिग्राहकस्य, चरणारविन्दे **सेवा** दास्यं, सैव रसः, तत्र नियतादरो भवति । **स्थिरो** यो **विवेकः**, स एव **दुर्गं**, तत्र स्थितश्च विरक्तिविष्णुभक्तिभ्यां परिगृहीतत्वात् **इहापि भेत्तुं न शक्यते** ॥ ३६ ॥

इतो विशेषान्तरमप्यस्तीत्याह—**वितथेति** । व्यर्थपरिग्रहत्यजनेन सुखित-

प्रभाविलासः

" समृद्धकामो हीनो वा नारयणपरो मुनिः ।
नोत्सर्पेत न शुष्येत सरिद्भिरिव सागरः ॥ "

इति स्मारितम् । **तदितरसंग्रहेऽपि**; अवितथपरिग्रहेऽपि । **विधिनैव नियत** इति;

" यो मे गर्भगतस्यापि वृत्तिं कल्पितवान् प्रभुः ।
शेषवृत्तिविधानेऽपि स किं सुप्तोऽथवा मृतः ॥ "

इति स्मारितम् । **उपनतमिति;** अनेन

" ग्रासं सुमृष्टं विरजं महान्तं स्तोकमेव वा ।
यदृच्छयैवापतितं ग्रसेदाजगरक्रियः ॥ "

इति स्मारितम् । **धर्म्यमिति** । उपनतेऽपि पतिताद्युपनतनिषेधः । आह च शाण्डिल्यः—

" महापातकिनश्चोरादम्बष्ठाद्भिषजस्तथा ।
मृगयोः पिशुनाच्चैव नादद्यादुद्यतं त्विति ॥
कुलटाषण्डपतितवैरिभ्यः काकिणीमपि ।
उद्यतामपि गृह्णीयान्नापद्यपि कदाचन ॥ "

इति । अनिषिद्धोपनतेऽपि संग्रहनिषेध उपभोगपदेन दर्शितः,

" सायंतनं श्वस्तनं वा न संगृह्णीत भिक्षितम् ।
पाणिपात्रोदरामत्रो मक्षिकेव न संग्रही ॥ "

प्रभावली

बुद्धिरयं योगी **तदितरसंग्रहेऽपि** सप्रयोजनपरिग्रहसंग्रहणेऽपि; परिग्रहशब्देन परिग्राह्यपदार्थ उच्यते । **अवधीरितभूतहतिः** परित्यक्तभूतहिंसो भूत्वा **अजगर-वृत्तिमात्रं** भजति । अजगरो नाम कश्चित् पुरुषः । स तु अजगरस्य वृत्ति-मनुष्ठितवान् । अजगरः शयुः । स तूष्णीं कुत्रचिच्छेते । यदा दैवादाहारः

**कामः**—(सविलक्षस्मितम्) सखे, नूनमप्रगल्भ इव संग्राम-समये साध्वसमवलम्बसे। कालोपपन्नं तु कार्यं न प्रतिसंधत्से।

**ऋतुश्रेष्ठस्त्वं नः सुहृदमितभोगार्हविभवः**
**स्वयं कामः सोऽहं सुरनरतिरश्चः स्ववशयन्।**
**अयं क्रोधः [1]क्रूरप्रकृतिरसहन्नस्मदहितं**
**त्रिभिः कार्यं द्रौणिप्रभृतिविहितं सौप्तिकमिह ॥ ३८ ॥**

**प्रभाविलासः**

इति स्मरणात्। **अजगरवृत्तिमात्रमिति**; अनिषिद्धोपनतालाभे उपवास एवेति शास्त्रार्थो दर्शितः,

"शयीताहानि भूरीणि निराहारोऽनुपक्रमः।
यदि नोपनमेद् ग्रासो महाहिरिव दिष्टभुक्॥"

इति स्मरणात्। **अवधीरितभूतहतिरिति**; अजगरवैलक्षण्योक्तिः। तेन,

"स्तोकं स्तोकं ग्रसन् ग्रासं देहो वर्तेत यावता।
भूतान्यहिंसन्नातिष्ठेद् वृत्तिं माधुकरीं स्थितः॥"

इति स्मृत्यर्थोऽभिप्रेतः॥ ३७ ॥

**ऋतुश्रेष्ठ इति। द्रौणिः**; अश्वत्थामा। प्रभृतिशब्देन कृतवर्मकृपौ विवक्षितौ॥ ३८ ॥

**प्रभावली**

स्वयमुपगच्छति तत्परिगृह्णाति। यदा नोपयाति तदा तूष्णीमुपवसति। इयमजगरवृत्तिः। तन्मात्रमेव भजति। आहारार्थं स्वयमुद्योगं न करोतीत्यर्थः॥ ३७ ॥

**विलक्षा**; लज्जा। **अप्रगल्भः**; जडः। **संग्रामसमये**; सौप्तिकोद्योगसमये। **साध्वसम्**; भीतिम्। कालोचितं तु कार्यं न जानासि। भो वसन्त, मया क्रोधेन त्वया च अस्माभिरवश्यं सौप्तिकं कार्यमेवेत्याह—**ऋतु-**

[1] क्ररः प्रसभम—च.

वसन्तः—सखे, प्रतिसंहितकार्य [1]एवाहमस्मि । अवस्कन्दसमयमतिक्रामति पुरुषे कथमस्माभिरमोघवृत्तिभिर्भवितव्यमिति [2]तु विमृशामि[3] । पाटच्चरलुण्टितेषु [4]भवनेषु जाग्रतोऽपि यामिकाः किमुपकरिष्यन्ति? अयं हि,

प्रचेतुमनघां वृत्तिमपचेतुमपक्रियाम् ।
भजते विश्वकर्तारं भिषज्यन्तमिवातुरः ॥ ३९ ॥

प्रभाविलासः

**अवस्कन्दः**; पीडा । **पाटच्चराः**; चौराः । **यामिकाः**; यामरक्षकाः । **प्रचेतुमिति** । **प्रचेतुम्**; वर्धयितुम् । **अपचेतुम्**; नाशयितुम् ॥ ३९ ॥

प्रभावली

**श्रेष्ठ इति** । अपरिमितो यो भोगः, तदर्हो विभवः ऐश्वर्यं यस्य **ऋतुश्रेष्ठः त्वं नोऽस्माकं सखा** । **सोऽहं** च स्वयं कामः; न भृत्यमात्रं, महामोहसैनिकप्रधान इति भावः । स्वयं च कीदृश इत्यत्राह—**सुरनरेति** । सुरान् नरान् तिरश्चश्च स्ववशे स्थापयन्; सकलजगद्विजयीत्यर्थः । क्रूरस्वभावः **अस्मदहितं** शत्रुपक्षमसहमानः **अयं क्रोधश्च** । एवं त्रिभिरुक्तैः अस्माभिः **द्रौणिप्रभृतिभिः** कृतं **सौप्तिकमिह कार्यम्** ॥ ३८ ॥

**प्रतिसंहितकार्य एवाहमस्मि**; कार्यं प्रतिसंदधे इति भावः । किं तु **अवस्कन्दः**; सौप्तिकम् । **अमोघवृत्तिभिः**; सफलव्यापारैः । **विमृशामि**; विचारयामि । **पाटच्चराः**; तस्कराः । **लुण्टितेषु**; अपहृतस्वेषु । **यामिकाः**; गृहरक्षकाः किमुपकरिष्यन्तीत्यर्थः । पुरुषस्य सौप्तिकाशक्यत्वे प्रधानहेतुमाह—**प्रचेतुमिति** । अयं योगी, **अनघां वृत्तिं** निवृत्तिधर्मं **प्रचेतुं** वर्धयितुं संपादयितुम्, **अपक्रियां** निषिद्धकाम्यक्रियाम् **अपचेतुं** क्षपयितुं **विश्वकर्तारं** भगवन्तमेव **भजते**; "निषिद्धकाम्यरहितं कुरु मां नित्यकिंकरम्" इति प्रार्थयते । किमिव? **आतुरः** व्याधितः **भिषज्यन्तं** चिकित्सकमिव ॥ ३९ ॥

[1] अहं omitted—ख. घ.
[2] तत्—क; तु omitted—घ.
[3] परिमृशामि—घ.
[4] वेश्मसु—क.

**क्रोधः**—(ससंरम्भम्) श्रोतव्यमेतत् सुरभिणा सुहृदा च कामेन मामकं मनीषितनिष्पादनकौशलम्। यदुत—

**जमदग्निमुखान् परित्यजन् परिगृह्णन् दशकंधरादिकान्।**
**विनिपातितवानुपायतः पुरुषानद्भुतपौरुषानहम्॥ ४०॥**

**वसन्तः**—सखे प्रख्यातमेव[1] भवतश्चातुर्यम्; तथाप्यत्यन्तवीतरागे क इव तवावकाशः?

**क्रोधः**—(हाहाकारमाम्रेडयन्) अस्त्येव संमतोऽत्राप्यवकाशः। यथा—

**पुंसस्त्यक्तपरिग्रहस्य विषयग्राहोज्झितस्याप्यहं**
**कन्थाविष्टरकुण्डिकादिहरणप्रच्छादनाद्याश्रयः[2]।**
**अन्तःक्षोभमलीकजल्पमसदारोपस्पृहां पैशुनं**
**संमोहादि च संमुखय्य सहसा दास्ये समाधिक्षयम्॥४१॥**

### प्रभाविलासः

**जमदग्नीति**। अक्रुध्यन् जमदग्निः क्षत्रियैर्हतः। शक्तिश्च रक्षसा भक्षित इत्यादयो मुखशब्दार्थः॥ ४०॥

**पुंस इति**। **परिग्रहः**; कलत्रपुत्रादिः। **हरणम्**; चौर्यम्। **प्रच्छादनम्**; अन्यत्र गोपनम्॥ ४१॥

### प्रभावली

**संरम्भः**; क्रोधः। **मनीषितस्य** इष्टार्थस्य संपादने कौशलं सामर्थ्यम्। **जमदग्निमुखान् परित्यजन् उपायतः विनिपातितवान्**। जमदग्निः स्वाश्रमे तपसि स्थितः। तं राजा आगत्य स्वमनीषितं पृष्टवान्। मुनौ तूष्णीं भूते कण्ठे मृतं सर्पमर्पयामास। तदापि क्रोधे कर्तव्ये तूष्णीं स्थितवान्। तदास्य मुनेः शिरश्चिच्छेदेति कथा। जमदग्निं परित्यजन् स्वयमप्रविश्यैव उपायतो घातितवानस्मि। मुखशब्देन दण्डकारण्ये मुनयश्च। दशकंधरो रावणः; तदादीन् **परिगृह्णन्** प्रविश्य विनिपातितवान्। **अद्भुतपौरुषान्**; आश्चर्यशक्तीन्॥ ४०॥

[1] प्रख्यातमिदं—घ. ङ.
[2] नालम्बनः—क.

[1]किं च महेश्वरप्रमुखमहापुरुषहृदयविक्षोभकस्य [2]मम [3]समाहितहृदयसंरम्भविघटने किमत्राश्चर्यम् ? यतः ;

**बिभर्तु विबुधेश्वरं क्षिपतु दानवानीकिनीं**
**भिनत्तु[4] कुलपर्वतान् वनशतानि मृद्नातु वा ।**
**अयत्नविधृतक्षितिस्तबकशेखरालंकृतः**
**किमद्भुतपदं भवत्ययममीभिरैरावणः ॥ ४२ ॥**

## प्रभाविलासः

**बिभर्त्विति** । **अयत्नेन** विधृता क्षितिरेव स्तबकः, स एव शेखरः शिरोभूषणं, तेनालंकृतः । भूधरभूरुहादिमत्तया पृथिव्याः स्तबकसाम्यम् । **अमीभिः** ; विबुधेश्वरभरणादिभिः । **ऐरावणः** दिग्गजः ॥ ४२ ॥

## प्रभावली

**इदं भवतः चातुर्यम्** , **इत्थं प्रख्यातं यद्यपि** । हाहेति बहुश उच्चारयन् । **संमतः** ; इष्टः । **परिग्रहः** ; गृहक्षेत्रादिः । विषयनक्रोज्झितस्यापि, **विष्टरः** पीठम्, **कुण्डिका** कमण्डलुः, इत्यादीनां हरणम् अपहरणम्, प्रच्छादनं विनोदनार्थमन्यत्र निक्षेपः । आदिशब्देन तद्भङ्गादि गृह्यते । एतत् **आश्रयः** अवलम्बनं यस्य । **अन्तःक्षोभः** ; मनःक्षोभः । **अलीकजल्पः** ; अप्रियजल्पः । असतोऽपवादस्यारोपः, तत्र स्पृहा । **संमोहः** अज्ञानम् । आदिशब्दात्तर्जनभर्त्सनादि । **संमुखय्य** ; संघटय्य समाधेः योगस्य **क्षयं** दास्यामि ॥ ४१ ॥

**विक्षोभकस्य** ; ममेति शेषः । **समाहितहृदयस्य** संरम्भः संभ्रमः योगोद्योगः, तस्य विघटने । **अयत्नेन** विधृतो यः **क्षितिस्तबकः**, स एव **शेखरः** शिरोमाला, तया **अलंकृतः ऐरावणः विबुधेश्वरम्** इन्द्रं वहतु । दानवसेनां क्षिपतु । कुलगिरीन् भिनत्तु । **वनशतानि मृद्नातु** । **अमीभिः** व्यापारैः इन्द्रवहनादिभिः **किमद्भुतपदम्** ? किमाश्चर्यविषयो भवति ? नेत्यर्थः । भूभारं धारयतस्तस्य इन्द्रवहनादिकं कियदिति भावः ॥ ४२ ॥

[1] वसन्तः added before—क.
[2] मे—घ ; मम omitted ङ. छ.
[3] समीहित—च.
[4] बिभर्तु—च.

**कामः**—सखे पुष्पाकर, [1]क्रोधोदीरितमप्यवितथमिदमवधारिणीयम्[2] ।

**निद्रामुग्धिनिमीलितेष्वसुलभं निर्धूतनिम्नोन्नतं**
**निद्राणाखिलवर्णभेदनियमं विष्वक्प्रवृत्तोदयम् ।**
**कः क्रोधोद्भवमुत्सहेत तरितुं कल्पान्तकादम्बिनी-**
**कालोद्वेलकलिन्दशैलतनयाकल्लोलकालं तमः ॥ ४३ ॥**

प्रभाविलासः

**निद्रेति** । **मुग्धिः**; मूर्छा । **निमीलितम्**; तदनन्तरावस्था । **असुलभमिति**; तास्वपि नैवंविधमित्युक्तं भवति । **निर्धूतनिम्नोन्नतम्**, तिरस्कृतपुरुषतारतम्यम् । अन्यत्राप्रकाशितोन्नतावनतप्रदेशम् । **निद्राणाखिलवर्णभेदनियमम्**; क्रुद्धस्य ब्रह्महत्यादौ प्रवृत्तेरिति भावः । अन्यत्राप्रकाशितनीलपीतादिविभागम् । **विष्वक्प्रवृत्तोदयम्**; एकं शत्रुं निमित्तीकृत्योत्पन्नमपि प्रमुषितलक्ष्यविशेषतया सर्वविषयकमित्यर्थः । अन्यत्र सर्वदिग्व्यापकमित्यर्थः । कल्पान्तकादम्बिन्याः काले वृष्टिकाले उद्वेलायाः कलिन्दशैलतनयायाः यमुनायाः कल्लोलवत् कालं नीलम् । अनेनातिगाढत्वं व्यज्यत इत्यलंकारेण वस्तुध्वनिः ॥ ४३ ॥

**प्रभावली**

**क्रोधेनोदीरितमपीदमवितथं** सत्यमित्य**वधारणीयम्** । क्रोधेनोदिरितं वचनं लोके असत्यं भवति; इदं तु न तथेत्यर्थः । क्रोधः सर्वथा दुर्जय इत्याह—**निद्रेति** । मुग्धिः ; मूर्च्छा । **निमीलितम्**; मरणम् । तत्राप्यलभ्यम् । अतः तमसो विलक्षणम् । **निर्धूतनिम्नोन्नतम्**; अननुसंहितक्षुद्रमहद्भेदमित्यर्थः । **निद्राणः** निद्रितः अविभावितः ब्राह्मणादिवर्णभेदः, यत्र; अन्यत्र श्वेतनीलादिवर्णभेदः । सर्वत्र प्रवृत्त उदयो यस्य । **कल्पान्तकादम्बिनी**; प्रलयमेघमाला, तद्वच्च । **काले** वर्षाकाले उद्वेला या **कलिन्दशैलतनया** कालिन्दी, तस्याः **कल्लोलवत् कालं** श्यामलं **क्रोधोद्भवं** तमः अज्ञानान्धकारं **तरितुं** तर्तुं **को वा उत्सहेत** समर्थः स्यात्; न कोऽपीत्यर्थः ॥ ४३ ॥

[1] क्रोधोदितमपि—च.

[2] इदं omitted—क. ख.

अपिच, वाल्मीकिप्रभृतिभिर्महर्षिभिरभ्युद्घोषितं मामकमपि[1] महिमानं मावमंस्थाः ; अहह[2] ;

विराधकरिकेसरी विशिखवह्निदग्धार्णवः
प्रभूतखरदूषणप्रभृतिनैर्ऋतव्यूहजित् ।
विलूनदशकंधरो मृदितकुम्भकर्णस्तदा
मदस्त्रजनिते स्थितः क्वचन लाघवे राघवः ॥ ४४ ॥

वसन्तः—काम, साधु कृतं भवता ।

कामः—वयस्य, आत्मानं बहु मन्येथाः । त्वदायत्तवृत्तिना खलु मया सर्वमेतदाचरितम् ।

वसन्तः—हन्त मकरध्वज,[3] महावीराणामपि भवति वैक्लब्यं भवत्प्रभावेन, यदुन्मत्तदशामप्यधिगच्छन्ति । अथवा ;

प्रभाविलासः

विराधेति । दग्धः ; दग्धुमिष्टः[4] । विलूनेति शरलाघवं व्यज्यते ॥ ४४ ॥

प्रभावली

वाल्मीकिप्रभृतिभिः ; प्राचेतसादिभिः । उद्घोषितम् ; श्रीरामायणमहाभारतादौ प्रख्यापितम् । विराधेति । विराधगजस्य सिंहः, तस्य क्रोधसंभृतत्वात् । बाण एव वह्निः, तेन दग्धसमुद्रः । प्रभूतः यः खरादिराक्षसव्यूहः, तज्जित् । विलूनो रावणो येन सः । मृदितः मर्दितः कुम्भकर्णः येन । एतेषां कामकार्यत्वादेवमुक्तिः । तदा तस्मिन् समये राघवः रामः, मदस्त्रजनिते क्वचित् लाघवे लघुत्वे स्थितः ; विलापादितुच्छव्यापारे स्थितोऽभूत् ॥ ४४ ॥

आत्मानम् ; स्वमपीत्यर्थः । त्वदायत्तवृत्तिना ; वृत्तिः व्यापारः । सर्वमेतत् ; विराधसंहारादि । महावीराणाम् ; रघुनाथादीनामपि । वैक्लब्यम् ;

[1] अपि omitted—ख.
[2] यथा added after—क. ख. ग.
[3] महाराज added after—क.
[4] आशंसायां क्त इति भावः ।

**रागोपलिप्तदृष्टिः प्रलपति मुह्यति विघूर्णति स्खलति ।**
**युवतिमदिरामदान्धो युक्तायुक्तं न जानाति ॥ ४५ ॥**

(विचिन्त्य) यद्यपि दुर्जयौ युवां कामक्रोधौ, तथापि किंचिन्मे मनसि विपरिवर्तते—सहायभूयस्त्वं सर्वेष्वपि कार्येष्वयत्नसिद्धिकारणम् । (पदशब्दं सूचयन्)

**धर्मध्वंसधुरंधरः शमदमप्रारम्भसर्वंकषः[1]**
**प्रज्ञावारिधिघस्मरः प्रणिदधत्प्रत्यूहमृत्युंजयः[2] ।**
**मुक्तिप्रार्थनमोचनाय महता मोहेन संप्रेषित-**
**स्तृष्णावारविलासिनीसहचरो लोभः किलोदीयते ॥ ४६ ॥**

प्रभाविलासः

**रागेति ।** रागोऽभिलाष एव रागो रक्तिमा । युवतिरेव मदिरा ॥ ४५ ॥

**धर्मेति । सर्वंकषः**; सर्वनाशकः । **घस्मरः**; भक्षकः । "भक्षको घस्मरोऽद्मरः" इत्यमरः । **प्रणिदधतां** ध्यायतां **प्रत्यूहेषु** समाधिविघ्नेषु **मृत्युंजयः** नाशकनाशकः । विघ्ननाशकानि मङ्गलाचारहोमादीनि । तत्र द्रव्यलोभस्तन्नाशक इति भावः । सर्वपुरुषसाधारण्येन वारविलासिनीत्युक्तिः । तत्रापि लोभाविनाभावात् सहचर इत्युक्तिः । वारविलासिनी-

प्रभावली

दैन्यम् । **रागेति । रागेणोपलिप्तदृष्टिः** कश्चित् बहु असंबद्धं प्रलपति । **मुह्यति**; मोहं गच्छति । **विघूर्णति**; परिभ्रमति । **स्खलति**; मार्गात् । **युवतिरेव** मदिरा । राघवस्य वियोगाभिनयेऽप्येतत्सर्वं द्रष्टव्यम् ॥ ४५ ॥

**विपरिवर्तते**; भूयो भूयः स्फुरति । **अयत्नसिद्धिकारणम्**; अप्रयाससिद्धिकारणम् । **पदशब्दं** पादन्यासध्वनिं **सूचयन्** स्वस्य श्रवणाभिनयेन सभ्यानां सूचयन् । लोभोऽयमागच्छतीत्याह—धर्मेति । धर्माणां वैदिकानां ध्वंसे

[1] दमप्रत्यूहमृत्युंजयः—क.
[2] दधत्प्रारम्भसर्वंकषः—क.

कामक्रोधौ—(सहर्षमवलोकयतः)

वसन्तः—विश्वहृल्लोभनो लोभ इहाकार्यः[1]।

कामक्रोधौ—सुष्ठु चिन्तितं सुहृदा वसन्तेन।

कामः—(छोटिकां ददाति)

क्रोधः—(सोद्घोषमनुमोदते)

(ततः प्रविशति लोभस्तृष्णा च)

लोभः—

महामोहस्याज्ञां शिरसि निदधानः स्रजमिमा-
मह तृष्णाजानिस्त्वरितमिह लोभः समुदितः।
[2]प्रदिष्टैस्तत्तादृक्प्रथिमविकटैर्हाटकमयै-
[3]रखण्डैर्ब्रह्माण्डैर्मम क इव तृप्तिं घटयिता ॥ ४७ ॥

प्रभाविलासः

सहचर इति वैशिको नायक उक्तः, "वेश्योपभोगचतुरो यो भवेत् स तु वैशिकः" इति लक्षणात्। पदव्यङ्ग्यः संभोगशृङ्गारः। **उदीयते;** आयातीत्यर्थः ॥ ४६ ॥

**आकार्यः;** आह्वातव्यः। **छोटिका;** मध्यमाङ्गुष्ठसंयोगनिष्पादितो ध्वनिविशेषः। **महामोहस्येति**। तृष्णा जाया यस्य सः **तृष्णाजानिः**।

प्रभावली

धूर्वहः। शमदमादिगुणानां प्रारम्भस्य मूलोच्छेदकः। **प्रज्ञा** प्रकृष्टवस्तुज्ञानम्, सैव वारिधिः समुद्रः, तस्य घस्मरः शोषकः। प्रणिदधतां योगं कुर्वतां प्रत्यूहे विघ्नकरणे मृत्युंजयः रुद्रः। **पुरुषस्य यन्मुक्तिप्रार्थनम्**, **तन्मोचनाय महामोहेन** संप्रेषितः तृष्णाख्यवारविलासिन्याः पतिः **लोभ** आयाति किल ॥ ४६ ॥

**विश्वेति**। यः विश्वेषां हृदयं लोभयति मोहयति सः आकार्यः आह्वातव्यः।

[1] आकारयितव्यः—क. [2] प्रदीप्तैः—छ. [3] अखण्डब्रह्माण्डैरपि क इव—क.

(तृष्णां परिष्वज्य)

प्रिये,

**अशेषसुरनारीणामाभिरूप्यसमुच्चयैः ।**
**अजहद्यौवनां तृष्णे विदधे त्वां विधिः स्वयम् ॥ ४८ ॥**

तदिदं निदर्शयामि—

**कनककलधौतशैलप्रभृतिभिरपि हन्त पूरणैः क्षिप्तैः ।**
**तृष्णे भजति समृद्धिं भूयो भूयस्तवोदरे कार्श्यम् ॥ ४९ ॥**

### प्रभाविलासः

**तत्तादृक्प्रथिमविकटैः**; तथाविधप्रसिद्धिविस्तृतैः । **हाटकमयैः**; स्वर्णमयैः ॥ ४७ ॥

**अशेषेति । अजहद्यौवनामिति**; अनेन "तृष्णैका तरुणायते" इति स्मारितम् । तेन मन्दोदरीसाम्यं व्यज्यत इति वस्तुनालंकारध्वनिः ॥४८॥

**कनकेति । कनकशैलः**; मेरुः । **कलधौतशैलः**; कैलासः ॥४९॥

### प्रभावली

**छोटिका**; मध्यमाङ्गुल्यङ्गुष्ठाभ्यामुत्पादितः शब्दः आह्वानसूचकः । **लोभः**; अतुष्टिरूपः । **तृष्णा**; उपर्युपर्याशा । लोभः स्वस्वभावादिकं कथयति—**महामोहस्येति । महामोहस्याज्ञां स्रजमिव शिरसि निदधानः लोभोऽहमिह** सौप्तिके **कृत्ये त्वरितं** समुदितः । तस्य मम **तत्तादृशा प्रथिम्ना विस्तृतैः हाटकमयैः प्रदिष्टैः** दत्तैः **अखण्डैः** परिपूर्णैरपि **ब्रह्माण्डैः** तृप्तिं पर्याप्तिं **को वा घटयिता** संपादयिता; न कोऽपीत्यर्थः ॥ ४७ ॥

**परिष्वज्य**; आलिङ्ग्य । तृष्णां स्तौति—**अशेषेति । आभिरूप्यम्**; सौन्दर्यम् । **अजहद्यौवनाम्**; "तृष्णैका तरुणायते" इत्युक्तेः ॥ ४८ ॥

**तदिदम्**; आभिरूप्यसमृद्धिं निदर्शयामि । तनुमध्यत्वं स्तौति—**कनकेति । कनकशैलः**; मेरुः । **कलधौतशैलः**; रजतगिरिः कैलासः । तत्प्रभृतिभिः पूरयन्तीति **पूरणैः** पूरकैः पूरणार्थं क्षिप्तैरपि, **तवोदरे कार्श्यं** कृशत्वं **भूयो भूयः समृद्धिमेव भजते**; अत्यन्तकार्श्यं भजतीत्यर्थः ॥ ४९ ॥

**तृष्णा**—अय्यउत्त, तुम्ह[1] वल्लहाए मह रमणिज्जत्तणं सव्वरमणिसमब्भहिअंति किं अच्चरिअं? तह वि देवासुरघरगअसअलरअणोवहारेण मह सोहग्गसरिच्छाइ[2] हारकेउरमेहलाणेउराइ तुए करणिज्जाइ।

(आर्यपुत्र, तव वल्लभाया मम रमणीयत्वं सर्वरमणीसमभ्यधिकमिति किमाश्चर्यम्? तथापि देवासुरगृहगतसकलरत्नोपहारेण मम सौभाग्यसदृक्षाणि हारकेयूरमेखलानूपुराणि त्वया करणीयानि।)

**लोभः**—प्रिये, ईषत्करमिदमभ्यर्थयसे। निर्जिताः खलु मया देवासुरकिंनरकिंपुरुषविद्याधरमुनिमनुष्यतिर्यञ्चः, यथा परस्परमेव व्यतिहन्यन्ते, यथा वा तुषकणमपि मेरुं मन्यन्ते। तत्र तावद्धनदबिरुदविख्यातस्य त्र्यम्बकसखस्य मत्कृतामवस्थामाकर्णय—

**लब्धं न मुञ्चति विलक्षमतिर्न भुङ्क्ते**
**[3]धत्ते पुनः पुनरसौ महतीं धनायाम्।**
**निद्रारसं न लभते महतां निधीनां**
**रक्षापिशाच इव संप्रति राजराजः[4] ॥ ५० ॥**

**प्रभाविलासः**

**लब्धमिति।** **विलक्षमतिः**; लुब्धमतिः। **निद्रारसं न लभते इति**; स्वभावतोऽनिमिषत्वेऽपि लोभकार्यत्वोत्प्रेक्षणात् उत्प्रेक्षालंकारध्वनिः ॥ ५० ॥

**प्रभावली**

**तुम्ह वल्लहाए**-तव वल्लभायाः। **मह**; मम। **रमणिज्जत्तणं**-रमणीयत्वम्। **सव्वरमणिसमब्भहिअंति** सर्वरमणीसमभ्यधिकमिति। **किं अच्चरिअं**-किमाश्चर्यम्। **तह वि**-तथापि। **देवासुरघरगअ**-देवासुरगृहगत। **सअलरअणोवहारेण**-सकलरत्नोपहारेण; उपहारत्वेनोपहृतैः रत्नैरित्यर्थः। **मह**-मम। **सोहग्गसरिच्छाइ**-सौभाग्यसदृक्षाणि। **हारकेउरमेहलाणेउराइ**-हारकेयूरमेखलानूपुराणि। **तुए**-त्वया।

[1] तुह—क; तुज्झ—उ. छ.
[2] जोग्गाइ—ङ.
[3] मत्प्रेरितः पुनरसौ भजते धनायाम्—क.
[4] यक्षराजः—क.

**तृष्णा**—अय्यउत्त, [1]तुए अत्थपुरिसत्थसद्धा[2]संठाविअहिअएं तेल्लोक्के विवेअपरिगहिअस्स[3] पुरिसस्स का उण दसा?

(आर्यपुत्र, त्वया अर्थपुरुषार्थश्रद्धासंस्थापितहृदये त्रैलोक्ये विवेकपरिगृहीतस्य पुरुषस्य का पुनर्दशा?)

**लोभः**—प्रिये, विमर्शनीयमेतत्। तस्य[4] पुनः समाधिकौतुकं प्रशमयितुं महाराजेन महामोहेन समादिष्टौ कामक्रोधौ मदागमनकाङ्क्षिणौ तिष्ठतः। इमौ [5]तावदुपसर्पावः। (उपसृत्य) लोभनामाहमभिवादये ज्यायांसौ कामक्रोधौ।

**तृष्णा**—सोण्हा एसा पणमइ गुरुअणं।

(स्नुषैषा प्रणमति गुरुजनम्।)

(इत्युभौ [6]प्रणमति)

प्रभाविलासः

**तस्य**; पुरुषस्य। **समाधिकौतुकम्**; समाधौ श्रद्धाम्।

**प्रभावली**

**करणिज्जाइ**-करणीयानि। **ईषत्करम्**; सुकरम्। **व्यतिहन्यन्ते**; परस्परेण हन्यन्ते। तथा निर्जिताः खल्विति पूर्वेण संबन्धः। धनद इति बिरुदेन। **त्र्यम्बकसखः**; कुबेरः। **मत्कृताम्**; लोभकृताम्। **लब्धमिति**। लब्धं धनं न मुञ्चति। **विलक्षमतिः**; विस्मयान्वितमतिः। तत्स्वयं न भुङ्क्ते। **पुनः पुनः महतीं धनायां** धत्ते। **निद्रारसं** न जानाति। किमिव? **महतां निधीनां रक्षापिशाच इव** ॥ ९० ॥

तुए; त्वया। **अत्थपुरिसत्थसंठाविअहिअए**-अर्थपुरुषार्थसंस्थापितहृदये। **तेल्लोक्के**-त्रैलोक्ये। **विवेअपरिगहिअस्स**-विवेकपरिगृहीतस्य। **पुरिसस्स**-पुरुषस्य। **का उण**-का पुनः। **दसा**-दशा; अवस्था। **विमर्शनीयम्**; विचारणीयम्। **ज्यायांसौ**; ज्येष्ठौ। **सोण्हा एसा**-स्नुषैषा। **पणमइ**-प्रणमति। **गुरुअणं**-गुरु-

[1] एव्वं तुए—क. ङ. छ. [2] सद्धा omitted—ख. [3] परिगअस्स—क.
[4] अस्य—क. [5] तौ for तावत्—क. ख. [6] प्रणमतः—ख, ग.

**कामक्रोधौ**—दीर्घायुषौ भूयास्ताम् ।

**वसन्तः**—अहो निदाघपवनदवाग्नीनामिव भवतां समागमः । किं न सेत्स्यति राज्ञो महामोहस्य? मा भूद्विवेकतो भवत्पत्नीनां रतिजिघांसातृष्णानां मङ्गल्यभूषणवैकल्यम् ।

(सर्वे परस्परमाश्लिष्यन्ति)

**कामः**—अपि स्वागतमस्मदुपजीव्यम् [1]अर्थपुरुषार्थमभिरक्षते लोभाय?

**लोभः**—अथ किम् । अनुग्रहपदं खल्वहं भवताम् ।

**क्रोधः**—अपि कथममोघवृत्तिः[2] अपवर्गोदन्तवैदेशिकस्त्वमवधत्से स्वामिकृत्यम्[3] ।

**लोभः**—युष्मदवष्टम्भेन सर्वत्रामोघवृत्तिरस्मि । पश्य सुयोधनादिवन्मत्परिगृहीतस्य लोकस्येदानीमद्वितीयां द्वितीयपुरुषार्थनिष्ठाम्—

**क्षुद्रक्षोणिरजःकणस्थिरतृषः क्षुभ्यन्ति पृथ्वीभृत-**
**स्तप्येत स्वपदाय कः क्वचिदिति त्रस्यन्त्यमर्त्येश्वराः ।**
**भिक्षाकेष्वपि केषुचित्क्वचिदुपक्षिप्तेष्वधिक्षेपतः**
**पक्षे दुर्मतिभृत्ययोरिह जगत्तिष्ठत्यसूयेर्ष्ययोः ॥ ५१ ॥**

**प्रभाविलासः**

**क्षुद्रेति । पृथ्वीभृतः ;** सुयोधनादयः ॥ ५१ ॥

**प्रभावली**

जनम् । **उभौ ;** कामक्रोधौ । **निदाघः ;** ग्रीष्मकालः । निदाघपवनाग्नीनां समागमः शोभते । **किमभिलषितं न सेत्स्यति ;** सर्वं सेत्स्यतीत्यर्थः । **विवेकतः ;** विवेकसकाशात् । **रतिः** कामस्य स्त्री । **जिघांसा** क्रोधस्य । **तृष्णा** लोभस्य । **वैकल्यम् ;** मङ्गलसूत्रभङ्गः । **अपिः** प्रश्ने । **स्वागतम् ;** कुशलम् । **अस्मदुप-**

[1] अर्थ omitted क. [2] प्रवृत्तिः—घ. [3] स्वामिकृत्ये—क. घ.

अपिच,

अटन्ति हरितो दश स्थपुटयन्ति विश्वंभरां
पठन्ति धनिनां चटून् परपरिच्छदं बिभ्रति ।
तरन्ति जलधिं प्लवैः समरमारभन्ते मुधा
दुरन्तधनदोहलग्रहिलचेतसो देहिनः ॥ ५२ ॥

प्रभाविलासः

**अटन्तीति** । **हरितः**; दिशः । **स्थपुटयन्ति**; फालकुद्दालादिभिर्विषमस्थानयन्ति । **चटून्**; स्तुतिवचनानि । **परिच्छदम्**; चामरकम्बलादिकम् । **दुरन्तेन** अपरिमितेन धने **दोहलेन** अभिलाषेण ग्रहिलं ग्रहेणेव

प्रभावली

**जीव्यम्**; अस्मदीयैरुपजीव्यम् । **अथ किम्**; तेन किं प्रयोजनमित्यर्थः । **अनुग्रहपदम्**; अनुग्रहविषयः । **अपि कथमिति**; "ज्ञातहेतुविवक्षायामप्यादि कथमव्ययम्" इति निघण्टुः । तदयमर्थः—अपवर्गवृत्तान्तवैदेशिकस्त्वममोघवृत्तिरिति यत् तत्र स्वामिकृत्ये भवदवधानमेव हेतुरित्यर्थः । **सुयोधनः**; दुर्योधनः । आदिशब्देन नलभ्रातृपुष्करादयो गृह्यन्ते । लोभपरिगृहीतस्य द्वितीयपुरुषार्थोऽर्थः, तत्र निष्ठा तदेकप्रयोजनत्वम् । तदेव दर्शयति—**क्षुद्रेति** । **पृथ्वीभृतः क्षुद्रो यः क्षोणिरजःकणः**; पृथ्व्याः पांस्वेकदेशः, तत्र **स्थिरतृष्णाः सन्तः क्षुभ्यन्ति**; क्षोभं प्राप्नुवन्ति । स्नेहं परित्यज्य कलहं कुर्वन्ति । **अमर्त्येश्वराः** देवाश्च **स्वपदाय** स्वपदं प्रति **को वा कश्चित् तपः** कुर्यादिति **त्रस्यन्ति** । **भिक्षाकाः**; भिक्षुकाः मुनयश्च । **केषुचित् पुरुषेषु कस्मिंश्चित्काले उपक्षिप्तेषु** अपकृतेषु **अधिक्षेपतः** निन्दनात् । यद्वा **केषुचित्** भिक्षाकेषु पुरुषेषु **क्वचिद्विषये** उपक्षिप्तेषु अधिक्षेपणात् निन्दादर्शनात् । इह **जगत्सर्वं दुर्मतिभृत्ययोः** असूयेर्ष्ययोः **पक्षे** वशे तिष्ठतीत्यर्थः ॥ ५१ ॥

उक्तमर्थं भङ्ग्यन्तरेण दर्शयति—**अपिचेत्यादि** । दुरन्तं दुरुच्छेदं **यद्धनदोहलं** धनेच्छा तद्ग्रहिलं ग्रहणशीलं **चेतो** येषां ते; धनाशाबद्धचेतस इत्यर्थः । **दश हरितः**; दश दिशः । **विश्वंभराम्**; भूमिम् । **स्थपुटयन्ति**; खननेन विषमी-

**वसन्तः**—आयुष्मन् महामोहामात्यधुरीण, पुनस्तृष्णासहायस्य ते पूर्वापरपुरुषार्थसाधके स्वयं च सर्वचित्तसाक्षिकं स्वादुतमतयोपलभ्यमाने सर्वराजन्यसेवनीयचरमोपवेदसिद्धे प्रत्यक्षपुरुषार्थे कः प्रत्यूहः? अयं च,

**[1]कालप्राप्तो धर्मतोऽधर्मतो वा कक्षीकार्यः [2]कामतन्त्रप्रधानैः ।**
**लाभे गुप्तावप्रदानव्रते वा त्वय्यायत्तो ह्यर्थनामा पुमर्थः ॥ ५३ ॥**

**प्रभाविलासः**

गृहीतं चेतो येषां ते तथोक्ताः । विशेषणानि पिशाचग्रस्तेष्वपि योज्यानि ॥ ५२ ॥

**पूर्वापरपुरुषार्थौ**; धर्मकामौ । **चरमोपवेदः**; अर्थशास्त्रम् । **कालप्राप्त इति** । **कर्मतन्त्रप्रधानैः**; संसारिभिः । **गुप्तौ**; रक्षणे ॥ ५३ ॥

**प्रभावली**

कुर्वन्ति । **धनिनां पुरतः चटून्** प्रियोक्तीः । **परिच्छदम्**; उपकरणं बिभ्रति । **प्लवैः**; नौभिः । **मुधा**; प्रयोजनाभावेऽपि ॥ ५२ ॥

लोभस्यार्थपुरुषार्थे जगतः प्रवणीकरणे च प्रत्यूहो नास्तीत्याह—**आयुष्मन्निति** । तत्र हेतवः **महामोहेत्यादि**; धुरीणत्वात् तृष्णासहायत्वाच्च । अर्थपुरुषार्थमुपश्लोकयति—**पूर्वापरेत्यादि** । पूर्वापरपुरुषार्थौ, धर्मकामौ । **सर्वराजन्यैः सेवनीयो यश्चरमोपवेदः** दण्डनीतिः **तत्प्रतिपाद्ये** । सर्वे परोक्षतः पुरुषार्थाः । अयं तु प्रत्यक्षपुरुषार्थः । कामिभिः स्वीकार्यत्वं लोभाधीनरक्षणत्वं चाह—**कालेति** । क्वचित्काले **धर्मतोऽधर्मतो वा** प्राप्तो यः पुरुषार्थः सः **कामकामैः** सर्वथाङ्गीकार्यः । **अस्य लाभे** आर्जने आर्जितानां रक्षणे च कस्मैचिदप्रदानव्रते च **त्वयि** लोभे **आयत्तः** त्वदधीन इत्यर्थः ॥ ५३ ॥

[1] कालप्राप्तात् —क. ख.   [2] कर्मतन्त्रप्रधानैः इति प्रभाविलासपाठः

[1]श्रृण्वन्तु सर्वे भवन्तो मामकमनुयोगम् । विवेककवचदुर्भेद-विज्ञानो विपश्चित्तमः कथंकारमवस्कन्दनीयः ?

**कामः**—सखे, [2]एवमहमेतदध्यवस्यामि । अहं तावदग्रेसरो गच्छामि । भवद्भिस्तु पक्षद्वयं पार्ष्णिं च परिपालयद्भिरन्तरा निवेश्य तृष्णामनुप्लवैर्भवितव्यम् । तदनेन दुर्भेदेन व्यूहेन दुरात्मनो विवेकस्य स्वकुलविध्वंसनमनोरथप्रत्यूहीभविष्यामः ।

(तथा व्यूह्य सर्वे पञ्चषाणि पदानि परिक्रामन्ति)

**कामः**—(सरभसपुङ्खितशरं पौष्पं धनुरान्दोलयन्) पश्यत तावदिदानीमधिज्यधन्वनो मे ललितघोराणामिषूणां लक्ष्यलाभम्—

**प्रणिधानविशेषभावितात्मा[3] करणग्रामनिरोधनिष्प्रकम्पः ।**
**निभृतश्वसनो निवृत्तिधर्मा पुरुषस्त्यक्तपरिग्रहोऽयमास्ते[4] ॥ ५४ ॥**

**प्रभाविलासः**

**प्रणिधानेति । निष्प्रकम्प** इति कायस्थैर्यमुच्यते ॥ ५४ ॥

**प्रभावली**

**अनुयोगम्**; प्रश्नम् । विपश्चित्तमोऽभिभवनीयः; एतदवस्कन्दनं कथं सिध्यतीति प्रश्नः । **पार्ष्णिः**; पश्चाद्भागः । **अन्तरा** मध्ये **निवेश्य अनुप्लवैः**, अनुचरैः । **व्यूहेन**; बलविन्यासेन । मनोरथे विघ्नकरा भविष्यामः । **परिक्रामन्ति**; प्रसर्पन्ति । शीघ्रसंहितशरं धनुः भृशं चालयन् । कुसुमत्वात् ललितत्वम् । **लक्ष्यलाभम्**; शरव्यलाभम् । अयमेव लक्ष्यमित्यभिप्रायेणाह—**प्रणिधानेति**; ध्यानविशेषानुसंहितात्मा । **करणानि**; इन्द्रियाणि । निरुद्धप्राणः निवृत्तिधर्मनिष्ठः त्यक्तगृहक्षेत्रादिः पुरुषोऽयमास्ते । अत्र बाणं विमोक्ष्यामीति शेषः ॥ ५४ ॥

[1] **लोभः** added before—**क**.
[2] **अहं** omitted—**ख**.
[3] **विशेषितान्तरात्मा—ख**.
[4] **परिग्रहः स एषः—क**.

**वसन्तः**—(सूक्ष्ममवलोक्य) हन्त, अवहितैरस्माभिर्भवितव्यम् ।

अत्र हि—

**वितमसि पदे विधास्यन् मायाजलधेः समुद्धृतं पुरुषम् ।**
**विमृशति किमपि रहस्यं सुमतिसहायो विवेक एकान्ते ॥ ५५ ॥**

**क्रोधः**—(सभ्रुकुटिभङ्गम्[1]) भो वयस्य विमृश्यतां किमपि दुरात्मना विवेकेन । [2]उपजप्तः पुरुषस्तावत्पुरस्कृतमन्मथानामस्माकमभिमतं नातिवर्तते । यतः,

**अनघसमाधिसंपदुदरंभरिरात्मभवः**
**प्रबलमहोर्मिजालभरिते दुरिताम्बुनिधौ ।**
**जडमति जन्तुजातमुपजातविहारमसौ**
**सुखबडिशावकृष्टमुपदंशदशां नयति ॥ ५६ ॥**

प्रभाविलासः

**अवहितैरस्माभिरिति**; क्षोभो नाम नाट्यालंकारः । अथ विषादप्रमादकर्तव्यामान्तरीं ध्रुवामाह—**वितमसीति** । तदुक्तम्—

"विषादे विस्मृतौ क्रोधे प्रमादे संगमेऽपि च ।
दोषप्रच्छादनादौ च गीयते या तु सान्तरी ॥"

इति ॥ ५५ ॥

**अनघेति** । **उदरंभरिः**; भक्षकः, नाशक इति यावत् । **आत्मभवः**;

प्रभावली

**हन्तेति** खेदे । **अवहितैः**; सावधानैः । सावधानत्वे हेतुमाह—**अत्र हीति**; पुरुषसमीपे । **माया**; प्रकृतिः । **पुरुषं समुद्धृत्य वितमसि** परमे **पदे विधास्यन्** विधित्सुः तदर्थं **किमपि रहस्यमालोचयति** । अतोऽवधातव्यम् ॥५५॥

**नातिवर्तते**; अतिवर्तितुं न शक्नोति । तत्र हेतुमाह—**यत इति** ।

[1] सभ्रूभङ्गम्—घ.

[2] उपजप्तः omitted—ग. घ. छ.

[1]पश्यतु भवानेतस्य पुरुषस्य भावनाविशेषम्—

**[2]स्वसंवोधः सौधः शुभगुणगणो मण्डनविधिः**
**समाधिः संभोगो रहसि जपशैली रतिकथा।**
**सुषुप्ते लोकेऽस्य श्रुतिपरिषदन्तःपुरगतो**
**मुनिः [3]शान्तिव्याजान्मुखरयति शृङ्गारनिगमम्॥ ५७॥**

प्रभाविलासः

कामः। **ऊर्मिजालम्;** अशनायाद्यूर्मिषट्कमेव तरङ्गसमूहः। **जडमति;** मन्दबुद्धि, जलबुद्धि च। **जन्तुजातम्;** संसारिजातं, मत्स्यजातं च। स्वयमद्यमानं सत् यददनसाधनं स उपदंशः। शमादिबहुसाधन-संपन्नसमाधिनिष्ठपुरुषवशीकरणसमर्थस्य स्वारसिकसांसारिकसुखमोमुह्यमान-जनवशीकरणं "गृहं भक्षितुकामस्य" इत्यादिन्यायेनातिस्वल्पमिति भावः॥ ५६॥

**स्वसंबोध** इति। **स्वसंबोधः;** स्वपरज्ञानम्। **गुणगणः;** शान्त्यादिः। **सुषुप्ते लोके;** लोकैरविज्ञातविषय इत्यर्थः। तदुक्तम्—

प्रभावली

सर्वानपि कामः स्ववशयतीत्याह—**अनघेति**। **अनघाया** निरपायायाः **समाधिसंपदः उदरंभरिः** भक्षकः। **आत्मभवः;** कामः। **भरिते;** पूर्णे। **दुरिताम्बुनिधौ;** संसारसमुद्रे। **उपजातविहारम्;** संजातक्रीडम्। **जडमतय** एव **जन्तवः** मत्स्याः, तत्समूहम्। **सुखमेव** बडिशं, तेन **अवकृष्टम्**। **उपदंशदशां** स्वस्य व्यञ्जनदशां नयति॥ ५६॥

**भावनाविशेषम्;** ध्यानविशेषम्। **स्वसंबोधः;** स्वात्मज्ञानम्। स एव **सौधः;** अस्येति शेषः। **शुभगुणगणः;** शमदमादिः। **मण्डनविधिः; अलंकार-**विधिः। **संभोगः;** रतिः। रहसि जपशीलता रतिप्रसङ्गः। **लोके सुषुप्ते** सति;

[1] पश्यत चैतत् भवरसविमुखस्य—क. [2] सुसंबोधः—छ.
[3] शान्त्या सार्धं—क; शान्तव्याजात—घ.

**वसन्तः**—(स्वगतम्) आशामात्रकृतेयमन्यथा कल्पना। न खलु मनोरथचतुरङ्गसंपत्त्या महाराज्यसिद्धिः। (प्रकाशं) सखे प्रबल-प्रतिपक्षसंनिधौ किमनेन प्रगल्भभाषितेन?

**लोभः**—सखे वसन्त, प्रिया तावन्ममैषा प्रतिपक्षप्रतिक्षेप-[1]भीता प्रत्याश्वासयितव्या। (तृष्णामवलोक्य) सुमुखि तृष्णे, [2]महा-वीरव्यूहमध्यगता महत्यपि प्रतिपक्षे मा भैषीः।

**तृष्णा**—सअलसुरासुरमहिअमाहप्पेसु तुम्हेसु जीवंतेसु णिच्चं णिब्भअम्हि।

प्रभाविलासः

"या निशा सर्वभूतानां तस्यां जागर्ति संयमी।
यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः॥"

इति। अत्र श्लोके उत्प्रेक्षालंकारः, शान्तेः शृङ्गारतापरिभावनाप्रतीतेः;

"अन्यथावस्थितिं प्राप्ता यत्र द्रव्यगुणक्रियाः।
संभाव्यन्तेऽन्यथा प्राज्ञास्तामुत्प्रेक्षां प्रचक्षते॥"

इति लक्षणात्॥ ५७॥

**प्रभावली**

योगविषये। **अद्य**; जनसुषुप्तिकाले। **श्रुतिपरिषदेव** अन्तःपुरं, तद्गतः सन्। **शान्तिव्याजेन शृङ्गारनिगमं** शृङ्गारशास्त्रं **मुखरयति** प्रकाशयति। शान्तिरसः शृङ्गाररसस्थानीय इति भावः॥ ५७॥

**इयमन्यथा कल्पना**; योगिनो भोगिकल्पना। **आशामात्रं** भवति; यन्न भोगी भवतीत्यर्थः। **सखे** इति क्रोधसंबोधनम्। **प्रतिपक्षेति**; विवेक-संनिधावित्यर्थः। **प्रगल्भभाषितेन**; धृष्टभाषितेन। **प्रिया**; तृष्णा। **प्रतिपक्षेभ्यः** परिभवभीता समाश्वासनीया। **महावीरेत्यादि**। महावीराणां व्यूहमध्यगत-

[1] प्रतिक्षेप omitted—क; प्रतिपक्षोपक्षेपभीता—ग. ङ. [2] महामोहमहावीर—ख.

(सकलसुरासुरमहितमाहात्म्येषु युष्मात्सु जीवत्सु नित्यं निर्भयास्मि ।)

कामः—(सान्तस्त्रासं परिवृत्त्यावलोक्य) पश्चात्पदानि प्रतिक्षिप्यन्तामस्माभिः । अद्य हि,

**[1]अनिद्राणप्रज्ञासहजबलधीराद्भुतगति-**
**स्तितिक्षासंतोषस्थिरतरतनुत्राणघटितः ।**
**प्रयुक्तं केनापि प्रणवरथमास्थाय पुरतो**
**विवेकः प्रत्युद्यन् विघटयति मे व्यूहघटनाम् ॥ ५८ ॥**

(सर्वे भयं नाटयन्ति ।)

**प्रभाविलासः**

**अनिद्राणेति** । **तितिक्षा;** शीतोष्णसहनम् । **तनुत्राणम्;** वर्म । **प्रयुक्तम्;** उपदिष्टम् । अत्र शान्तरसोपसर्जनतया वीररसो व्यज्यते ॥ ५८ ॥

**प्रभावली**

त्वादिति हेतुगर्भमिदम् । **सअलसुरासुरमहिअमाहप्पेसु**-सकलसुरासुरमहितमाहात्म्येषु । **तुम्हेसु**-युष्मासु । **जीवंतेसु**-जीवत्सु । **णिच्चं**-नित्यम् । **णिब्भअम्हि**-निर्भयास्मि । **परिवृत्य;** विमुखो भूत्वा । **पदानि** पश्चाद्भाग एव **प्रतिक्षिप्यन्ताम्;** न पुरस्तात् । तत्र कारणमाह—**अनिद्राणेति** । **अनिद्राणप्रज्ञा;** असंकुचितज्ञानम्, सैव सहजबलं, तेन धीराद्भुतगतिः । **तितिक्षा;** क्षमा । संतोषश्च, तदुभयात्मकस्थिरकवचेन संवृतः । **केनापि;** को ब्रह्मा, तेन प्रयुक्तम्; प्रणवस्य ब्रह्मर्षिकत्वात् । **प्रणवरथम्;** "ओंकाररथमारुह्य" इत्युक्त्या प्रणवस्य रथत्वरूपणम् । **प्रणवरथम् आस्थाय;** प्रणवात्खलु ब्रह्मोदेति । **पुरतः प्रत्युद्यन् मे व्यूहरचनाम् विघटयति;** शिथिलयति ॥ ५८ ॥

[1] अनिद्राणप्रज्ञः सहज—ङ. घ.

वसन्तः—

युष्मासु त्रिषु कस्यचिद्यदि विपत्संपत्स्यते केनचित्
त्यक्ष्यत्येव हि भक्तजीविततया मोहः स्वयं जीवितम् ।
सद्यश्चैनमनुम्रियेत नियतं तद्वल्लभा दुर्मति-
स्तत्संप्रत्यपसर्पणं क्षममितः क्षिप्रं विवेकास्पदात् ॥ ५९ ॥

लोभः—(ससंभ्रमम्) अराजकैरस्माभिः [1]अत्र न योद्धव्यम् । मन्त्रयिष्यति च राजा स्वयमेव कृत्यशेषम् ।

क्रोधः—(सनिर्वेदम्) धिक् धिक् । किमियता कालेनास्माभिराचरितं राजकृत्यम् ?

लोभः—सखे,

अतिक्रामन् कालस्तपनरथवेगेन महता
न रोद्धुं शक्येत प्रतिवहनवातूलरहितः[2] ।
गतस्रोतोरोधे न खलु यतितव्यं कृतधिया
तदारम्भः श्रेयानुपरितनभीतिप्रतिभटः[3] ॥ ६० ॥

प्रभाविलासः

युष्मास्विति । अत्र करुणभयानकौ व्यङ्ग्यौ ॥ ५९ ॥

अतिक्रामन्निति । प्रतिवहनवातूलः ; प्रतिकूलवातसमूहः । गत-

प्रभावली

नाटयन्ति ; अनुकुर्वन्ति । अद्यापसर्पणे हेतुमुपन्यस्यति—युष्मास्विति । त्रिषु ; कामक्रोधलोभेषु मध्ये । केनचित् ; विवेकेन वा, तदमात्येन वा । स्वयमपि जीवितं त्यक्षति । एवं सति तद्वल्लभा दुर्मतिः सद्यश्चैनम् अनुम्रियेत । नियतम् ; अवश्यम् । तत् ; तस्मात् । इतः ; विवेकास्पदात् पुरुषात् ॥ ५९ ॥

मन्त्रयिष्यति ; विचारयिष्यति । कृत्यम् ; कर्म । शेषम् ; अवशिष्टं

[1] किमत्र योद्धव्यम् —ख. [2] वात्या विरहित: इति प्रभावलीपाठः

[3] प्रशमनः इति प्रभावलीपाठः

तदत्रायुस्तावदस्माभिरभिरक्षणीयम् । "सर्वत एवात्मानं गोपायेत" इति हि श्रूयते ।

कामः—समयोचितमिदं समर्थ्यते लोकवृत्तवेदिना लोभेन ।

[1]आधेयो न हि सौप्तिकप्रणिहितैरस्माभिराकस्मिकः
पातः क्रुद्धविवेकलक्षणमहापातालगर्तोदरे ।
सद्यः संप्रति दम्भदर्पकुहनासूयादिदत्तेक्षणः[2]
प्रत्यर्थिप्रतिरोधकर्मणि महामोहः प्रवर्तिष्यते ॥ ६१ ॥

### प्रभाविलासः

**स्रोतोरोध इति ;** अत्र "गतोदके सेतुबन्धो न मे लक्ष्मण रोचते" इति स्मारितम् । **भीतिप्रतिभटः ;** भयनिवर्तकः । पलायनं द्योत्यते ॥ ६० ॥

**आधेय इति । सौप्तिकप्रणिहितैः ;** सुप्तबाधाप्रवृत्तैः । **गर्तोदरे**

### प्रभावली

कार्यम् । **धिग्धिगिति** भिन्नं वाक्यम् । निन्द्यं कुत्सितमित्यर्थः । इयता कालेन किमाचरितमित्यतीतस्य चिन्ता न कर्तव्या ; उपरितनं कार्यमेव चिन्तनीयमित्याह—**अतिक्रामन्निति । महता तपनरथवेगेन अतिक्रामन् कालः । प्रतिवहनम् ;** प्रतीपवहनम् । तत्र साधनभूता या **वात्या** वातसमूहः, तद्विरहित इति हेतुगर्भं विशेषणम् । कालस्य प्रतीपवहने साधनाभावादित्यर्थः । गतजलसेतुबन्धे न यत्नः कार्यः । **कृतधिया ;** बुद्धिमता । **तत् ;** तस्मात् । **उपरितनो** यो **भीतिप्रशमन** आरम्भः, स एव श्रेयान् ॥ ६० ॥

आयुः ; जीवितकालः । **सर्वतः ;** सर्वविपद्भ्यः । कालोचितं **समर्थ्यते** प्रतिपाद्यते लोकवृत्तान्तविदा । इदानीमस्माभिः विवेकरूपपाताले न निपतितव्यम् । विवेकविजये महामोह एवोत्तरत्र प्रवर्तयितव्य इत्याह—**आदेय इति ।** महामोहेन **सौप्तिके** प्रणिहितैः **अस्माभिः** संप्रति **सद्यः** विवेकरूपमहापाताल-

[1] आदेयः—क. ख. [2] दत्तक्षणः इति प्रभावलीपाठः

तद्वयमिदानीं भिन्नदिक्काः प्रतिष्ठेमहि । “ [1]आत्मार्थे पृथिवीं त्यजेत् ” इति हि, वदन्ति ।

(इति निष्क्रान्ताः सर्वे)

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेंकटनाथस्य वेदान्ताचार्यस्य कृतिषु संकल्पसूर्योदये कामादिव्यूहभेदो नाम चतुर्थोऽङ्कः ।



प्रभाविलासः

**आकस्मिकः पातः नाधेयः** ; न कर्तव्य इत्यन्वयः । अत्र दम्भेत्यादिना उत्तराङ्कपात्रप्रवेशः सूचितः ॥ १६ ॥

[2]इत्यात्रेयाहोबलाचार्यविरचिते संकल्पसूर्योदयव्याख्याने प्रभाविलासाख्याने [3]कामादिव्यूहभेदो नाम चतुर्थोऽङ्कः ।



प्रभावली

बिलोदरे **आकस्मिकः** निर्हेतुकः **पातः नादेयः** न स्वीकर्तव्यः । दम्भादिभिः **दत्तक्षणः** प्राप्तोत्सवः । तैः सर्वैः सहित इत्यर्थः । शत्रुनिरासकर्मणि **प्रवर्तिष्यते** ॥ ६१ ॥

**भिन्नदिक्काः** ; प्रत्येकं भिन्नदिक्काः सन्तः पलायनं कुर्वीमहि । आत्मरक्षणार्थं पृथिवीमपि त्यजेत ॥

इति श्रीनृसिंहराजाचार्यविरचितसंकल्पसूर्योदयव्याख्यायां प्रभावल्यां कामादिव्यूहविघटनं नाम चतुर्थोऽङ्कः ।



[1] आत्मार्थे etc omitted—क.

[2] इत्यात्रेयगोत्रसंभूतेन श्रीमदहोबिलनाम्ना विदुषा विरचिते—B. D.

[3] सौप्तिकं नाम—B. D.

# पञ्चमोऽङ्कः

(ततः प्रविशति दम्भः कुहना च)

दम्भः—अहह [1]अरे, त्वां धर्मपत्नि, कुहने [2]संबोधयामि । त्वं हि मे तारेव बृहस्पतेः, अहल्येव गौतमस्य, अस्पृष्टपुरुषान्तरा क्षणविरहाक्षमा सहधर्मचारिणी ।

**प्रभाविलासः**

तत इत्यादि । "दम्भो धर्मध्वजाश्रयः" इति नहुषप्रश्ने ।

**प्रभावली**

पञ्चमाङ्के तु दम्भकुहनयोः संवादः; दर्पेण जगतो धिक्कारः; दर्पच्छात्रैर्मतान्तरप्रवर्तनम्; गर्वमिथ्याचारयोः कलहः; गङ्गायमुनयोर्मध्यदेशीयदाम्भिकवर्णनम्; गर्वेण दम्भाश्रमद्वार्यसूयाकलहः; असूयया च जगदपहासः; गर्वासूययोः कलहः; तयोर्धर्मसंकटप्रश्नार्थं दम्भोपसर्पणम्; दम्भगर्वयोः परस्परधिक्कारः; अथ दम्भादीनामन्योन्यप्रत्यभिज्ञानम्; महामोहदुर्मतिभ्यां कामादिव्यूहभङ्गश्रवणम्; महामोहविकत्थनम्; तेन चार्वाकमतोपबृंहणम्; दम्भादिभ्यः कामाद्यवस्थाश्रवणम्; दम्भदर्पावनुज्ञाप्य मोहेन प्राणाग्निहोत्रपरिपालनम्; कामक्रोधादिभ्यः सप्तभ्यः सप्तमुक्तिक्षेत्राधिकारदानमित्येतानि वर्ण्यन्ते । ततः **प्रविशतीति** । दम्भः; धर्मध्वजत्वं, केवललिङ्गवृत्तित्वम् । **कुहना**; कापट्यं, वञ्चनेत्यर्थः । **अहहेत्यद्भुते** । **अरे** इति कुहनासंबोधनम् । सदृष्टान्तं विपरीतलक्षणया प्रशंसति—**त्वं हीति** । बृहस्पतेः पत्नी तारा चन्द्रमभिससार । अहल्या

[1] रे रे—क. [2] संभावयामि—ख.

**कुहना**—जं बम्हणेसरो भणइ। तह वि लज्जेमि णिद्दिट्ठादो णिदंसणादो। अरुंधई विअ वसिट्ठस्सेत्ति वअणिज्जं घरसामिणा। जाहे [1]अहअं तक्करेहिं, किदवेहिं, गामणीहिं, [2]णरिंदामच्चेहिं, पासंडीहिं, अण्णेहिं वि तारिसेहिं पत्थिज्जह्मि,[3] [4]ताहे वि ता[5] तुमं एव्व सुमरिऊण सेवामि।

(यद्ब्राह्मणेश्वरो भणति। तथापि लज्जामि निर्दिष्टान्निदर्शनात्। अरुन्धतीव वसिष्ठस्येति वचनीयं गृहस्वामिना। यदाहं तस्करैः कितवैर्ग्रामणीभिः नरेन्द्रामात्यैः पाषण्डिभिरन्यैरपि तादृशैः प्रार्थितास्मि, तदापि तान् त्वामेव स्मृत्वा सेवे।)

**दम्भः**—(सान्तर्हासम्) अत एव सर्वलोकपतिव्रता खल्वसि।

## प्रभाविलासः

**सर्वलोकपतिव्रता**; सर्वेषु लोकेषु पतिव्रता। सर्वजनवल्लभेति च गम्यते।

## प्रभावली

चेन्द्रम्। **जं**-यत्। **बम्हणेसरो**-ब्राह्मणेश्वरः। **भणइ**-भणति। भवानिति शेषः। तत्तथेति शेषः। **तह वि**-तथापि। **लज्जेमि**-लज्जामि। **णिद्दिट्ठादो**-निर्दिष्टात्। **णिदंसणादो**-निदर्शनात्; तारेव बृहस्पतेरित्यादितः। **अरुंधई विअ**-अरुन्धतीव। **वसिट्ठस्सेत्ति**-वसिष्ठस्येति। **वअणिज्जं**-वचनीयम। **घरसामिणा**-गृहस्वामिना; त्वयेति शेषः। **जाहे**-यदा। **अहअं**-अहम्। **तक्करेहिं**-तस्करैः। **किदवेहिं**-कितवैः। **गामणीहिं**-ग्रामणीभिः। **णरिंदामच्चेहिं**-नरेन्द्रामात्यैः। **पासंडीहिं**-पाषण्डिभिः। **अण्णेहिं**-अन्यैः। **वि**-अपि। **तारिसेहिं**-तादृशैः। **पत्थिज्जह्मि**-प्रार्थितास्मि। **ताहे**-तदा। **वि**-अपि। **ता**-तान्। **तुमं एव्व**-त्वामेव। **सुमरिऊण**-स्मृत्वा। **सेवामि**-सेवे। सर्वलोकेषु पतिव्रता; सर्वलोकस्य सर्वजनस्य

[1] अहं—क. ख.
[2] णरेंदामच्चेहिं—छ.
[3] पत्थिदह्मि—घ. च.
[4] तह वि—क. घ. ङ. छ.
[5] ता omitted—ख.

[1]अद्य पुनरनुगतानपि मे गार्हपत्यादीन् यतः [2]कुतश्चनानीतैरपि शुष्मभिः [3]समादधानया यज्ञपत्न्या त्वया न कदाचिदपि मामकमग्निहोत्रं विच्छिद्यते। पर्वकालेषु चानाविष्कृतपुष्पया त्वया दर्शपूर्णमासौ च नित्यमनुवर्तेते। निर्वर्त्यते च पिण्डपितृयज्ञादिकम्। का कथा प्रायश्चित्तस्य?

**कुहना**—संतं पावं संतं पावं। जाअम्मि [4]खु विच्छेअम्मि[5] समाहणिज्जं। ण खु काहे वि अम्हघरे अग्गिणं विच्छेओ। पसण्णाहिं खु [6]कुलदेवदाहिं णिच्चं रक्खिज्जंति अम्हाणं

### प्रभाविलासः

"लोकस्तु भुवने जने" इत्यमरः। **शुष्मभिः**; अग्निभिः। **पुष्पम्**; रजः। परमिति पदच्छेदेन व्यङ्ग्यार्थः सर्वत्र द्रष्टव्यः। **पूर्वदेवाः**;

### प्रभावली

प्रतिव्रतेति परिहासोक्तिः। **अनुगतान्**; शान्तान्, विच्छिन्नानित्यर्थः। **शुष्मभिः**; अग्निभिः। **समादधानया**; समाधानं कुर्वाणया। **अनाविष्कृतपुष्पया**; अप्रकाशितार्तवया। **दर्शपूर्णमासौ** इष्टी। **निर्वर्त्यंते**; समाप्यते। **पिण्डपितृयज्ञः**; पैतृकं कर्म। एवं सति **का कथा**; कः प्रसङ्गः। **संतं पावं**-शान्तं पापमिति द्विः। **जाअम्मि खु**-जाते खलु। **विच्छेअम्मि**-विच्छेदे। **समाहणिज्जं**-समाधानीयम्। **ण खु**-न खलु। **काहे वि** कदाचिदपि। **अम्हघरे**-अस्मद्गृहे। **अग्गिणं**-अग्नीनाम्। **विच्छेओ**-विच्छेदः। **पसण्णाहिं**-प्रसन्नाभिः। **खु**-खलु। **कुलदेवदाहिं**-कुलदेवताभिः। **णिच्चं**-नित्यम्। **रक्खिज्जंति**-रक्ष्यन्ते। **अह्माणं**-

[1] अद्य तावत्—ख; अद्य पुनः omitted—क.
[2] कुतश्चित्—क. ग. छ.
[3] संधाय—क.
[4] खु omitted ग. छ.
[5] अग्गिविच्छेदम्मि—क.
[6] कुल omitted—ग. घ.

अग्गिणो । तह उप्पण्णं खु पुप्फं अणाविक्खरणिज्जं । पत्तो वि [1]अ पव्वसु ताहिं [2]एव्व कुलदेवदाहिं [3]विलंबिअदि पुप्फसमओ ।

(शान्तं पापं शान्तं पापम् । जाते खलु विच्छेदे समाधानीयम् । न खलु कदाप्यस्मद्गृहेऽग्नीनां विच्छेदः । प्रसन्नाभिः खलु कुलदेवताभिर्नित्यं रक्ष्यन्ते अस्माकमग्नयः । तथा उत्पन्नं खलु पुष्पमनाविष्करणीयम् । प्राप्तोऽपि च पर्वसु ताभिरेव कुलदेवताभिर्विलम्ब्यते पुष्पसमयः ।)

**दम्भः**—साधु कुहने, साधु । अस्मत्सहधर्मचारिणी खल्वसि । बहुमन्ये त्वां ब्राह्मण्यप्रतिष्ठापिकां यज्ञपत्नीं परमश्रोत्रियपुत्रीम् । नित्यमेव खल्वशनायोदन्याभ्यामातुरस्य मे हरिवासरेषु मृष्टमपि भोजनमनाविष्कुर्वाणया त्वया प्राप्यते द्वादशीव्रतम्; [4]प्रख्याप्यते च प्रतिगृहं साधनसंपत्तिश्रमेण[5] । किंतु किंचिद्रहस्यमुपदिशामि—सन्तीदानीमन्तिमयुगभूमिकाभेदा[6] इव[7] केचिदव-

### प्रभावली

अस्माकम । **अग्गिणो**-अग्नयः । **तह**-तथा । **उप्पण्णं खु**-उत्पन्नं खलु । **पुप्फं**-पुष्पम् । **अणाविक्खरणिज्जं**-अनाविष्करणीयम । **पत्तो वि अ**-प्राप्तोऽपि च । **पव्वसु**-पर्वसु । **ताहिं एव्व**-ताभिरेव । **कुलदेवदाहिं**-कुलदेवताभिः । **विलंबिअदि**-विलम्ब्यते । **पुप्फसमओ**-पुष्पसमयः । **साधु**; शोभनमित्यर्थः । दम्भपत्नी खल्वसीत्यर्थः । **ईदृश्यास्तवेदृशमनृतं युक्तमिति भावः । **बहु मन्ये**; संभावयामि । **परमश्रोत्रियस्य पुत्रीम्**; परं केवलमश्रोत्रियपुत्रीमिति परिहासपक्षे । उत्तरेष्वपि वाक्येषु पक्षे परिहासोक्तिरपि ध्वन्यते । **नित्यमेव खल्वित्यादि** । **अशनाया**; भोजनेच्छा । **उदन्या**; पिपासा । **हरिवासरेषु**; एकादशीतिथिषु । **मृष्टम्**;

[1] अ omitted—ख. [2] एव्व omitted—क. [3] बिलम्बइ—ग. छ.
[4] The sentence is omitted—ङ. छ. [5] संभ्रमेण—ग.
[6] भेदाः omitted—क; धराः—ख. [7] इव omitted—ख.

धीरितसकलधर्माः[1] प्रव्रजितवेषभाजः प्रकटितमायाविलासाः पूर्वदेवाः । ते च रावणधनंजयन्यायेन भवतीं विघृक्षेयुः । [2]अतो मत्समीपं कदाचिदपि नातिवर्तेथाः । न च परमब्राह्मणं मां मुहूर्तमपि[3] [4]त्वदन्ये परिचरितुमर्हन्ति । अहं पुनरधुना दिव्यादिव्य-[5]सर्वभोगसार्वभौमस्य राज्ञो महामोहस्यानुचितमाचरन्तमाततायिनं

प्रभाविलासः

सुरद्विषः । **षट्स्वनभिचरन् पतेदिति**; "अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः" इत्याद्युक्तेष्वाततायिषु प्रकृते क्षेत्रहारित्वमभिप्रेतम् । **श्रूयते**

प्रभावली

स्वादु । **अनाविष्कुर्वाणया**; दानमप्यप्रकाशयन्त्या । त्वया हेतुभूतया । मया **द्वादशीव्रतम्**; उपवासनियमः प्राप्यते । त्वया वा द्वादशीव्रतं प्राप्यते, मत्परिचर्ययेति भावः । **प्रख्याप्यते** ममोपवासव्रतं **गृहे गृहे** अव्रतघ्नसाधनसंपादनव्याजेन । **किंतु**; तथापि । रहस्यं वदामि । **सन्तीत्यादिना** । **अन्तिमयुगस्य**; कलियुगस्य । **भूमिकाभेदाः**; अवान्तररूपाणि । त्यक्तसकलवैदिकधर्माः **प्रव्रजिताः**; संन्यासिनः । **प्रकटितमायाविलासाः**; इदं जगत्सर्वं मायाया विलासः मिथ्येत्ययमर्थः प्रकटितो यैः । **पूर्वदेवाः**; सुरद्विषः । **रावणधनंजयन्यायेन**; रावणः सीतामपहृतवान्; धनंजयोऽर्जुनः सुभद्राम्; तन्न्यायेन । त्वां ग्रहीतुमिच्छेयुः । **नातिवर्तेथाः**; अतिक्रम्य मा गाः । **न चेति** । **परमब्राह्मणम्**; उत्कृष्टब्राह्मणम् । परम् अब्राह्मणमिति परिहासपक्षे । **त्वत्तोऽन्ये** । अन्यैः परिचरणानर्हत्वं ख्यापयन् स्वस्योत्तरकृत्यमाह—**अहं पुनरित्यादिना** । **दिव्यो भोगः**; स्वर्गादिभोगः । **अदिव्यस्तु**; मानुषः । सर्वभोगरूपा सर्वा भूमिर्यस्य स सार्वभौमः । **अनुचितम्**; अनभिमतम् ।

[1] वैदिकधर्माः—ख. ग.

[2] ततो—क.

[3] मुहूर्तमपि omitted—घ.

[4] त्वदन्याः—क.

[5] सर्वभोग omitted—क.

विवेकमभिचरितुं देव्या दुर्मत्या प्रार्थितोऽस्मि ; यथा—वत्स दम्भ, विश्वधर्मोपप्लावकेन त्वया विवेकः प्रध्वंसनीय इति। ततश्चाहं नित्यनिःस्पृहोऽपि दाक्षिण्यपरवशतया[1] "षट्स्वनभिचरन् पतेत्" इति महर्षिशासनं[2] चानुवर्तमानः कामप्यलक्ष्यां देवतामारिराधयिषुरास्थितनियमोऽस्मि। तन्मे दिव्यगङ्गाजलाप्लुतलोकपालपुरोहितोपनीतानि [3]पारिजातपुष्पफलादीन्युपाहर।

कुहना—हद्धि हद्धि ; सअलाअमसारग्गहणविसारओ विवेओ समदमप्पमुहेहिं [4]अमच्चजणेहिं संरक्खिओ कहं अहिअरिज्जइ ? तारिसेसु पउत्तो अहिआरो कत्तुणो एव्व बाहं आवहत्तित्ति सुणीअइ।

(हा धिक् हा धिक् ; सकलागमसारग्रहणविशारदो विवेकः शमदमप्रमुखैरमात्यजनैः संरक्षितः कथमभिचर्यते ? तादृशेषु प्रयुक्तोऽभिचारः कर्तुरेव बाधामावहतीति श्रूयते।)

## प्रभावली

**आततायिनम्** ; वधोद्यतत्वादिति भावः। प्रार्थनाप्रकारमभिनीय दर्शयति—**यथेति**। सर्वधर्मनाशकेन त्वया। दाक्षिण्यमवर्जनीयमिति बुद्ध्या। **षट्सु** ; "अग्निदो गरदश्चैव" इत्याद्युक्तेषु पुरुषेषु अभिचारमकुर्वन् पतेत्। **कामपि** ; अनिर्वाच्याम्। आराधयितुमिच्छुः अङ्गीकृतव्रतनियमोऽस्मि। **तत्** ; तस्मात्। **पुरोहिताः** ; बृहस्पत्यादयः। **उपाहर** ; समीपं प्रापय। **हद्धि** ; हा धिक्। अभिचारस्य विवेकविषयत्वात् "प्रत्यगेनमभिचारस्तृणुते" इति भीत्या हा धिगित्युक्तिः। तदेव प्रकाशयति—**सअलेति**। **सअलाअमसारग्गहणविसारओ**-सकलागमसारग्रहणविशारदः। **विवेओ**-विवेकः। **समदमप्पमुहेहिं**-शमदम-

[1] परतया—क. [2] भाषितं—ग.

[3] तानि तानि पारिजातपुष्पफलपल्लवादीन्युपाहर—क.

[4] **अमच्चजणेहिं** omitted—ख. घ. ; अमच्चेहिं—क.

दम्भः—अयि मुग्धब्राह्मणि, अविचारितास्मद्वैभवा किं भाषसे?

विद्याश्चतुष्कसहिता विदिता द्विसप्त
क्षिप्रं चतुर्गुणितचन्द्रकलाः कलाश्च ।
काले च साधु विहिताः क्रतवः सहस्रं
धर्मध्वजाश्च[1] भुवनेषु मया निबद्धाः[2] ॥ १ ॥

प्रभाविलासः

इति; "प्रत्यगेनमभिचारस्तृणुते" इति श्रुतेः । **विद्या इति । चतुष्कसहिताः द्विसप्त विद्याः;** अष्टादश विद्या इत्यर्थः ।

"अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः ।
पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश ॥
आयुर्वेदो धनुर्वेदो गान्धर्वश्चेत्यनुक्रमात् ।
अर्थशास्त्रं परं तस्माद्विद्या ह्यष्टादश स्मृताः ॥"

प्रभावली

प्रमुखैः । **अमच्चजणेहिं**-अमात्यजनैः । **संरक्खिओ**-संरक्षितः । **कहं**-कथम् । **अहिअरिज्जइ**-अभिचर्यते । **तारिसेसु**-तादृशेषु । **पउत्तो**-प्रयुक्तः । **अहिआरो**-अभिचारः । **कत्तुणो एव्व**-कर्तुरेव । **बाहं**-बाधाम् । **आवहत्तित्ति**-आवहतीति । **सुणीअइ**-श्रूयते । स्वविद्याचारवैभवमावेदयति—**विद्या इति । चतुष्कसहिताः;** आयुर्वेदाद्युपवेदसहिताः । **द्विसप्त विद्याः;** "अङ्गानि वेदाश्चत्वारः" इत्युक्ताश्चतुर्दश विद्याः । **चन्द्रकलाः;** षोडश । ताश्चतुर्गुणिताः चतुःषष्टिर्भवन्ति । ताः कलाश्च क्षिप्रं मया अधीताः । तत्तत्काले सहस्रं क्रतवः मया साधु **विहिताः । धर्मध्वजाः**-धार्मिक इति प्रसिद्ध्यर्थं निबद्धा ध्वजाः ॥ १ ॥

[1] ध्वजश्च—क. ख.  [2] निबद्धः—क. ख.

## प्रभाविलासः

इत्युक्तत्वात् । **चतुर्गुणितचन्द्रकलाः**; षोडशकलानां चतुर्गुणने चतुःषष्टिर्भवति । ताश्चेतिहासादयः । तदुक्तम् —

"अथेतिहासागमौ च काव्यालंकारनाटकम् ।
गायकत्वं कवित्वं च कामशास्त्रं दुरोदरम् ।
देशभाषालिपिज्ञानं लिपिकर्म च वाचनम् ।
सर्वाणि चापदानानि सर्पशास्त्रं तु शाकुनम् ।
सामुद्रिकं रत्नशास्त्रं रथाश्वगतिकौशलम् ।
मल्लशास्त्रं सूदकर्म भूरुहाणां च दोहदम् ।
गन्धवादो धातुवादः खन्या वादो रसस्य च ।
जालवादोऽग्निसंस्तम्भः खड्गस्तम्भो जलस्य च ।
वाचः स्तम्भो वयःस्तम्भो वश्याकर्षणमोहनम् ।
विद्वेषणोच्चाटनं च मारणं कालवञ्चनम् ।
पयसि प्लवचातुर्यं पादुकानिधिरेव च ।
वाक्सिद्धिर्गुडिकासिद्धिरैन्द्रजालकमेव च ।
अञ्जनं परदृष्टेस्तु वञ्चनं स्वरवञ्चनम् ।
मणिमन्त्रौषधानां च सिद्धयश्चोरकर्म च ।
चित्रलोहाश्ममृद्दारुवेणुचर्माम्बरक्रियाः ।
अदृश्यकरणी दूतिकरणी मृगया रतिः ।
वाणिज्यं पाशुपाल्यं च कृषिरासवकर्म च ।
लावकुक्कुटमेषादियुद्धकारणकौशलम् ।
चतुःषष्टिकलाश्चैताः कलाविद्भिः प्रकीर्तिताः ॥"

इति ॥ १ ॥

अयि परमधार्मिकसहधर्मचारिणि, आस्तामिदं तावद्विद्याचारमाहात्म्यम् । निःस्पृहत्वमपि मे निपुणमवधारय ।

**निर्जित्य क्षितिमण्डलं भृगुपतिर्मह्यं प्रदातुं पुनः**
**प्रह्वः प्रार्थयत न्यषेधि च मया विश्वं तृणीकुर्वता ।**
**अस्मद्वैभवदृष्टिसंभृतचमत्कारैरमर्त्येश्वरै-**
**र्दत्तौ धिक्कृतवानहं शमधनः स्वर्गापवर्गावपि ॥ २ ॥**

**कुहना**—(सविमर्शम्) एव्वं णाम महप्पहावाणं तुम्हाणं विवेआहिआरो किं सेणो अण्णारिसो वा जो वि को वि? जत्थ अहं सहधम्मआरिणी होम्मि ।

(एवं नाम महाप्रभावाणां युष्माकं विवेकाभिचारः किं श्येनः, अन्यादृशो वा योऽपि कोऽपि? यत्राहं सहधर्मचारिणी भवामि ।)

प्रभाविलासः

**भृगुपतिः**; परशुरामः ॥ २ ॥

## प्रभावली

**परमधार्मिकसहधर्मचारिणीति**; अत्रापि परिहासपक्षे पदच्छेदभेदः । निःस्पृहत्ववैभवं शृण्वित्याह— **निःस्पृहत्वमपीति । निर्जित्येति** । भृगुपतिना दत्तं भूमण्डलं तिरस्कृतम् । देवैर्दत्तौ स्वर्गापवर्गावपि मया त्यक्ताविल्यर्थः ॥ २ ॥

एव्वं णाम महप्पहावाणं-एवं नाम महाप्रभावाणाम् । **तुम्हाणं**-युष्माकम् । **विवेआहिआरो**-विवेकाभिचारः । **किं सेणो**-किं श्येनः । "श्येनेनाभिचरन् यजेत" इत्युक्तेः । **अण्णारिसो वा**-अन्यादृशो वा । **जो वि**-योऽपि । **को वि**-कोऽपि । त्वया किमर्थं पृच्छ्यत इत्यत्राह—**जत्थ इति** । **जत्थ**-यत्र । अहं **सहधम्मआरिणी**-सहधर्मचारिणी । **होम्मि**-

**दम्भः**—अयि महाश्रोत्रियधर्मपत्नि, महानुभावानामप्यस्मदन्तेवासिनामत्यन्तरहस्यमिदमावेदयामि । सखीभ्यस्तृष्णादिभ्योऽपि नैतद् ब्रूयाः । न खलु श्येनादिवद्विशेषतो विहितोऽयमभिचारः । किंतु,

**ये तु धर्मतयाधीतास्ते सर्वे मत्परिग्रहात् ।**
**अविशेषेण गच्छन्ति विवेकस्याभिचारताम् ॥ ३ ॥**

**कुहना**—सुट्ठु चिंतिअं । को उण इमस्सिं परपीडणजण्णे तुम्हाणं उवदेसं कुणज्ज[1] ?

(सुष्ठु चिन्तितम् । कः पुनरस्मिन् परपीडनयज्ञे युष्माकमुपदेशं कुर्यात् ?)

**दम्भः**—अयि मुग्धे, सर्वज्ञस्य मे किमन्येनोपदेष्ट्रा ?

## प्रभाविलासः

**महाश्रोत्रियेति** । अश्रोत्रियेति च व्यज्यते । **ये त्विति** । दम्भार्थं कृताः सर्वेऽपि धर्मा निष्फला भवन्तीति तात्पर्यम् ॥ ३ ॥

## प्रभावली

भवामि; भविष्यामीत्यर्थः । **महाश्रोत्रियधर्मपत्नी**त्यत्रापि अत्यन्तमश्रोत्रियधर्मपत्नीति पदच्छेदः कर्तुं शक्यते । एतद्वक्ष्यमाणं रहस्यं त्वया तृष्णादिसखीभ्योऽपि न वक्तव्यमित्याह—**सखीभ्य इति** । रहस्यं वदति—**न खल्विति** । **अयमभिचारः**; मया क्रियमाणः **श्येनादिवत् विशेषतो विहितो न भवति** । **ये त्विति** । **धर्मतया**; प्रवृत्तिधर्मत्वेन निवृत्तिधर्मत्वेन च ये श्रुत्यादिष्वधीताः । **मत्परिग्रहात्**; दम्भसंस्पर्शात् ॥ ३ ॥

**सुट्ठु**-सुष्ठु । **चिंतिअं**-चिन्तितम् । **को उण**-कः पुनः । **इमस्सिं**-अस्मिन् । **परपीडणजण्णे**-परपीडनयज्ञे । **तुम्हाणं**-युष्माकम् । **उवदेसं**-

[1] **कुणइ**—क. ख. घ.

सर्वेऽपि हि पण्डितंमन्या मामेवाश्रित्य संशयं प्रशमयन्ति। अथापि मयेदानीं [1]साक्षिमात्रतया स्थापितः कश्चिदुत्कृष्ट[2]सर्वजनतिरस्कारको[3] गर्वो नाम सर्वजनहृदयसंवादी[4] महामोहसमयमहोपाध्यायः[5]। तस्य चेदानीमागमनं प्रतीक्ष्यास्मिन् सिद्धाश्रमे नवकृत्वः पुण्याहपूते संभृतसंभारः सप्तर्षिभिः प्रदिष्टां[6] बृसीमधितिष्ठामि[7]।

कुहना—जुत्तं आअरिअं। कज्जसिद्धीअ [8]तुम्ह करगआ होज्ज।

(युक्तमाचरितम्। कार्यसिद्धिश्च युष्माकं करगता भूयात्।)

दम्भः—(निमित्तं सूचयन्) अस्मत्कुलधर्मपालिनि कुहने, स्पन्दते मम दक्षिणं चक्षुः। [9]सद्य एव सुहृत्समागमः संपत्स्यते। (पुरस्तादवलोक्य) कः खल्वसौ ज्वलत्प्रभाकञ्चुकितदुर्निरीक्षमूर्तिर्महात्मा मध्यमलोकमवतीर्यास्मदाश्रमाभिमुखमागच्छति?

प्रभाविलासः

**बृसी**; व्रत्यासनम्। **आचक्रवालम्**; चक्रवालगिरिपर्यन्तम्।

प्रभावली

उपदेशम्। कुणज्ज-कुर्यात्। हृदयसंवादी; संमत इत्यर्थः। समयः; सिद्धान्तः। **बृसीम्**; दर्भनिर्मितं पीठम्। जुत्तं-युक्तम्। आअरिअं-आचरितम्। कज्जसिद्धीअ-कार्यसिद्धिश्च। तुम्ह तव। करगआ-करगता। होज्ज-भवेत्। निमित्तम्; लक्षणम्। दूरत आयान्तं गर्वं वर्णयति—कः खल्वि-

[1] साक्षिमात्रे—ख.
[2] सर्व omitted—क. ख.
[3] तिरस्कारदक्षो—क.
[4] हृदयंगमः—क.
[5] सयूथ्यः added after—क.
[6] प्रतिष्ठितां—क.
[7] अधितिष्ठानि—ग.
[8] तुम्ह omitted—क.
[9] अद्येव च—ङ. छ.

(ततः प्रविशति परिगृहीतपृथुलपादुकः प्रतिक्षणविक्षिप्यमाणविकटभुजदण्डो दृढतरदण्डावलम्बितप्रतिज्ञापत्रिकापताको दर्पः)

दर्पः—अहं किल राज्ञा महामोहेन प्रकृष्टजनतिरस्काराय प्रणिहितः सकललोकतारतम्यदिदृक्षया परिक्रान्तः पितामहगृहान्मध्यमं लोकमवतरन् आचक्रवालमवलोकितदशदिशाचक्रवालः पुरंदरपुरोगमैर्लोकपालैरभ्यर्चितः सुरभिमदिरासुधाचन्द्रपारिजातमणिवरवितरणमहावदान्येन मन्दर[1]मन्थमथनसंक्षोभसर्वंसहेन मधुकैटभमथनबन्धुना सिन्धुना समाहृतं हारोपहारमाबिभ्राणः प्रत्यागतोऽस्मि भारतं वर्षम् । [2]अद्य च ;

प्रभाविलासः

**दिशाचक्रवालम्** ; दिशामण्डलम् । "लोकालोकगिरौ चक्रवालः क्लीबं तु मण्डले" इति निघण्टुः । **सुरभिः** ; कामधेनुः । "सुरभिस्तु गवि स्त्रियाम् । वसन्तचैत्रयोः पुंसि त्रिषु सौम्यसुगन्धिनोः" इति रत्न-

प्रभावली

त्यादिना । कञ्चुकितत्वादिति हेतुगर्भं विशेषणम् । **परिगृहीतः** ; अधिष्ठितः । **पादुका** ; दारुमयी पादरक्षा । **विकटः** ; विशालः । दृढतरं यथा तथा अवलम्बिता पत्रिकैव पताका यस्य । **प्रणिहितः** ; उत्तमजनपरिभवाय प्रणिधित्वेन प्रयुक्तः । **परिक्रान्तः** ; परिभ्रमन् । **पितामहगृहात्** ; ब्रह्मलोकात् । **आचक्रवालम्** ; आलोकालोकम् । **दिशाचक्रवालम्** ; दिङ्मण्डलम् । सुरभीत्यादिना समुद्रं वर्णयति । **सुरभिः** ; कामधेनुः । **मदिरा** ; वारुणी । **सुधा** ; पीयूषम् । **मणिवरः** ; कौस्तुभः । मन्दर एव मन्थः मन्थदण्डः, तन्मथनसंक्षोभे सर्वंसहः । **मधुकैटभमथनः** ; विष्णुः । **समाहृतम्** ; समर्पितम् । **हार एव उपहारः**

[1] मन्थ omitted—ख. घ.

[2] अत्र च—क.

त्रयोदशमिहादित्यं[1] रुद्राणां द्वादशं तथा ।
मन्वीत नियतं लोको वसूनां नवमं च माम् ॥ ४ ॥

(विचिन्त्य सरोषहासम्) अहो नु खलु जगतो मौढ्यम्; येषामस्मदनुचरप्रतिनिधिपर्वण्यप्यवस्थानमपहास्यं, तेऽपि मत्साम्यं मदाधिक्यं वा प्रतिलब्धुं मोघवृत्तिं मनोरथमारोहन्ति। इह हि—

छन्दश्छन्दितबुद्धयः पदविदः कल्पे विकल्पत्यजः
शिक्षाशिक्षितमानसा विगणितज्योतिर्गणावृत्तयः ।
निर्णीतार्थनिरुक्तयस्त्रिविधया मीमांसया मांसला
नृत्यन्तो नयविस्तरे च सुधियः सर्वे मया खर्विताः ॥ ५ ॥

### प्रभाविलासः

मालायाम् । **त्रयोदशमित्यादि;** अप्रामाणिकत्वं व्यज्यते ॥ ४ ॥

**छन्द इति।** छन्दःप्रभृतीनि वेदाङ्गानि। छन्दसि छन्दिता शिक्षिता बुद्धिर्येषां ते। "छन्दः पद्येऽभिलाषे च" इत्यमरः। **पदम्;** व्याकरणम्। **कल्पः,** कल्पसूत्रम्। **विकल्पः;** संशयः। विगणिताः

### प्रभावली

उपायनम्। स्वात्मानमुत्प्रेक्षते—**अद्य चेत्यादि।** माम् आदित्येषु **त्रयोदशम्,** रुद्रेषु **द्वादशम्,** वसुषु **नवमं च लोकः नियतं मन्वीत** उत्प्रेक्षेत ॥ ४ ॥

मौढ्यहेतुको हासः। जगतः स्वसाम्यादिवाञ्छया रोषः। **अपहास्यम्;** अपहासयोग्यम्। **तेऽपि;** तादृशा अपि। **आरोहन्ति;** आकाङ्क्षन्तीत्यर्थः। सर्वेषां स्वविजितत्वं दर्शयति—**छन्द इति। छन्दोभिः** वेदैः अलंकृतबुद्धयः। **पदं** व्याकरणं तद्विदः; शाब्दिका इत्यर्थः। **कल्पसूत्रे विकल्पः** संदेहः, तत्त्यजः। **शिक्षायां** शिक्षितमानसाः। **ज्योतिर्गणस्य** सूर्यादिग्रहस्य **आवृत्तिः** तत्तद्राशिषु संचारः, सा विगणिता यैस्ते। **निर्णीतार्थः** निरुक्तिग्रन्थो यैः।

[1] इवादित्यं—क.

(आकाशे) रे रे बालिश, किं ब्रवीषि ? कुतस्तवेयं शिक्षा ? कीदृशी च परिचितिरिति ? (सहस्तास्फालनं विहस्य)

**विधिमन्तरेण विहगेन कुतः पयसोरशिक्ष्यत विवेकविधिः ।**
**कति वा दिनानि वद पर्यचिनोत्कलशीसुतः कबलयन् जलधिम् ॥६॥**

**प्रभाविलासः**

ज्योतिर्गणानां नक्षत्राणामावृत्तयो यैस्ते । कर्मदेवताब्रह्मकाण्डभेदेन मीमांसा· त्रैविध्यम् । **नयविस्तरः**; न्यायशास्त्रम् ॥ ५ ॥

**आकाश इति**; कर्णं दत्त्वेति शेषः । तदुक्तम्—

"अप्रविष्टैः सहालापः स एवाकाशभाषितम् ।
एष प्रयोज्य आकाशे कर्णं दत्त्वेत्यनन्तरम् ।
किमाहेति वचोऽनूद्य पश्चात्कार्यं तदुत्तरम् ॥"

इति । **विधिमिति** । **विहगेन**; हंसेन । **पयसोः**; नीरक्षीरयोः । **कलशीसुतः**; अगस्त्यः ॥ ६ ॥

**प्रभावली**

**त्रिविधया** कर्मब्रह्मदेवतासंबन्धिन्या **मीमांसया मांसलाः** परिपूर्णाः । **नयविस्तरे** न्यायशास्त्रविस्तरे नृत्यं कुर्वन्तः । सर्वे चतुर्दशविद्यावेदिनः **सुधियो** विद्वांसः **खर्विताः** वामनीकृताः; गर्वोच्छ्रायादपनीता इत्यर्थः ॥ ५ ॥

स्वप्रतिकूलवादिनीमशरीरवाचमाशङ्कते—**आकाश इति** । अशरीरवाचमनुवदति—**रे रे इति** । **बालिशः**; डिम्भः । **तवेयं शिक्षा कुतः**; कस्मादुपाध्यायात् । तत्र **परिचितिश्च** ते **कीदृशी** इत्येवंरूपां वाचमाकर्ण्य दम्भः **सहस्तास्फालनं** हस्ताभ्यामन्योन्यमास्फालनं कुर्वन्नाह । धीमत उपाध्यायात् शिक्षा किमर्थेत्याह—**विधिमन्तरेणेति** । **विधिः**; दैवम् । **अन्तरेण**; विना । **विहगेन**; हंसेन । **पयसोर्विवेकविधिः**; जलक्षीरयोर्विभागः । **कुतः**; कस्मात् । **अशिक्ष्यत**; न कुतश्चिदित्यर्थः । इदं कुतस्तवेयं शिक्षेति प्रश्नस्योत्तरम् । कीदृशी परिचितिरित्यस्योत्तरमाह—**कति वेति** । **कलशीसुतः**; **अगस्त्यः** । कलशीसुत-

आस्तां तावत् विश्वतोमुखीयमास्माकी विद्या[1]। अभिजन-
वृत्ताभ्यामप्यहं निःसमाभ्यधिकः। तथाहि—

**मद्वंशोद्भवयाजनार्हपुरुषालाभादमुष्मिन् जग-**
**त्या गोत्रप्रथमादनध्वरतया प्रख्यातमस्मत्कुलम्।**
**अप्रत्यक्षमनक्षपीडनविधि[2]प्राबल्यतः स्थापितं**
**विष्वग्वृत्ति तपः परं किमपि मे विश्वाधिकं के विदुः॥ ७॥**

(पुरस्तात्पश्यन्) अहह;

### प्रभाविलासः

**मद्वंशेति। गोत्रप्रथमः;** कूटस्थऋषिः। **अप्रत्यक्षमिति;** परैर-
नालक्ष्यमुच्यते। **अनक्षपीडनविधिः;** "अक्षपीडां न कुर्यात्" इति
विधिः। **अक्षाणि;** इन्द्रियाणि। जातिभेदमन्तरेण प्रवृत्तिरिति कथयितुं
विष्वग्वृत्तीत्युक्तम्। **तप इति;** पारदार्यादिकं लक्ष्यते। प्रसिद्धतपोवैल-
क्षण्यमाह—**विश्वाधिकमिति**। तद्धि तत्त्वसाक्षात्काराक्षपीडनैकतानत्वादि-
युक्तम्॥ ७॥

### प्रभावली

पदेनागस्त्येऽप्यनादरो द्योत्यते। **जलधिं कबलयन्;** समुद्रं पास्यन्, पातु-
मित्यर्थः। लक्षणहेत्वोरिति शता। **कति दिनानि पर्यचिनोत्;** परिचयमभ्यासं
कृतवान्; न किमपि। सहसैव समुद्रं पीतवान्। ममापि तथेति भावः॥ ६॥

**विश्वतोमुखी;** सर्वतोमुखी, सर्वतः प्रसिद्धा वा। **अभिजनः;** कुलम्।
**वृत्तम्;** आचारः। प्रथममभिजनतो निःसमत्वं दर्शयति—**मद्वंशेति**। मद्वंशो-
द्भवानां पुंसां याजने यो योग्यः पुरुषः, तस्यालाभात्। **अस्मिन् जगति;** स्वर्गादिषु
वा। गोत्रप्रथमपुरुषात् कूटस्थादारभ्य **अनध्वरतया** अध्वररहितमिति अस्मत्कुलं
प्रख्यातम्। वृत्ततो निःसमत्वमाह—**अप्रत्यक्षमिति**। **मे किमप्यप्रत्यक्षं तपः;**
चान्द्रायणादिकं हि प्रत्यक्षम्। अप्रत्यक्षं प्रत्यक्षागोचरम्। **अक्षपीडनम्;** इन्द्रिय-

[1] शिक्षा—ग. [2] प्रागल्भ्यतः—ख, ङ.

बहव इह नश्छात्रा बाह्याः कुदृष्टय इत्यमी
मिषति विबुधस्तोमे मेरुं विगूहयितुं क्षमाः ।
प्रबलकुहनागम्भीराभिः प्रलोभनयुक्तिभि-
र्जडबधिरपङ्ग्वन्धप्रायं जगज्जनयन्ति च ॥ ८ ॥

[1]अथ वा ;

अनपह्नुतवद्भिरद्य यावत्प्रतिपक्षानिह किं प्रमाणवर्गैः ।
स्ववशे विनिवेशयामि विश्वं मणिमन्त्रौषधवञ्चनोपजापैः ॥ ९ ॥

**प्रभाविलासः**

**बहव इति । विगूहयितुम् ;** अपलपितुम् ॥ ८ ॥

**अनपह्नुतवद्भिरिति । अनपह्नुतवद्भिः ;** अपह्नवासमर्थैः । **उपजापः ;** भेदः । "समौ भेदोपजापौ" इत्यमरः ॥ ९ ॥

**प्रभावली**

निग्रहरूपा हिंसा । इन्द्रियपीडनं न विद्यते यस्मिन् विधौ सोऽनक्षपीडनविधिः । **तत्प्राबल्यतः स्थापितम् ;** "भूतहिंसा न कर्तव्या" इति विधिप्राबल्यतोऽनुष्ठितम् । **विष्वक् ;** सर्वत्र वाङ्मनःकायेषु, वर्तनं यस्य । **सर्वतपोऽधिकं के विदुः ;** अप्रत्यक्षत्वात् न केऽपि विदन्तीत्यर्थः ॥ ७ ॥

**बहव इति ।** इह देशे **बाह्याः कुदृष्टयः इत्यमी बहवः छात्राः विबुधस्तोमे** अनिमिषगणे विद्वद्गणे च **मिषत्यपि** पश्यत्यपि **मेरु**पर्वतमपि **विगूहयितुम्** अपलपितुं **क्षमाः** समर्थाः । सर्वप्रपञ्चापलापिन इत्यर्थः । **कुहना** कापट्यम् , तेन **गम्भीराभिः** दुरवगाहाभिः, प्रबलाभिः । **प्रलोभनयुक्तिभिः ;** विप्रलम्भयुक्तिभिः । इदं पूर्वत्रोत्तरत्र च समन्वेति । **जगत् जडबधिरपङ्ग्वन्धप्रायम् ;** युक्तिभिस्त्यक्तवेदप्रामाण्यत्वात् हितसाधनानुष्ठानशून्यमित्यर्थः । **जड** उन्मत्तः । **पङ्गुः** पादविकलः, इत्यादिबहुलं **जनयन्ति** ॥ ८ ॥

ननु प्रमाणानुसारिण्येव युक्तिरादरणीया ; प्रलोभनयुक्तिस्तु प्रत्यक्षादिप्रमाणगणैर्निराकृतत्वान्नादरणीयेत्यत्राह—**अथवेत्यादि । अद्य यावत् ;** अद्य पर्यन्तं

[1] अद्य च—ख.

किमाह कश्चित्—प्रतिष्ठिते प्रमाणवर्गे कथं कैश्चिदेवं पाटच्चरवृत्तिः प्रतिपत्तव्येति ? (सरोषहुंकारम्) पश्य ; अरे ब्राह्मणापशद, सार्वलौकिकं गगनतलमलिनिमप्रत्यक्षं किं न प्रामाणिकैः परिभूयते ? अपिच,

**षड्भिः पूर्वप्रणीतैरलमिह समयैः श्रद्दधानप्रमाणै-**
**र्वस्तुस्थित्यैकरूप्ये मतिविहतिहते[1] कस्य कीदृग्व्यवस्था ।**
**अक्षुभ्यद्द्वित्रकक्ष्याव्यवहरणसहानस्मदुन्नीतयुक्त्या**
**सिद्धान् सिद्धान्तभेदान्मदुपहितधियः प्रत्यवस्थापयन्तु ॥ १० ॥**

## प्रभाविलासः

**षड्भिरिति ।**

"कणादस्याक्षपादस्य व्यासस्य कपिलस्य च ।
पतञ्जलेर्जैमिनेश्च दर्शनानि षडेव हि ॥"

इत्युक्तलक्षणैः । **वस्तुस्थित्यैकरूप्ये ;** वस्तुनो द्वैरूप्यासंभवादर्थैकरूपत्वे । **विहतिविनिहते ;** सप्तभङ्ग्यादिबाधिते । **कस्य ;** वस्तुनः । **कीदृग्व्यवस्था ;** अनवस्थितिरेवेत्यर्थः ॥ १० ॥

## प्रभावली

प्रतिपक्षान् अनपह्नुतवद्भिः अपह्नवमकृतवद्भिः प्रमाणवर्गैः प्रत्यक्षादिप्रमाणगणैः किं प्रयोजनम् ? तन्मास्तु ; यथाप्रमाणं विश्वस्य सत्यत्वमङ्गीक्रियतामित्यत्राह— **स्ववश इति । मणिमन्त्रौषधवञ्चनोपजापैः ;** मणिमन्त्रौषधकृतवञ्चनाया उपजापैः भेदैः, वशीकारैरित्यर्थः । **विश्वं स्ववशे** स्वमते स्थापयामि ॥ ९ ॥

प्रतिवादिनो मतमाशङ्क्य परिहर्तुं प्रतिवादिनो नामागृहीत्वा तन्मतमुपन्यस्यति—**किमाह कश्चिदिति ।** कश्चित् किमपि वचनमाह । वचनं दर्शयति—**प्रतिष्ठित इति ।** प्रमाणवर्गे सम्यक् प्रतिष्ठिते सति । अयमर्थः—प्रत्यक्षादिप्रमाणवर्गैर्जगतः सत्यत्वादौ निश्चिते सति । **कैश्चित्** बाह्यैः **एवं पाटच्चरवृत्तिः** जगन्मिथ्यात्वप्रतिपादनरूपतस्करमार्गः **कथं प्रतिपत्तव्या** अङ्गीकर्तव्या । सा

[1] विहतिविनिहते इति प्रभाविलासपाठः

(अपसव्यं पश्यन्) [1]एते मगधकलिङ्गान्ध्रद्रमिडकर्णाटकेरल-कोङ्कणादयो जनपदाः । अहह,

**अष्टाचत्वारिंशतं बौद्धभेदान्नीचोक्त्याहं भाषया निर्मिमाणः ।**
**अध्यासीनो बोधिवृक्षस्य मूलं [2]विद्यादर्पं वैदिकानामहार्षम् ॥११॥**

## प्रभाविलासः

**अष्टाचत्वारिंशतमिति । नीचोक्त्या भाषया ;** प्राकृतभाषया । **बोधिवृक्षस्य ;** अश्वत्थस्य ॥ ११ ॥

## प्रभावली

न युक्तेत्यर्थः । एतच्छ्रुत्वा सरोषहुंकारं गर्वो वदति—**पश्येति । अरे ब्राह्मणेत्यादि । ब्राह्मणापशद** सर्वलोकसिद्धं **गगनमलिनिमप्रत्यक्षं** मलिनिमविषयं प्रत्यक्षं **प्रामाणिकैर्न** किं परिभूयते? परिभूयत एव । एवं भवन्मतमपीति भावः । ननु भवच्छिष्याणां सर्वसिद्धान्तप्रत्यवस्थापनमनुचितमित्याशङ्क्याह—**षड्भिरिति । पूर्वप्रणीतैः षड्भिः सिद्धान्तैरलम्** । कुत इत्यत्राह—**इहेति । श्रद्धानप्रमाणैः ;** तत्र श्रद्धावतां प्रमाणभूतैरलम् ; ते अनादरणीया इत्यर्थः । परस्परं मतीनामन्योन्यविहतेर्हेतोः वस्तुस्थितेरैकरूप्ये भग्ने सति कस्यार्थस्य कीदृशी व्यवस्था? व्यवस्था वक्तुमशक्येत्यर्थः । व्यवस्थाया अभावे सिद्धान्तभेदसिद्धिः कथमित्यत आह—**अक्षुभ्यदिति । अक्षुभ्यन्त्यः** अभज्यमानाश्च ता द्वित्रकक्ष्याश्च, तासु व्यवहरणसहान् व्यवहर्तुं शक्यान्, अस्मदुन्नीतनीत्या सिद्धान्, नीतिः युक्तिः, मदुपहितधियः मया शिक्षितबुद्धयः प्रत्यवस्थापयन्तु । द्वित्रकक्ष्याव्यवहरणसहत्वेन सिद्धान्तभेदसिद्धिरित्यर्थः । अतः सर्वसिद्धान्तप्रत्यवस्थापनमुचितमित्यर्थः ॥ १० ॥

**अपसव्यम् ;** दक्षिणम् । गङ्गायमुनयोर्मध्यदेशस्थितस्य प्राङ्मुखस्य दक्षिणतो दर्शने मगधकलिङ्गादिदेशाश्चक्षुर्विषया भवन्ति । **मगधः ;** गिरिव्रजदेशः । **कलिङ्गाः ;** ओढ्रियाः । **आन्ध्राः ;** श्रीकाकुलप्रदेशाः । **द्रमिडाः ;** वेंकटगिरिमारभ्य दक्षिणाः । **कर्णाटाः ;** ततः पश्चिमदेशाः । **केरलाः ;** मलया-

[1] त एते—छ. [2] विद्यागर्वं—क.

ततः प्रभृति सुगृहीतनामानो नाममात्रनिःशेषितविपक्षाः सप्तद्वीपनिहितजयस्तम्भाः संचरन्त्यस्माकमन्तेवासिनः । अपिच,

**अद्वैतं क्वचिदर्पितं क्वचिदिह द्वैतं मया साधितं[1]**
**द्वैताद्वैतसमाहृतिः क्वचिदसौ दुस्थाप्यवस्थापिता[2] ।**
**तत्तद्भक्तिमुधाग्रहोदितकथाकल्लोलतो वादिनां**
**मन्ये संप्रति [3]मल्लमेषसमरप्रेक्षारसं प्राप्नुमः ॥ १२ ॥**

### प्रभाविलासः

**अद्वैतमिति** । अद्वैतं मायिषु । द्वैतं तार्किकेषु । द्वैताद्वैतसमाहारो भास्करादिषु । **दुःस्थेति**; सप्तभङ्गीषु ॥ १२ ॥

### प्रभावली

लाख्याः । **कोङ्कणाः**; मलयालादुत्तरपश्चिमाः । पुनः स्वसामर्थ्यमेव प्रकटयति— **अष्टाचत्वारिंशतमिति** । **बोधिवृक्षस्य**; अश्वत्थस्य मूलमध्यासीनो जिनो भूत्वा **अहं** नीचोक्त्या भाषया नीचोक्तिरूपया प्राकृतमहाराष्ट्रमागधशौरसेन्यपभ्रंश-पैशाचादिभाषया अष्टाचत्वारिंशतं बौद्धमतभेदान् निर्मिमाणः सन् वैदिकानां वेदमार्गानुसारिणां विद्यागर्वम् अहार्षम् अपहृतवानस्मि ॥ ११ ॥

**ततः प्रभृति**; तत आरभ्य । **सुगृहीतम**; बुद्धात् गृहीतं व्यपदिष्टम । **अद्वैतम**; एकं ब्रह्म सत , अन्यत्सर्वं मिथ्येति मतम् । **क्वचित**; वादिषु । **अर्पितम**; उपदिष्टम । **क्वचित्**; स्थले । **द्वैतम**; वस्त्वन्योन्यं स्वरूपतो भिन्नं मया **साधितम्** । **दुःस्थापि**; क्वचित् स्थापयितुमशक्यापि । **द्वैताद्वैतयोः समाहृतिः**; समुच्चयः, वस्तु स्वरूपतो भिन्नमभिन्नं चेति मतम् । **वादिनां** तेषां तेषां, **तत्तद्भक्तिः** तत्तन्मते प्रीतिः, तस्यां **मुधाग्रहः** व्यर्थाग्रहः, तेनोदितैः **कथाकल्लोलैः** वादपरंपराभिः **संप्रति मल्लयोः** मेषयोः **समरस्य प्रेक्षारसं** प्रेक्षणप्रीतिं **प्राप्नुम** इति **मन्ये** ॥ १२ ॥

[1] स्थापितम्—क. ख.
[2] व्यवस्थापिता—ङ.
[3] मेषमल्ल—क.

(परिवृत्यावलोक्य) एते पुनर्यवनतुरुष्काद्युपप्लुताः प्रत्यन्तदेशाः। इह च,

**वादद्यूतपणं प्रकल्प्य किमपि क्षिप्ताभिमानः क्वथन्**
**कश्चिद्वैदिकपद्धतिं द्विजपतिः क्षिप्रं मया त्याजितः।**
**अर्हद्बुद्धबृहस्पतिप्रभृतिभिः क्लृप्तान्कृतान्तक्रमा-**
**नन्योन्यव्यतिहारितानपि पठन्[1] व्यामोहयत्यर्भकान्॥१३॥**

### प्रभाविलासः

पुरा किल शंकरो नाम भिक्षुः भट्टाचार्यशिष्यं मण्डनमिश्रं वादपणेन वशीकृत्य स्वमते निवेशितवानित्यैतिह्यम्। तन्मनसि कृत्वाह—**वादेति**। **क्वथन्**; दृप्यन्। सुरेश्वरवार्तिकादिकं हृदि कृत्वाह—**अर्हदिति**। **कृतान्तक्रमान्**; सिद्धान्तभेदान्। **व्यतिहारितान्**; परिवर्तितान्॥ १३ ॥

### प्रभावली

**परिवृत्य**; पुनः प्रत्यङ्मुखो भूत्वा, अवलोक्य। **एते पुनरिति**। **यवनाः**; तुरुष्कात् किंचिद्भिन्नजातीयाः। आदिशब्दात् म्लेच्छादयः। तैः उपद्रुताः म्लेच्छदेशाः। **वादेति**। **कश्चित् द्विजपतिः**; मण्डनमिश्र इति भावः। **किमपि वाद** एव **द्यूतं**, तत्र **पणं** ग्लहं कल्पयित्वा। **किमपीति**; पराजितस्य प्रतिवादिमतप्रवेशरूपम। मया **क्षिप्ताभिमानः**; पराजित इत्यर्थः। **क्वथन्**; परितपन्। **क्षिप्रं वैदिकपद्धतिं त्याजितः**; स्वकीयां वैदिकपद्धतिं विसर्ज्य प्रतिवादिनः शंकरस्य मतं प्रवेशित इत्यर्थः। **अर्हदित्यादि**। **अर्हन्** जिनः, **बुद्धः** सुगतः, **बृहस्पतिश्च**, आदिशब्देन कणादादयः संगृहीताः। **सिद्धान्तक्रमान् अन्योन्यव्यतिहारितान्**; अन्योन्यव्यामिश्रितान्, अन्योन्यव्याहतान् वा। **पठन्**; सुरेश्वरवार्तिकरूपेण ग्रन्थं कुर्वन्। **अर्भकान्**; अनधिगतशास्त्रसरणीन्। **व्यामोहयति**; वशीकरोति। इदमत्राकूतम्—शंकरमण्डनमिश्रौ परस्परमतप्रवेशपणं वादमकुरुताम्। शंकर-

[1] व्यतिहारितांश्च विपठन्—क.

अमी च पशुमृगपक्ष्यादिकल्पैरनार्यैरधिष्ठिता नास्मद्दृष्टि-गोचरतामर्हन्ति । एतेष्वनिश्चिताक्षराः कक्षावलम्बितपुस्तका [1]विस्तारितकूर्चभराः केचिदेते विपश्चित इवाभान्ति । आः, प्रतारितोऽस्मि गाढमापातदृष्ट्या ।

तथाहि—

**अनियतबहुजल्पैरल्पबोधावलिप्तै-**
**रवमतगुरुवर्गैरत्रिवर्गापवर्गैः ।**
**अभिनयविधुताङ्गैरङ्गुलीनृत्तसारै-**
**रलमिह जडभूभृत्पीठमर्दैरमीभिः ॥ १४ ॥**

**प्रभाविलासः**

**अनियतेति । पीठमर्दाः;** नर्मसचिवाः ॥ १४ ॥

**प्रभावली**

पराजितो मण्डनमिश्रः शंकरमतं प्रविश्य एकदण्डेन संन्यस्य सुरेश्वरवार्तिकाख्यं ग्रन्थं प्रणीय मूढजनं व्यामोहितवान् । तन्मतस्य जगतः सदसद्विलक्षणत्वोक्त्या जैनमतव्यतिहारः । विज्ञानमेव सत्यम्, अन्यत् बाह्यं सर्वं मिथ्या तस्मिन् परिकल्पितमिति स्वीकारात् योगाचारमतसंपर्कः । वेदप्रामाण्यमिथ्यात्वोक्त्या चार्वाकमतसंभेद इति ॥ १३ ॥

**अमी च;** देशाः । **अनार्यैः;** म्लेच्छैः । अक्षरमपि निश्चेतुमसमर्थाः । विस्तारितश्मश्रुभराः । आः इति खेदे । **आपातदृष्टिः;** स्थूलदृष्टिः । असंगतबहुजल्पैः, अल्पज्ञानेऽप्यतिगर्वितैः, अत एव तृणीकृतगुरुवर्गैः केवलनास्तिकैः । **अभिनयः;** अनुकरणम् । प्रतिष्ठितविद्वदनुकरणेन विक्षिप्तावयवैः । अङ्गुलीनां नृत्तमेव सारो येषां तैः । जडभूभृतां सचिवैः । प्रौढाश्चेत् नाभिनन्दन्तीति भावः । अमीभिरलम् ॥ १४ ॥

[1] विस्तारिकूर्च—क.

(उत्तरतो दृष्टिं दत्वा) कश्चिदिहासौ काश्मीरतो वा जलन्धराद्वा दक्षिणाभिमुखः समायाति । एनं तावत्प्रिययोरवस्थानं परिपृच्छामि । भद्र सुब्राह्मण, किं जानासि दुर्मतिसमादेशादद्रिराजपरिक्रमणाय प्रस्थितयोरस्मद्दुहिण्योरीर्ष्यासूययोरधुनातनं वृत्तान्तम् ? (कर्णं दत्वा) किमाह—ते किल सुमतिसखीभिर्मैत्रीकरुणामुदितो-[1]पेक्षाभिः प्रतारिकाभिः प्रतारिते कस्यांचिन्निवृत्तिपथसुरङ्गायां निरुद्धे इति ? (सक्रोधम्) आः, पापोऽयमलीकवादी ब्राह्मणवेतालः । रे रे दुरात्मन् वैधवेय श्रोत्रियब्रह्मराक्षस, कथं सर्वलोकाभिसरणेऽप्यस्मत्सहधर्मचारिणीत्वमनुज्झन्त्योर्महाभागयोरनयोरेतादृशमत्याहितं संभविष्यति ? (निर्वर्ण्य) प्रागप्यवगतोऽयं [2]पार्वतीयैर्व्याधपतिभिः

### प्रभाविलासः

**सुरङ्गायाम्;** गर्तविशेषे । **अत्याहितम्;** अनिष्टम् । "सांख्यसौगतचार्वाकसंकराच्छंकरोदयः" इति वचनं मनसि कृत्वोपहसन्नाह—

### प्रभावली

**दृष्टिं दत्त्वा;** दृष्ट्वेत्यर्थः । काश्मीरदेशाद्वा जलन्धरदेशाद्वा । **प्रिययोः;** असूयेर्ष्ययोः । **अवस्थानम्;** अवस्थानं दशा । **अद्रिराजः;** महामेरुः । अधुनातनम्; आधुनिकम् । वृत्तान्तम्; प्रवृत्तिम् । **किमाह;** कश्चिदेवमाहेत्यर्थः । **ते किलेति** । ते; उमे अपि । **मैत्री;** सर्वत्र स्नेहः । **करुणा;** प्रसिद्धा । **मुदिता;** यथालाभसंतोषः । **उपेक्षा;** अपकारिषु । **प्रतारिकाभिः;** वञ्चिकाभिः । **निवृत्तिमार्गरूपसुरङ्गायाम्;** सुरङ्गा तस्करमार्गः । निरुद्धे; बन्दीकृते । अनृतवादी ब्राह्मणपिशाचः । **वैधवेयः;** विधवासुतः । श्रोत्रियवेषः ब्रह्मराक्षसः । **अभिसरणम्;** स्वयं परिग्रहः । **महाभागयोः;** भाग्यपरिपूर्णयोः । **अत्याहितम्;** महाभयम् । **निर्वर्ण्य;** सूक्ष्मं परामृश्य । **अवगतः;** ज्ञातः । **पार्वतीयैः;** पर्वतवर्तिभिः ।

[1] मोदते इति मुदिः । तस्य भावो मुदिता—इति व्युत्पत्तिर्भाव्या.

[2] पर्वतीयैः—ग.

प्रणिधिभावेन[1] प्रेषितः पर्यटनशीलः [2]कश्चित्पान्थः । (सापहासम्) अहो, देशकालविशेषसंभवोऽयं दोषसमवायः । यथा—

**श्वश्रूरस्य दिगम्बरव्रतवती संबन्धिनः सौगता**
**माता चास्य पिता च पाशुपतिनौ वैदेशिको[3] देशिकः ।**
**जाया तिष्ठति सांख्ययोगसमये चार्वाकशिष्यः सखा**
**मिथ्याचारसमाह्वयः स्वयमसौ विप्लावको वैदिकः ॥ १५ ॥**

प्रभाविलासः

**श्वश्रूरिति** । **सौगताः**; सौत्रान्तिकयोगाचारादयः । तेषां हि बाह्यं कृत्स्नं जगत् प्रतीतिवैचित्र्यकृतं मिथ्याभूतमिति च मतम् । तदेव मायिनामपि जीवनमिति संबन्धिन इत्युक्तम् । मायिनां प्रायेण भस्मोद्धूलनरुद्राक्षधारण-लिङ्गपूजादेः शिष्टकाष्ठाभिमानात् पाशुपतसंबन्धः । तन्मतस्यासांप्रदायि-कत्वं वक्तुं **वैदेशिको देशिक** इत्युक्तम् । अन्तःकरणस्य चिच्छायापत्त्या बुद्धित्वकल्पनादेः सांख्यादिसाधारणतया तत्संबन्ध उक्तः । तस्य संज्ञा-माह—**मिथ्याचारेति** । केवलद्रविणाशया देशकालपात्रादिनियममन्तरेण भृतकाध्यापकत्वं वक्तुं विप्लावक इत्युक्तम् । आह च विद्या—

"योऽर्थार्थी मां द्विजे दद्याद्वेदं चैवाविधानतः ।
अनध्याये च तं प्राहुर्वेदविप्लावकं बुधाः ॥"

इति ॥ १५ ॥

**प्रभावली**

तत्तज्जनपदं प्रति **प्रणिधिभावेन** । **प्रणिधिः**; चारः । **समवायः**; समुच्चयः । सम-वायं दर्शयति—**यथेति** । **अस्य**; मिथ्याचारस्य । **श्वश्रूः**; पत्नीमाता । **दिगम्बर-व्रतवती**; जैनकुलीना । अनेन जैनादिभिरयं परिगृहीत इति सूच्यते । **सौगताः**;

[1] प्रतिजनपदं added after—क. [2] कौलटेरः—क.
[3] वैशेषिको—क. ग.

तदयं मिथ्याचारनामा व्याधप्रणिधिरलीकवादी चासंभाष्यो मादृशैर्महात्मभिः। एतदवलोकनदोषपरिहाराय दिवाकरमात्मानं वा पश्यामि। (विकटं परिक्रम्य) अहह, महानद्योरिह गङ्गायमुनयोरमी मध्यमा जनपदाः। एतेषु चावधीरितबृहस्पतिप्रज्ञानामस्माकमनन्तसिद्धान्तसृष्टि[1]कर्बुरमुपन्यासं प्रजापतिपशुपतिदत्तवरोऽपि कः पुनः प्रत्येष्यति? कुतः पुनरनुवादादयः? इह चापवर्गमार्गनिरोधोद्यतेनास्मत्स्वामिना समाहूतैरपरान्तवासिभिर्म्लेच्छभूपतिभिरधरोत्तरीकृता राजधान्यः। चरन्ति चात्र केचिदमी चक्रवर्तिनो दाम्भिकानाम्। एते च—

**अयाचन्तः किंचित्स्वयमुपनतेऽनादरगिरो**
**धनायाशैलूषीसहचरितसाकूतगतयः।**
**निवृत्त्याख्ये धर्मे स्थितिमभिनयन्तो निरुपधि**
**नमस्यन्ते सद्भिर्नवमरसनाडिंधमदृशः॥ १६॥**

**प्रभाविलासः**

**अयाचन्त** इति। धनायाशैलूषीसहचरिताश्च साकूतगतयश्चेति द्वन्द्वः॥ १६॥

**प्रभावली**

बौद्धाः। **अस्य पितरौ**; मातापितरौ पशुपतिमतप्रविष्टौ। **देशिक**; आचार्यः। **सांख्यसमये योगसमये च जाया वर्तते**। चार्वाकस्य शिष्यः सखा च भवति। **विप्लावको वैदिकः**; वैदिकधर्मविप्लावक इत्यर्थः। उक्तेषु मतेषु सर्वत्र मिथ्याचारपरिग्रहोऽस्तीति सूचितम्॥ १९॥

**आत्मानम्**; स्वम्। **विकटम्**; ससंभ्रमम्। परिभूतबृहस्पतिप्रज्ञानाम्। **सिद्धान्तानां सृष्टिः** संसृष्टिः, तया **कर्बुरं** शबलितं नानाविधम्। **प्रत्येष्यति**; ज्ञास्यति। **अनुवादादयः** कर्तुमशक्या इत्यर्थः। आदिशब्देन आक्षेपदूषणादिः।

[1] सृष्टि omitted. क; दृष्टि—ख.

अपिच हन्तैतत् कलेरनङ्कुशमाधिराज्यम्; महामोहस्य वा [1]तपसां परिपाकः—

**स्वतन्त्रवरवर्णिनीसुरतकेलिसौत्रामणी-**
**[2]रसार्चितमनोभवां रहसि निर्विशद्भिः क्षपाम् ।**
**दिवा विविधभूमिकाविहित[3]कञ्चुकैर्वञ्च्यते**
**वियातकितवैरिदं वितथदत्तवित्तं जगत् ॥ १७ ॥**

प्रभाविलासः

**स्वतन्त्रेति । सौत्रामणीरसः**; मद्यरसः । **विविधभूमिकाः**; शिष्टतापादकरुद्राक्षपवित्रकमण्डलुभस्मधौतवस्त्रादयः । **वियातम्**; धार्ष्ट्यम् । **वितथदत्तवित्तम्**; उक्तलक्षणानां यत्किंचित्प्रदानमपि निष्फलमित्यर्थः ॥ १७॥

**प्रभावली**

**उद्यतेन**; उद्युक्तेन । **अपरान्तः**; पश्चिमदेशः । दाम्भिकानां चक्रवर्तिनः । **उपनते**; प्राप्ते । **अनादरगीः**; किमर्थमिदमित्यादिः । **धनाया**; धनेच्छा, **सैव शैलूषी** नटी, तत्सहचरिताः साभिप्राया गतयो येषां ते । निवृत्तिधर्मे **निरुपधिं** निर्निमित्तरूपां स्थितिमनुकुर्वन्तः । एतदजानद्भिः **सद्भिः** । नवमो रसः शान्तिः, तस्य नाडिं धमतीति नाडिंधमा दृक् येषां ते; शान्तिरसप्रकाशकदृश इत्यर्थः ॥ १६ ॥

**एतत्**; वक्ष्यमाणं सर्वम् । **अनङ्कुशं** निरर्गलमैश्वर्यम् । तदेव दर्शयति—**स्वतन्त्रेति । स्वतन्त्राः**; अपराधीनाः, वेश्या इत्यर्थः । तासां केल्यामेव **सौत्रामण्यां रसः** सुरा; सौत्रामण्यां सुराग्रहस्योक्तत्वात् । तया अर्चितो **मनोभवः** कामो यस्याम् । **निर्विशद्भिः**; अनुभवद्भिः । **दिवा** तु **विविधवेषपरिग्रहेण**; श्रोत्रिययाज्ञिकतापसादिरूपेण वेषवैविध्यम्; तेन कृतावरणैः धृष्टधूर्तैः **वितथदत्तवित्तं** व्यर्थं दत्तधनं जगत् **वञ्चयते** ॥ १७ ॥

[1] तपसः—घ.
[2] रसार्पित—क, ख.
[3] रचित—क.

अत्र चामी म्लेच्छाधिष्ठितं देशमपरित्यजतां[1] बहिराचरण-मात्रसंरक्षितवर्णाश्रमधर्माणामनन्यगतिकानां द्विजानामग्रहाराः । एतेषु च,

**संस्काराः परमुत्सवैकवपुषः संध्या विनोदावधिः**
**सावित्री जनवादजर्जरतनुः[2] शौचं नटप्रायिकम् ।**
**इत्थं मोहमहीपतेरनुमते विश्वं विपर्यस्यतः**
**कालस्यैष कलेरलेपकमतव्यक्तक्रमः प्रक्रमः ॥ १८ ॥**

प्रभाविलासः

**संस्कारा** इति । जातकर्मादिकमुपनयने विवाहे वान्तर्भाव्य तत्रापि वाद्यगीतनृत्तादिकमेव प्रायेण कारयन्तीति **उत्सवैकवपुष** इत्युक्तम् । **नटप्रायिकमिति;** मृदाहरणजलप्रक्षेपाद्यभिनयमात्रं, न तु यावदुक्तकरणम् । कलेः कालस्येत्यनेनेदं स्मारितम्—

"वित्तमेव कलौ नृणां जन्माचारगुणोदयः ।
स्त्रीत्वे पुंस्त्वे च हि रतिर्विप्रत्वे सूत्रमेव च ॥
लिङ्गमेवाश्रमख्यातावन्योन्यासक्तिकारणम् ।
अनाढ्यतैव साधुत्वे पाण्डित्ये चापलं वचः ।
संस्काराश्च तथोद्वाहे स्नानमेव प्रसाधने ॥"

इति । **अलेपकाः;** सांख्याः । **प्रक्रम इति;** आरम्भ एवैवमतिक्रमः, अन्ते किमुतेति भावः ॥ १८ ॥

**प्रभावली**

**बहिराचरणम्;** दम्भाचरणमित्यर्थः । **अनन्यगतिकानाम्;** अन्यत्र गन्तु-मशक्तानाम् । **संस्कारा इति;** जातकर्मादयः । केवलं वाद्यघोषगृहालंकरणबन्धु-

[1] देशमपरित्यजन्तो बहिरावरणमात्रसंरक्षितवर्णाश्रमधर्माः—ग. घ.

[2] जागरतनुः—ङ.

अहो नु खल्वयमपि महानत्र धर्मक्रमः—

**तरुणाकृतयः कचेषु कृष्णास्त इमे दंपतयः सहैव साध्यम् ।**
**इतरेतरदैवतं भजन्ते मदनोपज्ञमजस्रमग्निहोत्रम् ॥ १९ ॥**

अपिच,

**प्रतिवीथिकमाश्रयन्त एते कुहनासूक्तिमयीं कुसीदवृत्तिम् ।**
**अपरीक्षितशिष्यमत्र सर्वे शुकवद् ब्रह्म पठन्ति शुद्धवेषाः ॥२०॥**

### प्रभाविलासः

"जातपुत्रः कृष्णकेशोऽग्नीनादधीत" इत्येतदपदिश्याह—**तरुणाकृतय इति** । संभोगो व्यज्यते ॥ १९ ॥

श्रोत्रियान् प्रत्याह—**प्रतिवीथिकमिति** । **कुहनासूक्तिमयीम्**; कपटपरिभाषाप्रचुराम । **कुसीदवृत्तिम्**; वृद्धिजीविकाम । **अपरीक्षितशिष्यम्**; "संवत्सरं परीक्षेत" इत्याद्युक्तपरीक्षाशून्यम् । **ब्रह्म**; वेदः ॥ २० ॥

### प्रभावली

जनपरिपालनान्युत्सवाः । एतदेकस्वरूपाः । एकशब्देन मन्त्रादि व्यावर्त्यते । **संध्या विनोदः** श्रमापनयः, स परा काष्ठा यस्याः सा; आह्निकश्रमापनयरूपेत्यर्थः । **जनवादः**; लोकवृत्तान्तः, तच्छबलितरूपा । **शौचं** शुद्धिः, **नटशौच**सदृशम्, अशास्त्रविहितजलावगाहादि । **अभिमते**; मनीषिते । **विपर्यस्यतः**; अधरोत्तरं कुर्वतः । **कलेः** कालस्य । **अलेपकाः**; चार्वाकादयः, तन्मते स्पष्टः पदक्रमः यस्य । **प्रक्रमः**; प्रचारः ॥ १८ ॥

धर्मक्रमं दर्शयति—**तरुणेति** । "कृष्णकेशोऽग्नीनादधीत" इति विधिमत्र दर्शयति । **कचेषु** केशेषु **कृष्णवर्णाः** । **दंपतयः**; स्त्रीपुरुषद्वन्द्वानि । अन्योन्योद्देश्यं मदनेन ज्ञातं प्रवर्तितं वा अजस्रमग्निहोत्रं सुरतरूपं भजन्ते ॥ १९ ॥

**एते केचन** कपटसूक्तिप्रचुराम् अनृतप्रचुरां वार्धुषिकवृत्तिं **श्रयन्तः**

(अन्यतोऽवलोक्य) एते चित्रार्पितमुक्तपुरुषसंनिभाः [1]पुराणपठितिमठभित्तिकोणमाश्रित्य जोषमासते। (सूक्ष्मं निर्वर्ण्य विहस्य) अहह, अमी दीर्घतरदर्भपूलपूरिताङ्गुलिविवरेण दक्षिणकरेण नासिकां कबलयन्तः प्राणसंशयेनापि प्राणसंयममभिनयन्ति। (सहस्तास्फालनं विहस्य)[2]

**अपटुभणितिभावाद्बिभ्रतो मौनमुद्रा-**
**मनितरशरणत्वादादृतान्योन्यसंघाः।**
**अगतिविहितभिक्षावृत्तयः केचिदेते**
**चिरविधृततुरंगब्रह्मचर्या महान्तः॥ २१॥**

प्रभाविलासः

**अपटुभणितीति**। **अपटुभणितिः**; असभ्यभाषणम्। **तुरंगब्रह्मचर्यम्**; अलाभे ब्रह्मचर्यम्॥ २१॥

**प्रभावली**

वीथ्यां वीथ्यां शिष्ययोग्यतापरीक्षाविधुरं सर्वे उपाध्यायाः **शुकवत्** अर्थज्ञानविधुरं, ब्रह्म वेदं, मन्त्रादिकं वा। शुद्धवेषा इत्यनेनान्तःशुद्धिराहित्यं द्योत्यते॥ २०॥

**चित्रार्पितः**; चित्रलिखितः पुरुषः, मुक्तश्च, तन्निभाः; निश्चलत्वात्। **पठितिः** पठनं, तदर्थो मठः, तस्य **भित्तिकोणं** भित्त्योः संधिः। **जोषम्**; तूष्णीम्। **दर्भपूलः**; दर्भपुञ्जः। **कबलयन्तः**; पीडयन्तः। प्राणसंशयकरव्यापारेणापि। प्राणसंयमम; प्राणायामम्। **सहस्तास्फालनमिति**; विहस्येति शेषः। पटुवाग्व्यवहाराभावात् मौनमेव मुद्रा, ताम्; मौनभावमित्यर्थः। इतरशरणालाभात्; शरणशब्दः पुरुषपरः; अन्यैरनादृतत्वादित्यर्थः। अन्योन्यमादृतसंघाः। अगत्या विहितभिक्षावृत्तयः। **चिरविधृतं** वडबासङ्गादुपरुद्धः यस्तुरंगः, तस्य ब्रह्मचर्यम् इन्द्रियनिग्रहरूपब्रह्मचर्यं येषाम्। विषयालाभकृतब्रह्मचर्यवन्त इत्यर्थः॥ २१॥

[1] पुराणपठनाय—क.

[2] विहस्येति पाठः प्रभावल्यां नादृतः

(सोपक्रोशं हस्तौ विधून्वन्)

**अनल्पमदपित्तलैरनुपरुद्धमानग्रहै-**

**रजल्परणकर्कशैरपरिमृष्टतर्कक्रमैः ।**

**अतथ्यनियमस्थितैरनतिवृत्तदम्भोद्यमै[1]-**

**रशिक्षितचमत्कृतैरलमसद्भिरेतादृशैः ॥ २२ ॥**

(अन्यतो दृष्टिं प्रसारयन्) अमी [2]पुनरमुष्टिमेययज्ञोपवीत-संछन्नवक्षसः, करतलावलम्बिताक्षमालाः, करचरणनयननासादिषु मन्त्रवर्णान्निरन्तरं न्यस्यन्तः, तीर्थयात्रोत्सुकपथिकसार्थयातायात-पद्धतिपरिसरप्रतिष्ठापितं [3]चेलाजिनकुशोत्तरमासनमधितिष्ठन्ति । हन्तैषां महायोगिनामद्भुतं नैरपेक्ष्यम्; येन स्वयमप्यन्तर्हसन्ति । यतश्च ;

**प्रभाविलासः**

**अनल्पेति । पित्तलाः**; भ्रान्ताः । **जल्पः**; वादः ॥ २२ ॥

**प्रभावली**

**उपक्रोशः**; जुगुप्सा । **अनल्पेति** । अनल्पमदेन **पित्तलैः**; पित्तवद्भिः । अनुपरुद्धगर्वपिशाचैः । जल्पाख्ये रणे अकर्कशैः अप्रौढैः । अज्ञाततत्त्वप्रकारैः अशास्त्रीयनियमस्थितैर्वा । अनतिक्रान्तः दम्भोद्योगो यैः । चमत्कृतं कौशलं, तदशिक्षितं यैः । एतादृशैः असद्भिः अलम् ॥ २२ ॥

मुष्ट्या मातुमशक्यैर्यज्ञोपवीतैः । करगृहीतजपमालैः । **निरन्तरम्**; सर्व-जनदर्शनार्थमिति भावः । **सार्थः**; समूहः । **परिसरः**; समीपम् । **महायोगिना-**

[1] दम्भकर्मैः—क.

[2] पुनर्मुष्टिमेय—क. ख.

[3] कुशाजिनचेलोत्तरं—क.

**[1]दम्भस्येव ध्वजममितया मण्डितं दर्भमुष्ट्या**
**द्राघीयांसं कमपि पुरतः संप्रतिष्ठाप्य दण्डम् ।**
**पादोपान्तप्रणिहितधनान् प्राणिनो भक्तिनम्रान्**
**नावेक्षन्ते कितवमुनयो नामतस्तीर्थपादाः ॥ २३ ॥**

अहह, अमी निरन्तरमान्तरं ध्यानमभिनयन्तः पुरः प्रतिष्ठापितां देवतामपि नोद्वीक्षन्ते । अभ्यर्णमागतानप्याचार्यमातृपितृप्रमुखानर्धनिमीलितेन लोचनेनावलोकयन्तोऽप्यनवलोकनं नाटयन्ति । का कथा प्रणामादीनाम्? एतेषु च,

**शमदमवृत्तसमाधिषु निःस्पृहभावे च नैष्ठिका दम्भाः ।**
**अयुतायुतांशकक्ष्यामदम्भदम्भस्य नार्हन्ति ॥ २४ ॥**

## प्रभाविलासः

**दम्भस्येति । द्राघीयांसम्;** दीर्घतमम् ॥ २३ ॥

**अभ्यर्णम्;** समीपम् । **शमेति ।** सप्तम्यन्तपदान्ते श्रूयमाणो दम्भशब्दः प्रत्येकमन्वेति ॥ २४ ॥

## प्रभावली

**मिति** विपरीतलक्षणा । **येन;** नैरपेक्ष्येण । दम्भस्य ध्वजमिव स्थितम् । अपरिमितया दर्भमुष्ट्या **मण्डितम्;** अग्रतो बद्धमित्यर्थः । **उपान्तः;** समीपम् । **प्रणिहितम्;** न्यस्तम् । **कितवमुनयः;** दम्भसंन्यासिनः । **नामतः;** नाममात्रेण, न वृत्ततः । **तीर्थपादा;** आचार्याः ॥ २३ ॥

**आन्तरम्;** प्रत्यग्विषयम् । **अभ्यर्णम;** समीपम् । **नाटयन्ति;** अनुकुर्वन्ति । आदिशब्देन अभ्युत्थानभाषादयः । **एतेषु च;** दम्भेषु । शमदम्भदमदम्भवृत्तदम्भसमाधिदम्भनैःस्पृह्यदम्भाः शमदमादिषु निष्ठावन्तो दम्भाः । **अदम्भदम्भस्य;** अदम्भभावं नाटयतो दम्भस्य अयुतायुतांशकलां नार्हन्ति ॥ २४ ॥

[1] दम्भस्यैते—घ.

अयं पुनरिह [1]अनुगतधूर्तबकवृत्तीनां[2] त्रैविद्यतपस्विनामग्रगण्यो महातपाः—

**शिक्षाविशेषनिभृताकृतिरूर्ध्वबाहुः**
**प्रक्रीडयन्निव निजां तपसि प्रतिष्ठाम् ।**
**दर्भावृते क्षितितले निहितैकपाद-**
**श्चित्रं सजीवमिव तिष्ठति दाम्भिकेन्द्रः ॥ २५ ॥**

इतश्चायमेतादृशो [3]यायजूकः—

**अलिकचिबुकनासाजानुबाहूदराद्यै-[4]**
**र्विवृतनतिविशेषो मृत्तिकालेपचिह्नैः ।**
**कनकगिरिमिवेच्छन् कश्चिदग्निं[5] समिन्धे**
**मुकुलितनयनार्धो मूर्तिमानेष दम्भः ॥ २६ ॥**

### प्रभाविलासः

**शिक्षेति । प्रतिष्ठा ;** स्थैर्यम् ॥ २५ ॥

**अलिकेति । अलिकम् ;** ललाटम् । **विवृतनतिविशेषः ;** प्रकाशिताष्टाङ्गादिनमस्कारभेदः ॥ २६ ॥

### प्रभावली

अनुपतिता अनुगता धूर्तबकवृत्तिर्यैः । आमहामत्स्यसमीपागमनं परमधार्मिकवद्वर्तमानो धूर्तबकः । **त्रैविद्यतपस्विनाम् ;** त्रयीविद्यानिष्ठानां तपस्विनाम् । **शिक्षेति ।** शिक्षाविशेषेण निश्चलाकृतिः । **प्रक्रीडयन् ;** प्रकाशयन् । **चित्रम् ;** आलेख्यम् ॥ २५ ॥

**इतश्च ;** अन्यत इत्यर्थः । **अलिकेति । अलिकम् ;** ललाटम् । **चिबुकम् ;**

[1] अनुपतितेति प्रभावलीपाठः ।
[2] धूर्तबकाचाराणम्—क.
[3] याज्ञिकः—क.
[4] बाहुजङ्घोदराद्यैः—क.
[5] अग्नीन्—ख. ग.

(परिवृत्यावलोक्य) अहो नु खलु काषायदण्डमात्रशरणानां[1] कलियुगसंन्यासिनां नैरपेक्ष्यम्[2]—

**भिक्षेति शिष्यजन[3]रक्षणदक्षिणेति**
**शाटीति शाश्वतमठोपधिकल्पनेति ।**
**ग्रन्थोपसंग्रहणमूल्यमिति ब्रुवाणाः**
**संन्यासिनोऽपि दधते सततं धनायाम् ॥ २७ ॥**

(सहर्षम्) नूनमीदृशपुरुषावष्टब्धे जीवलोके सिद्धप्रायं समीहितं महामोहस्य । अथाप्येतदिह सितासितनदीसंभेदो[4] विवेकस्थानमिव किंचिदाभाति । यदुत,

### प्रभाविलासः

**कलियुगसंन्यासिनामिति** । "तपस्विनो ग्रामवासा न्यासिनोऽर्थाभिलाषिणः" इति वचनं स्मारितम् । **भिक्षेति** । **शाटी**; वस्त्रम् ॥ २७ ॥

### प्रभावली

श्मश्रुस्थानम । **मृत्तिकालेपचिह्नैः विवृतः**; प्रकाशितः । **कनकगिरिम्**; महामेरुम् । **इच्छन्निव समिन्धे**; परिचरति ॥ २६ ॥

**नैरपेक्ष्यम्**; निःस्पृहत्वम् । **भिक्षेति** । **भिक्षा** कर्तव्या संपाद्या । शिष्यजनानां स्वसेवने दक्षिणा दातव्या । **शाटी** वस्त्रं संपाद्या । मठस्य शाश्वत **उपधिः** उपाधिः क्षेत्रादिः, तस्य कल्पना संपादना कर्तव्या । **ग्रन्थानां** पुस्तकानामुपसंग्रहाय मूल्यं संपाद्यम् । **इति ब्रुवाणाः**; एवं व्याजं ब्रुवाणाः । **संन्यासिनः**; सर्वसङ्गपरित्यागिनः । **धनायां** धनेच्छां **दधते** । **सततम्**; प्रतिदिनम् ॥ २७ ॥

महामोहसमीहितसिद्ध्या हर्षः । **ईदृशाः**; पूर्वोक्ताः । **अवष्टब्धे**; आक्रान्ते । **सिद्धप्रायम्**; सिद्धकल्पम् । **अथापि एतदिति**; स्थानापेक्षया

[1] धारिणाम्—क.
[2] अर्थार्जनोपायः—घ.
[3] जीवन—ग. सेवन—घ.
[4] भेदेऽपश्चिमं—क.

आचारोदधिसैकतप्रतिनिधिर्मृत्पिण्डकूटः क्वचित्
पापच्छेदनशस्त्रजालपरुषः कुत्रापि दर्भोत्करः ।
पूजाशेषितपुष्पपल्लवफलस्तोमः स्फुरत्यन्यतो[1]
मन्ये कस्यचिदेतदाश्रमपदं मान्यं महायोगिनः ॥ २८ ॥

अत्र च,

विरुद्धमतिकर्दमं विषयवृत्तिविन्ध्याटवीं
त्रिवर्गमृगतृष्णिकां त्रिगुणवागुरायन्त्रणाम् ।
निवर्त्य नियमक्रमैः स्फुरति मुक्तवत्कोऽप्यसा-
वपत्यमथवाग्रजः सवितुरेष तातोऽपि वा ॥ २९ ॥

### प्रभाविलासः

**आचारेति । कूटः**; समूहः ॥ २८ ॥

**विरुद्धेति । नियमक्रमैः**; योगाभ्यासपर्वभिः । **अपत्यम्**; मनुः । **तातः**; काश्यपः ॥ २९ ॥

### प्रभावली

नपुंसकनिर्देशः । **संभेदः**; सिन्ध्वोः समागमः । विवेकास्पदम् । **यदुत** एवं दृश्यते, एतत् कस्यचिदाश्रमपदं मन्य इत्यन्वयः । **आचारेत्यादि । क्वचित् आचाररूपोदधेः सैकतस्य** सिकतासमूहस्य **प्रतिनिधिः** सदृशः **मृत्पिण्डानां कूटः** राशिः **स्फुरति** । कुत्राप्यन्यत्र पापतरुच्छेदने यच्छस्त्रजालं तद्वत् क्रूरः दर्भसमूहः । **अन्यतः** पूजानन्तरं **शेषितः** परित्यक्तः पुष्पपल्लवसमूहः **स्फुरति** । एतत् **कस्यचिन्महायोगिनः** आश्रमस्थानं **मन्ये** ॥ २८ ॥

**विरुद्धेत्यादि । विरुद्धमतिः**; वेदविरुद्धज्ञानम्, सैव **कर्दमः** पङ्कः, तम् । **विषयेषु** शब्दादिषु या **वृत्तिः**, सैव **विन्ध्याटवी**, ताम् । **त्रिवर्ग** एव **मृगतृष्णिका**, ताम् । त्रिगुणाख्यजालबन्धनम् । एतत्सर्वं **निवर्त्य** परिहृत्य ।

[1] स्तोमाः स्फुरन्त्यन्यतः—ख, ग.

उपसर्पामि [1]तावदेनम् । (इत्याश्रममासीदति । निमित्तं सूचयन् सहर्षम्) नूनमिह मे प्रियासमागममत्यासन्नमभिव्यनक्ति दर्शितस्पन्दलास्यं दक्षिणं चक्षुः ।

(ततः प्रविशति [2]प्रव्राजिकावेषधारिण्यसूया)

असूया—अहं हि [3]विवेकपरिपन्थिचूडामणेर्महाराजस्य महामोहस्य देव्या दुर्मत्या विश्वजनहृदयविस्रम्भकवेषपरिग्रहेण विदुषां चित्तमुपप्लावयितुमादिष्टा परिक्रान्तचतुर्दशभुवना प्रयागतीर्थमवगाह्य [4]प्रत्यागतास्मि भगवतो धर्मध्वजस्य कुलपतेराश्रमम् । निपुणमिहापि गुणवद्विषये[5] दोषानुद्घाटयितुं[6] चारतन्त्रं तन्त्रयितव्यम् । (स्वसामर्थ्यं बहुमत्य)

**मयि दत्तावधानायां विश्वदोषापहारिणा ।**
**न शक्यमीश्वरेणापि निरवद्येन वर्तितुम् ॥ ३० ॥**

**प्रभावली**

अत्र **कोऽप्यसौ नियमक्रमैः** व्रतपरंपराभिः **मुक्तवत् स्फुरति** । दम्भं दृष्ट्वा एवं भ्राम्यति गर्वः । एषः दृश्यमानः **सवितुः अपत्यम्** । अथवा **अग्रजः** । अपि वा **तातो** भवितुमर्हतीति भावः ॥ २९ ॥

सम्यङ्निमित्तदर्शनात् हर्षः । **प्रिया**; भार्या । **अत्यासन्नम्**; शीघ्रभाविनम् । **अभिव्यनक्ति**; प्रकाशयति । **दर्शितं स्पन्दमेव लास्यं** येन तत्; स्पन्दमानं चक्षुरित्यर्थः । **प्रव्राजिका**; संन्यासिनी । असूया स्वागमनकार्याणि वदति—**अहं हीति** । **परिपन्थिनः**; शत्रवः, तेषां चूडामणेः । सर्वजनविश्वास्यवेषपरिग्रहेण **उपप्लावयितुम्** उपक्रोशयितुम् **आज्ञप्ता** । **परिक्रान्तम्**;

[1] तावदेनमाश्रमवासिनम्—क.
[2] प्रव्रजिता—क.
[3] विवेकवित्रासनचरितस्य महामोहस्य—क.
[4] प्रतिगतास्मि—ख. ङ.
[5] सतोऽसतो वा added after—क.
[6] उद्भावयितुं—ङ.

निरङ्कुशाः खलु मत्परिगृहीताः पुरुषाः । नित्यमविद्यमानमपि दोषं विद्यमानमिवापादयन्ति । किमुत विद्यमानम् ? तथाहि—

**निरवधिगुणग्रामे रामे निरागसि वागसि-**
**स्फुरणमुषितालोका लोका वदन्ति सदन्तिके ।**
**वरतनुहतिं वालिद्रोहं मनागपसर्पणं**
**परिमितगुणे स्पष्टावद्ये मुधा किमुदासते ॥ ३१ ॥**

प्रभाविलासः

**निरवधीति** । निरवधीनां गुणानां कल्याणगुणानां ग्रामः समूहो यस्मिन् तस्मिन्, "बहवो नृप कल्याणगुणाः पुत्रस्य सन्ति ते" इत्युक्तत्वात् । **रामे;** योगिध्येये, "रमन्ते योगिनो यत्र" इत्युक्तत्वात् । **निरागसि;** निर्दोषे । वागेवासिः खड्गः, तस्य स्फुरणेन मुषितः आलोकः ज्ञानं येषां ते । **वरतनुहतिम्;** स्त्रीहननं ताटकावधम् । **मनागपसर्पणमिति;** "अपासर्पत वेगेन किंचित् त्वरितविक्रमः" इति स्मारितम् । **उदासते;** उपेक्षन्ते । अत्र रूपाख्यं गर्भसंधेस्तृतीयमङ्गमुक्तम् "रूपं वाक्यं वितर्कवत्" इति लक्षणात् ॥ ३१ ॥

प्रभावली

परिभ्रमितम् । **प्रतिगतास्मि;** आगतास्मि । **कुलपतेः;** कूटस्थस्य । **गुणवद्विषये दोषान्** सूचयितुम् । **निपुणं** यथा तथा चारानुष्ठानमनुष्ठातव्यम् । चाराः परैरज्ञाता एव स्वकार्यमनुतिष्ठन्ति; तद्वन्मयापि मत्स्वरूपसिद्ध्यर्थं परस्पर-प्रद्वेषादिकमुत्पादयितव्यमित्यर्थः । **मयीति** । मयि अवधानवत्यां सत्याम्, विश्व-**दोषापहारिणा** ब्रह्मणापि **निरवद्यत्वेन वर्तितुं नालम्** । सावधानाहं तत्रापि दोषं कल्पयितुं समर्थेत्यर्थः ॥ ३० ॥

**मत्परिगृहीताः;** असूयाविष्टाः । **निरवधीत्यादि** । **वागेवासिः**, तस्य **स्फुरणेन** मुषितज्ञानाः सन्तः । विद्युत्स्फुरणेन नष्टदृष्टयो भवन्ति जनाः । **निरवधिः गुणग्रामो** यस्मिन् । **गुणग्रामः;** गुणसमूहः । **निरागसि;** निरवद्ये ।

(परिक्रम्य) क एते प्रत्यासन्नसुरसरिदनूपनीपवनमहीतल-निहितयोगासनाः स्थिरतरपर्यङ्कबन्धबन्धुरनिभृततर[1]ऋजुकाया मुण्डजटिलशिखाजटा मुनयः? (निर्वर्ण्य) हन्त विदितमेतत्। (सान्तर्हासम्)

**स्तनभरनतमन्तर्ब्रह्म संचिन्तयन्तः**
**पुलकितनिभृताङ्गाः[2] पुष्पबाणागमस्थाः।**
**विजितकरणवर्गा विश्रुतात्मान एते**
**मुषितनिखिलधर्मा मुक्तभावं भजन्ते ॥ ३२ ॥**

**प्रभाविलासः**

**स्तनभरेति।** एकत्र सात्त्विकोदयेन, अपरत्र भक्त्यतिशयेन च **पुलकितेत्युक्तिः,**

"स्मरन्तः स्मारयन्तश्च मिथोऽघौघहरं हरिम्।
भक्त्या संजातया मर्त्या बिभ्रत्युत्पुलकां तनुम् ॥"

इति स्मरणात्। **विजितकरणवर्गाः;** विजितेन्द्रियवर्गाः, इन्द्रियवर्गविजिताश्च। **विश्रुतात्मानः;** सम्यक् श्रुतब्रह्माणः, वैशिकतया प्रसिद्धस्वरूपाश्च। **मुषितनिखिलधर्माः;** एकत्र ज्ञाननिष्पत्त्या, अन्यत्र नास्तिक्येन ॥ ३२ ॥

**प्रभावली**

आभ्यां विशेषणाभ्यामुभयलिङ्गत्वमुक्तम्। **वरतनुहतिम्;** ताटकावधम्। **वालिद्रोहम्;** अनभिमुखस्य हननम्। खरसमरे मनागीषदपसरणमित्येतानि दोषतया वदन्ति। कुत्र? **सतामन्तिके;** सतां गोष्ठीषु निर्भया वदन्ति। एवं सति अल्पगुणे स्फुटबहुदोषे पुरुषे असूयालवो मुधा व्यर्थं किमुदासते? तूष्णीं न तिष्ठन्तीत्यर्थः ॥ ३१ ॥

**सुरसरित्;** गङ्गा। **अनूपः;** कच्छप्रदेशः। तत्र **नीपवनम्;** कदम्ब-

[1] निभृतोन्नत—ग.    [2] निखिलाङ्गाः—क.

नामतश्चैतान्निर्दिशामि—

**श्रद्धायाजी षड्रसब्रह्मवादी कामैकान्ती काकिणीनिष्कदासः ।**
**मार्जाराणां कुक्कुटानां बकानां छात्रा एते सिद्धचार्वाकतन्त्राः॥३३॥**

**प्रभाविलासः**

**श्रद्धायाजीति** । श्रद्धयैव यजतीति, श्रद्धया न यजतीति वा श्रद्धामात्राभिनयेन यागशीलः, न तु दक्षिणाभोजनादिनेति । षड् रसाः मधुरादयः, त एव ब्रह्मेति वादी; भक्ष्याभक्ष्यविवेकमन्तरेण केवलकदर्य इत्यर्थः । कामे एव एकोऽन्तो निष्ठा यस्येति कामैकान्ती । **काकिणीनिष्कस्य** सुवर्णकणस्य दासः; तदर्थं नीचसेवामप्यनुमन्यमान इत्यर्थः । काकिणीमात्राभिलाषेण कृत्याकृत्यशून्यतयात्यन्तनीचतां प्राप्त इति वार्थः । तदुक्तम्—

"कलौ काकिणिकेऽप्यर्थे विगृह्य त्यक्तसौहृदाः ।
त्यक्ष्यन्ति हि प्रियान् प्राणान् हनिष्यन्ति स्वकानपि ॥"

इति । **मार्जाराणामिति;** बैडालव्रतिका उच्यन्ते । तल्लक्षणं तु—

"धर्मध्वजी सदा लुब्धश्छाद्मिको लोकदाम्भिकः ।
बैडालव्रतिको ज्ञेयो हिंस्रः सर्वातिसंधिकः ॥
यस्य धर्मध्वजो नित्यं स्वाराड्ध्वज इवोच्छ्रितः ।
चरितानि च पापानि बैडालोऽसौ प्रकीर्तितः ॥"

**प्रभावली**

वनम् । **पर्यङ्कबन्धः**; योगपट्टबन्धः । **बन्धुरम्**; उन्नतानतम । **निभृततरम्**; निश्चलतरम । केचन मुण्डाः, केचिज्जटिलाः; केचन शिखामात्रजटाः । **निर्वर्णनम्**; सूक्ष्मदर्शनम । **हन्तेति** संतोषे । वेदनात् संतोषः । **स्तनभरेति** । **पुष्पबाणागमस्थाः**; कामतन्त्रनिष्ठाः । **विजितकरणवर्गाः**; करणवर्गैः विजिता इत्यर्थः । **स्तनभरनतं ब्रह्म**; योषिद्रूपम । **अन्तः**; मनसि । **संचिन्तयन्तः पुलकितनिश्चलाङ्गाः विश्रुतात्मानः** महायोगिन इति प्रसिद्धाः **नष्टसकलवैदिकधर्माः** मुक्तत्वं नाटयन्ति संध्यावन्दनाकरणादौ, न तु खण्डलड्डुकादनवेलायाम् ॥३२॥

नाम्ना चैतान् कथयामि । **श्रद्धेत्यादि** । अयं कश्चित् **श्रद्धायाजी;**

स्वस्ति चैतादृशां स्वोपकारमात्रसंरम्भाय । दृश्यते हि—

**नवदलपुटे कल्प्या यस्य प्रभोरपि तल्पधी-**
**र्नटपरिबृढो यस्याधस्ताच्छ्रमं शमयिष्यते[1] ।**
**वटविटपिनस्तस्याङ्कूराननुत्कटपल्लवान्**
**स्थपुट[2]पुटसापेक्षो भिक्षुः प्रतिक्षणमीक्षते ॥ ३४ ॥**

प्रभाविलासः

इति । कुक्कुटव्रतिलक्षणं च—

"सभागतानां यः सभ्यः पक्षपातं समाश्रयेत ।
तमाहुः कौक्कुटं देवास्तस्याप्यन्नं विवर्जयेत ॥"

इति । **बकानामिति;** तल्लक्षणं तु—

"अर्वाग्दृष्टिर्नैकृतिकः स्वार्थसाधनतत्परः ।
शठो मिथ्याविनीतश्च बकवृत्तिरुदाहृतः ॥ ३३ ॥"

इति । **नवदलेति । प्रभोः**; नारायणस्य । **नटपरिबृढः ;** शिवः । **स्थपुट-पुटसापेक्षः ;** विस्तीर्णपत्रभाजनापेक्षः ॥ ३४ ॥

**प्रभावली**

स्वस्मिन् परेषां श्रद्धाजननार्थं यज्ञशीलः । अयं **षड्रसब्रह्मवादी ;** षड्रससिद्ध्यर्थं ब्रह्मवादी । यद्वा षड्रसा एव ब्रह्मेति वादी । **कामैकान्ती ;** कामपुरुषार्थैकप्रवणः । **काकिणी ;** सुवर्णसूक्ष्मकणः, स एव **निष्कः**, तस्य दासः । एते सर्वे **सिद्धचार्वाक-तन्त्राः ;** परिगृहीतचार्वाकग्रन्थाः । केचित् **मार्जाराणां छात्राः ;** कुत्रचिन्निश्चलं स्थित्वा समीपागतवस्तुग्रहणात् । केचित् **कुक्कुटानां छात्राः ;** प्रसह्य ग्रहणात् । केचित् **बकानां शिष्याः ;** स्वस्मिन् धार्मिक इति विश्वासोपजननेन परद्रव्यापहारात् ॥ ३३ ॥

**स्वोपकारमात्रसंरम्भाय ;** स्वार्थमात्रपरत्वाय **संरम्भः ;** उद्योगः ।

1 व्यपनेष्यते—ख ; शमयिष्यति—ग. 2 चषसापेक्षी—घ. छ ; चटसापेक्षीति प्रायिकः पाठः । चटसं पानपात्रमिति च केचित् व्याख्यातारः । तथापि चटसशब्दस्य तदर्थत्वे कोशो मृग्य इति कृत्वा पुटसापेक्ष इति प्रभाविलासपाठ आदृतः । यदि तथाविधः कोश उपलभ्येत, तदा सोऽपि पाठ आदरणीयः.

(आकाशे कर्णं दत्वा) किं ब्रूथ भिक्षवः ? प्रव्रज्यापरिग्रहः परपरिवदनं चेति विप्रतिषिद्धमिति । [1]ही ही निगृहीता एव नूनं यूयं स्ववचनविरोधेन । प्रव्रजिताः खलु भवन्तोऽपि स्वगृहेभ्यः परिवदन्ति च मामिति । (अन्यतोऽवलोक्य) अयमपरः कश्चिदिह रौक्मकुण्डलदण्डकमण्डलुमण्डितः, कटितटनिबिडनिगुम्भितदर्भरज्जुः, अष्टकाभोजननिरन्तराध्मातकुक्षिः, अनवरतविरचितहुंकारभर्त्सितपुरोवर्तिजनः, इतस्ततो दत्तदृष्टिः, तृणीकृतजगत्त्रयः, त्रैविष्टपैरपि दुष्प्रवेशं धर्मध्वजस्य कुलपतेराश्रममुपजिगमिषति । इमं तावदाश्रमद्वारोपरोधेन तस्थुषी विशेषतो विविदिषामि ।

## प्रभावली

**दृश्यते हि**; स्वार्थैकपरत्वम् । **नवेत्यादि** । **यस्य** वटस्य **नवदलपुटे प्रभोः** विष्णोरपि **तल्पधीः** शय्याबुद्धिः कार्या भवति । **नटपरिबृढः** रुद्रः दक्षिणामूर्तिः **यस्य** तरोर्मूले **श्रमं** नृत्तश्रान्तिं शमयिष्यते । **तस्य** ; वटवृक्षस्य । **अनुत्कटपल्लवान्** ; अनुत्कटाः पल्लवा येषां तान् । **अङ्कुरान्** ; मुकुलान् । **भिक्षुः** ; संन्यासी । **स्थपुटचटसापेक्षी** ; **स्थपुटः** सान्द्रः **चटसः** चषकः पानपात्रं, तदपेक्षी । ब्रह्मरुद्रादिपरिग्राह्ये वटे गौरवबुद्धिं विहाय स्वभोजनैकापेक्षी सन् क्षणे क्षणे पश्यति ॥ ३४ ॥

**आकाशे** ; काचिद्वागभूदिति शेषः । असूया श्रुत्वा आह—**किं ब्रूथ भिक्षव इति** । भिक्षवो वदन्ति—भो परिव्राजिके, **प्रव्रज्यापरिग्रहः परपरिवदनं** परनिन्दा चेतीदं **विप्रतिषिद्धम्** अन्योन्यविरुद्धमिति । तच्छ्रुत्वा परिव्राजिकाह—**ही हीति** । हीति विस्मये । हे भिक्षवः, **यूयं** जातिवादिन इव **स्ववचनेनैव निगृहीताः** । स्ववचनविरोधं दर्शयति—**प्रव्रजिताः खल्विति** । **भवन्तोऽपि स्वगृहेभ्यः प्रव्रजिताः, मां परिवदन्ति च** । असूया दर्पं वर्णयति—**अयमपर इति** । **निबिडं** यथा तथा **निगुम्भितः** बद्धः । **श्राद्धभोजनेन** निर्विवरपरिपूर्णकुक्षिः । **त्रैविष्टपैः** ; देवैः । **आश्रमद्वारोपरोधेन** ; आश्रमद्वार-

[1] इहहि—ग.

**दर्पः**—(उपसृत्य प्रश्रयमभिनयन्) भगवति, भारतकथा-प्रसिद्धवैभवा [1]प्रव्रजिताश्रमाधिदेवताकल्पा प्रत्यायितयोगसिद्धिः सुलभेव[2] संदृश्यसे। तदहमिह ग्रामकुलगोत्रादिभिर्विशेषतस्त्वां विजिज्ञासे।

**असूया**—भद्र, अन्तिमाश्रमप्रविष्टैरवक्तव्यमेव पृच्छसि। अप्रणम्य तु मां कथं यूपवत्तिष्ठसि?

**दर्पः**—वयःकर्मविद्यादिभिरधिकोऽहम। आश्रमाधिका तु भवती। इह तु नन्तृनन्तव्यभावे संदिहानस्तिष्ठामि।

**असूया**—अथ तर्ह्यस्मिन्नाश्रमे योऽसौ कुलपतिरशेषधर्मविदास्ते, तमेव धर्मसंकटं पृच्छामः।

**दर्पः**—यदभिमतं भवत्याः। तदभ्युपगच्छामि। तिष्ठत्वयं विमर्शः। किंतु किंचिदन्तर्वर्तते—

**भवतीं संनिवेशेन भाववीक्षितचेष्टितैः।**
**अनुभूतचरीं मन्ये वेषस्तु विषमस्तव॥ ३५॥**

### प्रभाविलासः

**अवक्तव्यमिति**; "एकान्ती व्यपदेष्टव्यो नैव ग्रामकुलादिभिः" इति वचनं स्मारितम्। **भवतीमिति। संनिवेशेन**; आकृतिविशेषेण॥३५॥

### प्रभावली

मुपरुध्येत्यर्थः। **प्रश्रयम्**; विनयम्। **प्रव्राजकानाम्** आश्रमाधिदेवतासदृशी प्रख्याप्यमानयोगसिद्धिः। **विजिज्ञासे**; ज्ञातुमिच्छामि। **अप्रणम्येत्यादि** स्पष्टम्। **अन्तः**; मनसि। **संनिवेशेन**; आकारेण। पूर्वं मया अनुभूतां मन्ये। **वेषस्तु विषमः**; इदानीमन्यो भवति॥ ३५॥

[1] प्रव्राजकाश्रमेति प्रभावलीपाठः—ख.

[2] सुलभोपाख्यानं महाभारते शान्तिपर्वणि ३२५ अध्याये द्रष्टव्यम्.

**असूया**—अहमपि दृष्टपूर्वमिव भवन्तं भावयामि । तिष्ठ-त्वयं विमर्शः । परमहंसपरिव्राजकैरपि महानुभावैर्वृत्तवृद्धेति क्रिया-समभिहारेण वन्दितपदां महाभागां मामप्रणम्य दीपदण्डवत्तिष्ठतः पाण्डरपटस्य ते प्रायश्चित्तं ब्राह्मणेन विधापयितुं तव च शुद्धि-मापादयितुमिच्छामि ।

**दर्पः**—(स्वगतम् ) परिगृहीतान्त्याश्रमा प्रगल्भमिव[1] किं प्रजल्पति ? (प्रकाशम् , सविचिकित्सम् ) अस्तु तर्ह्यसावाश्रमस्वामी प्रष्टव्यः ।

(इत्युभावुपसर्पतः)

**दम्भः**—(उभौ दृष्ट्वा मौनव्रतमभिनीय पत्नीं चेष्टया चोदयति)

**कुहना**—(ससंभ्रममुपसृत्य) भद्द बह्मण, भअवइ संणा-सिणि, तुह्मेहिं अम्हघरवइसआसादो दूरे ठादव्वं । [2]दीहमग्गा-

प्रभाविलासः

**क्रियासमभिहारेण**; पौनःपुन्येन । **दूरे प्रणमन्तीति**; दूरपरि-

प्रभावली

**दृष्टपूर्वमिव**; पूर्वं दृष्टमिव । **वृत्तवृद्धेति** हेतोः । **क्रियासमभिहारेण**; पौनःपुन्येन । **पाण्डरपटस्य**; गृहस्थस्य । **प्रायश्चित्तमिति**; भिक्ष्वप्रणामे प्रत्यवायस्मरणादिति भावः । **ब्राह्मणेन**; कुलपतिना । परिगृहीतसंन्यासाश्रमा **प्रगल्भमिव**; धृष्टमिव । **सविचिकित्सम्**; ससंशयम् । **चेष्टया**; अङ्गुलि-कम्पनेन । **अपूर्वदंपत्योः**; अकारपूर्वदंपत्योः, अदंपत्योरिति हृदयम् ।

भद्द भद्र । बम्हण ब्राह्मण । भअवइ भगवति । संणासिणि-संन्यासिनि । तुम्हेहिं-युवाभ्याम् । अम्हघरवइसआसादो-अस्मद्गृहपतिसकाशात् । दूरे ठादव्वं-

[1] प्रगल्भेव—ग.   [2] दिह—क. छ.

गमणदूसिआणं तुम्हाणं अकिअमज्जणाणं अच्चासत्ती दूरपरिहर-णिज्जा । मंतसिद्धिपरिपंथिणी [1]अ तुम्हाणं छाआ महाजोइविग्गहे मा होज्ज । णं खु महप्पाणो वि मुणिअणा दूरे पणमंति । तेहिं वि उवणीअं भाईरहीसलिलं ण काहे वि [2]घरसामिहत्थेण घेप्पइ[3] ।

(भद्र ब्राह्मण, भगवति संन्यासिनि, युवाभ्यामस्मद्गृहपति-सकाशात् दूरे स्थातव्यम् । दीर्घमार्गागमनदूषितयोर्युवयोरकृत-मज्जनयोरत्यासत्तिर्दूरपरिहरणीया । मन्त्रसिद्धिपरिपन्थिनी च युव-योश्छाया महायोगिविग्रहे मा भूयात् । एनं खलु महात्मानोऽपि मुनिजना दूरे प्रणमन्ति । तैरप्युपनीतं भागीरथीसलिलं न कदापि गृहस्वामिहस्तेन गृह्यते ।)

दर्पः—(सोपालम्भम् ) अतिमहानयमपूर्वदम्पत्योर्युवयोर्धर्म-नियमः । अपिच वयमाप्लुता गङ्गायमुनासंगमे पुण्यतमैश्च मन्त्रैः

**प्रभाविलासः**

हारो व्यज्यते । **अपूर्वदंपत्योरिति**; अवर्णपूर्वदंपत्योरिति व्यज्यते ।

**प्रभावली**

दूरे स्थातव्यम् । दीहमग्गागमणदूसिआणं-दीर्घमार्गागमनदूषितयोः । तुम्हाणं-युव-योः । अकिअमज्जणाणं-अकृतमज्जनयोः । अच्चासत्ती-अत्यासत्तिः । दूरपरिहरणिज्जा-दूरपरिहरणीया । मंतसिद्धिपरिपंथिणी अ-मन्त्रसिद्धिपरिपन्थिनी च । तुम्हाणं-युव-योः । छाआ-छाया । महाजोइविग्गहे मा होज्ज-महायोगिविग्रहे मा भूत् । एणं खु-एनं खलु । महप्पाणो-महात्मानः । मुणिजणा-मुनिजनाः । दूरे पणमंति-दूरे प्रणमन्ति । **तेहिं** वि-तैरपि । उवणीअं-उपनीतम् । भाईरहीसलिलं-भागीरथीसलिलम् । ण काहे वि-न कदापि । घरसामिहत्थेण-गृहस्वामिहस्तेन । घेप्पइ-गृह्यते । **अपूर्वदंपत्योः**; अकारपूर्वदंपत्योः, अदंपत्योरिति हृदयम् । लोकविलक्षण-

[1] खु—क. घ. [2] अम्हघरसामिहत्थेण—घ. [3] गण्हीअदि—क.

पुनः पुनः प्रोक्षिताः। आदित्यवत्तेजास्विनां स्वयंप्रकाशविग्रहाणामस्माकं छायापि किं त्वयोपलभ्यते? लभ्यते तु परं निरयपातः। [1]अहह, सर्वलोकसंभावितं सर्वाधिकं मामतिथिमिमां च परमहंसपरिव्राजिकामन्योन्यनन्तृनन्तव्यभावसंशयनिर्मोचनाय [2]समधिगतावनादृत्य नूनमसौ ते पतिराश्रमापस्मारो मौनव्यपदेशेन[3]स्वमौढ्यमेव प्रच्छादयति।

**दम्भः**—(सभ्रूक्षेपं हुंकरोति)

**कुहना**—(सरभसमुपसृत्य करतलेन मुखं पिधाय) महप्पहाव धम्मद्धअ, वाआणिअमं जोग्गेण कम्मणा मोत्तूण जोग्गाणं अइहीणं जोग्गं पडिवअणं दाअव्वं।

(महाप्रभाव धर्मध्वज, वाङ्नियमं योग्येन कर्मणा मुक्त्वा योग्ययोरतिथ्योर्योग्यं प्रतिवचनं दातव्यम्।)

**दम्भः**—(प्राणसंयममभिनीय प्रणवमुद्घोष्य स्वगतम्) अकामोपनतमिदमसंभाष्यसंभाषणम्। (प्रकाशम्) रेरे व्रात्यब्राह्मण

## प्रभावली

दंपत्योः। धर्मे नियमः। **आप्लुताः**; स्नाताः। **उपलभ्यते**; दृश्यते। **लभ्यते**; प्राप्यते। **परम्**; केवलम्। **संभावितम्**; पूजितम्। परमहंसाश्रमे परिव्राजिकाम्। **निर्मोचनम्**; निर्णयः। **समधिगतौ**; प्राप्तौ। आश्रमस्थापस्मारः। **व्यपदेशः**; व्याजः। कोपात् सभ्रूक्षेपम्। **सरभसम्**; शीघ्रम्। **मुखम्**; स्वमुखम्। **महप्पहाव धम्मद्धअ**-महाप्रभाव धर्मध्वज। **वाआणिअमं**-वाङ्नियमम्। **जोग्गेण**-योग्येन। **कम्मणा**-कर्मणा; प्रणवजपेनेति भावः। **मोत्तूण**-मुक्त्वा। **जोग्गाणं** योग्ययोः। **अइहीणं**-अतिथ्योः। **जोग्गं**-योग्यम्। **पडिवअणं**-प्रतिवचनम्। **दाअव्वं**-दातव्यम्। **प्राणसंयमम्**; प्राणायामम्। **अकामोपनतम्**; अनिच्छया प्राप्तम्। **व्रात्यः**; संस्कारहीनः। **न शप्यसे**;

[1] हन्त हन्त—क. [2] समागतौ—क. ख. [3] व्याजेन—छ.

मूढजनमूर्धाभिषिक्त, स्वमौढ्यप्रच्छादकं मां प्रख्यापयसि । दिष्ट्या खलु मया तपःसंक्षयभीरुणा नैतावन्तं कालं शप्यसे । शप्ताः खलु मया कति कति भस्मसात्समपद्यन्त । अविदितपूर्व दुराचार, दूरं गच्छ । मा ते भून्मम दृष्टितेजसा भस्मीभावः ।

दर्पः—(सक्रोधम्) रे रे, मूढ द्विजातिरिति जातिं बहुमन्यमानेन मया पादेन शिरसि न ताड्यसे । अपिच,

**तुण्डीरं मण्डलं मे कुलपतिरपि च स्कन्दभूपालवन्द्यः**
**क्षेत्रं [1]सत्यव्रताख्यं [2]क्षितितलतिलकं क्षुद्रकाञ्च्यग्रहारः ।**
**प्रख्यातः शिष्यभूम्ना दिशि दिशि भवता कूपकूर्मोपमेन**
**स्थाता वादाहवेषु स्थविर कथमहं न श्रुतो नापि दृष्टः ॥ ३६ ॥**

### प्रभाविलासः

**तुण्डीरमिति** । **स्कन्दभूपालः**; शूद्रप्रभुः कश्चित् । **क्षुद्रकाञ्चीति**; बृहत्काञ्ची लक्ष्यते ॥ ३६ ॥

### प्रभावली

न शप्तोऽसि । **भस्मसात्**; भस्मभावम् । **समपद्यन्त**; प्राप्ताः । पूर्वमविदित; अविदितत्वादेव मयोदासितमिति भावः । **तेजसा**; वह्निना । **ब्राह्मणजातिं बहु मन्यमानेन**; न त्वामिति भावः । **तुण्डीरमिति** । तुण्डीरमण्डले गर्व उत्पन्न इति द्योत्यते । **कुलपतिः**; कूटस्थः । स्कन्दभूपालस्य गुरुः । **सत्यव्रतेति**; तत्रापि सत्यव्रतक्षेत्रसमीपे गर्वोऽधिक इति भावः । **क्षुद्रकाञ्च्यभिधानोऽग्रहारः**; मम ग्रामः । शिष्यबाहुल्यात् दिशि दिशि प्रख्यातोऽहम् । **वादाहवेषु स्थाताहम्** । भो **स्थविर**; वृथापलितशिरस्क । **कूपकूर्मोपमेन**; स कूप एव स्थितोऽन्यत्र गन्तुमशक्तः; तद्वत् त्वमपीति भावः । **कथं न श्रुतः, नापि दृष्टः**; तत्र कारणं न जान इति भावः ॥ ३६ ॥

[1] सत्यव्रतं तत्—ख. [2] क्षितितिलकनिभं—क, ख.

(विहस्य) अहो [1]महादाम्भिक, अविदितमदीयाचारः[2] किमिति दुराचार [3]इत्युपक्रोशसि। अथवा कः खल्वयं मया विना मत्प्रभावाभिज्ञः? यस्य मे महायोगिनोऽपि अभिजनविद्यावृत्तेषु षोडशीमपि कलां नार्हन्ति। किमुत पृथग्जनाः? अत एव हि श्रोत्रियानपि त्रिवर्षपूर्वान्न नमस्करोमि। किं न वेत्थ मामकं धर्मप्रवर्तनाभिसंधिम्?

रथ्यावादविशङ्क्यमानजरठासंबन्धिसंभाषणात्
त्यक्ता हन्त पतिव्रता गुणनिधिः सत्रासमम्बा मया।
विद्यातश्च विवाहतश्च [4]विदिताद्याचारतश्च क्षितौ[5]
कूटस्थाभ्यधिकस्य मे [6]किमधिकः को वा समः [7]कथ्यते ॥३७॥

प्रभाविलासः

**विहस्येति**। विहसितं हासविशेषः,

"स्थूलः कर्णकटुध्वानो बाष्पपूराप्लुतेक्षणः।
करोपगूढपार्श्वश्च हासो विहसितं मतम्॥"

इत्युक्तत्वात्। **रथ्येति**। रथ्यावादेन व्यभिचारारोपेण विशङ्क्यमाना काचित् जरठा वृद्धा, तत्संबन्धिन्यन्या, तया सह संभाषणात्॥ ३७॥

प्रभावली

**उपक्रोशसि**; जुगुप्ससे। त्वयि दोषो नास्तीति पक्षान्तरमवलम्बते— **अथवेति**। **कः खल्वयम्**; स को वेत्यर्थः। **षोडशीम्**; षोडशधा विभक्तस्यैकां कलामपि। त्रिवर्षेण पूर्वाः, तान्। **किं न वेत्थ**; न जानासि खल्वित्यर्थः। तत्राभिजनोत्कर्षमाह—**रथ्येति**। रथ्यायां स्थित्वा केनचित् संभाषणं रथ्या-

[1] महा omitted—क.
[2] चारस्त्वं—ख.
[3] इत्याक्षिपसि—ख.
[4] समयाद्या—क; विनयात्—ग.
[5] स्थितौ—ख.
[6] समधिकः—ग.
[7] कथ्यताम्—ग.

दम्भः—अरे ब्रह्मबन्धो दुर्विनीत दुराग्रह, यद्येवं त्वमास्थितसमाचारः किं न परिव्राजिकां प्रणमसि? पितरमिव सर्वलोकाभ्यर्चितं विदितसकलवेदितव्यैः [1]महात्मभिरप्यविदितवैभवं [2]त्रिवर्षपूर्वश्रोत्रियं मां, धर्मपत्नीं च मम पतिव्रतावृत्तिनियमेन[3] प्रत्यक्षितपरावरतत्त्वैरपि पितामहादिभिः क्रियासमभिहारेण कृतनमस्कारां किं नाभिवादयसि?

दर्पः—हे धर्मध्वज आत्मश्लाघापातकिन्, अद्य खलु पूज्यपूजाव्यतिक्रमेण कपूयां योनिं प्रतिपत्स्यसे श्वयोनिं वा चाण्डालयोनिं वा। अहमपि सर्वलोकसंचारी त्वदभ्यर्चकं [4]क्वापि [5]कमपि न पश्यामि। (सोच्चैर्हासम्) भो भो [6]जडवञ्चक,

प्रजानां पतयो दृष्टाः पशूनां बृहतामपि।
न च त्वमधिकस्तेभ्यो न चास्मान् बहुमन्यसे ॥ ३८ ॥

प्रभाविलासः

**प्रजानामिति**। बृहतां पतयः बृहस्पतयः ॥ ३८ ॥

प्रभावली

वादः; तन्मात्रेण विशङ्कयमाना या जरठा स्थविरा, तत्संबन्धिना केनचित् जनेन संभाषणात्। हन्तेति हर्षे। अतः **विद्याभिः विवाहाच्च** लोकप्रसिद्धात् **आचारतश्च**। **कूटस्थात्**; वंशप्रथमपुरुषात् **अभ्यधिकस्य मे को वा समः; कश्च अधिकः कथ्यते**; न कोऽपीत्यर्थः ॥ ३७ ॥

**ब्रह्मबन्धुः**; ब्राह्मणाभासः। **दुराग्रह**; दुष्ट आग्रहो गर्वप्रयुक्तो यस्य। **आस्थितसमाचारः**, परिगृहीतसमाचारः। **किमिति** इमां **परिव्राजिकां न प्रणमसि**। **पितरमिति**। मां पितरमिव सर्वे समर्चयन्तीति भावः। **वेदित-**

[1] महर्षिभिः—म.
[2] त्रिवर्षश्रोत्रियमिमां—क. ग.
[3] वृत्ति omitted—ख.
[4] क्वापि omitted—क.
[5] कमपि omitted—ख.
[6] जरठवञ्चक—क. ख.

नूनमधिकजनपरिवादेन सहसैव [1]निरयं गमिष्यसि ।

**कुहना**—भअवइ,[2] एसो दुब्बम्हणो महेसिपरिवाएण विणासं [3]पडिवज्जइ ।

(भगवति, एष दुर्ब्राह्मणो महर्षिपरिवादेन विनाशं प्रतिपद्यते ।)

**असूया**—अयि धार्मिकपत्नि, दुर्ब्राह्मणीव किमिति नाभ्यागतमतिथिमधिक्षिपसि ? किं तु अन्योन्यपरिवादिनावेतौ महानुभावौ क्षणमावाभ्यां क्षन्तव्यौ ।

**दम्भः**—(सक्रोधम्) रे रे वाचाटवायस, सारमेय इव वृथा पर्यटनशीलोऽसि । तथा हि—

**जातिमात्रशरणा बहिष्कृताः केचिदादृतजघन्यवृत्तयः ।**
**रोषणा विपरिधाविनो मुधा हेपयन्ति जनमुज्झितह्रियः ॥ ३९ ॥**

प्रभाविलासः

**सारमेयः**; भषकः । तत्साम्यमेवाभिव्यनक्ति—**जातिमात्रेति** ।

**प्रभावली**

व्यानि; ज्ञातव्यानि । मम **धर्मपत्नीं च**; कुहनामित्यर्थः । पातिव्रत्यनियमेन पितामहादिभिरपि नमस्कृतामित्यन्वयः । ते कीदृशा इत्यत्राह—**प्रत्यक्षितेति** । **धर्मध्वज**; दाम्भिक । **पूज्यस्य** मम **पूजाव्यतिक्रमेण कपूयां** कुत्सितां योनिं प्राप्स्यसि । योनिं विशिनष्टि—**श्वयोनिमिति** । **श्वयोनिम्**; श्वजन्म वा । त्वामभ्यर्चयतीति **त्वदभ्यर्चकः**, तम् । **क्वापि**; कुत्रापि । जडान् वञ्चयतीति **जडवञ्चकः** । **प्रजानामिति** । मया बहवः प्रजापतयः पशुपतयः बृहस्पतयश्च दृष्टाः । ते सर्वेऽपि मां बहुमन्यन्ते । त्वं तेभ्योऽधिको नासि च । अथाप्यस्मान् न बहुमन्यसे च ॥ ३८ ॥

**अधिकजनः**; महाजनः । **परिवादः**; निन्दा । असूयां प्रतिवदति—

[1] विनाशं प्रतिपत्स्यसे—ग.

[2] सण्णासिणि added after—घ.

[3] संपज्जइ—ख.

**दर्पः**—(सहस्तास्फालनं विहस्य) यथावस्थितवादिने मह्यं मर्कट इव किमिति नाम कुप्यसि ?

**दम्भः**—रे रे, स्तम्भ इव वृथा स्थूलस्त्वं विश्ववृत्तान्तं न जानासि ।

**प्रभाविलासः**

जातिः ब्राह्मणत्वादिः, तन्मात्रशरणाः । न तु तदुचिताचाराः । अन्यत्र भस्म-भरिताधिश्रयणीमात्राश्रयाः ।

"चुल्लीकाम्पिल्यगोत्रेषु छन्दःसामान्यजन्मसु ।
मालतीजातिफलयोर्जातिर्धाऽयामलंकृतौ ॥"

इति निघण्टुः । **बहिष्कृताः ;** स्वजनैः परित्यक्ताः ; अन्यत्र बहिरेव कृताः । **आदृतजघन्यवृत्तयः ;** अङ्गीकृतनीचाचाराः, स्वीकृतजघनसंबन्धिव्यापाराश्च । तुल्यमन्यत् । हास्यरसो व्यङ्ग्यः ॥ ३९ ॥

**प्रभावली**

**भअवइ** इति । **एसो**-एषः । **दुब्बम्हणो**-दुर्ब्राह्मणः । **महेसिपरिवाएण**-महर्षि-परिवादेन, निन्दनेन । **विणासं**-विनाशम । **पडिवज्जइ**-प्रतिपत्स्यते । **अयीति** । धार्मिकस्य पत्नी सती दुष्टब्राह्मणीव **किमिति** किमर्थम् **अधिक्षिपसि ;** धिक्करोषि । न कर्तव्यमिदम् । किंतु **अन्योन्यपरिवादिनौ ;** अन्योन्यदूषकौ । वायस इव वाचाट इत्यर्थः । **सारमेयः ;** श्वा । **जातीति** । अत्र लज्जाहीनानां शुनां च श्लेषः । ब्राह्मणत्वादिजातिमात्रावलम्बनाः, न तु तदनुरूपवृत्तवन्तः । अन्यत्र **जातिः** भस्मादिभरितस्थानविशेषः ; तन्मात्रशरणाः । **बहिष्कृताः ;** सज्जनैः । अन्यत्र गृहात् बहिष्कृताः । **आदृतजघन्यवृत्तयः ;** परिगृहीतहीनाचाराः । अन्यत्र जघन्यवृत्तिर्व्यवायः । **रोषणाः ;** रोषणशीलाः । उभयेऽपि **विपरि-धाविनः ;** व्यर्थपर्यटनशीलाः । **उज्झितह्रियः ;** स्वयं त्यक्तलज्जाः । **जनं** प्रेक्षकमपि **ह्रेपयन्ति ;** लज्जितं कुर्वन्ति । निन्द्यदर्शने जनानां लज्जा जायत इत्यर्थः ॥ ३९ ॥

**यथेत्यादि** । यथार्थवादिने मह्यम् । स्थूलत्वस्य प्रयोजनाभावात् वृथा-

मयि चरति कदाचित्सत्यलोकोपकण्ठे
सपदि सनकमुख्यैः साकमभ्युज्जिहानः ।
सविनयनिभृताङ्गः सप्तशः क्षालितेन
स्वयमुदवहदर्घ्यं पाणिना पद्मयोनिः ॥ ४० ॥

अपिच,

कति कतीह पुरातनतापसाः कमलसंभववंशसमुद्भवाः ।
अतितरन्ति महान्त्यपि पातकान्यहह मामकपादजलाप्लुताः॥४१॥

कुहना—सच्चं एदं दिट्ठं मए वि सहधम्मआरिणीए ।
(सत्यमेतद् दृष्टं मयापि सहधर्मचारिण्या ।)

दर्पः—(स्वगतम्) नूनमयमार्यो दम्भः, इयमपि कुहना । न खल्वन्येषामीदृशं चारित्रमतिवादनं वा संभवति । तदेतावेवा-

## प्रभाविलासः

**मयीति** । **उपकण्ठे** ; समीपे । **अभ्युज्जिहानः** ; प्रत्युद्गच्छन् । अत्र कविनिबद्धवक्तृप्रौढोक्तिकल्पितातिशयोक्तिः ॥ ४० ॥

कतीति स्पष्टम् । अत्राप्यतिशयोक्तिः ॥ ४१ ॥

## प्रभावली

त्वम् । **मयीति** । कदाचित् सत्यलोकसमीपे मयि चरति सति तत्क्षण एव सनकादिभिः सहाभिमुखमागच्छन् पद्मयोनिः सविनयश्चासौ निभृताङ्गश्च सन् सप्तकृत्वः शोधितेन **पाणिना स्वयमेव**, न त्वन्येन, **अर्घ्यमुदवहत्** ; मह्यमिति शेषो लभ्यते ॥ ४० ॥

**अपिच** ; किंच । बहवः पुरातनाः **तापसा** मुनयः ; ब्रह्मवंशसमुद्भूता अपीति शेषः । **मामकपादजलाप्लुताः** सन्तः **महापातकान्यतितरन्ति** ॥ ४१ ॥

**सच्चं**-सत्यम् । एदं-एतत् । दिट्ठं-दृष्टम् । मए वि-मयापि । **सहधम्म-आरिणीए**-सहधर्मचारिण्या । **चारित्रम्** ; आचारः अतिवदनम् ; अत्युक्तिः ।

स्मद्बन्धुभूतावभ्युपगमयामि । (प्रकाशम्) भगवति विश्ववेदिनि, युक्तिसिद्धमिह किमपि भगवत्यै निवेदयामि—

**परधनहरणप्रवीणभावा कुटिलमतिः कुहनैव सेयमार्या ।**
**पशुवधपरिशेषनामयज्ञः स्ववशजनः स्वयमेव दम्भ एषः ॥४२॥**

तत्कथमेतत्सकाशाद्धर्मसंकटं मोक्ष्यावः ?

**असूया**—अहमप्येवं संभावयामि ।

**दम्भः**—(सान्तर्हासम्) युवामप्यहं युक्तितः स्थापयामि—

**ध्रुवमत्र गुणोत्तरापवादी ध्वनिसारः स्वयमागतोऽसि दर्पः ।**
**परिकल्पितवीतरागवेषा तव भार्यैव भवेदसावसूया ॥ ४३ ॥**

**प्रभाविलासः**

**परधनेति** । पशुवध एव परिशेषो यस्य, स चासौ नाम्नैव यज्ञो यस्य सः, "यजन्ते नामयज्ञैस्ते" इत्युक्तत्वात् । तेन **स्ववशजनः**; स्वाधीनजनः ॥ ४२ ॥

**ध्रुवमिति** । **गुणोत्तरापवादी**; उत्कृष्टगुणतिरस्कारकः ॥ ४३ ॥

**प्रभावली**

**अभ्युपगगमयामि**; अङ्गीकारयामि । सर्वज्ञे **किमपि निवेदयामि**; दर्शयामि । **परधनेति** । परधनापहरणे प्रावीण्यं यस्याः सा । **वक्रबुद्धिः कुहनैव** । केत्याकाङ्क्षायामाह—**सेयमार्या**; इयं संन्यासिनी । एषः; कुलपतिश्च । पशुवध एव परिशिष्यते यत्र, न फलं, सः **नाममात्रयज्ञः** मन्त्रतन्त्रादिहीनो यस्य सः । स्ववशे जना यस्य सः **दम्भः स्वयमेव** ॥ ४२ ॥

**तत्**; तस्मात् । **एतत्सकाशात्** धर्म**संकटं कथं मोक्ष्यावः**; न कथंचित् । **संभावयामि**; विचारयामि । **स्थापयामि**; निश्चिनोमीत्यर्थः । भो सखे, त्वं गुणोत्तरान् उत्कृष्टजनान् अपवदितुं तिरस्कर्तुं शीलमस्यास्तीति सः । ध्वनिरेव सारो यस्य सः । दर्पोऽत्र स्वयमागतोऽसि ध्रुवम् । क्लृप्तसंन्यासिवेषा **असौ** इयं च **तव भार्या असूयैव** ॥ ४३ ॥

(नेपथ्ये)

गृहपतिरतिथिश्च सत्यवादिनावेतौ गौडलाटधार्मिकौ ।

(सर्वे सप्रत्यभिज्ञं परस्परमवलोक्य संतोषमभिनयन्ति)

**दम्भः**—(सानन्दम्) सखे दर्प, अभिव्यञ्जिता वयमिदानीमशरीरिण्या भारत्या ।

**दर्पः**—अवितथवादिनी खल्वेषा । तदार्येणापराधो मामकः क्षन्तव्यः ।

**दम्भः**—मयापि खल्वपराद्धम् ।

(दम्भदर्पावन्योन्यमञ्जलिं बध्नीतः; निबध्नीतश्च प्रियवचनम् । असूयाकुहने गाढं मिथ आश्लिष्यतः)

**दम्भदर्पौ**—यथामनोरथमिह वयं यदृच्छया दैव्या समागताः । अभिगन्तव्यस्त्वनन्तरं समये महाराजः ।

(ततः प्रविशति महामोहो दुर्मतिश्च)

**प्रभाविलासः**

**गौडेति** । गौडादीनां धर्मध्वजमात्रत्वं, न तु वास्तवधार्मिकत्वम् । **तदार्येणे**त्यादिना परिहारो नाम नाट्यालंकारः, "परिहारस्तु विज्ञेयः

**प्रभावली**

नेपथ्ये अशरीरिवचनमभूत्; किमित्यत्राह—**गृहपतिरि**ति । **गौडलाटधार्मिकौ**; गौडो लाटश्च देशविशेषः; तद्देशे गृहपत्यतिथी अन्योन्यपरिभावुकाविति संप्रदायः । गौडदेशीयानां केवलं धर्मध्वजत्वम्; न तु वास्तवधार्मिकत्वमिति गम्यते । **अभिव्यञ्जिताः**; प्रकाशिताः । सत्यवादिनी एषा अशरीरा भारती । **अपराद्धम्**; अपराधः कृतः । तदपि क्षन्तव्यमिति शेषः । **निबध्नीतः**; उक्तवन्तावित्यर्थः । **आश्लिष्यतः**; अन्योन्यमालिङ्गितवत्यौ । **यदृच्छया दैव्या**;

**महामोहः**—(विचिन्त्य) प्रिये, महासाहसिकस्य कुलघ्नस्य विवेकस्य विध्वंसनाय[1] कृतप्रतिज्ञेन मया समाधिसाकाङ्क्षपुरुष-[2]चित्तसंक्षोभणाय प्रेषिताः सिंहवनगुप्तिन्यायेन परस्पराभिरक्षिताश्च कामक्रोधादयः कालोपपन्नकातर्यकलुषिताः सैकतसेतव इव भग्न-व्यूहाः प्रतिनिवृत्य कथमप्यस्मन्मुखमवलोकयितुमक्षमाः प्रतिदिशं प्रस्थाय [3]प्रायमास्थिता इत्युपश्रुतमस्माभिः। तदिह भवत्या तत्प्रेयसी रतिजिघांसातृष्णास्तत्सकाशं गमयित्वा मामकास्ते मन्त्रिणः[4] समाश्वासयितव्याः।

**दुर्मतिः**—अय्यउत्त, पुव्वं एव्व ताओ ताणं समीवं गमिआओ।

(आर्यपुत्र पूर्वमेव तास्तेषां समीपं गमिताः।)

**प्रभाविलासः**

कृतानुचितमार्जनम्" इति लक्षणात्। **सिंहवनगुप्तिन्यायः**; सिंहेन वनं, वनेन सिंहो रक्ष्यत इति न्यायः। **प्रायोपवेशमास्थिता** इति सुग्रीवसचिव-

**प्रभावली**

देवकृतया। **समये**; योग्यकाले। **महासाहसिकस्येत्यादि** विशेषणं दुःखबाहुल्य-प्रयुक्तम्। **सिंहवनगुप्तिन्यायेन**; अयं न्यायस्तु—सिंहो वनं रक्षति, वनं च सिंहं रक्षतीति। कालप्राप्तकातर्येण संजातकालुष्याः भग्नबलविन्यासाः। **प्रायम्**; अनशनेन शरीरत्यागम्। परिगृहीतवन्त इति **उपश्रुतं** कर्णाकर्णिकया श्रुतम्। **तत्प्रेयसीः**; तेषां कामादीनां पत्नीः। कामस्य रतिः; क्रोधस्य जिघांसा; लोभस्य तृष्णा। **मन्त्रिणः**; कामादयः। **पुव्वमित्यादि**। पुव्वं एव्व-पूर्वमेव। **ताओ**-ताः, रत्यादयः। **ताणं समीवं**-तेषां समीपम्। **गमिआओ**-गमिताः;

[1] विध्वंसने—क.
[2] चित्त omitted—घ. छ.
[3] प्रायोपवेशमा—ख ग.
[4] सेनाश्च added after—क.

**महामोहः**—साधु प्रिये, साधु ; यदस्मद्वल्लभोचितमनुष्ठितं भवत्या । प्रत्याश्वस्तास्ते समरसमये समाह्वातव्याः ।

**दुर्मतिः**—एव्वं एव्व[1] ।

(एवमेव ।)

**महामोहः**—(विषादातिशयं नाटयन्) प्रिये, अद्य यावदप्रतिहतकीर्तिरपत्रपेऽहमसदृशेन दुरात्मना विवेकेन सह विवादः संवृत्त इति । यथा त्वं नारीषु निःसमाभ्यधिका तथाहं पुरुषेषु । यतः,

> **सुरदनुजगणाः स्वमूर्ध्नि नित्यं**
> **निदधति शासनपत्रिकां मदीयाम् ।**
> **प्रतिफलितलिपिप्रकारदीप्य-[2]**
> **न्मणिमकुटांशुमषीरसानुलिप्ताम् ॥ ४४ ॥**

### प्रभाविलासः

समाधिः । **सुरेति** । प्रतिफलितैः लिपिप्रकारैः लिपिभेदैः दीप्यन्तः मणयः इन्द्रनीला येषु तानि, तेषां मकुटानामंशव एव मषीरसः तेनानुलिप्ताम् । यद्वा प्रतिफलिता च सा लिपिप्रकारेषु दीप्यन्मणिमकुटांशुमषीरसानुलिप्ता च, ताम् । अथवा प्रतिफलिताः प्रतिहत्य प्रसृताः, अत एव लिपिप्रकारेण दीप्यन्तो व्याप्नुवन्तो मणिमकुटांशवः, त एव मषीरसः, तेनानुलिप्ताम् ॥ ४४ ॥

### प्रभावली

**साधु**; सम्यक् कृतम् । **वल्लभोचितम्**; वल्लभत्वस्योचितम् । **प्रत्याश्वस्ताः**; समाश्वस्ताः । **एव्वं एव्व**-एवमेव । **विषादः**; शोकः । **अद्य यावत्**; एतद्दिनपर्यन्तम् । **अप्रतिहतकीर्तिरहं विवादः संवृत्त इत्यपत्रपे**; परेभ्यो लज्जितोऽस्मि । स्वस्य निःसमाभ्यधिकत्वं प्रतिपादयति—**सुरेति** । **दनुजाः** असुराः ।

[1] एवं—ख. [2] दीव्यन्—ग.

अपिच,

**वर्गः स्वर्गसदां मया नियमितः क्षोणीभृतः किं पुनः**
**पद्माम्भोनिधिपर्वतेषु निहितास्तिस्रो मया मूर्तयः ।**
**विश्वं कर्तुमकर्तुमन्यथयितुं मद्भ्रूरमोघक्रमा**
**[1]सोऽहं कस्य वशे क [2]एष न च मे किं कस्य वा कथ्यते॥४५॥**

(स्वगतम्) किं तावदद्य केनापि हेतुना प्रदीप्यमाने विवेके प्रतिविधातव्यम्? अस्तु; नन्वहं महामोहः। (प्रकाशम्) प्रिये,

**प्रभाविलासः**

**वर्ग इति । क्षोणीभृतः;** राजानः ॥ ४५ ॥

**प्रभावली**

**निदधति;** निक्षिपन्ति। प्रतिफलिताः शासनपत्रिकालिपयोऽक्षराणि, तत्प्रकारेण दीप्यन्तो मणयो यस्मिन्। प्रतिफलितानां लिपीनां प्रकारेण पङ्क्त्या आर्जवादिस्वाभाव्यात् दीप्यन्त इत्यर्थः। तादृशस्य मकुटस्यांशव एव मषीरसः, **तेनानुलिप्तां** रञ्जिताम् ॥ ४४ ॥

स्वमाहात्म्यं वक्तुमशक्यमित्याह—**वर्ग इति । स्वर्गसदः;** देवाः, तेषां वर्गः स्वायत्तीकृतः । **क्षोणीभृतः;** राजानः नियमिता इति किं वक्तव्यम् । सर्वोत्कृष्टाः **तिस्रो मूर्तयश्च** ब्रह्मविष्णुरुद्राः यथाक्रमं पद्मे सरस्वतीपीठरूपे ब्रह्मा नियमितः, लक्ष्म्युत्पत्तिस्थाने अम्भोनिधौ विष्णुः, पार्वतीजनके पर्वते रुद्रः । अतः मद्भ्रूक्षेपः जगत् स्रष्टुं नाशयितुं प्रकारान्तरेण कर्तुं च **अमोघक्रमः** अप्रतिहतगतिर्भवति । **सोऽहम्;** तादृशोऽहम् । **कस्य वशे;** कस्य परतन्त्रः । **किं कस्य वा कथ्यते;** कस्य वा किं मदीयं माहात्म्यं कथ्यते; वक्तुमशक्यमित्यर्थः ॥४५॥

**स्वगतम्** आलोचयति—**किं तावदिति । केनापि हेतुना;** निष्कारणमिति भावः । किं प्रतिविधातव्यम्? एवं विचिन्त्य समाश्वसिति—**अस्त्वति ।** महामोहस्य मम तत्प्रतिविधाने को वा भार इति भावः । स्वकर्तव्यमाह—

[1] मोहः कस्य—ख. [2] एव ग. घ.

[1]यद्यपि सर्वत्र मया प्रवर्तिताः समयभेदाः कैश्चिदौपनिषदापशदै-रहस्करकिरणा इव घनैः किंचिदन्तर्धापिताः; यद्यपि च कामाद-यश्चिकीर्षितवैकल्यजनितवैलक्ष्यदर्शनात्[2] अनालक्ष्या गूढमासते; तथापि भेदमभेदं च वस्तूनां पूर्वपक्षसिद्धान्तौ च सर्वत्र विपर्यस्य विश्वं व्यामोहयामि। अथवा पुनरहमहंकारादिसंमतम्, अचरम-प्रमाणप्रधानम्, अलौकिकार्थकल्पनादुर्व्यसनहीनम्, अर्थकाम-मात्रपुरुषार्थहृद्यम्, अवितथं, सिद्धान्तं गम्भीरयुक्तिभिरुत्तम्भयन् [3]वृथोत्साहमेव जडमतिं विवेकं विधित्सामि[4]। अहह,

**पृथिव्यापस्तेजः पवन इति तत्त्वानि मिलितै-**
**रमीभिश्चैतन्यं भवति मदशक्त्यादिनयतः।**
**किमात्मा दृष्टोऽन्यः किमुत वपुषि ध्वंसिनि सुखं**
**तदेतद्वागीशः समतनुत लोकायतमतम् ॥ ४६ ॥**

प्रभाविलासः

**अचरमप्रमाणम्;** प्रथमप्रमाणम्। लौकायतिकमतमुपन्यस्यति—**पृथिवीति।** **तत्त्वानि;** उक्तक्रमेण चत्वार्येवेत्यर्थः, आकाशस्यालीक-त्वाङ्गीकारात। **मदशक्तिः;** किण्वादौ मदशक्तिः ॥ ४६ ॥

**प्रभावली**

**यद्यपीति।** यद्यपि बाह्यसमयाः प्रतिक्षिप्ताः, कामादयश्च पराजिताः, तथापि वस्तूनां **भेदमभेदं च** विपर्यस्य भेदमभेदत्वेन अभेदं भेदत्वेन च परिकल्प्य **सर्वत्र** समये **पूर्वपक्षसिद्धान्तौ च** विपर्यस्य पूर्वपक्षं सिद्धान्तत्वेन सिद्धान्तं

[1] ग reads these passages in the following order—**यद्यपि—समयभेदाः तथापि भेदमभेदं च—व्यामोहयामि। कैश्चिदौपनिषदापशदैः—अन्तर्धापिताः कामाद-यश्चिकीर्षितवैकल्यजनितवैलक्ष्यमनालक्ष्य गूढमासते। अथवा पुनरहम्** etc.

[2] वैलक्ष्यात्—ख. [3] निवृत्तोत्साहमेव—ख. [4] विधास्यामीति प्रभावलीपाठः.

उपनिषदपि खलु बलवदभिमतसमयबलीयस्त्वमभिसंधाय व्यवस्थापयति—"असुराणां ह्येषोपनिषत" इति। तदिह त्रय्यन्तवादिभिरुपनिषत्प्रामाण्यसमर्थनमप्यस्माकमरातिकरलिखितविजयपत्रायते। अपिच;

**स्वमतविपरीतमन्यैः क्रोशति हृदये विधीयते स्वैरम्।**
**अमरगुरुशिक्षितार्थैरस्मत्सार्थैर्यथाहृदयम्॥ ४७॥**

**प्रभाविलासः**

मतान्तरेषु स्वहृदयसंवादोऽपि न सिध्यतीत्याह—**स्वमतेति**॥४७॥

**प्रभावली**

पूर्वपक्षत्वेन च विपरीतं कृत्वा विश्वं व्यामोहयामि। **औपनिषदापशदैः**; वेदान्त्याभासैः मेघैः सूर्यकिरणा इव किंचित्तिरस्कृताः। **वैकल्येन** जनितं **वैलक्ष्यं** लज्जा; तद्वशेन **अनालक्ष्याः**। अथवेति पक्षान्तरं चार्वाकमतमवलम्बते। **अहंकारादिसंमतम्**; स्थूलोऽहं कृशोऽहमित्यनुभवसंवादीत्यर्थः। **अचरमप्रमाणं** प्रत्यक्षं, तदेव प्रधानं यत्र। **अलौकिकार्थस्य** अतीन्द्रियार्थस्य स्वर्गादेः **कल्पनैव दुर्व्यसनं** तद्रहितं, प्रत्यक्षसिद्धत्वाभावात् तत्र कल्पनैव। अर्थकाममात्रपुरुषार्थत्वेन **हृद्यम्**। मात्रशब्देन धर्ममोक्षयोर्व्युदासः। **अवितथम्**; अत एवासत्यरहितं, सर्वसंमतत्वात्। **सिद्धान्तं** लौकायतिकम्। **उत्तम्भयन्**; उपबृंहयन्। व्यर्थोत्साहमेव विधास्यामि। उत्तम्भनप्रकारं दर्शयति—**पृथिव्याप इति**। चत्वार्येव तत्त्वानि, नाधिकानि। **अमीभिर्मिलितैः**; संबन्धविशेषविशिष्टैः **चैतन्यमुद्भवति**। तत्र दृष्टान्तमाह—**मदशक्त्यादिनयतः**; किण्वादिमदकरद्रव्याणां संबन्धविशेषात् मदशक्तिर्यथोत्पद्यते, तन्न्यायात्। शरीरादन्य आत्मा अस्तीति दृष्टः किम्? न दृष्टः। शरीरे नष्टे किं सुखमनुभूयते? नेत्यर्थः। प्रवर्तकनैपुण्यादप्यस्य मतस्य प्राबल्यमाह—**तदेतदिति**। **वागीशः**; बृहस्पतिः। 'बुद्ध्या बृहस्पतेस्तुल्यः' इति बुद्धिविषये सर्वेषामुपमानत्वेनोपात्तः॥ ४६॥

न केवलं युक्तिभिः प्राबल्यम्; उपनिषदप्यस्य प्राबल्यमाहेत्याह—**उपनिषदपीति**। प्रबलासुरपरिग्रहबलीयस्त्वमभिप्रेत्यास्य प्राबल्यं निगमयति।

**दुर्मतिः**—अय्यउत्त, पच्चक्खमेत्तप्पमाणो बहप्पइसिद्धंतो बहुप्प-माणसाहिअपरोक्खविसआणं बहूणं इअरसिद्धंताणं पुरओ कहं ठाइ?

(आर्यपुत्र, प्रत्यक्षमात्रप्रमाणो बृहस्पतिसिद्धान्तः बहुप्रमाणसाधितपरोक्षविषयाणां बहूनामितरसिद्धान्तानां पुरतः कथं तिष्ठेत्?)

**महामोहः**—प्रिये, नूनं स्वमतप्राबल्यबुभुत्सया परिपृच्छसि। तदेतदाकर्ण्यताम्—

परमनुगुणयन्तः पण्डितंमन्यवर्गा-
नवितथमिव जल्पन्त्यागमाः किंचिदेते।
विबुधगुरुमतेऽस्मिन् व्यक्तमुत्तभ्यमाने
मुषितनिखिलसारा मौनमुद्रां भजन्ते॥ ४८॥

### प्रभाविलासः

**अय्यउत्तेत्यादि**। अनेन नीतिर्नाम नाट्यालंकारः. "न्यायानुवृत्तिरेवात्र नीतिरित्युच्यते यथा" इति लक्षणात्। शास्त्रान्तरविजृम्भणं सुरगुरुसिद्धान्तोत्तम्भनावधिकमित्याह—परमिति॥ ४८॥

### प्रभावली

बलवतामसुराणामभिमतोऽयं समयः। असुराणामित्यादिनान्योपनिषद्भ्यः प्राबल्यं दर्शितमिति भावः। त्रय्यन्तवादिभिरुपनिषत्प्रामाण्यसमर्थनमप्यस्मदभिमतसाधनमित्याह— **तदिहेति**। शत्रुहस्तलिखितविजयपत्रवदाचरति। **स्वमतेति**। मनस्यसंमते जुगुप्सिते सत्यपि स्वानुभवविपरीतमेव, **स्वैरं** यथेच्छम्, न प्रमाणानुगुणमिति भावः। **विधीयते**; प्रतिपाद्यते। **अमरगुरुणा** बृहस्पतिना शिक्षितार्थैः अस्मन्मतनिर्वाहकैस्तु **यथाहृदयं** स्वानुभवानुगुणमेव प्रतिपाद्यते॥ ४७॥

**पच्चक्खमेत्तप्पमाणो**-प्रत्यक्षमात्रप्रमाणः। **बहप्पइसिद्धंतो**-बृहस्पतिसिद्धान्तः। **बहुप्पमाणसाहिअ**-बहुप्रमाणसाधित। **परोक्खविसआणं**-परोक्षविषयाणाम्। **बहूणं**-बहूनाम्। **इअरसिद्धंताणं**-इतरसिद्धान्तानाम्। **पुरओ**-पुरतः। **कहं**-कथम्। **ठाइ**-तिष्ठेत्। **परमिति**। **एते आगमाः** वेदाः **पण्डितं-**

न खलु सहस्रमपि [1]प्रतिसूर्याः कदाचिदपि सूर्यमभिभवन्ति।

दुर्मतिः—अय्यउत्त, पबलअमे इमस्सिं पुरंदरपुरोहिअ-मए का मुत्ती ? को वा भोओ ? का वा देवदाओ ?

(अर्यपुत्र, प्रबलतमेऽस्मिन् पुरंदरपुरोहितमते का मुक्तिः ? को वा भोगः, का वा देवता ?)

महामोहः—श्रूयतां तावदवहितया भवत्या—

**शरीरप्रलयो मुक्तिर्भोगस्तु [2]रतिरुत्तमा।**
**देवतास्तत्प्रदायिन्यः स्त्रियस्तारुण्यभूषणाः॥ ४९॥**

एवं च देवि, परमार्थदर्शिन्यास्तव प्रत्यक्षत एवैते परिप्रश्नाः प्रत्युक्ताः। अपिचास्माकं वैरिविवेकविजयेऽप्येतासामेव प्रत्यक्ष-देवतानां प्रसादः प्रधानकारणम्।

प्रभाविलासः

शरीरेति। तत्प्रदायिन्यः; भोगप्रदायिन्यः॥ ४९॥

**प्रभावली**

मन्यवर्गान् मूढान् केवलमनुगुणयन्तः अवितथमिव किंचित् यत्किंचित् जल्पन्ति। इवेत्यपरमार्थे। ते आगमाः विबुधगुरुमते अस्मिन् उत्तभ्यमाने सति मुषितनिखिलयुक्तिसाराः सन्तः मौनमुद्रां भजन्ते। व्यक्तं नूनम्॥४८॥

दृष्टान्तमाह—न खल्विति। पबलअमे-प्रबलतमे। इमस्सिं-अस्मिन्। पुरंदरपुरोहिअमए-पुरंदरपुरोहितमते चार्वाकमते। का मुत्ती-का मुक्तिः। को वा भोओ-को वा भोगः। का वा देवआओ-का वा देवताः। शरीरेति। शरीरनाशो मुक्तिः। भोगस्तु उत्तमा रतिः संभोगः। तत्प्रदायिन्यः भोगप्र-दायिन्यो देवताः तारुण्यभूषणाः स्त्रिय एव॥ ४९॥

एवमुक्तेन प्रकारेण तव परिप्रश्नाः सर्वे प्रत्यक्षपदार्थे एव प्रत्युक्ताः। स्वस्य विवेकविजये प्रधानसाधनं दर्शयति—अपिचेति। होदु णाम-भवतु नाम।

[1] कृकलासा इत्यर्थः [2] रतिरुच्यते—क.

दुर्मतिः—होदु णाम पसादो इत्थिआणं संलावजोग्गाणं सचेअणाणं देवदाणं। तेण कहं विवेओ विजेदुं [1]तिरइ ?

(भवतु नाम प्रसादः स्त्रीणां संलापयोग्यानां सचेतनानां देवतानाम्। तेन कथं विवेको विजेतुं तीर्यते ?)

महामोहः—इत्थं नाम—

अपि तपसि रतानामप्यधीतागमाना-
मपि यमनियमाद्यैरन्वहं शिक्षितानाम्।
शिथिलयति समाधिं [2]शिल्पिहस्तानपेक्षं
वरतनुमयचित्रं वासनाभित्तिलग्नम् ॥ ५० ॥

पठन्ति चौपनिषदाः परिहृतविषयानुरागतया परमपुरुष-मुपसन्नस्यापि जक्षणादिकमक्षीण[3]विहृतिशालिनीभिरुपभोगं चेति

प्रभाविलासः

अपीति। **शिल्पिहस्तानपेक्षमिति** व्यतिरेकालंकारो व्यज्यते ॥५०॥ **जक्षणादिकमिति**। "जक्षत् क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वा"

प्रभावली

**पसादो**-प्रसादः। **इत्थिआणं**-स्त्रीणाम्। **संलापजोग्गाणं**-संलापयोग्यानाम्। **सचेअणाणं**-सचेतनानाम्। **देवदाणं**-देवतानाम्। **तेण**-तेन। **कहं**-कथम्। **विवेओ**-विवेकः। **विजेदुं**-विजेतुम्। **तिरइ**-तीर्यते; शक्यत इत्यर्थः। **इत्थं नाम**; एवमेव। **अपीति**। **शिक्षितानामपि** पुरुषाणां **वासनाख्यभित्ति-लग्नं** शिल्पिहस्तं नापेक्षत इति शिल्पिहस्तानपेक्षं शिल्पिहस्तालिखितं, **वरतनुः** युवतिः, तद्रूपं चित्रमालेख्यं **समाधिं** ब्रह्मध्यानं **शिथिलयति** ॥ ५० ॥

वेदान्तानामर्थप्रतिपादनं परिहसति—**पठन्ति चेत्यादि**। त्यक्तशब्दादि-विषयानुरागाणां पुंसां परमपुरुषप्राप्त्यनन्तरं जक्षणादिकं युवतिभिरुपभोगं चेति

[1] शक्कइ—क. [2] शिल्प—ग. घ. [3] महिमशालि—ख.

महदिदं सारस्यम् । न खलु [1]वृश्चिकभयात्पलायमानैराशीविषमुखे निपतितव्यम् । अपिच,

तमिस्राशीतांशुस्तबकवियदावर्तघटितैः
प्रक्लृप्तानां रम्भामणिमुकुरतूणीरनलिनैः ।
स्मरन्तः के धैर्यं दधति युवतीनामभिमुखं
स्मरस्कन्धावारप्रचलितपताकाप्रतिभुवाम् ॥ ५१ ॥

### प्रभाविलासः

इति श्रुतिरनुसंहिता । **तमिस्रेति** । **तमिस्रा**; केशपाशः । **शीतांशुः**; मुखम् । **स्तबकौ**; स्तनौ । **वियत्**; मध्यम् । **आवर्तः**; नाभिः । **रम्भा**; ऊरुः । **मणिमुकुरम्**; गण्डस्थलम् । **तूणीरः**; जङ्घा । **नलिनम्**; नेत्रं, पादो वा । **युवतीनामिति** कर्मणि षष्ठी । अत्र धम्मिल्लमुखादीनां प्रकृतानामुपमेयभूताङ्गानां निगरणेन तमिस्राद्युपमानानामेव निर्देशात् आद्योऽयमतिशयोक्तिभेदः । तल्लक्षणं तु—"उपमानस्य निर्देशो निगीर्णे प्रकृते तु यः" इत्यादि ॥ ५१ ॥

### प्रभावली

पठन्ति । इदं **महत्सारस्यम्**; सामञ्जस्यं, व्याघातादिति भावः । अत्र "जक्षत् क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वा" इत्यादिकमनुसंधेयम् । व्याघातमेव दर्शयति—**न खल्विति** । शब्दादिविषयानुरागभिया मुक्तस्य पुनः बलवत्तरशब्दाद्यनुभवप्राप्तिः वृश्चिकभयात्पलायमानानामाशीविषमुखनिपातमनुसरतीति भावः । युवतीं स्मरन्तः के वा समाधौ धैर्यं दधतीति वदन् पुनरपि विवेकपराभवे हेतुमाह—**अपि चेत्यादि** । अत्र तमिस्रादिशब्दैः केशपाशमुखस्तनमध्यनाभयः, रम्भादिभिश्च ऊरुजङ्घापादतलानि लक्ष्यन्ते; एतैर्निर्मितानाम् । **अभिमुखेत्यादि** । अभिमुखं यथा तथा स्मरसैन्ये प्रचलिता या पताका, तत्प्रतिभुवाम्; तत्सदृशीनामित्यर्थः । युवतीनां स्मरन्त इति कर्मणि षष्ठी । के धैर्यं दधति । युवतीनां स्मरणमेवं चेत् किमु दर्शनादीति भावः ॥ ५१ ॥

[1] वृश्चिकभिया—ग.

अहह, अनादिशुद्धतया[1] संमतानां वैकुण्ठवैमानिकानां वैनतेयादीनामाजानसिद्धाः कति कति विलासिन्यः श्रूयन्ते । श्रूयते किल सकलसंसारनिवर्तकः सर्वेश्वरो लक्ष्मीभूमिनीलानायकः । तदिह कामपुरुषार्थप्रतिक्षेपकैः कापेयवृत्तिभिः प्रतिभटभवनदिधक्षानिक्षिप्तेन पावकेन [2]स्वनगमपि दंदह्यते । यश्चासौ मोक्षप्रद इति मुमुक्षुभिरुद्घुष्यते, स च

**सत्त्वप्रवर्तकः सन् सह प्रियाभिः पुराणपुरुषोऽपि ।**
**बहुमुखभुजंगसङ्गी विहरति विविधासु राजधानीषु ॥ ५२ ॥**

### प्रभाविलासः

**विलासिन्यः;** रुद्रासुकीर्तिसूत्रवतीप्रभृतयः । **सत्त्वेति । सत्त्वप्रवर्तक** इत्यनेन "महान् प्रभुर्वै पुरुषः सत्त्वस्यैष प्रवर्तकः" इति श्रुत्यर्थोऽभिप्रेतः । **अपिः** इतरेषु कैमुत्यं दर्शयति । **बहुमुखभुजंगसङ्गी;** अनेकविटपरिवृतः । सहस्रफणशेषावतारभूतबलरामसहायवान् । "भुजंगो विटसर्पयोः" इति निघण्टुः । **राजधानीषु;** मधुराप्रभृतिषु ॥ ५२ ॥

### प्रभावली

अथ वेदान्तानां मुक्तिप्रतिपादनप्रकारं परिहसति—**अहहेत्यादि । अहहेति** परिहासे । अनादिशुद्धतया नित्यशुद्धत्वेन संमतानां वैकुण्ठलोके विमानचारिणां स्वतः सिद्धाः विलासिन्यः रुद्रासुकीर्त्यादयः । तत्तिष्ठतु; मोक्षप्रदस्य सर्वेश्वरस्यापि श्रीभूमिनीलादयः "ह्रीश्च ते लक्ष्मीश्च पत्न्यौ" इत्यादिभिरुक्ताः । **कामपुरुषार्थनिरासकैस्तै**र्मुक्तौ स्त्र्यादिभोगप्रतिपादनं कामपुरुषार्थप्रतिक्षेपं निरुणद्धीत्याह—**तदिहेत्यादिना** । कापेया वृत्तिर्येषां तैः । मुक्तौ स्त्र्यादिवर्णनमेव कापेयवृत्तिरिति भावः । **प्रतिभटेति** । शत्रुभवनदहनेच्छया निक्षिप्तेनाग्निना स्वभवनमपि भृशं दह्यते । **यश्चासावित्यादि । सत्त्वेति । सत्त्व-**

[1] शुद्धितया—क. ख.

[2] स्वभवनमपीति प्रभावलीपाठः.

ततश्चार्वाकपक्षप्रतिक्षेपो दिव्यदंपतिसमर्थनं चेति शतप्रदान-प्रतिक्षेपिणो महाप्राज्ञस्य विंशतिपञ्चकप्रदान[1]वचनवदपहास्यम् । किंच,

**मूढग्राह्यान्मोक्षधर्मप्रबन्धान् निर्मातॄणां निष्प्रमादप्रयुक्तः ।**
**भोगप्राप्त्यै कल्पते भूरिभूम्नां ब्रह्मादीनां ब्रह्मचर्यप्रयासः॥५३॥**

### प्रभाविलासः

मोक्षशास्त्रप्रवर्तकानामपि वागन्या प्रवृत्तिरन्येति विप्रलम्भकत्वमेवे-त्याह—**मूढेति** ॥ ५३ ॥

### प्रभावली

**प्रवर्तकः सन्नपि**; "सत्त्वस्यैष प्रवर्तकः" इत्युक्तेः । **पुराणपुरुषोऽपि**; अति-वृद्धोऽपि । **विविधासु राजधानीषु**; वैकुण्ठादिषु नगरेषु । **बहुमुखभुजंगसङ्गी सन्**; बहुमुखो यो भुजङ्गः शेषः, तत्र शयितः सन् । **प्रियाभिः** लक्ष्म्यादिभिः सह **विहरति** ॥ ५२ ॥

अत इदमपहास्यमित्याह—**तत इत्यादि** । **समर्थनं चेति**; इदमिति शेषः । अपहास्यत्वे दृष्टान्तमाह—**शतप्रदानेति** । शतप्रदानमनङ्गीकुर्वतो जडस्य । **महाप्राज्ञ** इति विपरीतलक्षणा । विंशतिपञ्चकं दास्यामीति वचनवत्; शतस्य च विंशतिपञ्चकस्य च समानार्थत्वात् शतं विहाय विंशतिपञ्चकदानवचनं यथापहास्यं तद्वत् । एतावता फलितमर्थमाह—**मूढेत्यादि** । वैराग्यशास्त्रप्रवर्तका ब्रह्मादयोऽपि भोगार्थमेव ब्रह्मचर्यमनुतिष्ठन्तीत्याह—**मूढग्राह्यानित्यादि** । मूढैः ग्राह्यान् विचक्षणैरनुपादेयत्वात् मोक्षधर्मप्रतिपादकप्रबन्धान् **निर्मातॄणाम्** । तृन्नन्तोऽयं शब्दः, कर्मणि षष्ठ्या अदर्शनात् । **भूरिभूम्नाम्**; महाप्रभावा-णाम् । अयमप्युपालम्भः । **ब्रह्मादीनां निष्प्रमादप्रयुक्तः** सावधानतः क्रियमाणः **ब्रह्मचर्यप्रयासश्च भोगप्राप्त्यै** मोक्षे स्त्र्यादिभोगप्राप्त्यै समर्थो भवति ॥ ५३ ॥

[1] **वचन** omitted—**घ**.

(आकाशे कर्णं दत्वा) किं ब्रवीति कश्चित्?

**'दांपत्यं सहजं समस्तजगतां पित्रोस्तदिच्छावशात्**
**कामिन्यादिविभागक्लृप्तिरपि तत्कैंकर्यसिद्ध्यै नृणाम्।**
**इत्थं शेषमशेषमद्य तु भवत्सारस्यसंवर्धकं**
**वैरस्यं विदधाति हन्त विदुषां वैरोचनं दर्शनम्' ॥ ५४ ॥**

### प्रभाविलासः

यदुक्तं श्रीभूमिनीलानायक इति तत्रोत्तरमाह—**दांपत्यमिति** । **सहजमिति** कर्मनिमित्तत्वव्यावृत्तिः । तेन कर्मकृतवैषयिकभोगार्थं दांपत्यभावो निरस्तः । विलासिन्यः श्रूयन्त इत्येतत् प्रत्याह—**तदिच्छेत्यादि** । ईश्वरसंकल्पानुसारेण तत्कैंकर्यैकप्रयोजनं कामिन्यादिविभागकरणमित्यर्थः । **अशेषम्**; वस्तु । **इत्थं शेषम्**; भगवत्कैंकर्यैकरसमित्यर्थः । **अद्य तु**; एवं सति । **भवत्सारस्यसंवर्धकं वैरोचनं दर्शनं** चार्वाकमतं विदुषां वैरस्यं विदधातीत्यन्वयः ॥ ५४ ॥

### प्रभावली

आकाशे किमपि देष्टिकवचनं संभाव्य कर्णं दत्वाह-**किं ब्रवीति कश्चिदिति**। किमित्युक्तं विवृणोति—**दांपत्यमिति**। इदं वेदान्तिवचनम्। **समस्तजगतां पित्रोः** लक्ष्मीनारायणयोः दंपतित्वं **सहजम्**; न तु कर्मकृतम्। तच्च दांपत्यं तयोरिच्छाजनितम्। स्त्रीपुरुषादिविकल्पनमपि पुंसां **तयोः कैंकर्यसिद्ध्यै**; न कामतः। तदिच्छावशादित्येतदत्राप्यनुषज्यते। **शेषमशेषम्**; अवशिष्टं कृत्स्नं स्वरूपविभूत्यादिकम्। **इत्थम्**; कैंकर्यसिद्ध्यर्थमेव। **अद्य तु**; एवं निर्णीते सति। **भवतां सारस्यसंवर्धकम्**; सरसत्वबुद्धिजनकम्। **वैरोचनं दर्शनम्**; विरोचनप्रवर्तितं चार्वाकमतम्। **विदुषाम्**; धीमताम्। **वैरस्यं** विरसत्वमेव जनयति। **हन्त** ॥ ५४ ॥

इति । (सक्रोधम्) कः कोऽत्र भोः? उत्सार्यतामसौ दृष्टि-गोचरात् दैष्टिकदिवाभीतः । (इत्यवज्ञां नाटयति)

**दुर्मतिः**—अय्यउत्त, मह किर[1] णिहिलाओ [2]कामिणीओ दासिओ । ताहिं एव्व तुह विवेअविअओत्ति संपण्णबहुमाणम्हि । (विचिन्त्य) पच्चक्खसिद्ध[3]परमाणंदजुवइसंभोअप्पहाणं तुह सिद्धंतं मुअंता किंति [4]ठिरप्पहाणेसु तेसु तेसु मएसु पउराअरा जणा होंति?

(आर्यपुत्र, मम किल निखिलाः कामिन्यो दास्यः । ताभिरेव तव विवेकविजय इति संपन्नबहुमानास्मि । प्रत्यक्षसिद्ध-परमानन्दयुवतिसंभोगप्रधानं तव सिद्धान्तं मुञ्चन्तः किमिति स्थिरप्रधानेषु तेषु तेषु मतेषु प्रचुरादरा जना भवन्ति?)

**महामोहः**— प्रिये, अविचारितप्रवृत्तोऽयमास्तिकवेतालाना-मन्धपरंपरान्यायः ।

**अमरगुरुप्रणीतमनपायमपोह्य मतं**
**विविधकुतर्कजालकलहायितकौतुकिनः ।**
**कपिलहिरण्यगर्भकणभोजनबुद्धजिन-**
**[5]प्रमुखसमर्थितेषु समयेषु भजन्ति रतिम् ॥ ५५ ॥**

प्रभाविलासः

**अमरेति । कलहायितम्;** कलहवदाचरितम् ॥ ५५ ॥

**प्रभावली**

**कः कोऽत्र भोः;** अत्र को वा वसति मदीय इत्यर्थः । **उत्सार्यताम्;** निरस्यताम् । **दैष्टिको दिवाभीतः** इत्यनादरं नाटयति । **मह किल**-मम किल । **णिहिलाओ**-निखिलाः । **कामिणीओ**-कामिन्यः । **दासिओ**-दास्यः । **ताहिं**-ताभिः । **एव्व**-एव । **तुह**-तव । **विवेअविअओत्ति**-विवेकविजय इति । **संपण्ण-**

[1] किर omitted—ख. [2] महिलाओ—ख:
[3] सिद्ध omitted—ग. [4] वेरग्गप्पहाणेसु—ख. [5] प्रभृति—क.

अपिच,

**चरमितरदप्यशेषं चन्द्रकनयतः [1]स्वभावतश्चित्रम् ।**
**किं वा निरूपणीयं कण्टकतैक्ष्ण्यादिकारणं कविभिः ॥ ५६ ॥**

प्रभाविलासः

**चरमिति । चरम्;** जङ्गमम् । **इतरत्;** स्थावरम् । **चन्द्रकनयतः;** मयूरपिञ्छन्यायेन ॥ ५६ ॥

**प्रभावली**

**बहुमाणम्हि**-संपन्नबहुमानास्मि । **पच्चक्खसिद्ध**-प्रत्यक्षसिद्ध । **परमाणंद**-परमानन्द । **जुवइजण**-युवतिजन । **संभोअप्पहाणं**-संभोगप्रधानम् । **तुह**-तव । **सिद्धंतं**-सिद्धान्तम् । **मुअंता**-मुञ्चन्तः । **किं ति**-किमिति । **ठिरप्पहाणेसु**-स्थिरप्रधानेषु; स्थिरत्वेन प्रतिपादितादृष्टेश्वरप्रधानेषु । **तेसु तेसु**-तेषु तेषु । **मएसु**-मतेषु । **पउराअरा**-प्रचुरादराः । **जणा**-जनाः । **होंति**-भवन्ति । **अविचारितं** यथा तथा प्रवृत्तः । **आस्तिकाः** वैदिकाः **वेताला** इव । **अन्धपरंपरान्यायस्तु**—अन्धः अन्धमुपसर्पति, तमन्धोऽन्य इत्येवं परंपरया गच्छन्तः श्वभ्रे पतन्तीति । एतदुपपादयति—**अमरेति** । बृहस्पतिप्रणीतं कुत्रापि विरोधरहितम् । **अपायः;** विरोधः, अन्यत्र प्रत्यक्षविरोधः । **इदं मतं विहाय विविधकुतर्कजालैः कलहाचरणे कौतुकिनः** सन्तः पामराः कापिलसमयः सांख्यम्; हिरण्यगर्भसमयो योगशास्त्रम्; कणभोजनसमयो वैशेषिकशास्त्रम्; बुद्धसमयो बौद्धमतम्; जिनसमय आर्हतमतम्; प्रभृतिशब्देन भाट्टप्राभाकरवेदान्तिनां मतं विवक्षितम् । तत्र रुचिं भजन्ते ॥ ५५ ॥

युक्तिशून्यत्वान्मतान्तराणामन्धपरंपरान्यायमुपपादयति—**अपिचेति । चरं** जङ्गमम्; **इतरत्** अचरं स्थावरमितीदं **चन्द्रकनयतः** मयूरे यत् पिञ्छं तन्न्यायात् । चन्द्रके चन्द्राकारबिन्दुवत् स्वभावत एव नानाविधम् । न कर्मादि कारणं तत्र । किमिव? **कण्टकतैक्ष्ण्यम्;** कण्टकेषु तीक्ष्णता । आदिशब्दात् तिन्त्रिणीवक्रतादि । तत्र **कविभिः किं वा कारणं निरूप्यते**? न किमपि, स्वभावं विना कारणान्तराभावात् ॥ ५६ ॥

[1] स्वभावचित्रमिदम्—ग.

[1]इत्थं नाम दुस्त्यजः स्वभाववादः। कार्यकारणवादश्च काकतालीयन्यायमनुसरति। [2]एवमपि,

**अतत्तदिति वा न तत्तदिति वा वृथोद्यत्कथा-**
**कनत्कथककत्थनक्रमविकल्पितप्रक्रमा।**
**जगद्विपरिवर्तिनी जनपदेषु जोघुष्यते**
**कुतर्कशत[3]शर्करानिकरकर्कशा पद्धतिः॥ ५७॥**

### प्रभाविलासः

**अतदिति।** **अतत्**; अतद्वत। **तदिति वा**; तत्प्रकारकमिति वा। **तत्**; तद्वत। **तन्नेति वा**; तत्प्रकारकं न भवतीति वा। वृथोद्यत्कथया कनतां कथकानां कत्थनक्रमेण विकल्पितः प्रक्रमः यस्याः सा। **विपरिवर्तनी**; विपर्यासकारिणी। **कुतर्कशतान्येव कर्कराः** कठिनगोचर्माणि, तेषां निकरेण कर्कशा॥ ५७॥

### प्रभावली

**तत्र**; तत्रापि। **इत्थम्**; उक्तप्रक्रियया। **स्वभाववादो** नियतत्वात् **दुस्त्यजः**। तत्र **कार्यकारणभावस्तु काकतालीयन्यायम्**; यादृच्छिकतालपतनवेलायां काकस्तत्रारूढः; काकपतनं तत्र कारणत्वेन कल्पयन्ति जडाः; तद्वत् मृत्पिण्डसंनिधाने घटाद्युत्पत्तिः, न तु कार्यकारणभावात्। एवं युक्तिशून्यापि वैदिकवेतालानां पद्धतिः दुर्वादिविकत्थनोत्तम्भिता जगति जोघुष्यत इत्याह—**एवमपीति**। वृथोद्यत्कथामभिनीय दर्शयति—**अतदिति**। तदिति वादिनोक्ते अतदिति प्रतिवादिन उक्तिः। अथवा न तदिति वादिनोक्ते तदिति प्रतिवादी वदतीत्यर्थः। इत्थं **वृथोद्यत्या कथया** जल्पेन **कनन्तः** दीप्यमानाः **कथकानां कत्थनक्रमेण विकल्पितप्रक्रमाः** भिन्नप्रस्थानानि यस्यां सा। **जगत्कर्म विपरिवर्तिनी** अधरोत्तरीकुर्वती। **कुतर्कशतान्येव शर्करानिकराः**, तैः **निष्ठुरा पद्धतिः** मतान्तराणां, **जनपदेषु जोघुष्यते**॥ ५७॥

1 तत्रेत्थं नामेति प्रभावलीपाठः 2 तथाहि—क. 3 कर्करेति प्रभाविलासपाठः

इत्थमुपप्लुतेऽपि जगति,

चिरसेवनतोषितेन धात्रा निपुणस्थानविदा निवेदितार्थः[1] ।
असुरोपनिषद्रहस्यमग्र्यं प्रथयामास विरोचनः प्रजानाम् ॥५८॥

अत्र च ;

करणविलयरूपा मुक्तिरित्युक्तमाद्यै-[2]
वितथमिति मयान्यद्वार्तिके [3]विन्यवेशि ।
स्तनयुगलबृहत्त्वस्थापनीयस्वभूम्ना
बहुगुणविभवेन ब्रह्मणा भोगसाम्यम् ॥ ५९ ॥

प्रभाविलासः

**चिरेति** । **निपुणस्थानविदा** ; शास्त्रप्रवर्तनयोग्योऽयमित्युपदेशपात्राभिज्ञेन ॥ ५८ ॥

**करणेति** । **करणविलयः** ; शरीरेन्द्रियविलयः । **बहुगुणेति** ; सौन्दर्यादयो विवक्षिताः । अत्र कविनिबद्धवक्तृप्रौढोक्तिमूलातिशयोक्तिरलंकारः, स्वस्य वार्तिककरणादियोगात् । **बृहत्त्वेति** ; तेन "बृहति बृंहयति तस्मादुच्यते परं ब्रह्म" इति प्रसिद्धब्रह्मौपम्यं व्यज्यते ॥ ५९ ॥

प्रभावली

इत्थमुपप्लुतेऽस्मिन् जगति अस्मन्मतमेव चिरसेवनतोषितपरमाप्तपरमगुरूपदिष्टप्रबलरहस्योपनिषत्प्रसिद्धमित्याह— **चिरसेवनेति** । **सेवनम्** ; शुश्रूषा । **निपुणस्थानविदा** ; प्रतिष्ठितार्थविदा । यद्वा इदमेव रहस्योपदेशस्य निपुणं पात्रमिति विदा । उपदिष्टसर्वरहस्यार्थः **विरोचनः** एतन्मतप्रथमप्रवर्तकः **प्रजानाम्** अग्र्यम् सर्वशास्त्रेभ्यः, असुरोपनिषदः "असुराणां ह्येषोपनिषत्" इत्युक्तायाः रहस्यमर्थं प्रथयामास ॥ ५८ ॥

अथ का मुक्तिः? इत्यस्य प्रश्नस्य 'शरीरप्रलयो मुक्तिः' इति प्रत्युत्तरं दत्तम् ; तदाक्षिप्यान्या मुक्तिर्मया प्रतिपादितेत्याह—**अत्र चेति** । **आद्यैः** ;

[1] निवेदितार्थम् —छ. [2] आर्यैः—क. ख. ग. [3] संन्यवेशि—क.

दुर्मतिः—अय्यउत्त, एव्वं तुम्हेहिं रक्खिज्जंतं [1]जीअलोअं पीडंति णिक्कारणविद्देसा परसिद्धंतपरिवाडीपक्खपडिआ[2] ।

(आर्यपुत्र, एवं युष्माभी रक्ष्यमाणं जीवलोकं पीडयन्ति निष्कारणविद्वेषाः परसिद्धान्तपरिपाटीपक्षपतिताः ।)

महामोहः—भवतु । किं नश्छिन्नम्? न खलु पाटच्चराः प्रकृतिं मुञ्चन्ति । न चाप्रमत्तमतयस्तैरुपहन्यन्ते ।

पठन्तस्त्रय्यन्तान्परिहसनकाकुं विदधतां
भजन्तस्ताटस्थ्यं[3] परिभवितुमिच्छन्तु महतः ।
उदन्तः शान्तानामयमिति च जल्पन्त्वभिमतं
किमन्तर्दुर्दान्तैः [4]कृपणकथकैरेभिरिह नः ॥ ६० ॥

प्रभाविलासः

पठन्त इति । विदधताम्; विदधतु । उदन्तः; वृत्तान्तः ॥ ६० ॥

प्रभावली

जरच्चार्वाकैः पूर्वगुरुभिः । तत् वितथम् व्यर्थमित्याक्षिप्य मया वार्तिके ग्रन्थे वक्ष्यमाणं विन्यवेशि मुक्तिरिति विनिवेशितं स्थापितम् । तत्किमित्यत्राह— स्तनेति । स्तनयुगलगतं यत् बृहत्त्वं तेन स्थापनीयः स्वभूमा महात्म्यं, यस्य तेन । बहवो गुणाः सौन्दर्यविभ्रमादयः, त एव विभवो विभूतिः यस्य, तेन योषिद्ब्रह्मणा भोगतः साम्यं मुक्तिरिति विन्यवेशि ॥ ५९ ॥

एव्वं तुम्हेहिं-एवं युष्माभिः । रक्खिज्जंतं-रक्ष्यमाणम् । जीवलोअं-जीवलोकम् । पीडंति-पीडयन्ति । णिक्कालणविद्देसा निष्कारणविद्वेषाः । परसिद्धंतपरिवाडी परसिद्धान्तपरिपाटी । पक्खपडिआ-पक्षपतिताः । किं नश्छिन्नम्; का वा हानिः । प्रकृतिम्; स्वभावम् । अप्रमत्तमतयः; सावधानाः । तैः; पाटच्चरैः । किं नश्छिन्नमित्येतदुपपादयति—पठन्त इति । परिहसनप्रकारान् कुर्वन्तु नाम । ताटस्थ्यं भजन्तः महतो जनान् परिभवितुमिच्छन्तु नाम ।

[1] पुरिसं—क. [2] परिपडिअपक्खपडिआ—ग.
[3] ताद्थ्र्यं—क. [4] कृपणहतकैः—ख.

(विचिन्त्य) प्रिये, अद्य तावत् [1]अस्मत्सिद्धान्तपुनःप्रतिष्ठापनपटीयांसः पुरुषा गवेषणीयाः। कः कोऽत्र भोः?

दम्भादयः—(त्वरितमुपसृत्य) अमी वयमागताः।

(इत्युपसीदन्ति)

महामोहः—[2]स्वागतं [3]स्वकुलहितैषिभ्यो भवद्भ्यः?

[4]दम्भदर्पौ—(सप्रश्रयम्) महाराज, त्वत्प्रसादात् सर्वत्राप्रतिहतगतयः समागताः स्मः। किं कर्तव्यमनेन किंकरजनेन?

महामोहः—कामादीनामिदानीं का वार्ता?

दम्भः—(स्वगतम्) किं राज्ञे विज्ञापयामि? (प्रकाशम्) देव दुर्मतिवल्लभ, 'सत्यं राजसु शोभते' इति प्रियेतरदपि दृष्टं ब्रवीमि। वेद्मि कामस्य लोभस्य चाहमधुनातनीमवस्थाम्। तयोश्च,

अनन्तविषयस्पृहाजलधिसंप्लुते मानसे
वसन्तसमये स्थिते मलयमारुते जीवति।
सकृद्विहितसौप्तिकप्रतिनिवृत्तिवैलक्ष्यतः
प्रसुप्त इव हन्त न स्पृशति पञ्चबाणः शरान्॥ ६१॥

प्रभाविलासः

अनन्तेति। अनन्तः; ईश्वरः। अत्र वसन्तादिसहकारसमवधानेऽपि कामस्याकार्यकरत्वोक्तेर्विशेषोक्तिर्व्यज्यते, "सत्यां सामग्र्यां कार्यानुत्पत्तिर्विशेषोक्तिः" इति लक्षणात्॥ ६१॥

प्रभावली

शान्तानामयमेवोदन्त इति यत्किंचित् स्वाभिमतं जल्पन्तु च। अन्तर्दुर्दान्तैः मनसि गर्वितैः एभिः दुर्वादिभिः नः किं प्रयोजनम्॥ ६०॥

सिद्धान्तस्य चमत्कृतिं भजन्तः पुनरपि दृढं प्रतिष्ठापने पटुतराः। अनेन;

[1] अस्मत्कुल०—ख. [2] कुशलम्—क.
[3] स्वकुल omitted—क. [4] दम्भः—ख.

अन्यस्मिन्नपि [1]कैमुत्यसिद्धमावेदयामि—

**पुरुषस्य विवेकविप्रलम्भात् स्वशरीरेऽपि विरज्यमानबुद्धेः ।**
**कृपणप्रतिनन्दनीयवृत्तिः किमिवालम्बनमाश्रयेत लोभः॥ ६२ ॥**

दर्पः—देव दुर्मतिवल्लभ,[2] अहं पुनः क्रोधस्य सांप्रतिकीमवस्थामद्राक्षम् ; 'याथातथ्येन पण्डितम्'[3] इति नीतिमनुसरन् [4]यथानुभूतमेवावेदयामि । यथासौ,

प्रभाविलासः

**पुरुषस्येति । विरज्यमाना ;** विरागं प्रापिता । अत्र पुरुषोत्कर्षवर्णनात् उदाहरणं नाम गर्भसंधेश्चतुर्थमङ्गमुक्तम्, "उत्कर्षान्वितं वाक्यमुदाहरणम्" इति लक्षणात् ॥ ६२ ॥

**प्रभावली**

किंकरजनेन, अस्माभिरित्यर्थः । **किं राज्ञे ;** सत्यमसत्यं वेत्यर्थः । "सत्यं राजसु शोभते" इति महाभारते संजयवचनम् । **प्रियेतरदिति ;** प्रत्यक्षदृष्टयोर्मध्य इति शेषः । **अनन्तेति ।** पुरुषस्य **मानसे** अनन्तविषयस्पृहैव जलधिः, तत्र **मग्ने** सत्यपीति शेषः । **वसन्ते स्थितेऽपि, मन्दमारुते जीवति** सत्यपि, **पञ्चबाणः सकृद्विहितं यत्सौप्तिकं,** तस्मात् या **प्रतिनिवृत्तिः** भग्नस्य स्वस्य निवर्तनं, तज्जनित**वैलक्ष्यतः** लज्जया **प्रसुप्त इव शरान्न स्पृशति ;** शस्त्रसंन्यसनं कुर्वन्निवेति भावः ॥ ६१ ॥

**अन्यस्मिन् ;** लोभविषयेऽपि । कैमुतिकन्यायसिद्धं वृत्तान्तं निवेदयामि । **विवेकस्य विप्रलम्भः** कुहना, तेन । **स्वशरीरेऽपि ;** किमुत क्षेत्रकलत्रादौ । **विरज्यमानबुद्धेः ;** निःस्पृहबुद्धेः । **पुरुषस्य किमिवालम्बनम् ;** किं वस्तु स्वालम्बनत्वेन लोभ आश्रयेत? न किमप्यस्तीत्यर्थः । लोभस्य स्वभावमाह—**कृपणैः** दीनैः श्लाघ्यमानवृत्तिः । यद्वा कृपणेषु विषये, न तु विरक्तेषु, सर्वैः संतुष्यमाणा वृत्तिर्यस्य सः ॥ ६२ ॥

[1] कैमुतिक—क.
[2] दुर्मतिपण्डित—क. ख.
[3] पण्डितः—ग.
[4] यथाभूत—ख.

द्विसप्तदलपत्रलद्रुहिणसृष्टिभङ्गक्रिया-
पुरस्कृतयुगक्षयभ्रुकुटिताण्डवाडम्बरः ।
विरक्तिविषवल्लरीव्यतिकरेण रोषः स्वयं
[1]सुषुप्त इव वर्तते सुभटकेलिसौवस्तिकः ॥ ६३ ॥

महामोहः—(सविषादं विहस्य) अहो विवेकस्य कुलघातिनो दुर्मन्त्रितमेतत् । यथासौ सर्वत्र निरवकाशः स्यात्, तथास्माभिरवहितैर्विश्वमिदमधर्मेण [2]व्यापनीयम् । स्वकुलसंरक्षणप्रवृत्ता-

### प्रभाविलासः

द्विसप्तेति । द्विसप्तदलपदेन चतुर्दश भुवनानि लक्ष्यन्ते । तैः **पत्रला;** प्रचुरा या **द्रुहिणसृष्टिः;** अण्डान्तर्वर्ति कार्यजातं, तस्याः **भङ्गक्रियायां पुरस्कृतयुगक्षयः** प्रकृतिपर्यन्तलयः यस्य सः, तथाविधः भ्रुकुटिताण्डवाडम्बरः यस्य सः ॥ ६३ ॥

### प्रभावली

"याथातथ्येन पण्डितमनुसरेत्" इति नीतिः। **यथाभूतम्; सत्य**भूतम्। यथासौ वर्तते तथा आवेदयामि। द्विसप्तेति। **द्विसप्तदलशब्देन** चतुर्दश लोका विवक्षिताः। तैः संजातपत्रायाः **द्रुहिणसृष्टेः** ब्रह्माण्डरूपायाः, संहारक्रियायां **पुरस्कृतः** युगक्षये **भ्रुकुटिताण्डवस्य आडम्बरो** येन सः। विरक्तिरेव विषवल्लरी, तद्व्यतिकरेण संपर्केण। पुरुषे विरक्तिप्रवेशादिति भावः। **सुषुप्त इव;** मृत इवेति भावः। सुभटानां **केलिः**, विरायितं, तस्य **सौवस्तिकः** स्वस्तिवाचकः; वर्धक इत्यर्थः। क्रोधे वसति सुभटानां शौर्यविलासो वर्धते ॥ ६३ ॥

विषादातिशयात् हासः। **दुर्मन्त्रितम्;** दुर्विचारफलम्। इतः परं कर्तव्यमाह—यथासाविति। **असौ;** विवेकः। **अधर्मेण व्यापनीयम्;** व्याप्तं कर्तव्यम्। अधर्मप्रवर्तनमनुचितमित्याशङ्क्य कार्यविशेषे प्रवृत्तानामस्माकमधर्म

[1] प्रसुप्त इव लक्ष्यते—ख. [2] व्यापादनीयम्—क. छ.

नामस्माकं[1] त्वयमधर्म एव धर्मः। पठन्ति चैतिहासिकाः—"स एव धर्मः सोऽधर्मस्तं तं प्रति नरं भवेत्" इति। एवमुपप्लुतावस्थानो विवेकः स्वयं चानतिप्रबलः सुखेन [2]साधनीयः। अथवा कोऽयं विवेकः? [3]शाकुटस्य लवने शङ्कुलायाः कियानिव भारः? न चेषीकतूलमिन्धनयितुं वह्निना संरभ्यते। (विमृश्य) प्रिये कुलधर्मपालिनि, त्वदभिमतवृत्तेरुत्तमगुणस्य मे पश्य यावज्जीवं प्रारब्धकर्मापरित्यागम्—

कामस्ताम्यतु कोपलोभसहितः काले समभ्येतु वा
रक्षःसंयति राघवस्थितिमहं व्यङ्क्त्वा विवेकाहवे।
कालस्त्वेष रथो भवत्विह कलिस्त्वं सारथिर्दुर्मते
दम्भः संप्रति जैत्रदुन्दुभिरसौ दर्पस्तथा कङ्कटः॥ ६४॥

प्रभाविलासः

**शाकुटस्य**; शाकविशेषस्य। **शङ्कुलायाः**; लवित्रस्य। **काम** इति। **कङ्कटः**; कवचः। अत्र वीररसो व्यज्यते॥ ६४॥

प्रभावली

एव धर्म इत्याह—**स्वकुलेति**। अत्र संमतिं दर्शयति—**पठन्ति चेति**। **ऐतिहासिकाः**; इतिहासप्रवर्तकाः। ऐतिहासिकं वचनमाह—**स एवेति**। तं तं नरं प्रत्येक एव व्यापारो धर्मश्च भवति, अधर्मश्च भवति। ये मौञ्जीधारणादिब्रह्मचारिधर्मास्ते गृहस्थस्याधर्मा भवन्ति। गन्धमाल्यादिधारणरूपा गृहस्थधर्मास्त्वन्येषामधर्माः। एवमुपप्लुतस्थितिः विवेकः साधनीयः जेतव्यः। **विवेको नाम कोऽयम्**; कियान्? तुच्छ इत्यर्थः। दृष्टान्तोपन्यासेन तदेव तुच्छत्वमुपपादयति—**न खल्विति**। **शाकुटस्य**; शाकविशेषस्य। **लवने**; छेदने। **शङ्कुलायाः**; लवित्रस्य। कियानिव भारः। दृष्टान्तान्तरमाह—**न चेति**। **इषीकतूलम्**; तूलाकारः कण्ठकराशिः। **तदिन्धनयितुम्**; दग्धुम्।

[1] अस्माकं omitted—ख. [2] योधनीयः—क.
[3] शङ्कटस्य—क. ख; न खलु शाकुटस्य—कियानपि भारः—क. ख. छ.

दम्भः—महाराज, स्वायत्तसिद्धेस्तव किमायत्तमस्मासु ?

कस्तुभ्यं रणरङ्गखेलनकलामातिष्ठते तिष्ठते
कश्च प्रेप्सति कामतन्त्रनियतस्वैराय वैरायितम् ।
येन [1]क्षोदयितुं क्षमां प्रभवति क्षेप्तुं कुलक्ष्माभृतः
पातुं सप्त सरस्वतोऽपि भवता साकूतमालोकितः ॥ ६५ ॥

प्रभाविलासः

**क** इति । **आतिष्ठते तुभ्यं कस्तिष्ठते**; आत्मानं प्रकाशयंस्तिष्ठति । "प्रकाशनस्थेयाख्ययोश्च" इत्यात्मनेपदम् । **स्वैरम्**; स्वेच्छाचारः । **येन भवता आलोकितः**; पुरुष इति शेषः । **सरस्वतः**; समुद्रान् । अत्र हिरण्याक्षमहेन्द्रागस्त्यव्यापारा व्यज्यन्ते ॥ ६५ ॥

प्रभावली

**संरभ्यते**; संरम्भः क्रियते । **कुलधर्मः**; अस्मद्दर्शितधर्मः । **यावज्जीवम्**; जीवनावधि । **प्रारब्धेति**; गृहीतप्राहित्वमिति यावत् । इदमुपपादयति—**काम** इति । **कोपलोभादिभिः सह कामस्ताम्यतु**; नश्यतु वा । **काले**; समरकाले **मां समभ्येतु वा** । **विवेकेन सह क्रियमाणे आहवे अहं** राक्षसयुद्धे **राघवस्य या स्थितिः**, तां **व्यक्त्वा** व्यञ्जयिता । तत्रैष कलिः **कालो** रथो भवतु । भो **दुर्मते, त्वं सारथिर्भव** । **दम्भः** जयशीलभेरी भवतु । **तथा असौ दर्पः कङ्कटः** कवचोऽस्तु । अहमेव सर्वशत्रुसंहारं करोमीति भावः ॥ ६४ ॥

स्वाधीनसिद्धेस्तवास्मासु किमस्वाधीनमपेक्षणीयम । एतदेवाह—**कस्तुभ्यमिति** । **रण** एव **रङ्गः**, तत्र **खेलनं** नर्तनम, तदेव **कला** शिल्पम्; **तामातिष्ठते** अङ्गीकुर्वते **तुभ्यं कस्तिष्ठते**; आत्मानं प्रकाशयति । **को वा** कामपुरुषार्थे नियतस्वैरसंचाराय **वैरायितं प्रेप्सति** प्राप्तुमिच्छति । **येन भवता साकूतं** समनस्कम **आलोकितः** क्रोधः क्षमां भूमिं **क्षोभयितुं** प्रभवति; परशुरामे दृष्टमिदम् । **कुलक्ष्माभृतः क्षेप्तुं प्रभवति** ; रावणे दृष्टमिदम । **सरस्वतः** समुद्रान् **सप्त** पातुं प्रभवति ; अगस्त्यादौ दृष्टमिदम । तादृशाय ते कस्तिष्ठत इति संबन्धः ॥ ६५ ॥

[1] क्षोभयितुमिति प्रभावलीपाठः

तथापि वयं त्वदादिष्टास्त्वदधीनवृत्तयो यथासामर्थ्यं यतिष्यामहे । कपयोऽपि काकुत्स्थस्योपकुर्वन्ति । वल्लवाश्च वासुदेवस्य [1]साह्ये संनह्यन्ति ।

**महामोहः**—अभिमतमेव [2]युष्माकमहमादिशामि—

**दम्भ त्वमत्र नियतो निजधर्मगुप्त्यै पुण्यापगापरिसरान्पुनराश्रयेथाः ।**
**गाढोपलक्षितविरक्तिमदेषु गर्वस्तन्वीत वासमनघेषु [3]तपोवनेषु ॥ ६६ ॥**

**दम्भदर्पौ**—स्वीकृतोऽयं स्वामिसमादेशः[4] ।

(इति सभार्यौ निष्क्रान्तौ)

**महामोहः**—(स्वगतम्) किं नामारातिविहतावाद्यं साधनम् ? ननु प्रत्यवमृष्टम् ;

**प्रज्वलति जाठराग्नौ क्षिपन्यथावच्चतुर्विधं हव्यम् ।**
**प्राणाग्निहोत्रमेकं परिपालयितास्मि दुर्मतिसहायः ॥ ६७ ॥**

**प्रभाविलासः**

दम्भेति । **तन्वीत**; करोतु ॥ ६६ ॥

**प्रत्यवमृष्टम्**; प्रत्यवमर्शेन निश्चितम् । पुरुषस्याभक्ष्यभक्षणे विवेकः स्वयमेव नश्यतीत्याशयेनाह—**प्रज्वलतीति** । **चतुर्विधम्**; भक्ष्यभोज्यलेह्यचोष्यरूपम्, "पचाम्यन्नं चतुर्विधम्" इति स्मरणात् ॥ ६७ ॥

**प्रभावली**

**दम्भेति** । भो दम्भ, त्वं **निजधर्मगुप्त्यै** दम्भधर्माणां यज्ञादीनां गुप्त्यै **नियतः** सन्, **पुण्यापगाः** गङ्गायमुनादयः, तत्समीपप्रदेशान् पुनरप्याश्रयेथाः । **गाढं** दृढमुपलक्षितः दृष्टः यः विरक्तिप्रयुक्तमदः, तद्वत्सु अनघत्वेनोक्तेषु **तपोवनेषु** अयं **गर्वो वासं तन्वीत** ॥ ६६ ॥

अरातिध्वंसे प्रथमं साधनं किम् ? ननु **प्रत्यवमृष्टम्**; विचारितं खलु,

[1] साहाय्ये—ग. छ. [2] युवयोः—ख. [3] तपोधनेषु—ग. [4] संदेशः—ग.

(ततः प्रविशति दुर्वासना)

**दुर्वासना**—एसाहं उवट्ठिदम्हि । आणवेदु महाराओ रण्णी अ ।

(एषाहमुपस्थितास्मि । आज्ञापयतु महाराजो राज्ञी च ।)

**महामोहः**—भद्रे, ब्रूहि मद्वचनादगणितगणितविद्यान् करणाधिकारिणः—'आदिशति भवतो महाराजाधिराजराजपरमेश्वरो दुर्मत्या सह महामोहः । कामक्रोधलोभमदमात्सर्यदम्भस्तम्भेभ्यः [1]सप्तभ्यः सचिवेभ्यः सप्त मुक्तिक्षेत्रतया प्रसिद्धा राजधान्यः ससागराश्च सप्त महाद्वीपा दत्ता महामोहेनेति [2]लिख्यताम् । अपिच,

### प्रभाविलासः

**सप्त राजधान्यः**; अयोध्यादयः,

"अयोध्या मधुरा माया काशी काञ्ची ह्यवन्तिका ।
पुरी द्वारवती चैव सप्तैता मुक्तिदायिकाः ॥"

### प्रभावली

सख्याह्वाने । एत्थ हो हि-इतो भव; आगच्छेत्यर्थः । एसा-एषा । **उवट्ठिदम्हि**-उपस्थितास्मि । **आणवेदु**-आज्ञापयतु । **महाराओ**-महाराजः । **रण्णीअ**-राज्ञी च । **अगणिताः** अपरिमिताः **गणितविद्याः** येषाम् । **करणाधिकारिणः**; लेखनाधिकारिणः । **आदिशति**; आज्ञापयति । **भवतः**; युष्मान् । **सचिवेभ्यः**; मन्त्रिभ्यः । **मदः**; गर्वः । **स्तम्भः**; जडीभावः । **राजधान्यः**; अयोध्यामधुरादयः । लिख्यतामित्युक्त्वा पुनरपि लेखनीयवचनविशेषमाह—**अपिचेति** ।

[1] **सप्तभ्यः** omitted—क. [2] लिखितव्यम्—क.

स्वकीयाख्यामात्रच्छुरणपरिणह्यद्भयहरान्[1]
बहिष्कृत्येदानीं विजहदधिकारान्क्रतुभुजः ।
यदृच्छावाक्येऽपि व्यवहरतु लोकोऽयमखिलो
नमःस्वस्तिस्वाहागिर[2] इह महामोहविषयाः' ॥ ६९ ॥

इति ।

प्रभाविलासः

इति स्मरणात् । **स्वकीयेति** । **स्वकीयाख्यामात्रस्य;** स्वनाममात्रस्य । **छुरणात्;** संसर्गात्, उच्चारणादिति यावत् । **परिणह्यद्भयम्;** विशालीभवन्तीं भीतिं हरन्तीति तान्, तथोक्तान् । स्वनामकीर्तनमात्रेण कीर्तयतां भयहरानित्यर्थः, "यत इन्द्र भयामहे ततो नो अभयं कृधि" इत्यादिश्रुतेः । भयभरानिनि पाठे स्वशब्देन मोहो गृह्यते । अत्र श्लोके हिरण्यकशिपुसाम्यं व्यज्यते ॥ ६९ ॥

प्रभावली

**स्वकीयाख्याः** इन्द्रादिनामानि; **तन्मात्रस्य छुरणं** संपर्कः, उच्चारणमिति यावत्; तेन **परिणह्यद्भयहरान्** विपुलीभवद्भयहर्तॄन् । स्वनामोच्चारणमात्रेण भक्तजनविपुलभयापहर्तॄन् । तथा ह्यधीयते—"यत इन्द्र भयामहे ततो नो अभयं कृधि" इति । यद्वा **स्वकीयाख्याः** महामोहाद्याः, तन्मात्रोच्चारणेन विपुलीभवद्भयभरान्, चकितानित्यर्थः । **विजहदधिकारान्;** प्रतिमन्वन्तरं विजहत्स्वाधिकारान् । **बहिष्कृत्य;** अपहाय । **अयं लोकः यदृच्छावाक्येऽपि** यदृच्छाव्यवहारेऽपि । **नमःस्वस्तिस्वाहा**शब्दान् **महामोहविषयान्** महामोहगोचरान् **व्यवहरन्तु** उच्चारयन्तु । महामोहाय नम इत्यादिकम् । इतीत्यस्य लिख्यतामित्यनेन संबन्धः ॥ ६९ ॥

[1] भरान्—क. ख.

[2] स्वधमिह महामोहविषयम्—क. ख; स्वयमिह महामोहविषयाः—ग.

**दुर्वासना**—जं आणवेइ भट्टा भट्टिणी अ।
(यदाज्ञापयति भर्ता भर्त्री च।)

(इति निष्क्रान्ता)

(नेपथ्ये)

विजयतां देवः;

**भुक्तिक्षमं समयमेकरुचिं वितन्वन्**
**पुंसां निजप्रतपनेन गतिप्रतीपः।**
**आशाविशेषमपरं प्रतिपत्स्यमानो**
**मोहेश्वर त्वमिव भाति मयूखमाली॥ ७०॥**

**प्रभाविलासः**

**भुक्तिक्षममिति। भुक्तिक्षमम्**; भोजनक्षमम्, अन्यत्र संभोगक्षमम्। **समयम्**; कालं, कामशास्त्रं च। **एकरुचिम्**; मुख्यदीप्तिम्, एकस्वाद्यं च। **प्रतपनेन**; प्रकृष्टतापेन, प्रतापेन च। **गतिप्रतीपः**; गमनप्रतिबन्धकः, मुक्तिमार्गनिरोधकश्च। **आशाविशेषम्**; दिग्विशेषं, तृष्णाविशेषं च॥ ७०॥

**प्रभावली**

**जं आणवेइ**-यदाज्ञापयति। **भट्टा भट्टिणी अ**-राजा राज्ञी च। **देवः**; महामोहः। **भुक्तीति**। अत्र सूर्यमहामोहयोः श्लेषः। **भुक्तिक्षमम्**; भोजनयोग्यं समयं मध्याह्नम्; अन्यत्र भोगयोग्यं समयं सिद्धान्तम्। एका मुख्या रुचिः दीप्तिः यस्मिन्; अन्यत्र मुख्यास्वादवत्। **वितन्वन् पुंसां निजप्रतपनेन**; आतपेन, अन्यत्र तापत्रयेण पीडनं तेन। **गतिप्रदीपः**; भूमौ संचारप्रतिकूलः, मध्याह्ने सातपे क्वचिदपि गन्तुमशक्यत्वात्; अन्यत्र मोक्षगतिप्रतिकूलः।

इह च,

**उपहरति सूपकर्ता महतो मोहस्य दुर्मतिप्रेष्यः ।**
**बलरिपुवरुणगृहाभ्यां स्वाद्यं धारान्तमुचितमाहारम् ॥ ७१ ॥**

**महामोहः**—(कर्णं दत्वा) प्रिये प्राणशब्दाभिलप्यानां[1]

### प्रभाविलासः

अथ नैष्कामिकीं ध्रुवामाह—**उपहरतीति**। तदुक्तम्—"निष्कामसूचिकाङ्कान्ते ध्रुवा नैष्कामिकी भवेत्" इति। **सूपकर्ता**; पाचकः, सम्यगुपकर्ता चेति व्यज्यते। **बलरिपुः**; इन्द्रः। **स्वाद्यम्**; सुइत्ययमाद्यो वर्णो यस्य तत्। **धारान्तम्**; धकाररेफावन्ते यस्य तत्। सुधासुरारूप-

### प्रभावली

**अपरमाशाविशेषं** प्रतिपत्स्यमानः प्रयास्यन् **मयूखमाली** सूर्यः **मोहेश्वर त्वमिव भाति** ॥ ७० ॥

**इह च**; समये। **दुर्मतिप्रेष्यः**; भृत्यः। **सूपकर्ता**; सूदः। **महतो मोहस्य**; महामोहस्येत्यर्थः। **बलरिपुवरुणगृहाभ्याम्**; बलरिपोः गृहं स्वर्गः; वरुणस्य गृहं पश्चिमसमुद्रः; ताभ्यां सकाशात्। **स्वाद्यम्**; आस्वाद्यम्। **धारायाः** क्षीरधारायाः **अन्तं** रम्यमित्यापातार्थः। तात्पर्यार्थस्तु सुशब्दः आद्यो यस्य तत् स्वाद्यम्, धकारः अन्ते यस्य तमाहारं सुधां बलरिपुगृहात् स्वर्गादुपहरति। स्वाद्यं रान्तमाहारं सुरां वरुणगृहादुपहरति। वरुणसंबन्धित्वात् सुराया वारुणीति व्यपदेशः ॥ ७१ ॥

[1] लप्यमानानां—ग. घ.

सर्वशरीरव्यापिनीनां सर्वसिद्धान्तसंमतानां देवतानां समर्चनसमयमावेदयति वैतालिकः । तत्प्रविशावः शुद्धान्तम् ।

(इति निष्क्रान्ताः सर्वे)

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेंकटनाथस्य वेदान्ताचार्यस्य कृतिषु संकल्पसूर्योदये दम्भाद्युपालम्भो नाम पञ्चमोऽङ्कः ।



## प्रभाविलासः

पमित्यर्थः । **उचितम्**; मोहोचितम् । स्वाद्यं रुचिकरं धारान्तं घृतादिरम्यम् उचितं राजोचितमिति च व्यज्यते ॥ ७१ ॥

[1] इत्यात्रेयाहोबिलाचार्यविरचिते संकल्पसूर्योदयव्याख्याने प्रभाविलासाख्याने दम्भाद्युपालम्भो नाम पञ्चमोऽङ्कः ।



## प्रभावली

प्राणशब्दार्थानां सर्वसिद्धान्तिभिरङ्गीकृतानां समर्चनसमयं भोजनसमयमित्यर्थः । **आवेदयति**; ज्ञापयति । **वैतालिकः**; मङ्गलपाठको मागधः । **तत्**; तस्मात् । **शुद्धान्तः**; अवरोधः ।

इति श्रीनृसिंहराजाचार्यकृतसंकल्पसूर्योदयव्याख्यायां प्रभावल्यां दम्भाद्युपालम्भो नाम पञ्चमोऽङ्कः ।



[1] इत्यात्रेयगोत्रसंभूतेन श्रीमदहोबिलनाम्ना विदुषा विरचिते—B.

# PUBLICATIONS OF THE ADYAR LIBRARY

## (The Theosophical Society, Adyar, Madras, 20, India)

| | | Rs. | A. |
|---|---|---|---|
| 1910—1. | A PRELIMINARY LIST OF THE SAṂSKṚT AND PRĀKṚT MSS. in the Adyar Library. (Saṃskṛt-Devanāgarī) Boards ... 1-8 Cloth ... | 2 | 0 |
| 1912—2. | A DESCRIPTIVE CATALOGUE OF THE SAṂSKṚT MSS. in the Adyar Library. *By* F. O. Schrader, Vol. I, Upaniṣads Cloth ... | 5 | 0 |
| 3. | THE MINOR UPANIṢADS (Saṃskṛt) critically edited for the Adyar Library. *By* F. O. Schrader, Vol. I.—Saṃnyāsa Cloth ... | 10 | 0 |
| 1916—4. | AHIRBUDHNYA-SAṀHITĀ OF THE PĀÑCARĀTRA ĀGAMA (Saṃskṛt), 2 Vols. Cloth ... | 10 | 0 |
| 5. | INTRODUCTION (English) TO THE PĀÑCARĀTRA AND THE AHIRBUDHNYA SAṀHITĀ. *By* F. O. Schrader. Cloth ... | 3 | 0 |
| 1920—6. | YOGA UPANIṢADS—20—with the Commentary of S'rī Upaniṣad Brahma Yogin. Edited *by* Paṇḍit A. Mahadeva Sastri ... | 5 | 0 |
| 1921—7. | SĀMĀNYA VEDĀNTA UPANIṢADS—24—with the Commentary of S'rī Upaniṣad Brahma Yogin. Edited *by* Paṇḍit A. Mahadeva Sastri ... | 5 | 0 |
| 1923—8. | VAIṢṆAVA UPANIṢADS—14—with the Commentary of S'rī Upaniṣad Brahma Yogin. Edited *by* Paṇḍit A. Mahadeva Sastri ... | 4 | 0 |
| 1925—9. | S'AIVA UPANIṢADS—15—with the Commentary of S'rī Upaniṣad Brahma Yogin. Edited *by* Paṇḍit A. Mahadeva Sastri ... | 3 | 0 |
| 10. | S'ĀKTA UPANIṢADS—8—with the Commentary of S'rī Upaniṣad Brahma Yogin. Edited *by* Paṇḍit A. Mahadeva Sastri ... | 2 | 8 |
| 1926—11. | CATALOGUE OF SAṀSKṚT MSS. in the Adyar Library (Revised). 2 Vols. Each ... | 3 | 12 |
| 1929—12. | SAṀNYĀSA UPANIṢADS—17—with the Commentary of S'rī Upaniṣad Brahma Yogin. Edited *by* T. R. Chintamani, and the Paṇḍits of the Adyar Library ... | 4 | 0 |

| | | Rs. | A. |
|---|---|---|---|
| 13. | RUKMIṆĪKALYĀṆA MAHĀKĀVYA by Rājacūḍāmaṇi Dikṣita. Edited *by* the Paṇḍits of the Adyar Library and T. R. Chintamani ... | 2 | 0 |
| 1933—14. | UNPUBLISHED MINOR UPANIṢADS with the Commentary of S'rī Upaniṣad Brahma Yogin. Edited *by* the Paṇḍits of the Adyar Library ... | 5 | 0 |
| 1936—15. | TEN MAJOR UPANIṢADS with the Commentary of S'rī Upaniṣad Brahma Yogin. Edited *by* the Paṇḍits of the Adyar Library | | |
| | Īs'a to Aitareya, Vol. I ... | 4 | 8 |
| | Chāndogya and Bṛhadāraṇyaka, Vol. II ... | 6 | 0 |
| | Vols. 1 and 2, Boards ... | 9 | 8 |
| 1937—16. | MELARĀGAMĀLIKĀ of Mahāvaidyanātha S'ivan. Edited *by* Paṇḍit S. Subrahmanya Sastri ... | 2 | 0 |
| 1938—17. | SAṀGRAHACŪḌĀMAṆI—Edited *by* Paṇḍit S. Subrahmanya Sastri ... | 5 | 0 |
| 18. | PRATYABHIJÑĀHṚDAYAM (The Secret of Recognition) with English Translation and Notes *by* K. F. Leidecker ... | 3 | 0 |
| 19. | BHAVASAṄKRĀNTI-SŪTRA AND NĀGĀRJUNA'S BHAVASAṀKRĀNTI S'ĀSTRA—with the Commentary of Maitreyinātha —with English Translation *by* Paṇḍit N. Aiyaswami Sastri ... | 2 | 4 |
| 20. | YOGA UPANIṢADS. Translated into English *by* T. R. Srinivasa Aiyangar, and Paṇḍit S. Subrahmanya Sastri ... | 5 | 0 |
| 21. | * WHERE THEOSOPHY AND SCIENCE MEET (in four Parts) by a body of experts—Edited *by* Professor D. D. Kanga : | | |
| | Part 1. Nature—From Macrocosm to Microcosm ... | 2 | 8 |
| | Part 2. Man—From Atom to Man ... | 2 | 8 |
| | Part 3. God—From Humanity to Divinity ... | 2 | 8 |
| | Part 4. Some Practical Applications ... | 2 | 8 |
| 1939—22. | ṚGVEDAVYĀKHYĀ, MĀDHAVAKṚTĀ—Edited *by* Prof. C. Kunhan Raja. Vol. I ... | 6 | 0 |
| 1940—23. | THE NUMBER OF RASAS *by* V. Raghavan, Department of Saṁskṛt, University of Madras ... | 3 | 0 |
| 1941—24. | SĀMĀNYA VEDĀNTA UPANIṢADS—Translated into English *by* T. R. Srinivasa Aiyangar and Paṇḍit S. Subrahmanya Sastri ... | 5 | 0 |
| 25. | BHAGAVADGĪTĀRTHAPRAKĀS'IKĀ of Upaniṣad Brahmayogin (Saṁskṛt). Edited *by* the Paṇḍits of the Adyar Library ... | 4 | 0 |

* ***Published under the auspices of the Adyar Library Association.***

| No. | Title | Rs. | A. |
|---|---|---|---|
| 26. | SĀMAVEDA-SAṀHITĀ—With the Commentaries of Mādhava and Bharatasvāmin. Edited *by* Prof. C. Kunhan Raja ... | 6 | 0 |
| 27. | RĀJA DHARMA (Dewan Bahadur K. Krishnaswami Rao Lectures, 1938, University of Madras) *by* Rao Bahadur K. V. Rangaswami Aiyangar ... | 3 | 8 |
| 28. | VARIVASYĀRAHASYA of Bhāsurānandanātha (2nd Edition) *by* Paṇḍit S. Subrahmanya Sastri (with English Translation) ... | 2 | 8 |
| 29. | VYAVAHĀRANIRṆAYA OF VARADARĀJA—Edited *by* Rao Bahadur K. V. Rangaswami Aiyangar and A. N. Krishna Aiyangar ... | 15 | 0 |
| 30. | SAṀGĪTARATNĀKARA—With the Commentaries of Catura Kallinātha and Siṁhabhūpāla. Edited *by* Paṇḍit S. Subrahmanya Sastri. Vol. I. (Adhyāya 1) ... | 9 | 0 |
| **1942**—31. | CATALOGUE OF THE ADYAR LIBRARY, Western Section. part 1 ... | 5 | 0 |
| 32. | ĀLAMBANAPARĪKṢĀ AND VṚTTI *by* Diṅnāga with English translation, Tibetan text etc. *by* Paṇḍit N. Aiyaswami Sastri ... | 3 | 8 |
| 33. | SOME CONCEPTS OF ALAṄKĀRA S'ĀSTRA *by* V. Raghavan, University of Madras ... | 4 | 0 |
| 34. | VEDĀNTAPARIBHĀṢĀ—with English translation and Notes *by* Prof. S. S. Suryanarayana Sastri ... | 2 | 12 |
| 35. | A DESCRIPTIVE CATALOGUE of the Sanskrit Manuscripts in the Adyar Library *by* K. Madhava Krishna Sarma. Vol. I—Vedic ... | 15 | 0 |
| 36. | S'RĪ PĀÑCARĀTRA RAKṢĀ of S'rī Vedānta Des'ika—Edited *by* Vaidyaratna Paṇḍit M. Duraiswami Aiyangar and Vedānta S'iromaṇi T. Venugopalacharya ... | 4 | 8 |
| 37. | CATALOGUE OF THE ADYAR LIBRARY, Western Section, part 2 ... | 6 | 0 |
| 38. | CATURDAS'ALAKṢAṆĪ OF GADĀDHARA with three commentaries—Edited *by* Paṇḍit N. Santanam Aiyar. Vol. I ... | 4 | 8 |
| **1943**—39. | PHILOSOPHY OF VIS'IṢṬĀDVAITA *by* Prof. P. N. Srinivasachari ... | 10 | 0 |
| 40. | VĀDĀVALĪ OF JAYATĪRTHA with English translation and Notes *by* P. Nagaraja Rao ... | 4 | 0 |
| 41. | SPINOZIAN WISDOM OR NATURAL RELIGION *by* James Arther ... | 2 | 12 |

| | | Rs. | A. |
|---|---|---|---|
| | 42. ṲSĀṆIRUDDHA of Rāmapāṇivāda. Edited *by* Paṇḍit S. Subrahmanya Sastri and Prof. C. Kunhan Raja ... | 3 | 8 |
| 1944—43. | SAṀGĪTARATNĀKARA—With the Commentaries of Catura Kallinātha and Siṁhabhūpāla. Edited *by* Paṇḍit S. Subrahmanya Sastri. Vol. II. (Adhyāyas 2—4) ... | 9 | 0 |
| | 44. ĀSVALĀYANAGṚHYASŪTRA—With the Commentaries of Devasvāmin and Nārāyaṇa. Edited *by* Svami Ravi Tirtha. Vol. I (Adhyāya 1) ... | 6 | 4 |
| | 45. ALPHABETICAL INDEX OF SANSKRIT MANUSCRIPTS in the Adyar Library ... | 10 | 0 |
| | 46. CATALOGUE OF THE ADYAR LIBRARY, Western Section, Part 3 ... | 7 | 0 |
| | 47. ĀTMAN IN PRE-UPANIṢADIC VEDIC LITERATURE *by* H. G. Narahari ... | 8 | 0 |
| 1945—48. | RĀGAVIBODHA OF SOMANĀTHA with his own commentary Viveka. Edited by Paṇḍit S. Subrahmanya Sastri ... | 6 | 0 |
| | 49. ACYUTARĀYĀBHYUDAYA OF RĀJANĀTHA ḌIṆḌIMA—Sargas 7 to 12. Edited *by* A. N. Krishna Aiyangar ... | 3 | 8 |
| | 50. ANCIENT WISDOM OF WALES *by* D. Jeffrey Williams ... | 1 | 4 |
| | 51. SAṀGĪTARATNĀKARA OF S'ĀRṄGADEVA—Vol. I. Chapter 1. English Translation *by* Prof. C. Kunhan Raja. Cloth Rs. 4-8. Boards ... | 4 | 0 |
| | 52. VAIṢṆAVA UPANIṢADS. Translated into English *by* T. R. Srinivasa Aiyangar and G. Srinivasa Murti ... | 10 | 0 |
| 1946—53. | NYĀYAKUSUMĀÑJALI of Udayanācārya—Translated into English *by* Svami Ravi Tirtha. (Vol. I - Books i and ii)... | 4 | 0 |
| | 54. PRĀKṚTAPRAKĀS'A OF VARARUCI with the Commentary of Rāmapāṇivāda. Edited *by* Prof. C. Kunhan Raja and Paṇḍit K. Ramachandra Sarma ... | 4 | 4 |
| | 55. SPHOṬAVĀDA OF NĀGES'A—Edited *by* Paṇḍit V. Krishnamacharya with his own Commentary ... | 3 | 12 |
| 1947—56. | THE CRADLE OF INDIAN HISTORY *by* C. R. Krishnamacharlu ... | 3 | 8 |
| | 57. UNMATTARĀGHAVA OF VIRŪPĀKṢA—Edited *by* Paṇḍit V. Krishnamacharya ... | 1 | 12 |
| | 58. ORIGIN AND SPREAD OF THE TAMILS (Sankara-Parvati Lectures, 1940, University of Madras) *by* V. R. Ramachandra Dikshitar ... | 3 | 8 |
| | 59. JĪVĀNANDANAM OF ĀNANDARĀYAMAKHIN. Edited *by* Vaidyaratna Paṇḍit M. Duraiswami Aiyangar with his own Commentary. ... | 20 | 0 |

| | | Rs. | A. |
|---|---|---|---|
| | 60. A DESCRIPTIVE CATALOGUE of Sanskrit MSS. in the Adyar Library, *by* Paṇḍit V. Krishnamacharya, Vol. VI—Grammar, Prosody and Lexicography ... | 25 | 0 |
| | 61. ṚGVEDAVYĀKHYĀ of Mādhava, Vol. II, edited by Prof. C. Kunhan Raja. ... | 15 | 0 |
| | 62. DESCRIPTIVE CATALOGUE OF PALI MSS. in the Adyar Library, *by* Dr. E. W. Adikaram ... | 6 | 0 |
| 1948— | 63. HARICARITA OF PARAMES'VARA—Edited *by* Pandit V. Krishnamacharya with his own Commentary ... | 5 | 0 |
| | 64. GAUTAMA-DHARMASŪTRA-PARIS'IṢṬA (Second Pras'na)—Edited *by* A. N. Krishna Aiyangar ... | 9 | 0 |
| | 65. SAṀKALPASŪRYODAYA OF S'RĪ VEṄKAṬANĀTHA with the Commentaries Prabhāvilāsa and Prabhāvalī. Edited *by* Paṇḍit V. Krishnamacharya Part I ... | 15 | 0 |
| | Part II ... | 15 | 0 |

## PAMPHLETS

### 1939

| | Rs. | A. |
|---|---|---|
| A VARIANT VERSION OF THE EKĀGNIKĀṆḌA. (Reprinted from the Adyar Library Bulletin, October, 1939). Edited *by* K. Madhava Krishna Sarma ... | 0 | 3 |

### 1940

| | | |
|---|---|---|
| RĀJAMṚGĀṄKA OF BHOJA. (Reprinted from the Adyar Library Bulletin, October, 1940). Edited *by* K. Madhava Krishna Sarma. | 0 | 4 |

### 1942

| | | |
|---|---|---|
| ṢAṬPAÑCĀS'IKĀ, a S'ilpas'āstra manual. (Reprinted from the Adyar Library Bulletin. February, 1942). Edited *by* K. Madhava Krishna Sarma ... | 0 | 5 |
| PRAMĀṆAMAÑJARĪ OF SARVADEVA. (Reprinted from the Adyar Library Bulletin, May, 1942). Edited *by* K. Madhava Krishna Sarma ... | 0 | 6 |
| A List of Manuscripts. (Reprinted from the Adyar Library Bulletin, October, 1942) ... | 1 | 0 |
| THE PATH OF GREATNESS. (Reprinted from the Adyar Library Bulletin, December, 1942), *by* Dr. G. S. Arundale ... | 0 | 6 |

### 1943

| | | |
|---|---|---|
| VIS'EṢĀMṚTA of Tryambaka Mis'ra. An orthographical lexicon. Edited *by* H. G. Narahari. (Reprinted from the Adyar Library Bulletin, May, 1943) ... | 0 | 12 |
| A SANSKRIT LETTER OF MOHAMAD DARA SHUKOH with English Translation and Notes *by* Prof. C. Kunhan Raja. (Reprinted from the Adyar Library Bulletin, October, 1940, May and October, 1943) ... | 0 | 12 |

### 1946

| | | |
|---|---|---|
| DHARMACAURYARASĀYANA—Edited *by* H. G. Narahari. (Reprinted from the Adyar Library Bulletin, October and December, 1946) ... | 1 | 12 |

## 1948

SAMSKṚTAGRANTHIVIGHAṬANA—*by* Prof. C. Kunhan Raja ... 0 8

CANDRAVĀKYAS OF VARARUCI—Edited *by* Prof. C. Kunhan Raja with Appendices ... 2 0

BHĀRATA-RĀṢṬRA-SAṄGHAṬANĀ (Indian Constitution in Sanskrit verses)—a sample—*by* Prof. C. Kunhan Raja ... 1 8

## IN THE PRESS

CATURDAS'ALAKṢAṆĪ OF GADĀDHARA with three commentaries. Vol. II *by* Paṇḍit N. Santanam Aiyar.

ĀPASTAMBASMṚTI—Edited *by* A. N. Krishna Aiyangar.

SAṀGĪTARATNĀKARA—With the Commentaries of Catura Kallinātha and Siṁhabhūpāla. Edited *by* Paṇḍit S. Subrahmanya Sastri, Vol III.

HORĀS'ĀSTRA—with the commentary Apūrvārthapradars'ikā *by* A. N. Srinivasaraghava Aiyangar.

SĀLISTAMBHASŪTRA—Restored from Tibetan and Chinese Sources—*by* Paṇḍit N. Aiyaswami Sastri.

SAṀGĪTARATNĀKARA, English Translation—Vol. II, *by* Prof. C. Kunhan Raja.

A DESCRIPTIVE CATALOGUE of Sanskrit MSS. in the Adyar Library, *by* H. G. Narahari, Vol. V—Poetry, Drama and Poetics.

ARISTOTLE'S KATHARSIS AND BHARATA'S STHĀYIBHĀVAS—*by* Prof. C. Kunhan Raja.

## READY FOR THE PRESS

ĀS'VALĀYANAGṚHYASŪTRA with the Commentaries of Devasvāmin and Nārāyaṇa. Vol. II. Edited *by* Svami Ravi Tirtha.

NYĀYAKUSUMĀÑJALI OF UDAYANA with the Commentary of Varadarāja. Edited *by* Prof. C. Kunhan Raja.

CATURDAS'ALAKṢAṆĪ OF GADĀDHARA—with Commentaries—Edited *by* Paṇḍit N. Santanam Aiyar, Vol. III.

PAKṢATĀ OF GADĀDHARA—with four commentaries Edited *by* Paṇḍit N. Santanam Aiyar.

SIDDHĀNTALAKṢAṆAM OF GADĀDHARA with commentaries. Edited *by* Paṇḍit N. Santanam Aiyar.

AVAYAVA OF GADĀDHARA—with commentaries Edited *by* Paṇḍit N. Santanam Aiyar.

SĀMĀNYANIRUKTI OF GADĀDHARA with commentaries. Edited *by* Paṇḍit N. Santanam Aiyar.

VYUTPATTIVĀDA OF GADĀDHARA with commentaries. Edited *by* Paṇḍit N. Santanam Aiyar.

S'AIVA AND S'ĀKTA UPANIṢADS—Translated into English *by* T. R. Srinivasa Aiyangar and G. Srinivasa Murti.

TEN MAJOR UPANIṢADS—English Translation *by* T. R. Srinivasa Aiyangar and G. Srinivasa Murti.

---

*Agents for our publications :*

**THE THEOSOPHICAL PUBLISHING HOUSE**

**Adyar, Madras, 20.**